

पण्डितकेशवभट्टज्योतिर्विदा

संस्कारशोधनाभ्यां सम्पादिता

इयम्

# शिवसूर्ययोःसहस्रनामावली ।

मुम्बय्यां

निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा

श्रीसप्तर्षिसंवत्सरे ५०११ विक्रमवत्सरे १९९२

ईस्वी वत्सरे १९३५

परोपकाराय प्राकाश्यं नीता ।

मूल्यं आनकपञ्चकम् ।‍=)

हमारे क्रेयपुस्तक मिलनेका पताः—

पं० केशवभट्टज्योतिषी पाठशालाटीचर, जिल्ला रैणावारी, महल्ला भागज्योगीलङ्कार, कश्मीर—श्रीनगर.

१ नित्यकर्मविधिः‘नं. १ (स्नानविधि सन्ध्या-नैवेद्यमन्त्र-भोजनविधि-पञ्चगव्यविधि हिन्दी भाषायां इतिकर्तव्यता सहितः ब्राह्मीविद्या च ) ... ... ... ...

२ नित्यकर्मविधिः नं. २ (नं,१ विषय, तथा विष्णुपञ्चायतनपूजा-गणेशकवच-गुरु-गायत्री-गौरीस्तुतिमुकुन्दमालासहितः ) ... ... ... ... ...

३ नित्यकर्मविधिः नं. ३ (नं. २ के विषय तथात्रैवर्ण्यवर्णाश्रमाचारशिक्षा-जन्मोत्सवपूज्यपूजा—जन्माष्टमीपूजा जयनारायण-व्याप्तचराचर-अतिभीषण-बहुरूपगर्भोपयोगि स्वच्छन्दध्यानं च ) त्रिपञ्चनयनं देवमिति

४ शिवपूजा ( बहुरूपगर्भ-महिम्नःपार-शिवकवच-शिवनिर्वाण-व्याप्तचराचर-अतिभीषण-षडक्षर-पञ्चाक्षर-दीनाक्रन्दनशिवापराधक्षमापन-कैवल्योपनिषत्-शिवपूजागणेशस्तवराजात्मका ) ... ... ... ...

५ गणेशदुर्गास्तोत्रावली (लाक्षासिन्दूर-अद्रिराजज्येष्ठपुत्र एकदन्तमीशपुत्र इति गणेशस्तोत्रत्रय-गणपतिविद्या-देवीध्यानरत्नमाला-शारिकास्तोत्र-ब्राह्मीविद्यात्मिका )

६ सौन्दर्यलहरी (पञ्चस्तवीसमेता ) ... ... ...

७ देवीपूजा (देवीपूजा-राज्ञीस्तुतिः “याद्वादशर्कं”-साहिभरूपभवानीवाक्यमञ्जरी-सरस्वतीस्तुतिश्च ) ...

८ चमानुवाक्यम् ... ... ... ... ...

९ रुद्रपञ्चकम् ( रुद्रमन्त्र-चममन्त्र-सौमारुद्र-दीक्षा-शताध्यायात्मकम् ) ... ... ... ... ...

# नित्यकर्मविधिः ।

## अथ स्नानविधिः ।

श्रीगणेशाय नमः । अथ मृत्खननमन्त्रः ॥ ( मिट्टी खो-
दना ।) आक्रम्य वाजिन् पृथिवीमग्निमिच्छा रुचात्वम् । भूम्या
वृत्वायनो ब्रूहि, यतः खनेम ते वयम् ॥ अथ दन्तधावनम् ॥
( दातन करना । ) आयुर्बलं यशो वर्चः प्रजाधृतिवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ अथ हस्तप्रक्षा-
लनम् ॥ ( हाथ धोना । ) यो विश्वचक्षुरुत विश्वतोमुखो वि-
श्वतो हस्त उत विश्वतस्पात् । संबाहुभ्यां धमते संपतत्रैर्द्यावा-
पृथिवी जनयन्देव एकः ॥ अथ वामपादप्रक्षालनम् । ( बाहे
पैर धोना । ) नमोऽस्त्वऽनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशि-
रोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे
नमः ॥ अथ दक्षिणपादप्रक्षालनम् ॥ ( दाहे पैर धोना ।) नमः
कमलनाभाय नमस्ते जलशायिने । नमस्ते केशवानन्त वासुदेव
नमोऽस्तु ते ॥ अथ मुखप्रक्षालनम् ॥ ( मुंह धोना । ) गङ्गा-
प्रयागगयनैमिषपुष्करादितीर्थानि यानि भुवि सन्ति हरिप्रसा-
दात् । आयान्तु तानि करपद्मपुटे मदीये प्रक्षालयन्तु वदनस्य
निशाकलङ्कम् ॥ तीर्थे स्नेयं तीर्थमेव समानानां भवति मा
नः । शंस्यो अररुषो धूर्तिः प्रणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥
अथ यज्ञसूत्रप्रक्षालनम् । ( जनू धोना । ) ॐ गायत्र्यै नमः

ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३ ॥ (गायत्रीमंत्र से ही शिखा भी धोना ।) गायत्र्यैव शिखामाबद्ध्य ॥ अथ यज्ञसूत्रधारणम् ॥ (यज्ञ-सूत्र गले में पाना) ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं, यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि, यज्ञस्य त्वा, उपवीतेन उपनह्यामि ॥ अथाचमनम् ॥ (अब आचमनकी विधान ।) कृत्वाऽलं पाद-शौचं विमलमऽथ जलं त्रिःपिबेदुन्मृजेद्विस्तर्जन्यऽङ्गुष्ठकाभ्यां सजलमऽभिमृशेन्नासिकारन्ध्रयुग्मम् । अङ्गुष्ठानामिकाभ्यां नय-नयुगलकं कर्णयुग्मं कनिष्ठाङ्गुष्ठाभ्यां नाभिदेशं हृदयमऽथ तले-नाऽङ्गुलीभिः शिरोंसौ ॥ अथ प्राणायामः । ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गो देवस्य

---

१ अच्छीतरह पैर धोकर. २ फिर सफा पानी. ३ तीनवार पीकर और दोवार बाहेतरफ सूंगलेकर छोडना. ४ बाहे हाथके भीच में रखे हुई पानी तर्जनी और अंगूठ से दोनो नथ्नों को मलना. ५ अंगूठ और अनामिका से दो आंखों को मलना. ६ कनिष्ठा और अंगूठ से दो कानों को. ७ फिर नाभिस्थान और हृदय को हथेली से. ८ सब अङ्गुलियोंसे सिर और कन्दों को मलना ॥ ९ इह मन्त्र एकवार पडते पडते नाभिस्थान पर रक्तवर्ण ब्रह्मा के ध्यान समेत "पूरक" याने अंगूठ से दाहे नथन बान्ध के बाहे नथन से आहस्ता आहस्ता प्राण चडावना ॥ और दो बार पडते २ हृदयपर कृष्णवर्ण विष्णु के ध्यान समेत "कुम्भक" याने मा भाकय अङ्गुलियों से बाहे नथन भी बान्ध के प्राण बन्ध रखना ॥ और तीन बार पडते २ माथे पर श्वेतवर्ण शिव के ध्यान समेत "रेचक" याने अंगूठ उठाकर दाहे नथन से शनैः २ प्राण छोडना ॥ इह प्राणायाम की विधि है ।

धीमहि, धियो यो नः प्रचोदयात् ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोम् ॥ अथ नमस्कारः । (अब नमस्कार करना ।) ब्रह्मणोऽभ्यादयः नमो अग्नये अप्सुषदे नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽपांपतये नमोऽद्भ्यः । अथोपस्थानम् । (उपस्थान करना) अवभृथे त्रिष्टुब्वरुणः । उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवे करुतापवक्ता हृदयाविधश्चित् । अथ जलं त्रिरावर्तयेत् (हाथों से पानी में तीनवार मण्डलकरना ।) "यमस्य राज्ञो जगती वरुणः" । ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो देवः सविता बृहस्पतिर्विश्वेदेवा मरुतो मुञ्चन्तु स्वर्काः ॥ अथ वामभागे जलाञ्जलित्रयं क्षिपेत् । [बाहे तरफ तीन जलाञ्जलि छोडना ।] निचाङ्कुणस्य शुनःशेफस्य चापः । सुमित्रियान आपः ओषधयो भवन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ अथ नमस्कारः (नमस्कार करना ।) यत्किंचेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ते यत्तव धर्माय योऽपि स मा नस्तस्मादेनसो देव रीरिषः । अथ मृदो भागत्रयं कृत्वा, प्रथमभागेऽङ्गुष्ठेन जलसेचनम् । [अब मिट्टीका तीन भाग करके पहले भाग पर पानी अंगूट से छोडना ।] ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं० ३ । अथ द्वितीयभागे जलसेचनम् । (दूसरे भागपर ।) "त्रितस्य महापाङ्क्तिरादित्याः" । आदित्या अव हि ख्याता दिकूलाद्दिवस्पृशः सुतीर्थाः सर्वतो यथा । नुन्नोनेषया सुगमेंहसो वऊतयः सुऊतयो वऊतयः । अथ तृतीयभागे जलसे-

चनम् । (तीसरे भागपर पानी छोडना ।) "मेधातिथेर्गायत्रं विष्णुः" । अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ अथ तृतीयांशमृदो भागचतुष्कं विधाय चतुर्दिक्षु क्षिपेत् । प्रथमं पूर्वे । (अब तीसरें भाग को और चार भाग करके, चार दिशाओं को नदी में छोडना । प्रथम पूर्वदिशा से छोडनां ।) "भर्गस्य बृहती इन्द्रः" । यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि । अथ दक्षिणे । (अब दखन से ।) "शासस्याऽनुष्टुभौ विमृध इन्द्रः" । स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः सोमपा अभयङ्करः । अथ पश्चिमे । (पश्चिम से ।) विरक्षो विमृधो जहि विवृत्रस्य हनूरुज । विमन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः । अथोत्तरे । (उत्तर से ।) "वसुक्रस्य त्रिष्टुबिन्द्रः" । इदं सुमे जरितः चिकिद्धि प्रतीपं शापं नद्यो वहन्ति लोपाशाः सिंहं प्रत्यञ्चमत्स्याः क्रोष्टा वराहान्निरतत्थ कक्ष्यात् । अथ द्वितीयमृदा जलालोडितया नाभेरूर्ध्वं विशोधयेत् । (दूसरी मिट्टी पानीमें मल कर नाभिस्थान के उपर मलना ।) "यज्ञस्याऽनुष्टुप् मृत्तिका ।" अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । उद्धृतासि वराहेण कृष्णेन शतबाहुना । मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च । मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमंत्रिता । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् । वाचा कृतं कर्मकृतं मनसा यत्तु चिन्तितम् । मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् । त्वया हतेन पापेन ब्रह्म-

लोकं व्रजाम्यऽहम् ॥ ( अब प्रथमांश को चार भाग करके । पहला भाग माथे को मलना । ) "कुत्सस्य रुद्रो जगती" । मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते । अथ द्वितीयांशेन । (द्वितीय भागसे । ) ओंभूः ॐ-भुवः ॐस्वः । इति वामांसे । ( इति बाहे कन्दे पर मलना । ) ॐमहः ॐजनः ॐतपः । इति दक्षिणांसे ( इति दाहे कन्दे पर । ) ॐसत्यं इति हृदयेऽनुलिप्य । ( इति छाते को मलना । ) अथ गोमयाम्भसा । ( गोआ सहित पानी शरीरको मलना । ) अग्रमग्रं चरन्तीनामोषधीनां रसं वने । तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥ त्वं मे रोगं च शोकं च पापं च नुद गोमय ॥ अथापमार्गेणाङ्गमङ्गमुपस्पृशेत् । ( अपामार्ग हर एक अङ्ग को मलना । ) "सिन्धुद्वीपस्यानुष्टुप् अपामार्गः" अपाघमपकिल्बिषमपकृत्यमपोरपः । अपामार्ग त्वमस्माकमप-दुःस्वप्न्यं सुव । अथ दूर्वया (हमील शरीर को मलना । ) "प्रजा-पतेरनुष्टुप् दूर्वा" ॥ काडात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च । या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यै ते देवीष्टके विधेम हविषा वयम् ॥ अथ दर्भाङ्कुरेण । (कुशाग्र शरीर को मलना ।) विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज । नुद पापानि सर्वाणि भव स्वस्तिकरो मम ॥ अथ नमस्कृत्य तीर्थान्स्मरेत् । ( नमस्कार करके तीर्थोंका स्मरण करना । ) तीर्थस्यावाहनं कुर्यात्तत्प्रवक्ष्याम्यऽनन्तरम् । कुरुक्षेत्रं गया गंगा प्रभासं पुष्कराणि च ॥ तीर्थान्येतानि सर्वाणि स्नान-

काले भवन्तु मे। प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितम् । याचितं देहि मे तीर्थं सर्वपापापनुत्तये । रुद्रान्प्रपद्ये वरदान्सर्वानऽप्सुपदस्त्वहम् । सर्वानऽप्सुपदश्चैव प्रपद्ये प्रणतः स्थितः । देवमऽप्सुपदं वह्निं प्रपद्येऽघनिसूदनम् । आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा । रुद्राश्चाग्निश्च सर्पाश्च वरुणस्त्वाप एवच । शमयन्त्वाशु मे पापं पुनन्त्वेते सदा मम । इत्येवमुक्त्वा कर्तव्यं ततः संमार्जनं जले । अथ जलाञ्जलिं तृतीयांशमृत्सहितं गृहीत्वा प्रवाहान्तः क्षिपेत् । ( अब तीसरा मिट्टी भाग पानी की अञ्जली में रखके संकल्प करके नदी में छोडना । ) अपां पतये विद्महे पाशपाणये धीमहि, तन्नो वरुणः प्रचोदयात् ३ ॥ ॐ तत्सद्ब्रह्माऽद्यतावत्तिथावद्याऽमुकमासस्यामुकपक्षस्य तिथावऽमुकायामाऽत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीविष्णुप्रीत्यर्थममुकनद्याः प्रवाहे स्नानमऽहं करिष्ये ॐकुरुष्व । अथ शिरसि जलमञ्जलिना क्षिपेत् । [ सिर को अञ्जलीसे पानी फींकना । ] ॐतद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ अथ शिरोमार्जयेत् । ( सिर को छिटकाना । ) ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यम् । अथोपस्थानम् । ( उपस्थान करना । ) ॐ हंसः शुचिषद्वसुरऽन्तरिक्षसद्धोता वेदिषदऽतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदऽब्जा गोजा ऋतजा अद्रिजा ऋतम् । अथ तर्पणम् । ( पानी छोडना । ) ॐनमो देवेभ्यः । ( गले में यज्ञसूत्र रख के । ) कण्ठोपवीती । स्वाहा ऋषिभ्यः ( बाहे तरफ यज्ञसूत्र

रख के । ) अपसव्येन । स्वधा पितृभ्यः (दाहे तरफ यज्ञसूत्र रख के ।) सव्येन । आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु । अथ परिशिष्टमृदा तिलकं कार्यम् । (चौथमा भाग से तिलक करना । ) यत्त्वगऽस्थिगतं पापं जन्मान्तरकृतं च यत् । तन्मे हरस्व कल्याणि मूर्ध्नि स्पर्शेन वैष्णवि । अथ वस्त्रधारणम् । (वस्त्र पहनना । ) युवा सुवासाः परिवीत आगात्स उच्छ्रेयान्भवति जायमानः । तन्धीरासः कवय उन्नयन्ति साध्यो मनसा देवयन्तः । अथ स्नानपट्टपीडनम् । (लंगूठी निचौडना । ) असत्कुले तु ये जाता अपुत्रा गोत्रवर्जिताः । ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ इति स्नानविधिः ॥

## अथ सन्ध्योपासना ।

अथ नमस्कारः । (नमस्कार करना । ) श्रीमहागायत्र्यै नमः सावित्र्यै नमः सरस्वत्यै नमः ॥ ॐप्रणवस्य ऋषिर्ब्रह्मा, गायत्रं छन्द एव च । देवोऽग्निर्व्याहृतिषुच, विनियोगः प्रकीर्तितः ॥ प्रजापतेर्व्याहृतयः, पूर्वस्य परमेष्ठिनः । व्यस्ताश्चैव समस्ताश्च, ब्राह्ममक्षरमोमिति ॥ व्याहृतीनां समस्तानां, दैवतं तु प्रजापतिः । व्यस्तानामयमग्निश्च, वायुः सूर्यश्च देवताः ॥ छन्दश्च व्याहृतीनामेकाक्षराणामुक्ताख्यं, त्र्यक्षराणामऽत्युक्ताख्यम् । विश्वामित्र ऋषिश्छन्दो, गायत्रं सविता तथा ॥ देवतोपनये जप्ये, गायत्र्या योग उच्यते । आवाहयामि गायत्रीं, सर्वपापप्रणाशिनीम् ॥ न गायत्र्याः परं जप्यं, न व्याहृतिसमं हुतम् । आगच्छ वरदे देवि, जप्ये मे

सन्निधौ भव ॥ गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता । अग्निर्वायुश्च सूर्यश्च बृहस्पत्याप एव च ॥ इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः । एवमार्षं छन्दो दैवतं, विनियोगं चाऽनुस्मृत्य ॥ गायत्र्या शिखामाऽबद्ध्य, गायत्र्यैव समन्ततः । आत्मनश्चापः परिक्षिप्य, प्राणायामं कुर्यात् ॥ अथाञ्जलिं कृत्वा । (अपने आपको छिडके अञ्जलि करना ।) ओजोऽसीति गायत्रीमावाह्य देवानामार्षम् । ओजोऽसि सहोऽसि बलमऽसि भ्राजोऽसि देवानां धाम नामासि । विश्वमऽसि विश्वायुः सर्वमऽसि सर्वायुरभिभूः । अथ प्राणायामः । (प्राणायाम का मंत्र ।) ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॐआपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् । अथ सायमाचमनत्रयम् । (सायं की तीन आचमन करना ।) ॐअग्निश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदऽह्ना पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना । अहस्तदऽवलुम्पतु, यत्किंचिद्दुरितं मयीदमहमापोऽमृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ प्रातराचमनत्रयम् । (प्रातः की तीन आचमन ।) ॐसूर्यश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्र्या पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना । रात्रिस्तदऽवलुम्पतु, यत्किंचिद्दुरितं मयीदमऽहमापोऽमृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ अथ मध्याह्ने आचमनत्रयम् । (मध्याह्न की तीन आचमन ।) ॐआपः पुनन्तु

पृथिवीं, पृथिवी पूता पुनातु माम् । पुनातु ब्रह्मणस्पतिर्ब्रह्म पूतं पुनातु माम् ॥ यदुच्छिष्टमऽभोज्यं वा, यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं जुहोमि स्वाहा अथ मार्जनमंत्रः । [१]आपो हिष्ठा मयोभुवस्[२]तो न ऊर्जे दधातन महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयते हनः । [३]उशतीरिव मातरः ॥ तस्मा अरंगमाम वो, [४]यस्य क्षयाय जिन्वथ । आ[५]पो जनयथा च नः ॥ (छाते और सिरको फी मंत्र से छडकना ।) हिरण्यवर्णाः शुचयः पावका, यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्[६]भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ १ ॥ ॐयासां देवा दिवि कृण्वंति भक्ष्यं, या अन्तरिक्षे बहुधा भवन्ति । या० ॥ २ ॥ ॐयासां राजा वरुणो याति मध्ये, सत्याऽनृते अवपश्यञ्जनानाम् । या० ॥३॥ ॐशिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे । मधुश्च्युतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु ॥ ४ ॥ ॐशन्नो देवीरऽभीष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः ॥ ५ ॥ ॐशन्न आपो धन्वन्याः, शन्नः सन्त्वऽनूप्याः । शन्नः समुद्रिया न आपः शमुनः सन्तु कूप्याः ॥६॥ आपो अस्मान्मातरः शुन्धयन्तु घृतेन मा घृतपाः पुनन्तु । विश्वं हि रिप्रं प्रवहन्तु देवीरुदिदाभ्यः शुचिरापूत एमि ॥ ७ ॥ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभिदद्रोह यद्वा शेप उतानृतम् ॥८॥ मुञ्चन्तु मा शपथ्या-

---

१ छाते को छिडकना. २ परों को. ३ सिर क्रो. ४ छाते को. ५ पैरों को. ६ सिर को. ७ सिर को. ८ छाते को. ९ पैरों को.

दऽथो वारुण्यादुत । अथो यमस्य पड्वीशात्सर्वस्मादेव किल्बि-
षात् ॥९॥ यज्जाग्रद्यत्सुप्तः पापमभिजगाम । सर्वस्मान्मा तस्मा-
देनसः प्रमुञ्चतु ॥ १० ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य
वाजिनः । सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत् ॥ अथ
वामभागे जलाञ्जलित्रयं क्षिपेत् । (बाहे तरफ तीन जलाञ्जलि
सूँग के छोडना ।) ॐद्रुपदादिवोन्मुमुचानः, स्विन्नः स्नात्वी
मलादिव । पूतं पवित्रेणेवाऽऽज्यमापः शुन्धन्तु मैनसः ।
अथ जलं त्रिरावर्तयेत् । (पानी में दोनो हाथों से तीन आवर्तन
करना ।) ॐऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो
रात्रिरजायत, ततः समुद्रो अर्णवः ॥ समुद्रादर्णवादऽधि,
संवत्सरो अजायत । अहोरात्राणि व्यदधद्विश्वस्य मिषतो वशी ॥
सूर्याचन्द्रमसौ धाता, यथापूर्वमऽकल्पयत् । दिवं च पृथिवीं,
चान्तरिक्षमथो स्वः । अथ शिरसि मार्जयेत् । (सिरको
छिडकना ।) ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐस-
त्यम् । अथाचमनत्रयम् । (तीन आचमन करना ।) ॐ अन्त-
श्चरसि भूतेषु, गुहायां विश्वतो मुखः । त्वं यज्ञस्त्वं वषट्कार,
आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । ततः प्राणायामः ॥
अथ सूर्याभिमुखो गायत्र्याभिमन्त्रितांस्त्रीञ्जलाञ्जलीनुत्क्षिप्य-
क्षिपेत् । (प्राणायाम करके सूर्यके संमुख गायत्रीके मन्त्रसे प्रदक्षिण
करके तीन जलाञ्जलि उपर छोडना ।) ॐभूर्भुवःस्वस्तत्सवितु० ३॥
अथोपस्थानम् । (उपस्थान करना ।) ॐउद्वयन्तमसस्परि, ज्यो-
तिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमऽगन्म ज्योतिरुत्तमम् ॥
ॐउदुत्यं जातवेदसं, देवं वहन्ति केतवः । दृशे विश्वाय

सूर्यम् ॥ ॐचित्रन्देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याऽग्नेः । आ प्रा द्यावापृथिवी अन्तरिक्षं, सूर्य आत्मा जगतस्तस्थुषश्च ॥ ॐतच्चक्षुर्देवहितं, पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं, जीवेम शरदः शतम् ॥ ॐहंसः शुचिषद्वसुरऽन्तरिक्षसद्धोता वेदिषदऽतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदऽब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ॐविभ्राड्बृहत्पिबतु, सोम्यं मध्वायुर्दधद्यज्ञपता अविह्रुतम् । वात जूतयो अभिरक्षत्यात्मना, प्रजाः पिपर्ति बहुधा विराजति ॥ अथ विष्णुं ध्यायन्पुरुषसूक्तं पठेत् । ( विष्णु का ध्यान करना । ) ॐ आनुष्टुभस्य सूक्तस्य, त्रिष्टुबऽन्तस्य देवता । विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ "ॐपुरुषमेधाः पुरुषस्य नारायणस्यार्षम् ॥" ॐसहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशांगुलम् । पुरुष एवेदं सर्वं, यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो, यदऽन्नेनातिरोहति ॥ एतावानऽस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादऽस्यामृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः, पादोऽस्येहाभवत्पुनः । ततो विश्वं व्यक्रामत्साशनाऽनशने अभि ॥ तस्माद्विराडऽजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमऽथो पुरः ॥ यत्पुरुषेण हविषा देवा यज्ञमऽतन्वत । वसन्तो अस्यासीदाज्यं, ग्रीष्म इध्मः शरद्धविः ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त, साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः, संभृतं पृषदाज्यम् । पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्यांश्च ये ॥ तस्माद्यज्ञात्सर्वहुत

ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्माद- ऽजायत ॥ तस्मादऽश्वा अजायन्त, ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ यत्पुरुषं व्यदधुः, कतिधा व्यकल्पयन्। मुखं किमऽस्य कौ बाहू, का ऊरू पादा उच्येते ॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदऽस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायुर- ऽजायत ॥ नाभ्या आसीदऽन्तरिक्षं, शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानऽकल्पयन् ॥ सप्तास्या- सन्परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना, अबध्नन्पुरुषं पशुम् ॥ यज्ञेन यज्ञमऽयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति देवाः ॥ (संहारमुद्रा करके शिवका ध्यान करना।) "ब्रह्मणस्त्रिष्टुप्मनः"। ॐ यज्जाग्रतो दूरमुदेति दैवं, तदु सुप्तस्य तथैवैति। दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शिवसंकल्पमस्तु ॥ येन कर्माण्यऽपसो मनीषिणो, यज्ञे कृण्वन्ति विदथेषु धीराः। यदपूर्वं यक्षमऽन्तः प्रजानां, तन्मे० ॥ यत्प्रज्ञानमुत चेतो धृतिश्च, यज्ज्योतिरन्तरमृतं प्र- जासु। यस्मान्न ऋते किञ्चन कर्म क्रियते, तन्मे० ॥ येनेदं भूतं भवनं भविष्यत्परिगृहीतमऽमृतेन सर्वम्। येन यज्ञस्तायते सप्तहोता, तन्मे० ॥ यस्मिन्नृचः साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः। यस्मिंश्चित्तं सर्वमोतं प्रजानां, तन्मे० ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव।

हृत्प्रतिष्ठं यदऽजरं यविष्ठं, तन्मे० ॥ (उपस्थान करना ।) अथ य एष एतस्मिन्मण्डले, पुरुषो यश्चैष हिरण्मयः पुरुषः । अथ य एष एतस्मिन्मण्डले, पुरुषोऽयमेव सोयं दक्षिणेऽक्षन्पुरुषः ॥ "शुक्रियं रुद्रस्य" । य उदगात्पुरस्तान्महतो अर्णवाद्विभ्राजमानः सरिरस्य मध्ये । स मामृषभो रोहिताक्षः, सूर्यो विपश्चिन्मनसा पुनातु । यद्ब्रह्माऽवादिष्म तन्मा मा हिंसीत्सूर्याय विभ्राजाय वै नमो नमः ॥ (न्यास करना ।) अ नाभौ । उ हृदि । म शिरसि ॥ भूः पादयोः । भुवः हृदि । स्वः शिरसि ॥ ॐभूः अङ्गुष्ठाभ्यां नमः । भुवः तर्जनीभ्यां नमः । स्वः मध्यमाभ्यां नमः । महः अनामिकाभ्यां नमः । जनः कनिष्ठिकाभ्यां नमः । तपः सत्यं करतलकरपृष्ठाभ्यां नमः ॥ भूः पादयोः । भुवः जान्वोः । स्वः गुह्ये । महः नाभौ । जनः हृदि । तपः कण्ठे । सत्यं शिरसि ॥ ॐभूः हृदयाय नमः । भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । महः कवचाय हुँ । जनः नेत्राभ्यां वौषट् । तपः सत्यमऽस्त्राय फट् ॥ तत्सवितुरङ्गुष्ठाभ्यां नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गो देवस्य मध्यमाभ्यां नमः । धीमहि अनामिकाभ्यां नमः । धियो योनः कनिष्ठिकाभ्यां नमः ॥ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ तत्पादयोः । सवितुर्जान्वोः । वरेण्यं कट्यां । भर्गो नाभौ । देवस्य हृदये । धीमहि कण्ठे । धियो नासिकायां । यश्चक्षुषे । नः ललाटे । प्रचोदयात् शिरसि ॥ तत्सवितुर्हृदयाय नमः । वरेण्यं शिरसे स्वाहा । भर्गो देवस्य शिखायै वषट् । धीमहि कवचाय हुँ । धियो योनः नेत्राभ्यां वौषट् ।

प्रचोदयादस्त्राय फट् ॥ ॐआपःस्तनयोः । ज्योतिर्नेत्रयोः । रसो मुखे । अमृतं ललाटे । ब्रह्मभूर्भुवः स्वरों शिरसि ॥ (मुद्रा करना ।) तत्समाय नमः । स संपुटाय नमः । वि विततायनमः । तुर्विस्तीर्णाय नमः । व द्विमुखाय नमः । रे त्रिमुखाय नमः । ण्य चतुर्मुखाय नमः । अं पंचमुखाय नमः । भ षण्मुखाय नमः । र्गो अधोमुखाय नमः । दे व्यापकाञ्जलये नमः । व शकटाय नमः । स्य यमपाशाय नमः । धी ग्रन्थिकायै नमः । म संमुखोन्मुखाय नमः । हि विलम्बाय नमः । धी मुष्टिकायै नमः । यो मीनाय नमः । यो कूर्माय नमः । नः वराहाय नमः । प्र सिंहाक्रान्ताय नमः । चो महाक्रान्ताय नमः । द मुद्गराय नमः । यात्पल्लवाय नमः ॥ (प्राणायाम करके संकल्प छोडना ।) अस्यश्री महागायत्रीशापोद्धारमन्त्रस्य विश्वामित्र ऋषिः, विष्टारपंक्तिगायत्रं छन्दः, सविता देवता शापोद्धारे विनियोगः ॥ ॐब्रह्मणाग्निः संविदानो रक्षोहा बाधितामितः । अमीवायस्ते गर्भं दुर्णामा योनिमाशये १० "इति ऋग्वेदे" हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १० "इति यजुर्वेदे" ॐ आवायन्थ यावायन्या यान्योर्वायायवः ॐ हरोसि पाप्मानं मे विद्धि १० "इति सामवेदे" सुभद्रा पावनी सुधा गायत्री विश्वभेषजम् । विशापामेनां कृत्वा यथास्तं विपरीतन १० "इति अथर्ववेदे" । तत्सवितुरिति मन्त्रस्य, विश्वामित्र ऋषिः, गायत्रं छंदः, सविता देवता, आत्मनो वाङ्मनः-

---

१ संकल्प से पानी छोडना.

कायोपार्जितपापनिवारणार्थं नित्यकर्मनिमित्तं चतुर्वर्गसिद्ध्यर्थे जपे विनियोगः ॥ [1]मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां, तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां, शूलं कपालं गुणं शङ्खं चक्रमथारविन्दुयुगलं हस्तैर्वहन्तीं भजे ॥ [2]ॐ दुर्निवारभवध्वान्तध्वंसनैककृतेक्षणाम् । नौमि मोहविनाशाय भीतो ब्रह्मादिदेवताम् ॥ १ ॥ दुर्गतिं हर मे देवि बहुजन्मशतार्जिताम् । प्राप्य कल्पतरुच्छायां कथं सन्तप्यते जनैः ॥ २ ॥ पश्य मामाऽऽशु गायत्रि विभ्यतं स्निग्धचक्षुषा । न बालमऽबलं पुत्रं मुञ्चत्यग्रगमऽम्बिका ॥ ३ ॥ एहि मां पाणिपद्मेन देहि तूर्णं वरं शुभम् । महामोहाकुलं दीनमेहि मां स्पर्श नित्यशः ॥ ४ ॥ मातः प्रतीक्षते नाऽर्तो यत्तदाशु प्रसीद मे । हित्वाऽक्षसूत्रं सावित्रि निर्विघ्नं पश्य मामिह ॥ ५ ॥ शृण्वतो नाऽन्यकृत्यं स्यात्त्वं परहितं कुरु । ब्रह्मविष्णुहराद्यास्त्वामाऽश्रयन्ति सुरेश्वरि ॥६॥ आगच्छ वरदे देवि, त्र्यक्षरे ब्रह्मवादिनि । गायत्रि च्छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते २ ॥ [3]ओंकारं पूर्वमुच्चार्य व्याहृतीस्तदनन्तरम् । गायत्रीं प्रणवं चान्ते जप एवमुदाहृतम् । [4]ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयादों १०८ ॥ [5]सुरभिर्ज्ञानचक्रे च योनिः कूर्मोथ पङ्कजम् । लिङ्गं निर्याणकं चैव ह्यष्टौ मुद्राः प्रकीर्तिताः ॥ [6]दशभिर्जन्मचरितं, शतेन च पुरा कृतम् । त्रियुगोत्थं सहस्रेण, गायत्री हन्ति

---

१ महागायत्री का ध्यान करना. २ प्रार्थना करना. ३ मूलमन्त्र का उद्धार. ४ मूलमंत्र. ५ आठ मुद्रा दिखाना. ६ प्राणायाम करके तर्पण करना.

किल्विषम् ।। देवा गातु श्रोत्रियाः, । देवा गातुविदो, गातुं वित्वा गातुमित मनसस्पत इमं देवयज्ञं स्वाहा, वाचे स्वाहा वाते धाः ।। ॐ [1]नमः प्राच्यै दिशे याश्च देवता, एतस्यां प्रतिवसन्ति, एताभ्यश्च वो नमः १ ।। [2]नमोऽवान्तरायै दिशे० [3]नमो दक्षिणायै दि० [4]नमोऽवान्तरायै दि० [5]नमः प्रतीच्यै दि० [6]नमोऽवान्तरायै दि० [7]नम उदीच्यै दि० [8]नमोऽवान्तरायै दि० [9]नम ऊर्ध्वायै दि० [10]नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्ति एताभ्यश्च वो नमः ।। ॐ [11]नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि ।। इत्येतासामेव देवतानां सार्ष्टिं सायुज्यं सलोकतां सामीप्यमाप्नोति । य एवं विद्वान् स्वाध्यायमधीते ।। "ततो देवर्षिपितृतर्पणम्" ( देवों का आवाहन करना । ) "गृत्समदस्य गायत्री" ॐ विश्वे देवास आगत श्रृणुता म इमँ हवमिदं बर्हिर्निषीदत ।। "इत्यावाह्य" तर्पण करना । ॐ ब्रह्मा तृप्यतां विष्णुः० रुद्रः० प्रजापतिः० देवास्तृप्यन्तां छन्दांसि तृ० वेदाः तृ० ऋषयः तृ० तपोधनाः तृ० आचार्याः तृ० गन्धर्वाः तृ० इतराचार्याः तृ० संवत्सराः सावयवाः तृप्यन्तां देव्यः तृ० अप्सरसः तृ० देवानुगाः तृ० नागाः तृ० सागराः तृ० पर्वताः तृ० सरितः तृ० मनुष्याः तृ० यक्षाः तृ० रक्षांसि तृ० पिशाचाः तृ० सुपर्णाः तृ० भूतानि तृ० पशवः तृ० ओषधयः

१ दिशाओं का प्रणाम करना, प्रथम पूर्व को. २ अग्निकोणको. ३ दक्षिण को. ४ नैर्ऋत कोणको. ५ पश्चिम को. ६ वायव्य कोण को. ७ उत्तर को. ८ ईशानकोण को. ९ ऊपर को. १० नीचे को. ११ तर्पण करना.

तृ० वनस्पतयः तृ० भूतग्रामाश्चतुर्विधाः तृ० असुराः तृ० क्रूराः तृ० सर्पाः तृ० जम्बुकाः तृ० तरवः तृ० खगाः तृ० विद्याधराः तृ० वाय्वाधाराः तृ० जलाधाराः तृ० निराधाराः तृ० आकाशगामिनः तृ० पापधर्मरताः तृ० सर्वे देवास्तृ० सर्वे ग्रहास्तृप्यन्तां यमः तृप्यतां धर्मराजः तृ० मृत्युः तृ० अन्तकः तृ० वैवस्वतः तृ० कालः तृ० सर्वप्राणहरः तृ० औदुम्बरः तृ० नीलः तृ० दध्नः तृ० परमेष्ठी तृ० वृकोदरः तृ० भीमः तृ० चित्रः तृ० चित्रगुप्तः तृप्यताम् ॥ "कण्ठोपवीती ।" ( गलेमें जन्‍ऊ रखके ऋषियोंका आवाहन करे ) ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ [ तर्पण करना ] ओं सनकः तृप्यताम् २ सनन्दनः तृ० २ सनातनः तृ० २ सनत्कुमारः तृ० २ कपिलः तृ० २ आसुरिः तृ० २ वोढा तृ० २ पञ्चशिखः तृ० २ मरीचिः तृ० २ अत्रिः तृ० २ अङ्गिराः तृ० २ पुलस्त्यः तृ० २ पुलहः तृ० २ क्रतुः तृ० २ प्रचेताः तृ० २ भृगुः तृ० २ वसिष्ठः तृ० २ नारदः तृप्यताम् २ ॥ [ बाहे तर्फ जन्‍ऊ करके पितरों का ध्यान करना ] "ततः प्राचीनावीती" ओं उशन्तस्त्वा हवामहे ह्युशन्तः समिधीमहि । उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ (तर्पण करना) ओं कव्यवाडनलः स्वधा नमः तृप्यताम् ३ सोमः स्व० ३ अर्यमा स्व० ३ यमः स्व० ३ अग्निष्वात्ताः स्वधानमस्तृप्यन्ताम् ३ बर्हिषदः स्व० ३ हविष्मन्तः स्व० ३ सोमपाः स्व० ३ सुकालिनः स्व० ३ आज्यपाः स्व० ३ वसवः स्व० ३ रुद्राः स्व० ३ आदित्याः स्वधा नमः तृप्य-

न्ताम् ३ ॥ "शङ्खस्य त्रिष्टुप् पितरः" उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ "यमस्य त्रिष्टुबङ्गिरसः" अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयँ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान् ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह । अद्य तावत्तिथादित्यादि पिता स्वधा नमः तृप्यताम् ३ । ऊर्जं वहन्तीरमृतं घृतं मधु पयः कीलालं परिस्रुतम् । स्वधा स्थ पितृन्मे तर्पयत ॥ पितृभ्यः स्वधायिभ्यः स्वधा नमः तृप्यतां ३ । पितामहेभ्यः स्व० । प्रपितामहेभ्यः स्व० । ओं ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म । त्वं वेत्थ यतिते जातवेदः स्वधाभिर्यज्ञँ सुकृतं जुषस्व ॥ पितामहः— स्वधा नमः तृप्यताम् ३ । "नारायणस्यार्षम्" ओं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवँ रजः । मधु द्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ॐ मधु ॥३॥ प्रपितामहः स्वधा नमः तृप्यताम् ३ ॥ ओं नमो वः पितरो मन्यवे नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरो रसाय नमो वः पितरो बलाय नमो वः पितरः क्रूराय नमो वः पितरः स्वधा वः पितरो येऽत्र पितरः स्वधा यत्र यूयं स्थ सा युष्मासु तथा यूयं यथाभागं मा-

दयध्वं ये ह पितर ऊर्ग्यत्र वयं स्मः सास्मासु तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥ माता-स्वधा नमः तृप्यताम् ३ । पितामही स्व० प्रपितामही स्व० मातामहः स्व० प्रमातामहः स्व० वृद्धप्रमातामहः स्व० मातामहीस्व० प्रमातामही स्व० वृद्धप्रमातामही स्व० "इत्थमऽन्यान्सम्बन्धिनश्च तर्पयित्वा" (इसी तराह सब बान्धवोंकी तृप्ति करके) मातृपक्ष्यास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः ॥ ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवताभ्यः पितृभ्यो हिमपानं स्वधा क्षीरपानं स्वधा मधुपानं स्वधा तिलोदकं स्वधा उदकतर्पणं स्वधा हिमं २ रजतम् २ ॥ "सव्येन" वसन्ताय नमः ग्रीष्माय नमः वर्षाभ्यो नमः शरदे नमः । हेमन्ताय नमः शिशिराय नमः षडृतुभ्यो नमः ॥ देवासुरास्तथा यक्षा नागा गन्धर्वकिन्नराः । पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥ 'कण्ठोपवीती' जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः । तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः ॥ "अपसव्येन" नरकेषु च सर्वेषु यातनासु च ये स्थिताः । तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते तृप्तिमखिला यान्तु यश्चास्मत्तोभिवाञ्छति ॥ येषां गृहे मया भुक्तं येषां भुंजाम्यहं पुनः । पुत्रदारविहीनाश्च नरके वा वसन्ति ये ॥ तेभ्यः सर्वेभ्यः पितृभ्य इदमस्तु तिलोदकम् ॥ 'सव्येन' ॐनमो देवेभ्यः "कण्ठोपवीती" स्वाहा ऋषिभ्यः । "अपसव्येन" स्वधा पितृभ्यः "सव्येन" आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं

सचराचरम् । जगत्तृप्यतु ३ एवमस्तु ॥ ( सूर्य देवताको प्रणाम करना ) नमो धर्मनिधानाय नमः सुकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमोनमः (तीर्थको प्रणाम करना) शान्तिः पुष्टिस्तथा तुष्टिः सन्तु मे त्वत्प्रसादतः । सर्वपापप्रशान्तिश्च तीर्थराज ! नमोऽस्तु ते ॥ इति सन्ध्योपासनाविधिः ॥

## ॥ अथ नैवेद्यमन्त्राः ॥

अमृतेशमुद्रयाऽमृतीकृत्य अमृतमस्तु अमृतायतां नैवेद्यं । सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय 'मार्गशीर्षे' रुक्मिणीसहिताय कृष्णाय । श्रीसहिताय केशवाय । 'पौषे' प्रियास० अनन्ताय । वागीश्वरीस० नारायणाय ॥ २ ॥ 'माघे' प्रीतिस० अच्युताय । कान्तास० माधवाय ॥ ३ ॥ 'फाल्गुने' शक्तिस० चक्रिणे । क्रियास० गोविन्दाय ॥ ४ ॥ 'चैत्रे' सिद्धिस० वैकुण्ठाय । मतिस० विष्णवे ॥ ५ ॥ 'वैशाखे' शोभास० जनार्दनाय विभूतिस० मधुसूदनाय ॥ ६ ॥ 'ज्येष्ठे' महिमास० उपेन्द्राय । इच्छास० त्रिविक्रमाय ॥ ७ ॥ 'आषाढे' लक्ष्मीस० यज्ञपुरुषाय । धृतिस० वामनाय ॥ ८ ॥ 'श्रावणे' कान्तिस० वासुदेवाय । रतिस० श्रीधराय ॥ ९ ॥ 'भाद्रपदे' प्राप्तिस० हरये । मायास० हृषीकेशाय ॥ १० ॥ 'आश्वियुजे' प्राकाम्यास० योगीश्वराय । धीस० पद्मनाभाय

॥ ११ ॥ 'कार्तिके' लघिमास० पुण्डरीकाक्षाय । गरिमास० दामोदराय ॥ १२ ॥ 'मलिम्लुचे' शक्तिस० योगीश्वराय सत्यभामास० नरकारये निष्कलास० महामार्तण्डाय ॥ १३ ॥ दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः । भगवते वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय सत्याय पुरुषाय अच्युताय माधवाय गोविन्दाय सहस्रनाम्ने विष्णवे लक्ष्मीसहिताय नारायणाय । भवायदेवाय शर्वायदेवाय रुद्रायदेवाय पशुपतयेदेवाय उग्रायदेवाय भीमायदेवाय महादेवाय ईशानायदेवाय ईश्वरायदेवाय उमासहितायशिवाय पार्वतीसहिताय परमेश्वराय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभासहिताय श्रीमहागणेशाय । क्रौं कां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । भगवते ह्रांह्रींसः सूर्याय सप्ताश्वाय अनश्वाय एकाश्वाय नीलाश्वाय प्रत्यक्षदेवाय परमार्थसाराय तेजोरूपाय प्रभासहिताय आदित्याय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै व्रीडाभगवत्यै वैखरीभगवत्यै वितस्ताभगवत्यै गङ्गाभगवत्यै यमुनाभगवत्यै कालिकाभगवत्यै सिद्धलक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै सहस्रनाम्न्यै देव्यै भवान्यै। अभयङ्करीदेव्यै क्षेमङ्करीभगवत्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय । इन्द्राय वज्रहस्ताय अग्नये शक्तिहस्ताय

यमाय दण्डहस्ताय नैर्ऋतये खड्गहस्ताय वरुणाय पाशहस्ताय वायवे ध्वजहस्ताय कुबेराय गदाहस्ताय ईशानाय त्रिशूलहस्ताय ब्रह्मणे पद्महस्ताय विष्णवे चक्रहस्ताय अनन्तादिभ्योऽष्टाभ्यः कुलनागदेवताभ्यः ( अनन्तवासुकितक्षककर्कोटक शङ्खपालकुलिकपद्ममहापद्मेभ्यः ) अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताभ्यः ब्राह्म्यादिभ्यो मातृभ्यः गौर्यादिभ्यो मातृभ्यः ललितादिभ्यो मातृभ्यः दुर्गाक्षेत्रगणेश्वरदेवताभ्यः राकादेवताभ्यः त्रिकादेवताभ्यः सिनीवालीदेवताभ्यः यामीदेवताभ्यः रौद्रीदे० वारुणीदे० बार्हस्पत्यदे० ओंभूर्दे० ओंभुवोदे० ओंस्वर्दे० ओंभूर्भुवःस्वर्दे० अखण्डब्रह्माण्डयागदेवताभ्यः धूर्भ्यः उपधूर्भ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरकादिभ्यो वटुकादिभ्यः ।। उत्पन्नममृतं दिव्यं प्राक्क्षीरोदधिमन्थनात् । अन्नममृतरूपेण नैवेद्यं प्रतिगृह्यताम् ।। ( इष्टदेवताका ध्यान पडकर ) तत्सद्ब्रह्माऽद्यतावत्तिथावद्याऽमुकमासस्यामुकपक्षस्य तिथावमुकायामात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थममुककर्मनिमित्तमोंनमो नैवेद्यं निवेदयामिनमः ।। (मातृकायों का बल। भाषया 'चुट' देना) या काचिद्योगिनी रौद्रा सौम्या घोरतरा परा। खेचरी भूचरी रामा तुष्टा भवन्तु मे सदा। आकाशमातृभ्योऽन्नं नमः आकाशमातृभ्यः समालभनं गन्धो

नमः अर्घो नमः पुष्पं नमः (इष्टदेवताका ध्यान पडकर) अमुक-देवाय पायसं मोदकान् पकान्नमऽपूपान् वाऽन्नादि समर्पयामि नमः ॥ (क्षेत्रपाल के बलिपर अक्षत और पानी छोडना) योऽस्मिन्निवसति क्षेत्रे क्षेत्रपालः सकिंकरः । तस्मै निवेदयाम्यद्य वलिं पानीयसंयुतम् । क्षांक्षेत्राधिपतयेऽन्नं नमः शांराष्ट्राधिपतयेऽन्नं नमः सर्वाभयवरप्रदो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ (देवोंको अक्षत फूल चडाना) आपन्नोऽस्मि शरण्योसि सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोस्मि रक्ष मां शरणागतमित्यादि क्षमापुष्पाणि दत्त्वा । उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा वचसा चोरसा मनसा च नमस्कारं करोमि नमः ॥ (तर्पण करना) नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधिभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि । इत्येतासामेव देवतानां सार्ष्टिं सायुज्यं सलोकतां सामीप्यमाप्नोति य एवं विद्वान्स्वाध्यायमधीते ॥ इति नैवेद्यमन्त्रः ॥

## ॥ अथ भोजनविधिः ॥

ओं तत्रादौ लेपनं कृत्वा । ("धरतीपर मिट्टीसे लिपन करना") चतुष्कोणं तु विप्रस्य क्षत्रियस्य त्रिकोणकम् । मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥ पञ्चार्द्रो भोजनं कुर्याद्वाग्युतः प्राङ्मुखः शुचिः । हस्तौ पादौ तथा वक्त्रमेषा पञ्चार्द्रता मता ॥ (अन्न को देख कर प्रणाम देना) अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेदिदम् । अस्माकं नित्यमस्त्वेतदिति स्मृत्वा च वन्दयेत् ॥ (अन्नपात्र को पकडकर ।) अन्नपते

अन्नस्य नो देहि अनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष-ऊर्जं नो देहि द्विपदे शं चतुष्पदे ॥ ( अन्नको पानीसे छड-काना । ) ओं उच्छिष्टोच्छिष्टोपहतं यच्च पापेन हतं मृतसूत-काद्वा । वसोः पवित्रमग्निः सवितुश्च रश्मयः पुनन्त्वन्नं मम दुष्कृतं यच्चान्यत् ॥ ( दाहे तरफ अन्नके तीन भाग छोडना । ) ओंभूपतयेनमः ओंभुवनपतयेनमः ओंभूतानांपतयेनमः ॥ ३ ॥ ( अपोशन लेना । ) अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो ज्योतीरसोऽमृतम् । ब्रह्मभूर्भुवः-स्वरोम् ॥ ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना । ओममृतोपस्तरणमसि स्वाहेत्या-चम्य ॥ ( अन्न खाना । ) प्राणायस्वाहा अपानायस्वाहा, समा-नायस्वाहा, उदानायस्वाहा, व्यानायस्वाहा, ( इन मन्त्रों के युक्त जीव से ही खाकर, भाकय इष्टदेवके मंत्र से फी ग्रास मन्त्रित खाकर, मुख को गडूषों से शुद्धकर आचमन पीना । ) अमृतापि-धानमसि स्वाहा ॥ ( शुद्ध किई हुई दाहे हाथ के अंगूठसे दाहे पैर के अंगूठ पर पानी छोडना । ) अङ्गुष्ठमात्रः पुरुषः सोङ्गुष्ठा-ग्रमुपाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक् ॥ ( इष्टदेव की स्मरण करना । ) प्राणोग्निः परमात्मा वै पञ्चवा-युसमाश्रितः । स प्रीतः प्रीणातु विश्वं विश्वभुक् ॥ विश्वोसि वैश्वानरोसि विश्वमाभाससे जायमानः । विशन्ति त्वामाहुत-यश्च सर्वाः प्रजास्तत्र यत्र विश्वामृतोऽसि ॥ अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ अहमन्नमहमन्नादोऽहमन्नादः ॥ राज्ञां शिवं

चास्तु तथा द्विजानां गवां शिवं चास्तु तथा प्रजानाम् । आतङ्कहीनं जगदस्तु सर्वं दोषाः प्रणाशं सकलाः प्रयान्तु ॥ इति भोजनविधिः ॥

## ॥ अथ पञ्चगव्यविधिः ॥

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम् ॥ ( छयके भर्तनों में छे ही वस्तु समानभाग से चूने से लिखे हुई अष्टदलों पर रखना । ) गोमूत्रमुत्तरे स्थाप्यं गोमयं वारुणे न्यसेत् । सर्पिर्याम्यां दधि प्राच्यां क्षीरं मध्ये तु निक्षिपेत् । कुशोदकं तथैशान्यां पञ्चगव्यस्थितेर्विधिः ॥ गायत्र्याऽदाय गोमूत्रं गन्धद्वारेति गोमयम् । आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि । तेजोसीति घृतं प्रोक्तं देवस्य त्वा कुशोदकम् ॥ गोमूत्रं गोमये क्षेप्यं ते संक्षिप्ये घृते

१ उत्तर के अष्टदलपर गोमूत्र का भरतन रखना, पश्चिम के गोमय, दक्षिण के घृत, पूर्व के दही बीचमें दूध, और विष्टर समेत पानी, ईशानकांन के अष्टदल पर रखना । यह पञ्चगव्यस्थापन की रीति है ॥ २ गायत्री के ( **ओंभूर्भुवः स्वः** ) इस मन्त्र से गोमूत्र, ( **गन्धद्वारां,** ) इस से गोमय, ( **आप्यायस्व** ) इस से दूध, ( **दधिक्राव्णो,** ) इस से दही, ( **तेजोसि,** ) इस से घृत, ( **देवस्य त्वा,** ) इस मंत्र से कुशोदकमन्त्रित करना चाहिये ॥ उन मन्त्रों से प्रथम मन्त्रित करके फिर अपने २ मंत्र से मंत्रित गोमय में गोमूत्र छोडना । इसी तरह अपने दानों मन्त्रों से और मन्त्रित वे दानों घृत में फेंकना । फिर वह मंत्रित तीन दही में छोडना । वह चार दूध में फेंकना । वह पांछही कुशोदक में छोडके ( **"आपो हिष्ठा"** ) इस मंत्र से मिलाप करके ( "ॐ" ) इस मंत्र से मंत्रित वह पञ्चगव्य तीन दफा, पद्मपत्र या ताम्रपात्र रौप्ये या सोने के बरतन से पीना चाहिये ॥ और ( **शुद्धवती** ) 'याने' ( **"एतो न्विन्द्रं स्तवा"** ) इन मंत्रो से क्रियायोग्य भूमियों को भी शुद्धि करनी चाहिये ॥ यह मंत्र नीचे विस्तार से लिखे गये हैं ॥

तथा । तानि दधि प्रक्षेप्यानि तत्सर्वं पयसोन्तरे । एकीकृत्य तु तत्सर्वं कुशोदकविमध्यगम् । आपो हिष्ठेति चालोड्य प्रणवेन तु तत्पिबेत् ॥ औदुम्बरे पद्मपत्रे रौप्यपात्रे हिरण्मये । मन्त्रपूतं पिबेत्तु त्रीन्वारान्पञ्चगव्यकम् ॥ शुद्धवतीति मन्त्रेण प्रक्षिपेद्दिक्षु सर्वतः ॥

( गोमूत्र को पडना। ) ओं गायत्र्यै नमः ओं भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् २ ॥ ( गोमय को। ) गन्धद्वारां दुराधर्षां नित्यपुष्टाङ्करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ( दूध को। ) आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य सङ्गथे। ( दही को ) दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत् प्र ण आयूंषि तारिषत् ॥ ( घीको ) तेजोसि शुक्रमसि ज्योतिरसि धामनामासि प्रियन्देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि देवेभ्यस्त्वा यज्ञेभ्यो गृह्णामि ( कुशोदक, यामे, विष्टरसमेत पानी को ) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ ( फिर गोमूत्र गोमय मे मिलाकर और गोमय व गोमूत्र का मंत्र पडना ॥ वे घृत में, लगा कर और गोमूत्र गोमय और घृत का मंत्र पडना। इसी रीति से वे दही में, वे क्षीर में, वे सब विष्टरयुतपानी में जमाकरके, रलावने का मंत्र पडना।) आपो हिष्ठा मयोभुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेहनः, उशतीरिव मातरः । तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः ॥ ( अब कुशा के विष्टर से दिशायों की शुद्धि करनी। ) इतो न्विन्द्रं स्तवामहेऽहं

शुद्धः शुद्धेन साम्ना । शुद्धैरुक्तैर्वावृध्वासंशुद्ध आशीर्वान्ममत्तु ॥ तुतान्धुवाम यज्ञिर इन्द्रमुक्ता नवावृधः । पुरूण्यऽस्य पांस्या-मिषासन्तो हवामहे ॥ इन्द्र शुद्धो हतो न हि शुद्धः शुद्धाभि-रूतिभिः । शुद्धो रयिं निधारय शुद्धः समद्धि सौम्यः ॥ इन्द्रः शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजो सिषासहि ॥ पञ्चव्युष्टीरनुपञ्च दुहा गा पञ्चनाम्नीमृतवोऽनुपञ्च । पञ्चदिशः पञ्चदशेन क्लृप्ताः समा-नमूर्ध्नीरभिलोकमेकम् ॥ इतिपञ्चगव्यविधिः ॥

## ॥ ॐ अथ विष्णुपञ्चायतनपूजाविधिः ॥

( पानी से संकल्प छोडना ) ॐ अस्य श्रीआसनशोधन-मन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं च्छन्दः कूर्मो देवता आसनशोधने विनियोगः । ( धरती को नमस्कार करना ) पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ ( धरती को आसन रखना ) ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि । ( गन्ध अक्षत व फूल चडाना ) श्रीं पृथिव्यै आधा-रशक्त्यै समालभनं गन्धोनमः, अर्घोनमः पुष्पं नमः ॥ ( अब हाथ जोड के देवों का स्मरण करना ) शुक्लाम्बरधरं विष्णुं शशि-वर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभि-प्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः । लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ महाबले महोत्साहे महाभयविनाशिनि । त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयव-

र्थिनि ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ ॐ गुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे परमाचार्याय नमः, आदिसिद्धेभ्यो नमः ॥ ॥ ( अथ दोनों हाथों के अनामिका के मध्यपर्व पर कुशाकाण्ड रख के न्यास करना ) ॐ अ नाभौ, उ हृदि, म शिरसि । भूः पादयोः, भुवः हृदि, स्वः शिरसि । ॐभूः अङ्गुष्ठाभ्यां नमः, भुवः तर्जनीभ्यां नमः, स्वः मध्यमाभ्यां नमः, महः अनामिकाभ्यां नमः, जनः कनिष्ठिकाभ्यां नमः, तपः सत्यं करतलकरपृष्ठाभ्यां नमः । भूः पादयोः, भुवः जान्वोः, स्वः गुह्ये, महः नाभौ, जनः हृदि, तपः कण्ठे, सत्यं शिरसि । ॐभूः हृदयाय नमः, भुवः शिरसे स्वाहा, स्वः शिखायै वषट्, महः कवचाय हुं, जनः नेत्राभ्यां वौषट्, तपः सत्यं अस्त्राय फट् ॥ तत्सवितुरङ्गुष्ठाभ्यां नमः, वरेण्यं तर्जनीभ्यां नमः, भर्गो देवस्य मध्यमाभ्यां नमः, धीमहि अनामिकाभ्यां नमः, धियोयोनः कनिष्ठिकाभ्यां नमः, प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ तत् पादयोः, सवितुर्जान्वोः, वरेण्यं कट्यां, भर्गो नाभौ, देवस्य हृदये, धीमहि कण्ठे, धियो नासिकायां, यश्चक्षुषे, नः ललाटे, प्रचोदयाच्छिरसि ॥ तत्सवितुर्हृदयाय नमः, वरेण्यं शिरसे स्वाहा, भर्गो देवस्य शिखायै वषट्, धीमहि कवचाय हुं, धियो योनः नेत्राभ्यां वौषट्, प्रचोदयादस्त्राय फट् ॥ आपः स्तनयोः, ज्योतिर्नेत्रयोः, रसो मुखे, अमृतं ललाटे, ब्रह्मभूर्भुवः स्वरों शिरसि ॥ ॥ ॐ तद्विष्णोः परमं पदं हृदयाय नमः, सदा पश्यन्ति सूरयः शिरसे स्वाहा, दिवीव चक्षुराततं शिखायै वषट्, तद्विप्रासो विपन्यवो कवचाय हुं,

जागृवांसः समिन्धते नेत्राभ्यां वौषट्, विष्णोर्यत्परमं पदम् अस्त्राय फट् ॥ यो रुद्रो अग्नौ हृदयाय नमः, यो अप्सु य ओषधीषु शिरसे स्वाहा, यो वनस्पतिषु शिखायै वषट्, यो रुद्रो विश्वा भुवना विवेश कवचाय हुं, तस्मै रुद्राय नेत्राभ्यां वौषट्, नमो अस्तु देवा अस्त्राय फट् ॥ ॥ गणनान्त्वा गणपतिं हवामहे हृदयाय नमः, कविं कवीनां शिरसे स्वाहा, उपमश्रवस्तमं शिखायै वषट्, ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते कवचाय हुं, आनः शृण्वन्नेत्राभ्यां वौषट्, ऊतिभिः सीद सादनमस्त्राय फट् ॥ ॥ चित्रं पादयोः, देवानां जंघयोः, उदगात् जान्वोः, अनीकमूर्वोः, चक्षुः शिश्ने, मित्रस्य गुह्ये, वरुणस्य नाभौ, अग्नेर्हृदि, आप्राद्यावा पृथिवी कण्ठे, अन्तरिक्षं बाह्वोः, सूर्य मुखे, आत्मा नासिकायां, जगतः नेत्रयोः, तस्थुषः ललाटे, च शिरसि ॥ ॥ जात शिखायां, वेदसे ललाटे, सुनवाम कर्णयोः, सोमं नासिकायां, अराति चक्षुषोः, यत ओष्ठयोः, नि दन्तेषु, दहाति तालुनि, वेद जिह्वायां, स ग्रीवायां, नः बाह्वोः, पर्षत् हृदि, अति स्तनयोः, दुर् कुक्षौ, गाणि नाभौ, विश्वा पृष्ठे, नाव पाण्योः, इव वृष्णयोः, सिन्धुं शिश्ने, दुर् कट्यां, इत ऊर्वोः, अति जङ्घयोः, अग्निः पादयोः ॥ ॥ ( अङ्गुलियों से दर्भकाण्ड छोड के, दिशायों को तिल फैंकना ) । अपसर्पन्तु ते भूता ये दिवि भुवि च स्थिताः । ये दिक्षु विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ( अब प्राणायाम कर के, मुंह और पैरौं को छिडकाना ) । तीर्थे स्वेयं तीर्थमेव समानानां भवति, मानः शंस्योररुषो धूर्तिः प्राणङ् मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ ॥ ( अब अनामिका के उपरे पर्वपर पवित्र

धारना )। वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः ॥ ( अब अपने आप को गन्ध अक्षत व फूल चडाना )। परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणाय आधारशक्त्यै समालभनं गन्धोनमः अर्घोनमः पुष्पं नमः॥ (दीवा को गन्ध अक्षतफूल)। स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः। प्रसीद मम गोविन्द दीपोयं प्रतिकल्पितः ॥ ( धूप को )। वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः। आधारः सर्वदेवानां धूपोऽयं परिकल्पितः॥ ( सूरज को )। नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे। नमः प्रत्यक्षदेवाय भास्कराय नमोनमः॥ ( विष्टर और अक्षत समेत अर्घापात्र से पानी संकल्प छोडना ) ॥ यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च। न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये॥ आत्मने नारायणाय आधारशक्त्यै दीपधूपसंकल्पात्सिद्धिरस्तु दीपोनमः धूपोनमः॥ ॐतत्सद्ब्रह्म अद्यतावत्तिथावद्य अमुकमासस्य अमुकपक्षस्य तिथावमुकायां भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय। भवाय देवाय ८ पार्वतीसहिताय परमेश्वराय। विनायकाय ८ वल्लभासहिताय श्रीमहागणेशाय। ह्रां ह्रीं सः सूर्याय ८ प्रभासहिताय आदित्याय। भगवत्यै अमायै ८ सहस्रनाम्न्यै देव्यै भवान्यै विष्णुपञ्चायतनदेवताभ्यो दीपो नमः धूपो नमः॥ अपसव्येन। ( बाहे जनू करके तिलयुत से)। नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे। नमो यमाय रुद्राय कान्तारपतये नमः॥

॥ ॐ तत्सद्ब्रह्म० नित्यकर्मनिमित्तं । पित्रे पितामहाय प्रपितामहाय । मात्रे पितामह्यै प्रपितामह्यै । मातामहाय प्रमातामहाय वृद्धप्रमातामहाय । मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः दीपःस्वधा धूपः स्वधा ॥ सव्येन ( दाहे जनू करके, तिल अक्षत गन्ध विष्टर और पानीसमेत अर्घापात्र में तीन मन्त्रों से तीन फूल पाना ) ॥ संवः सृजामि हृदयं, संसृष्टं मनो अस्तु वः । १ । संसृष्टा तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः । २ । सं य्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम । ३ । ( उस पानी से देवों को जीवादान देना, याने उन पर पाना ) । अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणन्दत्तान्तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तान्तेन जीव ॥ ( अब देवों को देह के तराह हाथसे दो दर्भकाण्ड रखके चामर सा न्यास करना ) यथा देहे तथा देवे न्यासकर्म समाचरेत् । विना न्यासेन यत्कर्म त्वर्धं गृह्णन्ति राक्षसाः । न्याससूलमिदं सर्वं तस्मान्न्यासं समाचरेत् अ नासौ, उहृदि० । (अब अक्षत समेत दो दर्भकाण्ड हाथ में रख के देवों की पृच्छा करना। याने पूजा शिरो करने की आज्ञा लेना )॥ ॐ भूःपुरुषमावाहयामि नमः ॐ भुवःपुरुषमावाहयामि नमः ॐ स्वःपुरुषमावाहयामि नमः ॐ भूर्भुवःस्वःपुरुषमावाहयामि नमः ॥ ३ ॥ ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॥ ३ ॥ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपदाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते

सहस्रकोटीयुगधारिणे नमः ॥३॥ वासुदेवाय विद्महे लक्ष्मीनारायणाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ ३ ॥ ॐ नमः कारणवामनाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ३ ॥ विश्वरूपाय विद्महे विष्वक्सेनाय धीमहि, तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ नरसिंहाय विद्महे नरकोत्तारणाय धीमहि, तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि, तन्नः शिवः प्रचोदयात् ॥ ३ ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि, तन्नो दन्ती प्रचोदयात् ॥३॥ भास्कराय विद्महे सहस्ररश्मये धीमहि, तन्नः सूर्यः प्रचोदयात् ॥ ३ ॥ सुभगायै विद्महे काममालिन्यै धीमहि, तन्नो दुर्गा प्रचोदयात् ॐ तत्सद्ब्रह्म अद्यतावत्तिथावद्य अमुकमासस्य अमुकपक्षस्य तिथावमुकायां, भगवतः वासुदेवस्य ८ लक्ष्मीसहितस्य नारायणस्य, भवस्य देवस्य ८ पार्वतीसहितस्य परमेश्वरस्य, विनायकस्य ८ वल्लभासहितस्य श्रीमहागणेशस्य ह्रांह्रीं सः सूर्यस्य ८ प्रभासहितस्य आदित्यस्य, भगवत्या अमायाः ८ सहस्रनाम्न्या देव्याः भवान्या विष्णुपञ्चायतनदेवतानां, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीविष्णुप्रीत्यर्थं विष्णुपञ्चायतनपूजनमर्चामहं करिष्ये ॐ कुरुष्व ॥ तिलसर्षपयवान्विकीर्य । (तिल सर्षप व जऊं तर्फू को फैंककर दो दो दर्भकाण्ड आसन देना ।) पुरुष एवेदं, ध्रुवा द्यौरित्यासनम् ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रु-

वासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ भगवतः वासुदेवस्य ८ लक्ष्मीसहितस्य नारायणस्य, भवस्य देवस्य ८ पार्वतीसहितस्य परमेश्वरस्य, विनायकस्य ८ वल्लभासहितस्य श्रीमहागणेशस्य, हांहांह्रींसः सूर्यस्य प्रभासहितस्य आदित्यस्य भगवत्याः अमायाः ८ सहस्रनाम्न्या देव्या भवान्याः विष्णुपञ्चायतनदेवतानामिदमासनं नमः ॥ ( अब अक्षत समेत दो दर्भ हाथमें रख के देवों को पूजाज्ञा लेने के पूर्वक आवाहन करना ) ॥ भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय, भवाय देवाय ८ पार्वतीसहिताय परमेश्वराय, विनायकाय ८ वल्लभासहिताय श्रीमहागणेशाय, हांह्रींसः सूर्याय ८ प्रभासहिताय आदित्याय, भगवत्यै अमायै ८ सहस्रनाम्न्यै देव्यै भवान्यै विष्णुपञ्चायतनदेवताभ्यः युष्मान्वः पूजयामि ॐ पूजय ( अक्षत कन्दों से फैंक के, नवा अक्षत और रख के ) सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ युञ्जते मा न उत युञ्जाते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुना विदेक इन्मही देवस्य सवितुः परिष्टुति ॥ "देवश्रुतौ देवेष्वाघोषेथाम्" ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्, समूढमस्य पांसुरे ॥ इळावती धेनुमती हि भूतं सूर्यवसिनी मनुष्ये यशस्ये । व्युष्टभ्ना रोधसी विष्ण एते दधात पृथिवीमभितो मयूखैः, वैष्णवमसि विष्णुस्तु तुभ्नातु ॥ दिवो वा विष्णुरुत वा पृथिव्या महो वा विष्णुरुतोर्वन्तरिक्षात् । हस्तौ पृणस्व बहुभिर्वासव्यैराप्रयच्छ दक्षिणादुत सव्यात् ॥

विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ विष्णोः पृष्ठमसि विष्णो रराटमसि विष्णोः शप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमाणेष्वधिक्षियन्ति भवनानि विश्वा ॥ भगवन्तं वासुदेवं ८ लक्ष्मीसहितं नारायणं, भवं देवं ८ पार्वतीसहितं परमेश्वरं, विनायकं ८ वल्लभासहितं श्रीमहागणेशं, ह्रांह्रींसःसूर्यं ८ प्रभासहितं आदित्यं, भगवतीं अमां ८ सहस्रनाम्नीं देवीं भवानीं, विष्णुपञ्चायतनदेवताः आवाहयिष्यामि ॐ आवाहय ॥ ( यह पडते हुई, हाथ की दर्भ व अक्षत कन्दों से फैंककर । फी श्लोकसे देवों को फूल चडाना । प्रथम विष्णु को ) ॥ आवाहयाम्यमरवृन्दनुताङ्घ्रियुग्मं लक्ष्मीपतिं भुवनकारणमप्रमेयम् । आद्यं सनातनतनुं प्रणवासनस्थं पूर्णेन्दुभास्करहुताशसहस्ररूपम् ॥ १ ॥ ध्येयं परं सकलतत्त्वविदां वरेण्यं वाराहकापिलनृकेसरिसौम्यमूर्त्तिम् । श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं कौमोदिकीकमलकम्बुरथाङ्गहस्तम् ॥ २ ॥ त्वं सर्वगोसि भगवन्किल यद्यपि त्वामावाहयामि हि यथा व्यजनेन वायुम् । गूढो यथैव दहनो मथनादुपैति ह्यावाहितोसि त्वमुपैषि तथैव चार्चाम् ॥ ३ ॥ मालाधराच्युत विभो परमात्ममूर्ते सर्वज्ञ नाथ परमेश्वर सर्वशक्ते । आगच्छ मे कुरु दयां प्रतिमां भजस्व पूजां गृहाण मदनुग्रहकामयाद्य ॥ ४ ॥ आवाहयामि मणिसन्निभमात्मबिम्बे मायापुरे हृदयपङ्कजसन्निविष्टम् । श्रद्धानदीविमलचित्त-

जलाभिषेकं भावाष्टपुष्पविधिना हरिमर्चयामि ॥ ५ ॥ (शिव जी को)। लिङ्गेत्र भक्तदयया क्षणमात्रमेकं स्थानं विधाय भव मद्विहितां पुरारे । सर्वेश विश्वमय हृत्कमलाधिरूढः पूजां गृहाण भगवन्भव मेद्य तुष्टः ॥ १ ॥ भूमेर्जलात्तु पवनादनलाद्धिमांशोरुष्णांशुतो हृदयतो गगनात्समेत्य । लिङ्गेद्य सन्मणिमये मदनुग्रहार्थं भक्त्यैकलभ्य भगवन् कुरु सन्निधानम् ॥ ॥ २ ॥ (गणपति जी को)। शैलेश्वरस्य तनयार्भक भक्तविघ्ननाशाय हस्तधृतदण्डकुठारपाश । द्वारेश सर्वगणनायक पद्महस्त पूजां गृहाण भगवन् भव मेद्य तुष्टः ॥ १ ॥ ध्याये गजाननं देवं तप्तकाञ्चनसन्निभम् । चतुर्भुजं महाकायं सर्वाभरणभूषितम् । दन्ताक्षमालापरशू पूर्णमोदकपात्रकम् । मोदकैः सुप्त शुण्डाग्रमेकदन्तं विनायकम् । उमासुतं च विघ्नेशं विश्वव्यापिनमीश्वरम् । आवाहयामि पूजार्थमागच्छ द्विरदानन ॥ ३ ॥ (सूरज जी को)। ब्रह्माण्डगेहपरिदीपक शम्भुमूर्ते तेजोनिधान खचरेश्वर पूर्वदेव । पंचोपचारविधिना विहितां मयाद्य पूजां गृहाण भगवन्भव मेऽद्य तुष्टः ॥ १ ॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या पीडां हर दिवाकर । त्रैलोक्यं भूषितं येन भुवनानि चतुर्दश । अव्यक्तं व्यक्तिमारूढं रविमावाहयाम्यहम् ॥ २ ॥ (दुर्गा को) श्रीशारदे सुरवरे त्रिपुरे सुरेशि दुर्गे भवानि खलु वैखरि विश्वमातः । शर्वार्धदेहनिलये परिवारयुक्ता पूजां गृहाण सुभगे भव मेऽद्य तुष्टा ॥ १ ॥ आवाहयाम्यहं दुर्गां शङ्खचापशरान्विताम् । त्रिशूलहस्तां वरदां त्रिनेत्रां चारुहासिनीम् । एह्येहि दुर्गे वरदे

भजस्व प्रतिमां सदा । अनुकम्पस्व मां भक्त्या कृपां कुरु महेश्वरि ॥ २ ॥ ( नीचले मन्त्र तीन वार पढ कर तीन फूल सब देवों को चढाकर, अञ्जलि कर के मानसिक पूजा करके बाहर प्रतिमापर रखना)। भगवन् पुण्डरीकाक्ष भक्तानुग्रहकारक। अस्मद्दयानुरोधेन सन्निधानं कुरु प्रभो ॥ ३ ॥ इत्याहूय तु गायत्रीं त्रिः समुच्चार्य तत्त्ववित् । मनसा चिन्तितैर्द्रव्यैर्देवमात्मनि पूजयेत् । तेजोरूपं ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत् ॥ ( जऊं फैंक कर और प्राणायाम भी कर के । अर्घा का पानी हाथ से वापस उसी में पाना )। "पाद्यार्थमुदकं नमः"। शन्नो देवीरभिष्टये आपो भवन्तु पीतये। संय्योरभि स्रवन्तु नः ॥ ( उस में लाजा गन्ध सर्वौषधि विष्टर और पानी पाना, वह पांच पाद्य की द्रव्य हैं, याने देवों के पैर धोने के द्रव्य हैं ) ॥ लाजाश्च कुङ्कुमं चैव सर्वौषधिसमन्वितम् । दर्भाकुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम् ॥ भगवन्तः पाद्यंपाद्यम् ॥ ( इन मन्त्रों से पाद्य देना ) । एतावानस्य, हिरण्यवर्णा, इति पाद्यम् ॥ एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ १ ॥ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ २ ॥ भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय, भवायदेवाय ८ पार्वतीसहिताय परमेश्वराय, विनायकाय ८ वल्लभासहिताय श्रीमहागणेशाय, ह्रांह्रींसः सूर्याय ८ प्रभासहिताय आदित्याय, भगवत्यै अमायै ८ सहस्रनाम्न्यै देव्यै भवान्यै विष्णुपञ्चायतनदेवताभ्यः पाद्यं नमः ॥ शेषं निवारयेत् ( अर्घा

से पाद्य का शेष हटाना ) ॥ ( और भी अर्घा में हाथ से पानी वापस करना । ) पुनः । शन्नो देवी० ॥ ( उस में पानी दूध विष्टर घी दही चावल जऊं और सर्षप पाना, वह आठ द्रव्य अर्घा याने हाथ, मुंह धोने के चीज हैं ) । आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति ह्यर्घ्यमष्टाङ्गमुच्यते ॥ भगवन्तः । अर्घ्यमर्घ्यम् ॥ ( देवों को देना ) ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । ततो विश्वं व्यक्रामत्साशनानशने अभि ॥ १ ॥ आपो हिष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः ॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ भगवन् वासुदेव ८ लक्ष्मीसहित नारायण, भवदेव पार्वतीसहित परमेश्वर, विनायक ८ वल्लभासहित श्रीमहागणेश, ह्रां ह्रींसः सूर्य ८ प्रभासहित आदित्य, भगवति अम्बे ८ सहस्रनाम्नि देवि भवानि विष्णुपञ्चायतनदेवता इदं वः अर्घ्यं नमः ॥ ( साफ़ पानी से आचमन देना याने मुंह सफा करावना ) तस्माद्विराट्, शन्न आप, इत्याचमनीयम् ॥ तस्माद्विराडजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ १ ॥ शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः । शन्नः समुद्रिया न आपः शमु नः सन्तु कूप्याः ॥ भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय, भवायदेवाय ८ पार्वतीसहिताय परमेश्वराय, विनायकाय ८ वल्लभासहिताय श्रीमहागणेशाय, ह्रांह्रींसः सूर्याय ८ प्रभासहिताय आदित्याय, भगवत्यै अमायै ८ सहस्रनाम्न्यै देव्यै

भवान्यै विष्णुपञ्चायतनदेवताभ्यः आचमनीयं नमः ॥ ( शरीर की मैलाई उठाने के वास्ते थोडासा पानी देना ) । यत्पुरुषेण, इदमापः इति मन्त्रस्नानीयम् ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १ ॥ इदमापः प्रवहत यत्किंचिद्दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ भगवते वासु० विष्णुपञ्चायतनदेवताभ्यः मन्त्रस्नानीयं नमः ॥ ( अब पानी दूध दही घी शहद लाजा सर्षप तिल जव शाली विष्टर दूर्वा मिट्टी भस्म मेवा मिठास ) ( घी, शहद, दूध खण्ड और अंगूर रूप ) पञ्चामृत पञ्चगव्य कपूर सर्वौषधी गन्ध और फूल, यह एकीसद्रव्य पात्र में जमा करना, यद्यपि यह बाईस हैं तथापि पानी सबके साथ होने से गिनती में नहीं लेने से एकीस ही हैं ) । पयो दधिघृतक्षौद्रलाजासिद्धार्थकास्तिलाः । यवव्रीहिकुशादूर्वामृद्भस्फलशर्कराः । पञ्चामृतं पञ्चगव्यं कर्पूरौषधयस्तथा । एकविंशतिस्नानानि गन्धाढ्यैः कुसुमैरपि ॥ ( इन से भी मन्त्र पढ कर स्नान देना ) । ( पानी ) उदुत्तमं वरुणं पाशमस्मदवाधमं विमध्यमं श्रथाय । अथा वयमादित्यव्रते तवानागसो अजितये स्याम । ( क्षीर ) पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः, पयस्वतीः प्रदिशः सन्तु मह्यम् ( दही ) दधि क्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत् ( घी ) घृतवती भुवनानामभिश्रियोर्वी पृथिवी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कम्भिते अजरे भूरिरेतसा ( शहद ) मधुवाता ऋतायते मधु क्षिरन्ति सिन्धवः, माध्वीर्नः सन्त्वौषधीः ॥

मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः, मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमांअस्तु सूर्यः, माध्वीर्गावो भवन्तु नः ॥ ( लाजा ) तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः। लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगस्य मांसमभवन्न लाजाः ( सर्षप ) रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समृद्धः स नो दिवः सरिषः पातु नक्तम् ( तिल ) तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रयत्नवद्भिः पितॄंल्लोकान्प्राण आयाहि नः स्वधा ( यवा ) यवोसि यवयास्मद्द्विषं यावयारातिम् । पितृषदनं त्वा लोकमास्तृणामि ( शाली ) धान्यमसि धिनोहि देवान्धिनोहि यज्ञं धिनोहि यज्ञपतिं धिनोहि मां यज्ञम् ( दर्भांकुर ) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे ( दूर्वा ) काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ( मिट्टी ) आक्रम्य वाजिन्पृथिवीमग्निमिच्छा रुचा त्वम् । भूम्यायत्वायनो ब्रूहि यतः खनेम ते वयम् ( भस्म ) प्रसद्य भस्मना योनिमापश्च पृथिवीमग्नेः । संसृज्य मातृभिष्टुं ज्योतिष्मान्पुनरासदः ( मेवा ) याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः (मिठास) शर्कराभिरवकामवकाभिः शर्करामुत्सादेन । जिह्वामवक्रन्देन तालुं सरस्वती जिह्वाग्रेण ( पञ्चामृत ) पञ्चव्युष्टीरनु पञ्च दुहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशा पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोकमेकम् । (पञ्चगव्य) गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्, मिश्रीकृत्य ॥ समुद्रादूर्मिर्मधुमां उदारदुपांशुना-

सममृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवाना-मऽमृतस्य नाभिम् ( कपूर ) त्र्यम्बकं यजामहे सुगन्धिं पुष्टिव-र्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ( सर्वौ-षधीः ) या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहं शतं धामानि सप्त च ( गन्ध ) गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रि-यम् ( फूल ) पुष्पवतीः प्रसुमतीः फलिनीरफला उत। अश्वा इव सजित्वरी वीरुधः पारयिष्णवः॥ भगवते वासुदेवाय ८ लक्ष्मी-सहिताय नारायणाय, भवाय देवाय ८ पार्वतीसहिताय परमे-श्वराय, विनायकाय ८ वल्लभासहिताय महागणेशाय, ह्रांह्रींसः सूर्याय ८ प्रभासहिताय आदित्याय, भगवत्यै अमायै ८ सह-स्रनाम्न्यै देव्यै भवान्यै विष्णुपञ्चायतनदेवताभ्यः, एकविंशति-स्नानानि नमः॥ ( अब पानी दूध दही घी शहद जऊं खण्ड सर्षप तिल सोने का पत्र कपूर गन्ध लाजा अखरोट फूल और सर्वौषधी पात्रमें जमा रखके "द्वादशीदिन के विना" विष्णु को स्नान देना ) अम्बुना पयसा दध्ना घृतेन मधुना यवैः। शर्करा सर्षपतिलैस्तथा चामी-करेण वै। कर्पूरकुङ्कुमाभ्यां च लाजाऽक्षोटैः सपुष्पकैः। सर्वौ-षध्यस्तथा पश्चाद्विष्णोः स्नानानि षोडश। दद्यात्षोडशस्नानानि षोडशर्चेन विष्णवे॥॥ आदौ शुद्धजलेन ( प्रथम सफा पानी से ) वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमय-क्ष्मावः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः॥ भग-वते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय शतधारोदकं नमःसहस्रधारोदकं नमः॥ ( शंख से षोडशद्रव्यों को स्नान )।

"पुरुषमेधाः पुरुषस्य नारायणस्यार्षम्" सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषः एवेदं सर्वं यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादोस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोस्येहाभवत्पुनः। ततो विश्वं विक्रामत्साशनानशने अभि ॥ ४ ॥ तस्माद्विराडजायत विराजो अधिपूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्। पशूँस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥९॥ तस्तादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ १० ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयत् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः। देवा

यद्यज्ञं तन्वाना अवध्नन्पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ तद्विष्णोः० । भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय षोडशस्नानानि नमः ॥ ( अब पानी दूध दही घी शहद खण्ड सर्वौषधी शाली फूल मेवा सर्षप लाजा गन्ध सुनपत्र और रत्न यह पंद्राह द्रव्य जमा करना शम्भो के स्नान वास्ते ) पानीयान्तरितैः पयोदधिघृतैः क्षौद्रेक्षुभिः सौषधैर्व्रीह्यद्भिः कुसुमोदकैः फलजलैः सिद्धार्थलाजोदकैः । गन्धाद्भिः शुभहेमरत्नसलिलैरित्थं सदा चोत्तमैर्दद्यात्पञ्चदशाम्बुना सह महास्नानानि शम्भोः क्रमात् ॥ ( स्नान देना ) असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् । तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ १ ॥ येऽस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषां स० ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः । तेषां स० ॥ ३ ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषां स० ॥ ४ ॥ ये वनेषु शिलिपञ्जरा नीलग्रीवा विलोहिताः । तेषां सह० ॥ ५ ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषां स० ॥ ६ ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषां० ॥ ७ ॥ ये भूतानां पथि रक्षय ऐड मृडाय व्युधः । तेषां० ॥ ८ ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषां० ॥ ९ ॥ य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितिष्ठिरे । तेषां० ॥ १० ॥ ॐनमो अस्तु रुद्रेभ्यो, ये दिवि येषां वर्षमिषवस्तेभ्यो, दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा-

स्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १ ॥ ॐनमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राची० ॥ २ ॥ ॐनमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश० ॥ ३ ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ भवाय देवाय ८ पार्वतीसहिताय परमेश्वराय पञ्चदश स्नानानि नमः ॥ ( गणेश को चतुर्दश स्नान ) गणानान्त्वा गणपतिं हवामहे कविङ्कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनम् ॥ विनायकाय ८ वल्लभासहिताय श्रीमहागणेशाय चतुर्दश स्नानानि नमः ॥ ( अब जल क्षीर दही घी खण्ड तिल जऊं शहद लाजा पञ्चगव्य गन्ध फूल और सर्वौषधी यह तेराह द्रव्य सूर्यस्नान के लिये जमा करना ) पयः क्षीरं दधि सर्पिरिक्षुस्तिला यवा मधु । लाजामृतं पञ्चगव्यं गन्धपुष्पौषधीस्तथा । त्रयोदशस्नानेऽमूनि सूर्यस्योक्तानि सूरिभिः ( सूरजको स्नान देना ) चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ ह्रां ह्रीं सः सूर्याय ८ प्रभासहिताय आदित्याय त्रयोदश स्नानानि नमः ॥ ( अब लाजा गन्ध वच कुठ ऐल शङ्खफूल केसर अगुरु और कर्पूर यह आठ द्रव्य दुर्गा के स्नान पर एकठा करना, "गन्ध, केसर" ये दो गिनती में एक ही रख के आठ द्रव्य है ॥ ) लाजागन्धवचः कुष्ठं वालुकं शङ्खपुष्पकम् । कुङ्कुमागुरुकर्पूरं स्नाने देव्याः प्रकल्पयेत् ॥ ( स्नान

देना ) जातवेदसे सुनवाम सोममराती यतो निदहाति वेदः । स नः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ भगवत्यै अमायै ८ सहस्रनाम्न्यै देव्यै भवान्यै अष्टौ स्नानानि नमः ॥ ( शङ्खको स्नान ) अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् ॥ पाञ्चजन्याय शङ्खाय स्नानं नमः ॥ ( घण्टा को स्नान ) कयानश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥ देवदूत्यै घण्टाभगवत्यै स्नानं नमः ॥ ( अब यथाकाल सन्ध्योपासना का "ब्रह्म तृप्यतां" इह तर्पण करके ) ततो देवर्षिपितृतर्पणम् ॥ ॐ नमो देवेभ्यः "कण्ठोपवीती" स्वाहा ऋषिभ्यः "अपसव्येन" स्वधा पितृभ्यः "सव्येन" आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं । जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु ॥ ( सफा पानी से मन्त्रगुडक करना, याने स्नानद्रव्यों की गलाजत हठना )। तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ भगवते वासुदेवाय ८ । भवाय देवाय ८ विनायकाय ह्रां ह्रीं सः सूर्याय ८ भगवत्यै अमात्यै ८ सहस्रनाम्न्यै देव्यै भवान्यै विष्णुपञ्चायतनदेवताभ्यः मन्त्रगुडकं परिकल्पयामि नमः ॥ ( बाहे हाथ के बीच में अक्षत व पानी रख के उससे देवों की नीराजना "याने" आलत निकाल के बाहे कन्दे पर से फैंकना ) ॐ प्रत्यग्ने हरसाहरः शृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं विरुज वीर्यम् ॥ ( इत्यारात्रिका ॥ ( अब देवों के पैरो का पानी आंखों पर मलना ) ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ इति नेत्रस्पर्शनम् ॥ ( अब पानी तिलक गोमतीचक्र शङ्ख तुलसीदल घण्टा सालिग्रामशिला और ताम्रपात्र, यह आठ वस्तु चरणामृते के अङ्ग हैं । याने यथायोग्य ताम्रपात्र में गोमतीचक्र व सालिग्राम, चन्दनतिलक और तुलसीफूलयुक्त रख के, और विष्टरयुक्त शंख में पानी रखना ) ॥ उदकं चन्दनं चक्रं शङ्खश्च तुलसीदलम् । घण्टा शिला ताम्रपत्रमष्टाङ्गं चरणामृतम् ॥ ( अब घण्टाशब्द समेत शङ्ख से पानी डालना ) ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय चरणामृतं गृह्णामि नमः॥ ( सिरको छिडकना ) शिरसा धारयाम्यहम् ॥ आपो हिष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयते हनः । उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ( बिच्छाने जगाह फूल बिच्छाना ) आसनाय नमः पद्मासनाय नमः गरुडासनाय नमः वृषभास० मूषकास० सप्ताश्वास० सिंहासनाय नमः शतदलपद्मा० सहस्रदलपद्मासनाय नमः ॥ ( बिच्छौने पर मार्जित देवों को गन्ध फूल से अनुलेपन कर के बिठाना ) किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय । लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति ॥ ( यथाकाल स्तोत्र पढ के ) रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयम-

गाद्वर्चसा संविदाना । विष्णुपञ्चायतनदेवताभ्योऽनुलेपनं गृह्णामि नमः ॥ ( वस्त्र पहनना ) तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ युवा सुवासाः परिवीत आगात्स उच्छ्रेयान्भवति जायमानः । तन्धीरासः कवय उन्नयन्ति साध्यो मनसा देवयन्तः ॥ विष्णुपञ्चायतनदेवताभ्यो वस्त्रं नमः ॥ ( जनू पहनना ) तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् पशूंस्तांश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा उपवीतेन उपनह्यामि ॥ विष्णुपञ्चायतनदेवताभ्यः यज्ञोपवीतं नमः ॥ ( गन्ध चडाना ) तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ भगवते वासुदेवाय० विष्णुपञ्चायतनदेवताभ्यः समालभनं गन्धो नमः ॥ ( अक्षत व फूल चडाना ) तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ पुष्पवतीः प्रसुवतीः फलिनीरफला वत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ "पूर्वे" नारायणाय नमः "दक्षिणे" पुण्डरीकाक्षायाय नमः "पश्चिमे" गोविन्दाय नमः "उत्तरे" मधुसूदनाय नमः "ऐशान्यां" विष्णवे नमः "आग्नेय्यां" जनार्दनाय नमः "नैर्ऋत्यां" पद्मनाभाय नमः "वायव्यां" वामनाय नमः ऊर्ध्वे" वासुदेवाय नमः "अधरे" लोकनाथाय नमः "मध्ये" केशवाय

नमः शङ्खाय नमः चक्राय नमः गदायै हलाय कौस्तुभाय नमः जयाय विजयाय धात्र्यै शेषाय अयनद्वयाय "द्वारे" चण्डाय उपचण्डाय ऋग्वेदाय यजुर्वेदाय सामवेदाय अथर्ववेदाय नमः कृतयुगाय त्रेतायुगाय द्वापरयुगाय कलियुगाय ॐ भूर्लोकाय ॐ भुवः लोकाय ॐ स्वर्लोकाय ॐ भूर्भुवः स्वर्लोकाय नमः ॐ तद्विष्णोः० भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय नमः ॥ ॐ यो रुद्रो० भवायदेवाय नमः पार्वतीसहिताय परमेश्वराय नमः। ॐ गणानान्त्वा० विनायकाय नमः वल्लभासहिताय महागणेशाय नमः। ॐ चित्रन्देवानां० ह्रांह्रींसः सूर्याय नमः ८ प्रभासहिताय आदित्याय नमः। ॐजातवेदसे० भगवत्यै अमायै नमः कामायै नमः सहस्रनाम्न्यै देव्यै भवान्यै नमः विष्णुपञ्चायतनदेवताभ्यः अर्घो नमः ॥ पुष्पंनमः ( धूप चढाना ) यत्पुरुषं विदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्यते ॥ धूरसि धूर्व धूर्वन्तं योस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व। देवानामसि वह्नितमं सस्नितमं पप्रितमं इष्टतमं विष्णोः क्रमोस्याहुतमसि हविर्दानं दृंहस्व म्वाहान्मित्रस्य त्वा चक्षुषा प्रेक्ष उरुत्वा वाताय। वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्। रुद्रास्त्वा धूपयन्तु, त्रैष्टुभेन छन्दसाङ्गिरस्वत्, आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरत्वत्, विश्वे त्वा देवा वैश्वानरा धूपयन्तु आनुष्टुभेन छन्दसाङ्गिरस्वत्, इन्द्रस्त्वा धूपयतु, वरुणस्त्वा धूपयतु, विष्णुस्त्वा धूपयतु ॥ विष्णुपञ्चायतनदेवताभ्यः धूपं परिकल्पयामि नमः ॥ ( रत्नदीप चढाना ) ब्राह्मणोस्य मुखमासीद्बाहू

राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवानामना दृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि देवेभ्यस्त्वा यज्ञेभ्यो गृह्णामि॥ विष्णुपञ्चायतनदेवताभ्यः रत्नदीपं परिकल्पयामि नमः॥ (चामर करना) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे॥ जय नारायण० शिवयोर्लीलास्तुतिं पठित्वा विष्णुपञ्चायतनदेवताभ्यः चामरं परिकल्पयामि नमः॥ (छत्री चढाना) काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥ विष्णुपञ्चायतनदेवताभ्यः छत्रं परिकल्पयामि नमः॥ (आईना दिखाना) तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्। विष्णुपञ्चायतनदेवताभ्यः आदर्शं परिकल्पयामि नमः॥ (तर्पण करना) एताभ्यो देवताभ्यो धूपो नमः दीपो नमः॥ (माफी मांगना हाथ जुड के) विष्णुपञ्चायतनदेवतानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोस्तु॥ (त्रामपात्र में दूध घी शकर दही शहद जमा करके मधुपर्क चडाना) चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ विष्णुपञ्चायतनदेवताभ्यः मात्रामधुपर्कं चारुं निवेदयामि नमः॥ (पुष्पाञ्जलि सिर पर चडाना) नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयत्॥ विष्णुपञ्चायतनदेवताभ्यः कुसु-

माञ्जलिं समर्पयामि नमः ॥ ( चार प्रक्रम देना ) सप्तास्यास-न्परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तान्वना अबध्न-न्पुरुषं पशुम् ॥ ॐ नमो नारायणाय भगवन्प्रसीद ॥ ॥ इति चत्वारि प्रदक्षिणानि ॥ ॥ ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् । भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम् ॥ १ ॥ त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम् । मायामृगं दयितयेप्सितमनुधावद्वन्दे म० ॥ २ ॥ श्रीमत्सरोरुहयवाङ्कुशचक्रचापमत्स्याङ्कितं नवविलोहितपल्लवाभम् । लक्ष्म्यालयं परममङ्गलमात्मरूपं वन्दे० ॥ ३ ॥ वृन्दावनान्तरमगादनु गोकुलानां सञ्चार्य सर्वपशुभिः स्वविवृद्धिकामी । सञ्चिन्तयदगगुरोर्मृगपक्षिणां यद्वन्दे० ॥४॥ यद्गोपिका विरहजाग्निपरीतदेहास्तप्तास्तनेषु विजहुः परिरभ्य तापम् । रासे तदीयकुचकुङ्कुमपङ्कलिप्तं वन्दे० ॥ ५ ॥ कालीयमस्तकविघट्टनदक्षमस्य मोक्षेप्सुभिर्विरहदीनमुखाभिरारात् । तत्पत्निभिः स्तुतमशेषनिकामरूपं वन्दे० ॥ ६ ॥ ज्ञानालयं श्रुतिविमृग्यमनादिमर्च्यं ब्रह्मादिभिर्हृदि विचिन्त्यमगाधबोधैः । संसारकूपपतितोत्तरणावलम्बं वन्दे० ॥ ७ ॥ येनाङ्कपालवपुषः स्तनपानबुद्धेस्त्वदङ्घ्रिणाहतमऽनो विपरीतचक्रम् । विध्वस्तभाण्डमपतद्धुविगोपमूर्तेर्वन्दे महापुरुष ते चरणारविन्दम् ॥ ८ ॥ इत्यष्टकं पठति यः परमस्य पुंसो नारायणस्य निरयार्णवतारणस्य । सर्वात्मिमाशु हृदये कुरुते मनुष्यः संप्राप्य देहविलयं लभते च मोक्षम् ॥ ९ ॥ ( अष्टाङ्गप्रणाम देना ) उभाभ्यां जानुभ्यां पाणिभ्यां

शिरसा उरसा वचसा मनसा नमस्कारं करोमि नमः ॥ (तर्पण पानीसे करना । याने किसी तराह हीनता की माफी मांगकर पूर्णता मांगना ) अन्नं नमः अन्नं नमः, आज्यमाज्यं अद्यदिने अद्य यथासङ्कल्पात्सिद्धिरस्तु अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्वमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ ( अर्घा का पानी हाथ से वापस करना ) शन्नो देवीरभिष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः ॥ ( उस से अपोशान देना ) विष्णुपञ्चायतनदेवताभ्यः अपोशानं नमः आचमनीयं नमः ॥ ( और भी उलटाई हुई अर्घा के पानी में यथासम्भव दक्षिणा पाना ) पुनः, शन्नो देवी० । ( दक्षिणा देना ) विष्णुपञ्चायतनदेवताभ्यः दक्षिणायै तिलहिरण्यरजतनिष्कर्षं ददानि । ( और भी पैसा कुछ देना ) एता देवताः सदक्षिणान्नेन प्रीयन्तां प्रीताः सन्तु ॥ ( नैवेद्य निवाजना ) अमृतीशमुद्र्याऽमृतीकृत्य, अमृतमस्तु अमृतायतां नैवेद्यम् ॥ सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे भगवते वासुदेवाय ८ लक्ष्मीसहिताय नारायणाय, भवाय देवाय ८ पार्वतीसहिताय परमेश्वराय, विनायकाय ८ वल्लभासहिताय श्रीमहागणेशाय, ह्रांह्रींसः सूर्याय, सप्ताश्वाय ८ प्रभासहिताय आदित्याय, भगवत्यै अमायै ८ सहस्रनाम्न्यै देव्यै भवान्यै विष्णुपञ्चायतनदेवताभ्यः ॐ नमो नैवेद्यं निवेदयामि नमः ॥ ( योगिनियों को बल देना ) आकाशमातृभ्यो बलिं नमः, समालभनं गन्धो नमः, अर्घो नमः, पुष्पं नमः, ( देवों को बल देना ) विष्णुपञ्चायतनदेवताभ्यः बलिं

समर्पयामि नमः ( क्षेत्रपालों को बल देना ) क्षां क्षेत्राधिपतये॒ऽन्नं नमः । रां राष्ट्राधिपतयेऽन्नं नमः ॥ सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ( दो फूल देवों को चडाना ) ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ १ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ २ ॥ ( इहां नित्यकर्म जप वगैरा करके, देवों को विसर्जन करना, याने अक्षत दो दर्भकाण्ड हाथमें रख के रुक्सत करना ) ततो जपादि कृत्वा ॥ ॐ भूः पुरुषं विसर्जयामि नमः, ॐ भुवः पुरुषं विसर्जयामि नमः, ॐ स्वः पुरुषं विसर्जयामि नमः ॐ भूर्भुवः स्वः पुरुषं विसर्जयामि नमः ॥ ३ ॥ ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॥ ३ ॥ नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ ३ ॥ वासुदेवाय विद्महे लक्ष्मीनारायणाय धीमहि, तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन । नमस्तेस्तु हृषीकेश महापुरुष पूर्वज ॥ ३ ॥ ॐ नमः कारणवामनाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ३ ॥ विश्वरूपाय विद्महे विष्वक्सेनाय धीमहि, तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ नरसिंहाय विद्महे नरकोत्तारणाय धीमहि, तन्नो विष्णुः प्रचोदयात् ॥ ३ ॥ ॐ तत्पुरुषाय विद्महे महादेवायधीमहि, तन्नोरुद्रः प्रचोदयात् ॥ ३ ॥ ॐ तत्पुरुषायविद्महे वक्रतुण्डाय धीमहि, तन्नो दन्ती प्रचोदयात् ॥ ३ ॥ भास्कराय विद्महे

सहस्ररश्मये धीमहि, तन्नः सूर्यः प्रचोदयात् ॥ ३ ॥ सुभगायै विद्महे काममालिन्यै धीमहि, तन्नो दुर्गा प्रचोदयात् ॥ ३ ॥ ॐ तत्सद्ब्रह्माऽद्य तावत्तिथावद्य अमुकमासस्य अमुकपक्षस्य तिथावमुकायां, भगवतः वासुदेवस्य ८ लक्ष्मीसहितस्य नारायणस्य, भवस्य देवस्य ८ पार्वतीसहितस्य, परमेश्वरस्य, विनायकस्य ८ वल्लभासहितस्य श्रीमहागणेशस्य, ह्रां ह्रींसः सूर्यस्य ८ प्रभासहितस्य आदित्यस्य, भगवत्याः अमायाः ८ सहस्रनाम्न्याः देव्याः भवान्याः विष्णुपञ्चायतनदेवतानां, आत्मनो वाङ्मनः-कायोपार्जितपापनिवारणार्थं श्रीविष्णुप्रीत्यर्थं विष्णुपञ्चायतन-पूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ ( यवा समेत पानी से तर्पण करना ) एताभ्यो देवताभ्यः यवोदकं नम उदकतर्पणं नमः ॥ ( प्रार्थना करना ) आज्ञा मे दीयतां नाथ नैवेद्यस्यास्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन्क्षन्तुमर्हसि ॥ आपन्नोस्मि शरण्योसि सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोस्मि रक्ष मां शरणागतम् ॥ २ ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ यद्बाल्ये यच्च कौमारे यद्यौवने कृतं मया । वयःपरिणतौ यच्च यच्च जन्मान्तरेषु च । कर्मणा मनसा वाचा यत्पापं समुपार्जितम् । तन्नारायण गोविन्द क्षमस्व गरुडध्वज । नीलोत्पलदलश्यामः प्रफुल्लजलजेक्षणः । जलशायी जगद्योनिः प्रीयतां मम केशवः ॥ भक्तिः कृष्णे मतिर्धर्मे शक्तिस्त्यागे रतिः श्रुतौ । दया सर्वेषु भूतेषु स्यान्मे जन्मनि जन्मनि ॥ देव प्रपन्नार्तिहर प्रसादं कुरु केशव ।

अवलोकनदानेन भूयो मा दा भवव्यथाम् ॥ हा नाथ हा रमानाथ व्रजनाथार्थिनाशन। मग्नमुद्धर गोविन्द मां दीनं सङ्कटार्णवात् ॥ ( शिवजी को ) आकर्णयाशु कृपणस्य वचांसि सम्यक् लब्धोसि नाथ बहुभिर्ननु जन्मवृन्दैः ॥ अद्य प्रभो यदि दयां कुरुषे न मे त्वं त्वत्तः परं कथय कं शरणं व्रजामि ॥ नमः शिवाय निःशेषक्लेशप्रशमशालिने। त्रिगुणग्रन्थिदुर्भेद्भवबन्धविभेदिने ॥ ( गणेशको ) वक्रतुण्ड महाकाय कोटिसूर्यसम प्रभो। अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ सर्गारम्भेप्यजाताय बीजरूपेण तिष्ठते। धात्रा कृतप्रणामाय गणाधिपतये नमः ॥ ( सूरजको ) जातवेदप्रकाशाय ज्योतीरूप सनातन। सप्ताश्वरथवाहाय भास्कराय नमो नमः ॥ अपरः शरणं नास्ति त्वमेव शरणं मम। तस्माच्छरण्यभावेन रक्षरक्ष दिवाकर ॥ ( दुर्गाको ) शब्दब्रह्ममये स्वच्छे देवि त्रिपुरसुन्दरि। यथाशक्ति जपं पूजां गृहाण परमेश्वरि ॥ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि। दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय दयार्द्रचित्ता ॥ यदक्षरपदभ्रष्टं मात्राहीनं च यद्भतम्। मया दासेन विज्ञप्तं क्षम्यतां परमेश्वर ॥ ( अष्टाङ्ग प्रणामदेना ) उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा उरसा वचसा मनसा च नमस्कारं करोमि नमः ॥ ( तर्पण करना ) नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि। इत्येतासामेव देवतानां सार्ष्टितां सायुज्यं सलोकतां सामीप्यमाप्नोति य एवं विद्वान् स्वाध्यायमधीते ॥ ( माफी मांगना ) यज्ञेन यज्ञमय-

जन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ( चरणामृत भागियों को देना ) बलिर्विभीषणो भीष्मः प्रह्लादो नारदः शुकः । षडेते वैष्णवश्रेष्ठा गृह्णन्तु चरणोदकम् ॥ ॐनमोदेवेभ्यः "कण्ठोपावीती" स्वाहा ऋषिभ्यः "अपसव्येन" स्वधा पितृभ्यः "सव्येन" आ ब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु ॥ ( और फूल चडाना ) पाद्यं किं भवते भवेत्सुरसरित्पादोदकाय प्रभो को दीपस्तरणीक्षणाय गरुडारूढाय किंचासनम् । किं भोज्यं जगदन्नदाय वसनं किं दिव्यवासोभृते किं स्तोत्रं निगमागमाय तदलं बद्धो मयैकाञ्जलिः ॥ ( विज्ञप्ति करना ) पूजितोसि मया भक्त्या भगवन्कमलापते । सलक्ष्मीको मम स्वान्तं विश विश्रान्तिहेतवे ॥ ( चरणामृत हाथसे पीना ) चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता अतिपात्मानमरातिं तरेम । लोकस्य द्वारमर्चिषमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु ॥ ॥ देवदेव महादेव शङ्खचक्रगदाधर । देहि विष्णो! ममानुज्ञां पादोदकनिषेवणे ॥ अकालमृत्युहरणं सर्वव्याधिनिवारणम् । विष्णुपादोदकं पीत्वा पुनर्जन्म न विद्यते ॥ अच्युतानन्त! गोविन्द नामोच्चारणभेषजात् । नश्यंति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ शरीरे जर्जरीभूते व्याधिग्रस्ते कलेवरे । औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ॥ ॥ इति विष्णुपञ्चायतनपूजाविधिः ॥

---

## अथ गणेशकवचम् ॥

अस्य श्रीगणेशकवचस्य भृगुऋषिः, अनुष्टुप्छन्दः, श्रीगजवदनो देवता, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं, अमुककामनासिद्ध्यर्थे जपे पाठे वा विनियोगः ॥ ॥ अथ ध्यानम् ॥ गजवदनमचिन्त्यं तीक्ष्णदन्तं त्रिनेत्रं बृहदुदरमशेषव्यक्तिरूपं पुराणम् । अमरवरसुपूज्यं रक्तवर्णं सुरेशं पशुपतिसुतमीशं विघ्नराजं नमामि ॥ ॥ ॐ शिरोवत्वीशपुत्रो मे बालं पातु विनायकः । त्रिनेत्रः पातु नेत्रे मे शूर्पकर्णस्तथा श्रुती ॥ हेरंबो रक्षतु घ्राणं मुखं पातु गजाननः । जिह्वां पातु गणेशो मे कण्ठं श्रीकण्ठवल्लभः ॥ स्कन्दौ महाबलः पातु भुजौ मे पातु विघ्नहा । करौ परशुभृत्पातु नाभिं सिन्दूरभूषितः ॥ जघनं पार्वतीपुत्रस्तूरू मे पातु पाशभृत् । जानुनी जगतां नाथो जङ्घे मूषकवाहनः ॥ गुल्फौ पद्मासनः पातु पादौ दुर्दैत्यदर्पहा । एकदन्तोऽग्रतः पातु पृष्ठं पातु गणाधिपः ॥ पार्श्वौ तु मोदकाहारो दिग्विदिक्षु च सिद्धिदः । व्रजतस्तिष्ठतो वापि जाग्रतः स्वपतोपि वा ॥ चतुर्थीवल्लभो देवो पातु मे भुक्तिमुक्तिदः ॥ इदं पवित्रं यः स्तोत्रं चतुर्थ्यां नियतः पठेत् । सिन्दूररक्तपुष्पैश्च दूर्वया पूज्य विघ्नपम् ॥ राजा राजसुतो वापि राजपत्नी कुलं बलम् । तस्यावश्यं भवेद्वश्यो विघ्नराजप्रसादतः ॥ समन्त्रयन्त्रं यः स्तोत्रं करे संलिख्य धारयेत् । धनधान्यसमृद्धिस्तु भवत्येव न संशयः ॥ वाग्भवं कामराजस्य माया चादौ विधीयताम् । हुंनमो वक्रतुण्डाय मध्ये यस्य जपेन्नरः ॥ रसनालसदेकाग्रं षडङ्गं रसपूर्वकम् । हुत्वा दत्वा च विधिवन्नष्टद्रव्यं समे-

ष्यति ॥ यं यं काममभिध्याय कुरुते कर्म किञ्चन । तं तं सर्वमवाप्नोति वक्रतुण्डप्रसादतः ॥ भवेदव्याहतैश्वर्यः स गणेशप्रसादतः ॥ इति श्रीभविष्यत्पुराणे गणेशकवचं समाप्तम् ॥

---

## अथ गुरुस्तुतिः ॥

ॐब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् । एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ १ ॥ सारं सारं जनिमृतिभयं जातनिर्वेदवृत्तिर्ध्यायं ध्यायं पशुपतिमुमाकान्तमन्तर्निषण्णम् । पायं पायं सपदि परमानन्दपीयूषधारा भूयोभूयो निजगुरुपदाम्भोजयुग्मं नमामि ॥ २ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ३ ॥ नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम् । शिरसा योगपीठस्थं धर्मकामार्थसिद्धये ॥ ४ ॥ श्रीगुरुं परमानन्दं वन्दाम्यानन्दविग्रहम् । यस्य सान्निध्यमात्रेण चिदानन्दायते परम् ॥ ५ ॥ अखण्डमण्डलाकारं व्याप्तं येन चराचरम् । तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ६ ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ७ ॥ हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । सर्वदेवस्वरूपाय तस्मै श्रीगुरवे नमः ॥ ८ ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ ९ ॥ ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् । ज्ञानमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा ॥ १० ॥ नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ।

विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ ११ ॥ नवाय नवरूपाय परमार्थैकरूपिणे । सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ १२ ॥ स्वतन्त्राय दयाक्लृप्तविग्रहाय परात्मने । परतन्त्राय भक्तानां भव्यानां भव्यहेतवे ॥ १३ ॥ ज्ञानिनां ज्ञानरूपाय प्रकाशाय प्रकाशिनाम् । विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् ॥ १४ ॥ पुरस्तात्पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः । सदा मच्चित्तरूपेण विधेहि भवदासनम् ॥१५॥ इति गुरुस्तुतिः ॥

---

## अथ महागायत्रीलीलास्तुतिः ॥

ॐसदा गवेषयन् जगत्त्रयेषु वेदमातरं चिदात्मना कृतस्थितं समत्र चाद्य लब्धवान् । उदस्तु गद्गदं महोदयात्प्रणौमि भक्तिनौकया सुदुस्तरं द्रुतं तितीर्षुरापदर्णवम् ॥ १ ॥ सुदीनलोकपातिनी सतां कृपाऽतिशोभते ह्यतः सुधांशुचक्षुषेक्षयाम्ब ! मादृशं जनम् । नवापि हीयते तवेषदीशि ! पालनेन नो भवाद्यतः कुपुत्रता न भासते प्रसूहृदि ॥२॥ नमामि मुक्तविद्रुमप्रतप्तहाटकाऽसितावदातवर्णसुन्दरैः षडर्धलोललोचनैः । सरोजषण्डबान्धवप्रतप्तपावकप्रभैः किरीटरत्नरञ्जितैः सुधांशुखण्डमण्डितैः ॥३॥ मुखैर्दशार्धसंमितैर्विराजमानविग्रहां सुरेशचापसप्रभां समस्तदेववन्दिताम् । वराभयाङ्कुशान्वितैः कपालशूलशंखचक्रसारसद्वयीगुणाङ्कितैः करैर्विराजिताम् ॥४॥ भवद्रुमस्य मूलतां गतां मुनीन्द्रवन्दितामखण्डभावमण्डलप्रकाशकारिणीं शिवाम् । समस्तदेवतामयीं समस्तसिद्धिदायिनीमपूर्वरूपविग्रहां सरस्वतीं भवार्तिहाम् ॥ ५ ॥ शुचीन्दुसूर्यलोचनां शुचीन्दुसू-

र्यविग्रहां शुचीन्दुसूर्यसङ्गमस्वभावशालिनीं शुभाम् । पदद्वयानुकम्पितस्वशक्तिचक्रसेवितां परेशशक्तिमुत्तमां भजे त्रिलोकसुन्दरीम् ॥ ६ ॥ महामहेश्वरी जगद्विसर्गसुस्थितिक्षयस्वतन्त्रता शरीरिणी बभूव या महेशितुः । द्विपत्रितादिभेदतो लतायमानविग्रहा त्रयीश्वरी सदा तु सा जगज्जयाय जायताम् ॥ ७ ॥ नमामि तन्मुखारविन्दपञ्चकं मलापहं गलैकनालकं सदाविकासि भक्तिसम्भवम् । स्वभक्तहंससेवितं शुचीन्दुपद्मबन्धवः प्रतीकभूतविग्रहा गता हि यत्र पञ्चताम् ॥८ ॥ भवार्णवेऽतिदुःसहस्वराधिदिग्धमानसं षडूर्मिनित्यपीडितं जनं दिधीर्षुमानसा । श्रुतिध्वनिस्फुरन्मुखारविन्दभूसुरैः सदा त्रिसन्ध्यमीश्वरी नुताऽस्तु सा सुखप्रदा हि नः ॥ ९ ॥ त्रयीप्रसूः स्वदृष्टिपातधूतभक्तकल्मषा समैर्जनैर्नुता मुदा स्ववर्णधर्मभेदतः । निलिम्पनिम्नगामिषेण पादधौतजं जलं यदीयमागतं क्षितिं तनोतु नः शिवं तु सा ॥ १० ॥ स्वदम्भवञ्चिताखिलं कुभोगसक्तमानसं सदाऽशुचिं कुमार्गगं शठं च शङ्कसे यदि । कथं स्वपादचिन्तनोत्थवैभवं नहीश्वरि ! यतोङ्घ्रिचिन्तकं दयादृशेक्षसे न मादृशम् ॥ ११ ॥ अनेकदोषदूषितेष्वनिर्विवेचना सती स्वतन्त्रशक्तिरीश्वरी भवाघनाशकारिणी । कृपामयीं दृशं विधाय सा स्वभक्तिपात्रितं स्वपत्कजे मधुव्रतं करोतु मामहर्निशम् ॥ १२ ॥ त्रिसन्ध्यमिष्टदैवतं सुकेशवास्यजं स्तवं स्मरन् हृदीद्धभावनो विधाय वेदमातरम् । विधूय पापसंचयं वितीर्य कीर्तिमुत्तमामिह त्वमुत्र कैवलं पदं स याति निर्भयम् ॥ १३ ॥

इति श्रीमहागायत्रीलीलास्तुतिः ॥

---

## अथ गौरीस्तुतिः ॥

ॐ लीलारब्धस्थापितलुप्ताखिललोकां लोकातीतैर्योगिभिरन्तर्हृदि मृग्याम् । बालादित्यश्रेणिसमानद्युतिपुञ्जां गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १ ॥ आशापाशक्लेशविनाशं विदधानां पादाम्भोजध्यानपराणां पुरुषाणाम् । ईशीमीशाङ्गार्धहरां तां तनुमध्यां गौरीमम्बा० ॥ २ ॥ प्रत्याहारध्यानसमाधिस्थितिभाजां नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् । सत्यज्ञानानन्दमयीं तां तडिदाभां गौरी० ॥ ३ ॥ चन्द्रापीडानन्दितमन्दस्मितवक्त्रां चन्द्रापीडालङ्कृतलोलालकभाराम् । इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां गौरी० ॥ ४ ॥ नानाकारैः शक्तिकदम्बैर्भुवनानि व्याप्य स्वैरं क्रीडति यासौ स्वयमेका । कल्याणीं तां कल्पलतामानतिभाजां गौरी० ॥५॥ मूलाधारादुत्थितवन्तीं विधिरन्ध्रं सौरं चान्द्रं धाम विहाय ज्वलिताङ्गीम् । स्थूलां सूक्ष्मां सूक्ष्मतरां तामभिवन्द्यां गौरी० ॥ ६ ॥ आदिक्षान्तामक्षरमूर्त्या विलसन्तीं भूते भूते भूतकदम्बं प्रसवित्रीम् । शब्दब्रह्मानन्दमयीं तामभिरामां गौरी० ॥ ७ ॥ यस्याः कुक्षौ लीनमखण्डं जगदण्डं भूयो भूयः प्रादुरभूदक्षतमेव । भर्त्रा सार्धं तां स्फटिकाद्रौ विहरन्तीं गौरी० ॥ ८ ॥ यस्यामेतत्प्रोतमशेषं मणिमाला सूत्रे यद्वत्क्वापि चरं चाप्यचरं च । तामध्यात्मज्ञानपदव्या गमनीयां गौरी० ॥ ९ ॥ नित्यः सत्यो निष्कल एको जगदीशः साक्षी यस्याः सर्गविधौ संहरणे च । विश्वत्राणक्रीडनशीलां शिवपत्नीं गौरीम० ॥ १० ॥ प्रातःकाले भावविशुद्धिं विदधानो भक्त्या नित्यं जल्पति

गौरीदशकं यः । वाचां सिद्धिं सम्पत्तिमुच्चैः शिवभक्तिं तस्यावश्यं पर्वतपुत्री विदधाति ॥ ११ ॥ इति गौरीस्तुतिः ॥

---

## अथ मुकुन्दमालास्तुतिः ॥

ॐवन्दे मुकुन्दमरविन्ददलायताक्षं कुन्देन्दुशङ्खदशनं शिशुगोपवेशम् । इन्द्रादिदेवगणवन्दितपादपीठं वृन्दावनालयमहं वसुदेवसूनुम् ॥ १ ॥ श्रीवल्लभेति वरदेति दयापरेति भक्तप्रियेति भवलुण्ठनकोविदेति । नाथेति नागशयनेति जगन्निवासेत्यालापिनं प्रतिदिनं कुरु मां मुकुन्द ॥ २ ॥ जयतु जयतु देवो देवकीनन्दनोयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः । जयतु जयतु मेघश्यामलः कोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥ ३ ॥ मुकुन्द मूर्ध्ना प्रणिपत्य याचे भवन्तमेकान्तमियन्तमर्थम् । अविस्मृतिस्त्वच्चरणारविन्दे भवेभवे मेस्तु भवत्प्रसादात् ॥ ४ ॥ श्रीमुकुन्दपदाम्भोजमधुनः परमाद्भुतम् । यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥ ५ ॥ नाहं वन्दे तव चरणयोर्द्वन्द्वमद्वन्द्वहेतोः कुम्भीपाकं गुरुमपि हरे तारकं नापनेतुम् । रम्यारामामृदुतनुलतानन्दने नापि रन्तुं भावेभावे हृदयभवने भावयेयं भवन्तम् ॥ ६ ॥ नास्था धर्मे न वसुनिचये नैव कामोपभोगे यद्यद्भव्यं भवतु भगवन्पूर्वकर्मानुरूपम् । एतत्प्रार्थ्यं मम बहुमतं जन्मजन्मान्तरेपि त्वत्पादाम्भोरुहयुगगता निश्चला भक्तिरस्तु ॥ ७ ॥ दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् । अवधीरितशारदारविन्दौ चरणौ ते मरणेपि चिन्तयामि ॥ ८ ॥

सरसिजनयने सशङ्खचक्रे मुरभिदि मा विरमेह चित्त रन्तुम् ।
सुखतरमपरं न जातु जाने हरिचरणस्मरणामृतेन तुल्यम् ॥९॥
माभैर्मन्दमनो विचिन्त्य बहुधा यामीश्चिरं यातना नामी नः
प्रभवन्ति पापरिपवः स्वामी ननु श्रीधरः । आलस्यं व्यपनीय
भक्तिसुलभं ध्यायस्व नारायणं लोकस्य व्यसनापनोदनकरो
दासस्य किं न क्षमः ॥ १० ॥ भवजलधिमगाधं दुस्तरं निस्त-
रेयं कथमहमिति चेतो मास्मगाः कातरत्वम् । सरसिजदृशि
देवे तावकी भक्तिरेका नरकभिदि निषण्णा तारयिष्यत्यवश्यम्
॥ ११ ॥ तृष्णातोये मदनपवनोद्धूतमोहोर्मिमाले दारावर्ते तन-
यसहजग्राहसङ्घाकुले च । संसाराख्ये महति जलधौ मज्जतां
नस्त्रिधामन् पादाम्भोजे वरद भवतो भक्तिनावे प्रसीद ॥१२॥
पृथ्वी रेणुरणुः पयांसि कणिकाः फल्गुः स्फुलिङ्गो लघुस्तेजो
निःश्वसनं मरुत्तनुतरं रन्ध्रं सुसूक्ष्मं नभः । क्षुद्रा रुद्रपितामहप्र-
भृतयः कीटाः समस्ताः सुरा दृष्टे यत्र स तावको विजयते भूमा-
वधूतावधिः ॥ १३ ॥ आम्नायाभ्यसितान्यरण्यरुदितं कृच्छ्रव्रता-
न्यन्वहं मेघच्छेदफलानि पूर्वविधयः सर्वं हुतं भस्मनि । तीर्था-
नामवगाहनानि च गजस्नानं विना यत्पदद्वन्द्वाम्भोरुहसंस्तुतिं
विजयते देवः स नारायणः ॥ १४ ॥ भवजलधिगतानां द्वन्द्व-
वाताहतानां सुतदुहितृकलत्रत्राणभारावृतानाम् । विषमविषय-
तोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम्
॥१५॥ रजसि निपतितानां मोहजालावृतानां जननमरणधूली-
दुर्गतिं सङ्गतानाम् । शरणमशरणानामेक एवातुराणां कुशलपथि
नियोक्ता चक्रपाणिर्नराणाम् ॥ १६ ॥ अपराधसहस्रसङ्कुलं

पतितं भीमभवार्णवोदरे । अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ १७ ॥ यच्चिन्तितं च मनसा वचसा यदुक्तं चक्षुःकरश्रवणपादविचेष्टितं च । यद्यन्निशासु दिवसेषु कृतं मयैव तत्तज्जनार्दन तवार्चनमेव भूयात् ॥ १८ ॥ मा मे स्त्रीत्वं मा च मे दासभावो मा मूर्खत्वं मा कुदेशेषु जन्म । मिथ्यादृष्टिर्मा च मे स्यात्कदाचिज्जातौ जातौ विष्णुभक्तो भवामि ॥ १९ ॥ आनन्द गोविन्द मुकुन्द राम नारायणानन्त निरामयेति । वक्तुं समर्थोऽपि न वक्ति कश्चिदहो जनानां व्यसनानि मोक्षे ॥ २० ॥ क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ २१ ॥ क्षीरसारमपनीय शङ्कया स्वीकृतं यदि पलायनं त्वया । मानसे मम नितान्ततामसे नन्दनन्दन कुतो न लीयसे ॥ २२ ॥ वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणादौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् । सेव्यः श्रीपतिरेव सर्वजगतामेकान्ततः साक्षिणः प्रह्लादश्च विभीषणश्च करिराट्पाञ्चाल्यहल्या ध्रुवः ॥ २३ ॥ नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति । यं कंचित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ २४ ॥ हे लोकाः ! शृणुत प्रसूतिमरणव्याधेश्चिकित्सामिमां योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः । अन्तर्ज्योतिरमेयमेकममृतं कृष्णाख्यमापीयतां तत्पीतं परमौषधं वितनुते निर्वाणमात्यंतिकम् ॥२५॥ बद्धेनाञ्जलिना नतेन शिरसा गात्रैः सरोमोद्गमैः कण्ठेन स्वरगद्गदेन

नयनोद्गीर्णेन बाष्पाम्बुना । नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनामस्माकं सरसीरुहाक्ष ! सततं सम्पद्यतां जीवितम् ॥ २६ ॥ तत्त्वं ब्रुवाणानि परं परस्मादहो क्षरन्तीव सुधां पदानि । आवर्तय प्राञ्जलिरस्मि जिह्वे नामानि नारायणगोचराणि ॥ २७ ॥ इदं शरीरं परिणामपेशलं पतत्यवश्यं श्लथसन्धिजर्जरम् । किमौषधैः क्लिश्यसि मूढ दुर्मते ! निरामयं कृष्णरसायनं पिब ॥ २८ ॥ श्रीमन्नाम प्रोच्य नारायणाख्यं के न प्राप्ता वाञ्छितं पापिनोपि । हा नः पूर्वं वाक् प्रवृत्ता न तस्मिंस्तेन प्राप्तं गर्भवासादिदुःखम् ॥ २९ ॥ माद्राक्षं क्षीणपुण्यान् क्षणमपि भवतो भक्तिहीनान्पदाब्जे माश्रौषं श्राव्यबद्धं तव चरितमपास्यान्यदाख्यानजातम् । मास्प्राक्षं माधव त्वामपि भुवनपतिं चेतसापह्नवानं माभूवं त्वत्सपर्याव्यतिकररहितो जन्मजन्मान्तरेपि ॥ ३० ॥ मदन परिहर स्थितिं मदीये मनसि मुकुन्दपदारविन्दधाम्नि । हरनयनकृशानुना कृशोसि स्मरसि न चक्रपराक्रमं मुरारे ॥ ३१ ॥ दारा वाराकरवरसुता तेऽङ्गजोयं विरिञ्चिः स्तोता वेदस्तव सुरगणो भृत्यवर्गः प्रसादः । मुक्तिर्मध्ये जगदविकलं तावकी देवकीयं माता मित्रं बलरिपुसुतस्तत्त्वतोन्यन्न जाने ॥ ३२ ॥ जिह्वे कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व समर्चयाच्युतकथाः श्रोत्रद्वय त्वं शृणु । कृष्णं लोकय लोचनद्वय हरेर्गच्छाङ्घ्रियुग्मालयं जिघ्र घ्राण मुकुन्दपादतुलसीं मूर्धन्नमाधोक्षजम् ॥ ३३ ॥ यत्कृष्णप्रणिपातधूलिधवलं तद्वै शिरः स्याच्छुभं ते नेत्रे तमसोज्झिते सुरुचिरे याभ्यां हरिर्दृश्यते । सा बुद्धिर्नियमै-

र्यमैश्च विमला या माधवध्यायिनी सा जिह्वामृतवर्षिणी प्रतिपदं या स्तौति नारायणम् ॥ ३४ ॥ भक्तद्वेषभुजङ्गगारुडमणिस्त्रैलोक्यरक्षामणिर्गोपीलोचनचातकाम्बुदमणिः सौन्दर्यमुद्रामणिः । श्रीकान्तामणि-रुक्मिणीघनकुचद्वन्द्वैकभूषामणिः श्रेयो ध्येयशिखामणिर्दिशतु नो गोपालचूडामणिः ॥ ३५ ॥ शत्रुच्छेदैकमन्त्रं सकलमुपनिषद्वाक्यसम्पूज्यमन्त्रं संसारोच्चारमन्त्रं समुदिततमसां सङ्घनिर्याणमन्त्रम् । सर्वैश्वर्यैकमन्त्रं व्यसनभुजगसन्दष्टसन्त्राणमन्त्रं जिह्वे श्रीकृष्णमन्त्रं जप जप सततं जन्मसाफल्यमन्त्रम् ॥ ३६ ॥ व्यामोहोद्दलनौषधं मुनिमनोवृत्तिप्रवृत्त्यौषधं दैत्यानर्थकरौषधं त्रिभुवने सञ्जीवनैकौषधम् । भक्तार्त्तिप्रशमौषधं भवभयप्रध्वंसि दिव्यौषधं श्रेयःप्राप्तिकरौषधं पिब मनः श्रीकृष्णनामौषधम् ॥ ३७ ॥ आश्चर्यमेतद्धि मनुष्यलोके सुधां परित्यज्य विषं पिबन्ति । नामानि नारायणगोचराणि त्यक्त्वान्यवाचः कुहकाः पठन्ति ॥ ३८ ॥ लाटी नेत्रपुटी पयोधरघटी क्रीडाकुटी दोस्तटी पाटीरद्रुमवर्णनेन कविभिर्मूढैर्दिनं नीयते । गोविन्देति जनार्दनेति जगतांनाथेति कृष्णेति च व्याहारैः समयस्तदेकमनसां पुंसां परिक्रामति ॥ ३९ ॥ अयाच्यमक्रेयमयातयाममऽयाच्यमऽक्षय्यमदुर्भरं मे । अस्त्येव पाथेयमतिप्रयाणे श्रीकृष्णनामामृतभागधेयम् ॥ ४० ॥ यस्य प्रियौ श्रुतिधरौ रविलोकगीतौ मित्रे द्विजन्मपरिवारशिवावभूताम् । तेनाम्बुजाक्ष चरणाम्बुजषट्पदेन राज्ञा कृता स्तुतिरियं कुलशेखरेण ॥ ४ ॥

इति श्रीकुलशेखरराज्ञा कृता मुकुन्दमालास्तुतिः ॥

समाप्तमिदं पुस्तकम् ॥



# ॐ अथ भवानीनामसहस्रस्तोत्रम् ।

## नामावली च ॥

ॐनमो भवान्यै ॥ अरिशङ्खकृपाणखेटबाणान् सुधनुः शूलकतर्जनीं दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ ॥ ॐशङ्खत्रिशूलशरचापकरां त्रिनेत्रां तिग्मेतरांशुकलया विकसत्किरीटाम् । सिंहस्थितामसुरसिद्धनुतां च दुर्गां दूर्वानिभां दुरितदुःखहरां नमामि ॥ ॥ अकुलकुलपतन्ती चक्रमध्ये स्फुरन्ती । मधुरमधुपिबन्ती कण्टकान्भक्षयन्ती । दुरितमपहरन्ती साधकान्पोषयन्ती । जयति जगति देवी सुन्दरी क्रीडयन्ती ॥ ॥ चतुर्भुजामेकवक्त्रां पूर्णेन्दुवदनप्रभाम् । खड्गशक्तिधरां देवीं वरदाभयपाणिकाम् ॥ प्रेतसंस्थां महारौद्रीं भुजगेनोपवीतिनीम् । भवानीं कालसंहारबद्धमुद्राविभूषिताम् ॥ जगत्स्थितिकरीं ब्रह्मविष्णुरुद्रादिभिः सुरैः । स्तुतां तां परमेशानीं नौम्यहं विघ्नहारिणीम् ॥ ॥ ॐनमो भवान्यै ॥ कैलासशिखरे रम्ये देवदेवं महेश्वरम् । ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम् ॥ सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम् । प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत ॥ ॥ श्रीनन्दिकेश्वर उवाच ॥ ॥ देवदेव जगन्नाथ संशयोस्ति महान्मम । रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तिवत्सलम् ॥ देवतायास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम् । पठ्यतेऽविरतं नाथ! त्वत्तः किमपरः परः ॥ इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः ।

प्रोवाच भगवानेको विकसन्नेत्रपङ्कजः ॥ ॥ श्रीभगवानुवाच ॥
साधु साधु गणश्रेष्ठ पृष्टवानसि मां च यत् । स्कन्दस्यापि च
यद्गोप्यं रहस्यं कथयामि तत् ॥ पुरा कल्पक्षये लोकान्सिसृक्षु-
र्मूढचेतना । गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥ तस्यामहं
समुत्पन्नस्तत्वैस्तैर्महदादिभिः । चेतनेति ततः शक्तिर्मां काप्या-
लिङ्ग्य तस्थुषी । हेतुः सङ्कल्पजालस्य मनोधिष्ठायिनी शुभा ॥
इच्छेति परमा शक्तिरुन्मिमील ततः परम् । ततो वागिति
विख्याता शक्तिः शब्दमयी परा ॥ प्रादुरासीज्जगन्माता वेद-
माता सरस्वती । ब्राह्मी च वैष्णवी रौद्री कौमारी पार्वती शिवा ॥
सिद्धिदा बुद्धिदा शान्ता सर्वमङ्गलदायिनी ॥ तयैतत्सृज्यते
विश्वमनाधारं च धार्यते ॥ तयैतत्पाल्यते सर्वं तस्यामेव प्रली-
यते । अर्चिता प्रणता ध्याता सर्वभावविनिश्चिता ॥ आराधिता
स्तुता सैव सर्वसिद्धिप्रदायिनी । तस्या अनुग्रहादेव तामेव
स्तुतवानहम् ॥ सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः ।
स्तवेनानेन सन्तुष्टा मामेव प्रविवेश सा ॥ तदारभ्य मया
प्राप्तमैश्वर्यं पदमुत्तमम् । तत्प्रभावान्मया सृष्टं जगदेतच्चराचरम् ॥
ससुरासुरगन्धर्वयक्षराक्षसमानवम् । सपन्नगं ससमुद्रं सशैलव-
नकाननम् ॥ सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् । नन्दि-
न्नामसहस्रेण स्तवेनानेन सर्वदा ॥ स्तुवे परापरां शक्तिं ममानु-
ग्रहकारिणीम् । इत्युक्त्वोपरतं देवं चराचरगुरुं विभुम् । प्रणम्य
शिरसा नन्दी प्रोवाच परमेश्वरम् ॥ ॥ श्रीनन्दिकेश्वर उवाच ॥
॥ भगवन्देवदेवेश लोकनाथ जगत्पते । भक्तोस्मि तव दासोस्मि
प्रसादः क्रियतां मयि । देव्याः स्तवमिमं पुण्यं दुर्लभं यत्सुरै-

रपि । श्रोतुमिच्छाम्यहं देव प्रभावमपि चास्य तु ॥ ॥ श्रीभगवानुवाच ॥ ॥ शृणु नन्दिन्महाभाग स्तवराजमिमं शुभम् । सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् । शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः । त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तवः ॥ ॥ अस्य श्रीभवानीनामसहस्रस्तवराजस्य, महादेवऋषिः, अनुष्टुप्छन्दः, आद्या शक्तिः, भगवती भवानी देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं, अमुककामनासिद्ध्यर्थे पाठे होमे वा विनियोगः ॥ अथ करन्यासः ॥ ॐ एकवीरायै अङ्गुष्ठाभ्यां नमः ॐ महामायायै तर्जनीभ्यां नमः, ॐ पार्वत्यै मध्यमाभ्यां नमः ॐ गिरिशप्रियायै अनामिकाभ्यांनमः, ॐगौर्यै कनिष्ठिकाभ्यां नमः, करालिन्यै करतलकरपृष्ठाभ्यां नमः ॥ ॥ अथ षडङ्गन्यासः ॥ ॐ एकवीरायै हृदयायनमः, ॐ महामायायै शिरसे स्वाहा, ॐ पार्वत्यै शिखायै वषट्, ॐ गिरिशप्रियायै कवचायहुम्, ॐ गौर्यै नेत्रत्रयाय वौषट्, ॐकरालिन्यै अस्त्रायफट् ॥ प्राणायामः ॥ ॥ ध्यानम् ॥ बालार्कमण्डलाभासं चतुर्बाहुं त्रिलोचनाम् । पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥ १ ॥ अर्धेन्दुमौलिममलाममराभिवन्द्यामम्भोजपाशसृणिरक्तकपालहस्ताम् । रक्ताङ्गरागरशनाभरणां त्रिनेत्रां ध्याये शिवस्य वनितां मधुविह्वलाङ्गीम् ॥ ॥ बीजत्रयाय विद्महे तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात् ॥ २ ॥ मूलम् । " ॐश्रींश्रींॐॐह्रींश्रींश्रीं भवानि हुं फट् स्वाहा" ॥ १०८ ॥

---

॥ श्रीईश्वर उवाच ॥

ॐमहाविद्या जगन्माता महालक्ष्मीः शिवप्रिया । विष्णुमाया शुभा शान्ता सिद्धा सिद्धसरस्वती । क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला । हिङ्गुला चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया । त्रिपुरानन्दिनी नन्दा सुनन्दा सुरवन्दिता । यज्ञविद्या महामाया वेदमाता सुधाधृतिः । प्रीतिप्रिया प्रसिद्धा च मृडानी विन्ध्यवासिनी। सिद्धविद्या महाशक्तिः पृथ्वी नारदसेविता । पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना । प्रह्लादिनी महामाता दुर्गा दुर्ग-

ॐ महाविद्यायैस्वाहा, जगन्मात्रे, महालक्ष्म्यै, शिवप्रियायै, विष्णुमायायै, शुभायै, शान्तायै, सिद्धायै, सिद्धसरस्वत्यै, क्षमायै, कान्त्यै, प्रभायै, ज्योत्स्नायै, पार्वत्यै, सर्वमङ्गलायै, हिङ्गुलायै, चण्डिकायै, दान्तायै, पद्मायै, लक्ष्म्यै, हरिप्रियायै, त्रिपुरानन्दिन्यै, नन्दायै, सुनन्दायै, सुरवन्दितायै, यज्ञविद्यायै, महामायायै, वेदमात्रे, सुधाधृत्यै, प्रीतिप्रियायै, प्रसिद्धायै, मृडान्यै, विन्ध्यवासिन्यै, सिद्धविद्यायै, महाशक्त्यै, पृथ्व्यै, नारदसेवितायै, पुरुहूतप्रियायै, कान्तायै, कामिन्यै, पद्मलोचनायै, प्रह्लादिन्यै, महामात्रे, दुर्गायै, दुर्गतिना-

तिनाशिनी । ज्वालामुखी सुगोत्रा च ज्योतिः कुमुदहासिनी । दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी । अपर्णा शाम्बरी माया मदिरा मृदुहासिनी । कुलवागीश्वरी नित्यानित्यक्लिन्ना कृशोदरी । कामेश्वरी च नीला च भीरुण्डा वह्निवासिनी । लम्बोदरी महाकाली विद्याविद्येश्वरी तथा । नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी । सङ्कर्षणी नारसिंही वैष्णवी च महोदरी । कात्यायनी च चम्पा च सर्वसम्पत्तिकारिणी । नारायणी महानिद्रा योगनिद्रा प्रभावती । प्रज्ञापारमिता प्रज्ञा

शिन्यै, ज्वालामुख्यै सुगोत्रायै, ज्योतिषे, कुमुदहासिन्यै, दुर्गमायै, दुर्लभायै, विद्यायै, स्वर्गतये, पुरवासिन्यै, अपर्णायै, शाम्बरीमायायै, मदिरायै, मृदुहासिन्यै, कुलवागीश्वर्यै, नित्यानित्यक्लिन्नायै, कृशोदर्यै, कामेश्वर्यै, नीलायै, भीरुण्डायै, वह्निवासिन्यै, लम्बोदर्यै, महाकाल्यै, विद्याविद्येश्वर्यै, नरेश्वर्यै, सत्यायै, सर्वसौभाग्यवर्धिन्यै, सङ्कर्षण्यै, नारसिंह्यै, वैष्णव्यै, महोदर्यै, कात्यायन्यै, चम्पायै, सर्वसम्पत्तिकारिण्यै, नारायण्यै, महानिद्रायै, योगनिद्रायै, प्रभावत्यै, प्रज्ञापारमितायै, प्रज्ञायै, तारायै, मधुमत्यै, मधवे, क्षीरार्णवसुतायै, हालायै, कालिकायै, सिंहवाहनायै, ॐकारायै, सु-

तारा मधुमती मधु । क्षीरार्णवसुता हाला कालिका सिंहवाहना । ॐकारा च सुधाहारा चेतना कोपना कृतिः । अर्धबिन्दुधरा धीरा विश्वमाता कलावती १०० । पद्मावती सुवस्त्रा च प्रबुद्धा च सरस्वती । कुण्डासना जगद्धात्री बुद्धमाता जिनेश्वरी । जिनमाता जिनेन्द्रा च शारदा हंसवाहना । राज्यलक्ष्मीर्वषट्कारा सुधाकारासुधात्मिका । राजनीतिस्त्रयीवार्ता दण्डनीतिः क्रियावती । सद्भूतिस्तारिणी श्रद्धा सद्गतिः सत्परायणा । सिन्धुर्मन्दाकिनी गङ्गा यमुना च सरस्वती । गोदावरी विपाशा च कावीरी च शतह्रदा ।

धाहारायै, चेतनायै, कोपनायै, कृत्यै, अर्धबिन्दुधरायै, धीरायै विश्वमात्रे, "तेजोऽसि" कलावत्यै, १०० ध्यानम् । वराङ्कुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् । बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥ ॐपद्मावत्यैस्वाहा, सुवस्त्रायै, प्रबुद्धायै, सरस्वत्यै, कुण्डासनायै, जगद्धात्र्यै, बुद्धमात्रे, जिनेश्वर्यै, जिनमात्रे, जिनेन्द्रायै, शारदायै, हंसवाहनायै, राज्यलक्ष्म्यै, वषट्कारायै, सुधाकारायै, सुधात्मिकायै, राजनीत्यै, त्रयीवार्तायै, दण्डनीत्यै, क्रियावत्यै, सद्भूतये, तारिण्यै, श्रद्धायै, सद्गतये, सत्परायणायै, सिन्धवे, मन्दाकिन्यै, गङ्गायै, यमुनायै सरस्वत्यै, गोदावर्यै, विपाशायै, कावीर्यै, शतह्रदायै, सरय्वै, चन्द्रभागायै,

सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः । नर्मदा कर्मनाशा च चर्मण्वत्यथ देविका । वेत्रवती वितस्ता च वरदा नरवाहना । सती पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी । एकचक्षुः सहस्राक्षी सुश्रेणिर्भगमालिनी । सेनाश्रेणिः पताका च सुव्यूहा युद्धकाङ्क्षिणी । पताकिनी दयारम्भा विपञ्ची पञ्चमप्रिया । परापरकलाक्रान्ता त्रिशक्तिर्मोक्षदायिनी । ऐन्द्री माहेश्वरी ब्राह्मी कौमारी कुलवासिनी । इच्छा भगवती शक्तिः कामधेनुः कृपावती । वज्रायुधा वज्रहस्ता चण्डी चण्डपराक्रमा । गौरी

कौशिक्यै, गण्डक्यै, शुचये, नर्मदायै, कर्मनाशायै, चर्मण्वत्यै, देविकायै, वेत्रवत्यै, वितस्तायै, वरदायै, नरवाहनायै, सत्यै, पतिव्रतायै, साध्व्यै, सुचक्षुषे, कुण्डवासिन्यै, एकचक्षुषे, सहस्राक्ष्यै, सुश्रेणये, भगमालिन्यै, सेनाश्रेणये, पताकायै, सुव्यूहायै, युद्धकाङ्क्षिण्यै, पताकिन्यै, दयारम्भायै, विपञ्च्यै, पञ्चमप्रियायै, परापरकलाक्रान्तायै, त्रिशक्तये, मोक्षदायिन्यै, ऐन्द्र्यै, माहेश्वर्यै, ब्राह्म्यै, कौमार्यै, कुलवासिन्यै, इच्छायै, भगवत्यै, शक्तये, कामधेनवे, कृपावत्यै, वज्रायुधायै, वज्रहस्तायै, चण्ड्यै, चण्डपराक्रमायै, गौर्यै, सुवर्णवर्णायै, स्थितिसंहारकारिण्यै, एकानेकायै, महेज्यायै, शतबाहवे, महाभुजायै, भुजङ्गभूषणायै,

सुवर्णवर्णा च स्थिति-संहारकारिणी । एकानेका महेज्या च शतबाहुर्महाभुजा । भुजङ्गभूषणा भूषा षट्चक्रक्रमवासिनी । षट्चक्रभेदिनी शूरा कायस्था कायवर्जिता । सुस्मिता सुमुखी क्षामा मूलप्रकृतिरीश्वरी । २०० अजा च बहुवर्णा च पुरुषार्थप्रवर्तिनी । रक्ता नीला सिता श्यामा कृष्णा पीता च कर्बुरा । क्षुधा तृष्णा जरा वृद्धा तरुणी करुणालया । कला काष्ठा मुहूर्ता च निमेषा कालरूपिणी । सुवर्णरसनानासा चक्षुःस्पर्शवती रसा । गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः । मृगनाभिर्मृगाक्षी च कर्पूरा-

भूषायै, षट्चक्रक्रमवासिन्यै, षट्चक्रभेदिन्यै, शूरायै, कायस्थायै, कायवर्जितायै, सुस्मितायै, सुमुख्यै, क्षामायै, मूलप्रकृतये, "तेजोसि" ईश्वर्यै, "२०० माता भवानी च पिता भवानी बन्धुर्भवानी च गुरुर्भवानी । विद्या भवानी द्रविणं भवानी यतो यतो यामि ततो भवानी ॥" ॐ-अजायैस्वाहा, बहुवर्णायै, पुरुषार्थप्रवर्तिन्यै, रक्तायै, नीलायै, सितायै, श्यामायै, कृष्णायै, पीतायै, कर्बुरायै, क्षुधायै, तृष्णायै, जरायै, वृद्धायै, तरुण्यै, करुणालयायै, कलायै, काष्ठायै, मुहूर्तायै, निमेषायै, कालरूपिण्यै, सुवर्णरसनानासायै, चक्षुःस्पर्शवत्यै, रसायै, गन्धप्रियायै, सुगन्धायै, सुस्पर्शायै, मनोगतये, मृगनाभये, मृगाक्ष्यै, कर्पूरामोदधारिण्यै, पद्मयो-

मोद्धारिणी। पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी। योनिमुद्रा महामुद्रा खेचरी खगगामिनी। मधुश्रीर्माधवीवल्ली मधुमत्ता मदोद्धता। मातङ्गी शुकहस्ता च पुष्पबाणेक्षुचापिनी। रक्ताम्बरधरा क्षीबा रक्तपुष्पावतंसिनी। शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया। सुवेणी पद्महस्ता च मुक्ताहारविभूषणा। कर्पूरामोदनिःश्वासा पद्मिनी पद्ममन्दिरा। खड्गिनी चक्रहस्ता च भुसुण्डी परिघायुधा। चापिनी पाशहस्ता च त्रिशूलवरधारिणी। सुबाणा शक्तिहस्ता च मयूरवरवाहना। वरायुधधरा वीरा वीरपा-

नये, सुकेश्यै, सुलिङ्गायै, भगरूपिण्यै, योनिमुद्रायै, महामुद्रायै, खेचर्यै, खगगामिन्यै, मधुश्रियै, माधवीवल्ल्यै, मधुमत्तायै, मदोद्धतायै, मातङ्ग्यै, शुकहस्तायै, पुष्पबाणायै, इक्षुचापिन्यै, रक्ताम्बरधरायै, क्षीबायै, रक्तपुष्पावतंसिन्यै, शुभ्राम्बरधरायै, धीरायै, महाश्वेतायै, वसुप्रियायै, सुवेण्यै, पद्महस्तायै, मुक्ताहारविभूषणायै, कर्पूरामोदनिःश्वासायै, पद्मिन्यै, पद्ममन्दिरायै, खड्गिन्यै, चक्रहस्तायै, भुसुण्ड्यै, परिघायुधायै, चापिन्यै, पाशहस्तायै, त्रिशूलवरधारिण्यै, सुबाणायै, शक्तिहस्तायै, मयूरवरवाहनायै, वरायुधधरायै, वीरायै, वीरपानमदोत्कटायै, वसुधायै, वसुधारायै, जयायै, शाकम्भर्यै, शिवायै, विजयायै,

नमदोत्कटा । वसुधा वसुधारा च जया शाकम्भरी शिवा । विजया च जयन्ती च सुस्तनी शत्रुनाशिनी । अन्तर्वत्नी वेदशक्तिर्वरदा वरधारिणी । शीतला च सुशीला च बालग्रहविनाशिनी । कुमारी वसुपर्णा च कामाख्या कामवन्दिता । जालन्धरधराऽनन्ता कामरूपनिवासिनी । कामबीजवती सत्या सत्यधर्मपरायणा । स्थूलमार्गस्थिता "३००" सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी । षट्कोणा च त्रिकोणा च त्रिनेत्रा वृषभध्वजा । वृषप्रिया वृषारूढा महिषासुरघातिनी । सुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा । क-

जयन्त्यै, सुस्तन्यै, शत्रुनाशिन्यै, अन्तर्वत्न्यै, वेदशक्त्यै, वरदायै, वरधारिण्यै, शीतलायै, सुशीलायै, बालग्रहविनाशिन्यै, कुमार्यै, वसुपर्णायै, कामाख्यायै, कामवन्दितायै, जालन्धरधरायै, अनन्तायै, कामरूपनिवासिन्यै, कामबीजवत्यै, सत्यायै, सत्यधर्मपरायणायै, "तेजोऽसि" ॐस्थूलमार्गस्थितायैस्वाहा, ॥ ३०० ॥ "यावत्पदं पदसरोजयुगं त्वदीयं नाङ्गीकरोति हृदयेषु जगच्छरण्ये । तावद्विकल्पजटिला कुटिलप्रकारास्तर्कग्रहाः समयिनां प्रलयं न यान्ति ॥" ॐसूक्ष्मायैस्वाहा, सूक्ष्मबुद्धिप्रबोधिन्यै, षट्कोणायै, त्रिकोणायै, त्रिनेत्रायै, वृषभध्वजायै, वृषप्रियायै, वृषारूढायै, महिषासुरघातिन्यै, सुम्भदर्पहरायै, दीप्तायै, दीप्तपावकसन्निभा-

पालभूषणा काली क-
पालमालभारिणी ।
कपालकुण्डला दीर्घा
शिवदूती घनध्वनिः ।
सिद्धिदा बुद्धिदा नि-
त्या सत्यमार्गप्रबोधि-
नी । कम्बुग्रीवा वसु-
मती च्छत्रच्छायाकृ-
तालया । जगद्गर्भा कु-
ण्डलिनी भुजगाकार-
शायिनी । प्रोल्लसत्स-
प्तपद्मा च नाभिनाल-
मृणालिनी । मूलाधा-
रा निराकारा वह्निकु-
ण्डकृतालया । वायु-
कुण्डसुखासीना नि-
राधारा निराश्रया ।
श्वासोच्छ्वासगतिर्जी-
वाग्राहिणी वह्निसंश्र-
या । वल्लीतन्तुसमु-
त्थाना षड्रसास्वादलो-
लुपा । तपस्विनी तपः-
सिद्धिस्तपसः सिद्धि-
दायिनी । तपोनिष्ठा

यै, कपालभूषणायै, काल्यै,
कपालमालभारिण्यै, कपाल-
कुण्डलायै, दीर्घायै, शिव-
दूत्यै, घनध्वनये, सिद्धिदायै,
बुद्धिदायै, नित्यायै, सत्यमार्ग-
प्रबोधिन्यै, कम्बुग्रीवायै, व-
सुमत्यै, छत्रच्छायाकृताल-
यायै, जगद्गर्भायै, कुण्डलि-
न्यै, भुजगाकारशायिन्यै, प्रो-
ल्लसत्सप्तपद्मायै, नाभिनाल-
मृणालिन्यै, मूलाधारायै, नि-
राकारायै, वह्निकुण्डकृताल-
यायै, वायुकुण्डसुखासीनायै,
निराधारायै, निराश्रयायै
श्वासोच्छ्वासगतये, जीवाग्रा-
हिण्यै, वह्निसंश्रयायै, वल्ली-
तन्तुसमुत्थानायै, षड्रसास्वा-
दलोलुपायै, तपस्विन्यै, तपः-
सिद्ध्यै, तपसःसिद्धिदायि-
न्यै, तपोनिष्ठायै, तपोयुक्तायै,
तापस्यै, तपःप्रियायै, सप्तधा-

तपोयुक्ता तापसी च
तपःप्रिया । सप्तधातु-
मयी मूर्तिः सप्तधात्व-
न्तराश्रया । देहपुष्टि-
र्मनःपुष्टिरन्नपुष्टिर्बलो-
द्धता । ओषधिर्वैद्यमा-
ता च द्रव्यशक्तिः प्र-
भावती । वैद्या वैद्य-
चिकित्सा च सुपथ्या
रोगनाशिनी । मृगया
मृगमांसादा मृगत्व-
ङ्मृगलोचना । वागुरा
बन्धरूपा च वधरूपा
वधोद्धता । वन्दी व-
न्दिस्तुताकारा कारा-
बन्धविमोचिनी । शृ-
ङ्खला खलहा विद्युद्दृ-
ढबन्धविमोचिनी । अ-
म्बिकाऽम्बालिका चा-
म्बा स्वक्षा साधुजना-
र्चिता । कौलिकी कु-
लविद्या च सुकुला
कुलपूजिता । कालच-
क्रभ्रमा भ्रान्ता वि-
भ्रमा भ्रमनाशिनी ।

तुमत्यै, मूर्त्यै, सप्तधात्वन्तरा-
श्रयायै, देहपुष्ट्यै, मनःपु-
ष्ट्यै, अन्नपुष्ट्यै, बलोद्धतायै,
ओषधये, वैद्यमात्रे, द्रव्यश-
क्तये, प्रभावत्यै, वैद्यायै, वै-
द्यचिकित्सायै, सुपथ्यायै, रो-
गनाशिन्यै, मृगयायै, मृगमां-
सादायै, मृगत्वचे, मृगलोच-
नायै, वागुरायै, बन्धुरूपायै,
वधरूपायै, वधोद्धतायै, वन्द्यै,
वन्दिस्तुतायै, कारायै, कारा-
बन्धविमोचिन्यै, शृङ्खलायै,
खलहायै, विद्युते, दृढबन्धवि-
मोचिन्यै, अम्बिकायै, अम्बा-
लिकायै, अम्बायै, स्वक्षायै,
साधुजनार्चितायै, कौलिक्यै,
कुलविद्यायै, सुकुलायै, कुल-
पूजितायै, कालचक्रभ्रमायै,
भ्रान्तायै, विभ्रमायै, भ्रमना-
शिन्यै, वातात्यै, मेघमालायै,
सुवृष्ट्यै, सस्यवर्धिन्यै, अ-
कारायै, इकारायै, "तेजोऽसि"

वात्याली मेघमाला च सुवृष्टिः सस्यवर्धिनी। अकारा च इकारा च "४००"।उकारैकाररूपिणी। ह्रींकारीबीजरूपा च क्लींकाराम्बरवासिनी। सर्वाक्षरमयीमूर्तिरक्षरा वर्णमालिनी। सिन्दूरारुणवर्णा च सिन्दूरतिलकप्रिया। वश्या च वश्यबीजा च लोकवश्यविभाविनी। नृपवश्या नृपसेव्या नृपवश्यकरी प्रिया। महिषी नृपमान्या च नृमान्या नृपनन्दिनी। नृपधर्ममयी धन्या धनधान्यविवर्धिनी। चतुर्वर्णमयी मूर्तिश्चतुर्वर्णैः सुपूजिता। सर्वधर्ममयी सिद्धिश्चतुराश्रमवासिनी। ब्राह्मणी क्षत्रिया वैश्या

ॐउकारायैस्वाहा॥४००॥"तां भवानीं भवानीतक्लेशनाशविशारदाम्। शारदां शरदम्भोजसितपद्मासनां नमः॥"

ॐऐकाररूपिण्यैस्वाहा, ह्रींकारीबीजरूपायै, क्लींकाराम्बरवासिन्यै, सर्वाक्षरमयीमूर्त्यै, अक्षरायै, वर्णमालिन्यै, सिन्दूरारुणवर्णायै, सिन्दूरतिलकप्रियायै, वश्यायै, वश्यबीजायै, लोकवश्यविभाविन्यै, नृपवश्यायै, नृपसेव्यायै, नृपवश्यकर्यै, प्रियायै, महिष्यै, नृपमान्यायै, नृमान्यायै, नृपनन्दिन्यै, नृपधर्ममय्यै, धन्यायै, धनधान्यविवर्धिन्यै, चतुर्वर्णमयीमूर्त्यै, चतुर्वर्णैःसुपूजितायै, सर्वधर्ममयीसिद्ध्यै, चतुराश्रमवासिन्यै, ब्राह्मण्यै, क्षत्रियायै, वैश्यायै, शूद्रायै, अवरवर्ण-

शूद्रा चावरवर्णजा । वेदमार्गरता यज्ञा वेदविश्वविभाविनी । अस्त्रशस्त्रमयीविद्या वरशस्त्रास्त्रधारिणी । सुमेधा सत्यमेधा च भद्रकाल्यऽपराजिता। गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया । त्रिसन्ध्या त्रिपदा धात्री सुपर्वा सामगायनी । पञ्चाली बालिका बाला बालक्रीडा सनातनी । गर्भाधारधरा शून्या गर्भाशयनिवासिनी । सुरारिघातिनी कृत्या पूतना च तिलोत्तमा। लज्जा रसवती नन्दा भवानी पापनाशिनी। पट्टाम्बरधरा गीतिः सुगीतिर्ज्ञानलोचना । सप्तसुरमयी तन्त्री षड्जमध्यमदैवता। मूर्छा-

जायै, वेदमार्गरतायै, यज्ञायै, वेदविश्वविभाविन्यै, अस्त्रशस्त्रमयीविद्यायै, वरशस्त्रास्त्रधारिण्यै, सुमेधायै, सत्यमेधायै, भद्रकाल्यै, अपराजितायै, गायत्र्यै, सत्कृतये, सन्ध्यायै, सावित्र्यै, त्रिपदाश्रयायै, त्रिसन्ध्यायै, त्रिपदायै, धात्र्यै, सुपर्वायै, सामगायिन्यै, पञ्चाल्यै, बालिकायै, बालायै, बालक्रीडायै, सनातन्यै, गर्भाधारधरायै, शून्यायै, गर्भाशयनिवासिन्यै, सुरारिघातिन्यै, कृत्यायै, पूतनायै, तिलोत्तमायै, लज्जायै, रसवत्यै, नन्दायै, भवान्यै, पापनाशिन्यै, पट्टाम्बरधरायै, गीत्यै, सुगीत्यै, ज्ञानलोचनायै, सप्तसुरमय्यै, तन्त्र्यै, षड्जमध्यमदैवतायै, मूर्च्छानायै, ग्रामसंस्थानायै, स्वच्छस्वस्थानवासिन्यै, अट्टाट्टहासिन्यै, प्रेतायै, प्रेतासननिवासिन्यै,

ना ग्रामसंस्थाना स्वच्छस्वस्थानवासिनी । अट्टाट्टहासिनी प्रेता प्रेतासननिवासिनी । गीतनृत्तप्रिया कामा तुष्टिदा पुष्टिदा क्षया । निष्ठा सत्यप्रिया प्रख्या लोकेशी च सुरोत्तमा । सुविषा ज्वालिनीज्वाला विषमोहार्त्तिनाशिनी । विषारिर्नागदमनी कुरुकुल्लाऽमृतोद्भवा । भूतभीतिहरा रक्षा "५००" भूतावेशविनाशिनी । रक्षोघ्नी राक्षसीरात्रिर्दीर्घनिद्रा दिवागतिः । चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी । डाकिनी शाकिनी शिष्या हाकिनी चक्रवाकिनी । सितासितप्रि-

गीतनृत्तप्रियायै, कामायै, तुष्टिदायै, पुष्टिदायै, अक्षयायै, निष्ठायै, सत्यप्रियायै, प्रख्यायै, लोकेश्यै, सुरोत्तमायै, सुविषायै, ज्वालिन्यै, ज्वालायै, विषमोहार्तिनाशिन्यै, विषार्यै, नागदमन्यै, कुरुकुल्लायै, अमृतोद्भवायै, भूतभीतिहरायै, "तेजोऽसि" ॐ रक्षायैस्वाहा, ५०० "भवानि त्वं दास्ये मयि वितर दृष्टिं सकरुणामिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः । तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥" ॐ भूतावेशविनाशिन्यैस्वाहा, रक्षोघ्न्यै, राक्षस्यै, रात्र्यै, दीर्घनिद्रायै, दिवागतये, चन्द्रिकायै, चन्द्रकान्तये, सूर्यकान्तये, निशाचर्यै, डाकिन्यै, शाकिन्यै शिष्यायै, हाकिन्यै, चक्रवाकि-

या स्वङ्गा सुकुला वन-
देवता । गुरुरूपधरा
गुर्वी मृत्युर्मारी वि-
शारदा । महामारी
विनिन्द्रा च तन्द्रा मृ-
त्युविनाशिनी । चन्द्र-
मण्डलसङ्काशा चन्द्र-
मण्डलवासिनी । अ-
णिमादिगुणोपेता सु-
स्पृहा कामरूपिणी ।
अष्टसिद्धिप्रदा प्रौढा
दुष्टदानवघातिनी ।
अनादिनिधना पुष्टि-
श्चतुर्बाहुश्चतुर्मुखी । च-
तुःसमुद्रशयना चतु-
र्वर्गफलप्रदा । काश-
पुष्पप्रतीकाशा शर-
त्कुमुदलोचना । भूता
भव्या भविष्या च
शैलजा शैलवासिनी ।
वाममार्गरता वामा
शिववामाङ्गवासिनी ।
वामाचारप्रिया तुष्टि-
र्लोपामुद्राप्रबोधिनी ।

न्यै, सितासितप्रियायै, स्व-
ङ्गायै, सुकुलायै, वनदेवतायै,
गुरुरूपधरायै, गुर्व्यै, मृत्यवे,
मार्यै, विशारदायै, महामार्यै,
विनिन्द्रायै, तन्द्रायै, मृत्युवि-
नाशिन्यै, चन्द्रमण्डलसङ्का-
शायै, चन्द्रमण्डलवासिन्यै,
अणिमादिगुणोपेतायै, सुस्पृ-
हायै, कामरूपिण्यै, अष्टसि-
द्धिप्रदायै, प्रौढायै, दुष्टदान-
वघातिन्यै, अनादिनिधनायै,
पुष्ट्यै, चतुर्बाहवे, चतुर्मुख्यै,
चतुःसमुद्रशयनायै, चतुर्वर्ग-
फलप्रदायै, काशपुष्पप्रतीका-
शायै, शरत्कुमुदलोचनायै,
भूतायै, भव्यायै, भविष्यायै,
शैलजायै, शैलवासिन्यै, वा-
ममार्गरतायै, वामायै, शिव-
वामाङ्गवासिन्यै, वामाचार-
प्रियायै, तुष्ट्यै, लोपामुद्राप्र-
बोधिन्यै, भूतात्मने, परमा-

भूतात्मा परमात्मा च
भूतभव्यविभाविनी ।
मङ्गला साधुशीला च
परमार्थप्रबोधिका । द-
क्षिणा दक्षिणामूर्तिः
सुदक्षिणा हरिप्रसूः ।
योगिनी योगियुक्ता
च योगाङ्गा ध्यानशा-
लिनी । योगपट्टधरा-
मुक्ता मुक्तानां पर-
मागतिः । नारसिंही
सुजन्मा च त्रिवर्गफ-
लदायिनी । धर्मदा ध-
नदा चैका कामदा मो-
क्षदा द्युतिः । साक्षिणी
क्षणदा दक्षा दक्षजा
कोटिरूपिणी । क्रतुः
कात्यायनी स्वच्छा स्व-
च्छन्दा च कविप्रिया ।
सत्यागमा बहिःस्था च
काव्यशक्तिः कवित्व-
दा । मेनापुत्री सती-
माता मैनाकभगिनी
तडित् । सौदामिनी

त्मने, भूतभव्यविभाविन्यै,
मङ्गलायै, साधुशीलायै, पर-
मार्थप्रबोधिकायै, दक्षिणायै,
दक्षिणामूर्तये, सुदक्षिणायै,
हरिप्रस्वै, योगिन्यै, योगयु-
क्तायै, योगाङ्गायै, ध्यानशा-
लिन्यै, योगपट्टधरायै, मुक्तायै,
मुक्तानांपरमागतये, नारसिं-
ह्यै, सुजन्मने, त्रिवर्गफलदायि-
न्यै, धर्मदायै, धनदायै, एकायै,
कामदायै, मोक्षदायै, द्युतये,
साक्षिण्यै, क्षणदायै, दक्षायै,
दक्षजायै, कोटिरूपिण्यै, क्र-
तवे कात्यायन्यै, स्वच्छायै,
स्वच्छन्दायै, कविप्रियायै, स-
त्यागमायै, बहिःस्थायै, काव्य-
शक्तये, कवित्वदायै, मेनापु-
त्र्यै, सतीमात्रे, मैनाकभगि-
न्यै, तडिते "तेजोऽसि" ॐ सौ-
दामिन्यैस्वाहा ६०० । "किं
किं दुःखं दनुजदलनि क्षीयते
न स्मृतायां का का कीर्तिः
कुलकमलिनि ख्याप्यते न

सुदामा च सुधामा धामशालिनी । सौभाग्यदायिनी द्यौश्च सुभगा द्युतिवर्धिनी । श्रीकृत्तिवसना चैव कङ्काली कलिनाशिनी । रक्तबीजवधोद्दृप्ता सुतन्तुर्बीजसन्ततिः । जगज्जीवा जगद्बीजा जगत्त्रयहितैषिणी । चामीकररुचिश्चान्द्री साक्षया षोडशीकला यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता । चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी । चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्धुरा । अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी । अमा कलशहस्ता च पूर्णकुम्भपयोधरा । अभीरुर्भैरवी भीरा भीमा त्रिपुरभैरवी । महा-

स्तुतायाम् । का का सिद्धिः सुरवरनुते प्राप्यते नार्चितायां कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम्" ॥ सुदामायै स्वाहा, सुधामायै, धामशालिन्यै, सौभाग्यदायिन्यै, दिवे, सुभगायै, द्युतिवर्धिन्यै, श्रीकृत्तिवसनायै, कङ्काल्यै, कलिनाशिन्यै, रक्तबीजवधोद्दृप्तायै, सुतन्तवे, बीजसन्ततये, जगज्जीवायै, जगद्बीजायै, जगत्त्रयहितैषिण्यै, चामीकररुचये चान्द्र्यै, साक्षयायै, षोडशीकलायै, यत्तत्पदानुबन्धायै, यक्षिण्यै, धनदार्चितायै, चित्रिण्यै, चित्रमायायै, विचित्रायै, भुवनेश्वर्यै, चामुण्डायै, मुण्डहस्तायै, चण्डमुण्डवधोद्धुरायै, अष्टम्यै, एकादश्यै, पूर्णायै, नवम्यै, चतुर्दश्यै, अमायै, कलशहस्तायै, पूर्णकुम्भपयोधरायै, अभीरवे, भैरव्यै, भीरायै, भीमायै, त्रिपुरभै-

रुण्डा च रौद्री च महाभैरवपूजिता । निर्मुण्डा हस्तिनी चण्डा करालदशनानना । कराला विकराला च घोरा घुर्घुरनादिनी । रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा । कादम्बरी पटासा च काश्मीरी कुङ्कुमप्रिया । क्षान्तिर्बहुसुवर्णा च मतिर्बहुसुवर्णदा । मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी । हिंसा हंसगतिर्हंसी हंसोज्वलशिरोरुहा । पूर्णचन्द्रमुखी श्यामा स्मितास्या श्यामकुन्तला । मषी च लेखनी लेखा सुलेखा लेखकप्रिया । शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता । कुरुक्षेत्रावनिः काशी मथुरा काञ्च्यवन्ति-

रुण्ड्यै, महारुण्डायै, रौद्र्यै, महाभैरवपूजितायै, निर्मुण्डायै, हस्तिन्यै, चण्डायै, करालदशनाननायै, करालायै, विकरालायै, घोरायै, घुर्घुरनादिन्यै, रक्तदन्तायै, ऊर्ध्वकेश्यै, बन्धूककुसुमारुणायै, कादम्बर्यै, पटासायै, काश्मीर्यै, कुङ्कुमप्रियायै, क्षान्तये, बहुसुवर्णायै, मतये, बहुसुवर्णदायै, मातङ्गिन्यै, वरारोहायै, मत्तमातङ्गगामिन्यै, हिंसायै, हंसगतये, हंस्यै, हंसोज्वलशिरोरुहायै, पूर्णचन्द्रमुख्यै, श्यामायै, स्मितास्यायै, श्यामकुन्तलायै, मष्यै, लेखन्यै, लेखायै, सुलेखायै, लेखकप्रियायै, शङ्खिन्यै, शङ्खहस्तायै, जलस्थायै, जलदेवतायै, कुरुक्षेत्रावनये, काश्यै, मथुरायै, काञ्च्यै, अवन्तिका-

का । अयोध्या द्वारि-
कामाया तीर्था तीर्थ-
करप्रिया । त्रिपुष्क-
राऽप्रमेया च कोश-
स्था कोशवासिनी ।
कौशिकी तु कुशावर्ता
॥ ७०० ॥ कोशाम्बी
कोशवर्धिनी । कोश-
दा पद्मकोशाक्षी कुसु-
म्भकुसुमप्रिया । तो-
तुला च तुलाकोटिः
कोटिस्था कोटराश्र-
या । स्वयम्भूश्च सुगु-
सा च सुरूपा रूपव-
र्धिनी । तेजस्विनी सु-
भिक्षा च बलदा बल-
दायिनी । महाकोशी
महावर्त्ता बुद्धिः सद-
सदात्मिका । महा-
ग्रहहरा सौम्या वि-
शोका शोकनाशिनी ।
सात्त्विकी सत्त्वसंस्था

यै, अयोध्यायै, द्वारिकामा-
यायै, तीर्थायै, तीर्थकरप्रि-
यायै, त्रिपुष्करायै, अप्रमे-
यायै, कोशस्थायै, कोशवा-
सिन्यै, कौशिक्यै, "तेजोऽसि"
ओंकुशावर्तायैस्वाहा, ७००
आरक्ताभां त्रिनेत्रां मणिमुकु-
टवतीं रत्नताटङ्करम्यां हस्ता-
म्भोजैः सपाशाङ्कुशमदनध-
नुःसायकैर्विस्फुरन्तीम् । आ-
पीनोत्तुङ्गवक्षोरुहतटविलुठ-
त्तारहारोज्वलाङ्गीं ध्यायाम्य-
म्भोरुहस्थामरुणविवसनामी-
श्वरीमीश्वराणाम् ॥ ॐको-
शाम्ब्यैस्वाहा, कोशवर्धि-
न्यै, कोशदायै, पद्मकोशाक्ष्यै,
कुसुम्भकुसुमप्रियायै, तोतु-
लायै, तुलाकोट्यै, कोटिस्थायै,
कोटराश्रयायै, स्वयम्भुवे, सु-
गुसायै, सुरूपायै, रूपवर्धिन्यै,
तेजस्विन्यै, सुभिक्षायै, ब-
लदायै, बलदायिन्यै, महाको-
श्यै, महावर्तायै, बुद्ध्यै, सदस-
दात्मिकायै, महाग्रहहरायै,

च राजसी च रजोवृता । तामसी च तमोयुक्ता गुणत्रयविभाविनी । अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी । शम्भुकल्याणिनी कल्पा मनःसङ्कल्पसन्ततिः । सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा । सर्वज्ञानवती वाञ्छा सर्वतत्त्वावबोधिनी । जाग्रती च सुषुप्तिश्च स्वप्नावस्था तुरीयका । त्वरा मन्दगतिर्मन्दा मदिरामोदधारिणी । पानभूमिः पानपात्रा पानदानकरोद्यता । अघूर्णारुणनेत्रा च किञ्चिदव्यक्तभाषिणी । आशापूरा च दीक्षा च दक्षा दीक्षितपूजिता ॥ ६० ॥ नागवल्ली नागकन्या भोगिनी भोगवल्लभा । सर्वशास्त्रवती विद्या सुस्मृति-

सौम्यायै, विशोकायै, शोकनाशिन्यै, सात्त्विकयै, सत्त्वसंस्थायै, राजस्यै, रजोवृतायै, तामस्यै, तमोयुक्तायै, गुणत्रयविभाविन्यै, अव्यक्तायै, व्यक्तरूपायै, वेदविद्यायै, शाम्भव्यै, शम्भुकल्याणिन्यै, कल्पायै, मनःसङ्कल्पसन्तत्यै, सर्वलोकमयीशक्तये ४० सर्वश्रवणगोचरायै, सर्वज्ञानवत्यै, वाञ्छायै, सर्वतत्त्वावबोधिन्यै, जाग्रत्यै, सुषुप्तये, स्वप्नावस्थायै, तुरीयकायै, त्वरायै, मन्दगतये, मन्दायै, मदिरामोदधारिण्यै, पानभूमये, पानपात्रायै, पानदानकरोद्यतायै, अघूर्णारुणनेत्रायै, किञ्चिदव्यक्तभाषिण्यै, आशापूरायै, दीक्षायै, दक्षायै, दीक्षितपूजितायै, नागवल्ल्यै, नागकन्यायै, भोगिन्यै, भोगवल्लभायै, सर्वशास्त्रवतीविद्यायै, सुस्मृतये, धर्मवादिन्यै,

धर्मवादिनी । श्रुतिः श्रुतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी । मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला। सुनाभिर्यातना जातिर्गम्भीराऽभाववर्जिता। नागपाशधरा मूर्तिरगाधा नागकुण्डला। सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी । सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षरावलिः। मधुस्रवा स्रवन्ती च भ्रामरी भ्रमरालका । मातृमण्डलमध्यस्था मातृमण्डलवासिनी । कुमारजननी क्रूरा सुमुखी ज्वरनाशिनी । अतीता विद्यमाना च भाविनी प्रीतिमञ्जरी ॥ ८०० ॥ सर्वसौख्यवती युक्तिराहारपरिणामिनी । निधानं पञ्चभूतानां भवसागर-

श्रुतये, श्रुतिधरायै, ज्येष्ठायै, श्रेष्ठायै, पातालवासिन्यै, मीमांसायै, तर्कविद्यायै, ७५ सुभक्त्यै, भक्तवत्सलायै, सुनाभये, यातनायै, जात्यै, गम्भीरायै, अभाववर्जितायै, नागपाशधरामूर्तये, अगाधायै, नागकुण्डलायै, सुचक्रायै, चक्रमध्यस्थायै, चक्रकोणनिवासिन्यै, सर्वमन्त्रमयीविद्यायै, सर्वमन्त्राक्षरावलये, मधुस्रवायै, स्रवन्त्यै, भ्रामर्यै, भ्रमरालकायै, मातृमण्डलमध्यस्थायै, मातृमण्डलवासिन्यै, कुमारजनन्यै, क्रूरायै, सुमुख्यै, ज्वरनाशिन्यै, अतीतायै, विद्यमानायै, भाविन्यै, "तेजोऽसि" ॐ प्रीतिमञ्जर्यै स्वाहा ८०० भक्तानां सिद्धिदात्री नलिनयुगकरा श्वेतपद्मासनस्था लक्ष्मीरूपा त्रिनेत्रा हिमकरवदना सर्वदैत्येन्द्रहर्त्री । वागीशी सिद्धिकर्त्री सकलमुनिजनैः सेविता

तारिणी । अक्रूरा च ग्रहवती विग्रहा ग्रहवर्जिता । रोहिणी भूमिगर्भा च कालभूः कालवर्जिता। कलङ्करहिता नारी चतुष्षष्ठ्यभिधावती । जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा। अजरा नियतिः प्रीतिरतिरागविवर्धिनी। पञ्चवातगतेर्भिन्ना पञ्चश्लेष्माशयाधरा । पञ्चपित्तवती पंक्तिः पञ्चस्थानविभाविनी । ऋतुमती कामवती बहिःप्रस्रविणी त्र्यहा। रजःशुक्रधराशक्तिर्जरायुर्गर्भधारिणी। त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिः पुरवासिनी। अरागा शिवतत्त्वा च कामतत्त्वानु-

या भवानी नौम्यहं नौम्यहं त्वां हरिहरनमितां शारिकां नौमि नौमि ॥ ओं सर्वसौख्यवतीयुक्त्यै स्वाहा, आहारपरिणामिन्यै, पञ्चभूतानां निधानायै, भवसागरतारिण्यै, अक्रूरायै, ग्रहवत्यै, विग्रहायै, ग्रहवर्जितायै, रोहिण्यै, भूमिगर्भायै, कालभुवे, कालवर्जितायै, कलङ्करहितायै, नार्यै, चतुःषष्ट्यभिधावत्यै, जीर्णायै, जीर्णवस्त्रायै, नूतनायै, नववल्लभायै, अजरायै, नियत्यै, प्रीत्यै, अतिरागविवर्धिन्यै, पञ्चवातगतेर्भिन्नायै, पञ्चश्लेष्माशयाधरायै, पञ्चपित्तवतीपङ्क्त्यै, पञ्चस्थानविभाविन्यै, ऋतुमत्यै, कामवत्यै, बहिःप्रस्रविण्यै, त्र्यहायै, रजःशुक्रधराशक्तये, जरायवे, गर्भधारिण्यै, त्रिकालज्ञायै, त्रिलिङ्गायै, त्रिमूर्तये, पुरवासिन्यै, अरागायै, शिवतत्त्वायै, कामतत्त्वानुरागिण्यै,

रागिणी। प्राच्यवाची प्रतीचीदिगुदीचीदिग्विदिग्दिशा। "७०" अहंकृतिरहंकारा बालमाया बलिप्रिया। स्रुक्स्रुवा सामिधेनी च सुश्रद्धा श्राद्धदेवता। माता मातामही तृप्तिः पितृमाता पितामही। स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया। स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी। शिशूत्सङ्गधरा दोला दोलाक्रीडाभिनन्दिनी। उर्वशी कदली केका विशिखा शिखिनर्तिनी। खट्वाङ्गधारिणी खट्वा बाणपुङ्खानुवर्तिनी। लक्ष्यप्राप्तिः काललक्ष्या लक्ष्या च शुभलक्षणा। वर्तिनी सुपथाचारा परिखा च

प्राच्यै, अवाच्यै, प्रतीचीदिशे, उदीचीदिशे, विदिग्दिशे, अहङ्कृतये, अहङ्कारायै, बालमायायै, बलिप्रियायै, स्रुचे, स्रुवायै, सामिधेन्यै, सुश्रद्धायै, श्राद्धदेवतायै, मात्रे, मातामह्यै, तृप्तये, पितृमात्रे, पितामह्यै, स्नुषायै, दौहित्रिण्यै, पुत्र्यै, पौत्र्यै, नप्त्र्यै, शिशुप्रियायै, स्तनदायै, स्तनधारायै, विश्वयोनये, स्तनन्धय्यै, शिशूत्सङ्गधरायै, दोलायै, दोलाक्रीडाभिनन्दिन्यै, उर्वश्यै, कदल्यै, केकायै, विशिखायै, शिखिनर्तिन्यै, खट्वाङ्गधारिण्यै, खट्वायै, बाणपुङ्खानुवर्तिन्यै, लक्ष्यप्राप्तये, काललक्ष्यायै, लक्ष्यायै, शुभलक्षणायै, वर्तिन्यै, सुपथाचारायै, परिखायै, खनिर्वृतये, प्राकारवलयायै, वेलायै, महोदधिमर्यादायै, पोषण्यै, शोषणीशक्तये, दीर्घकेश्यै, सुलोमशायै,

स्वनिर्वृतिः । प्राकारवलया वेला मर्यादा च महोदधौ । पोषणी शोषणीशक्तिर्दीर्घकेशी सुलोमशा । ललिता मांसला तन्वी ९००वेदवेदाङ्गधारिणी नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा । अक्षक्रीडारतिः शारी शारिका शुकभाषिणी । शाम्बरी गारुडीविद्या वारुणी वरुणार्चिता । वाराही तुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा । मीनमूर्तिधरा मूर्त्ता वदान्या प्रतिमाश्रया । अष्टमूर्तिर्निधीशा च शालिग्रामशिला स्नुतिः । स्मृतिः संस्काररूपा च सुसंस्कारा च संस्कृतिः । प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका । इडा च

ललितायै, मांसलायै, "तेजोऽसि" तन्व्यै, स्वाहा ॥९००॥ रे मूढाः किमयं वृथैव तपसा कायः परिक्लिश्यते यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः । भक्तिश्चेद्विनाशिनी भगवतीपादद्वयी सेव्यतामुन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ ॐवेदवेदाङ्गधारिण्यै स्वाहा, नरासृक्पानमत्तायै, नरमुण्डास्थिभूषणायै, अक्षक्रीडारतये, शार्यै, शारिकायै, शुकभाषिण्यै, शाम्बर्यै, गारुडीविद्यायै, वारुण्यै, वरुणार्चितायै, वाराह्यै, तुण्डहस्तायै, दंष्ट्रोद्धृतवसुन्धरायै, मीनमूर्तिधरायै, मूर्तायै, वदान्यायै, प्रतिमाश्रयायै, अष्टमूर्त्तये निधीशायै, शालिग्रामशिलायै, स्नुतये, स्मृतये, संस्काररूपायै, सुसंस्कारायै, संस्कृतये, प्राकृतायै, देशभाषायै, गाथायै, गीत्यै, प्रहेलिकायै,

पिङ्गला पिङ्गा सुषुम्णा सूर्यवाहिनी । शशिस्रवा च तालुस्था काकिनी मृतजीविनी । अणुरूपा बृहद्रूपा लघुरूपा गुरुस्थिरा । स्थावरा जङ्गमादेवी कृतकर्मफलप्रदा । विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया । विश्वरूपा चिदानन्दा परंब्रह्मप्रबोधिनी । निर्विकारा च निर्वैरा विरतिः सत्त्ववर्धिनी । पुरुषा ज्ञानभिन्ना च भ्रान्तिः कैवल्यदायिनी । विविक्तसेविनी प्रज्ञा जनयित्री बहुश्रुतिः । निरीहा च समस्तेहा सर्वलोकैकसेविता । सेवा सेवाप्रिया सेव्या सेवाफलविवर्धिनी । कलौकलिकप्रिया काली दुष्टम्लेच्छविनाशिनी ।

इडायै, पिङ्गलायै, पिङ्गायै, सुषुम्णायै, सूर्यवाहिन्यै, शशिस्रवायै, तालुस्थायै, काकिन्यै, मृतजीविन्यै, अणुरूपायै, बृहद्रूपायै, लघुरूपायै, गुरुस्थिरायै, स्थावरायै, जङ्गमादेव्यै, कृतकर्मफलप्रदायै, विषयाक्रान्तदेहायै, निर्विशेषायै, जितेन्द्रियायै, विश्वरूपायै, चिदानन्दायै, परंब्रह्मप्रबोधिन्यै, निर्विकारायै, निर्वैरायै, विरत्यै, सत्त्ववर्धिन्यै, पुरुषायै, अज्ञानभिन्नायै, भ्रान्तये, कैवल्यदायिन्यै, विविक्तसेविन्यै, प्रज्ञायै, जनयित्र्यै, बहुश्रुतये, निरीहायै, समस्तेहायै, सर्वलोकैकसेवितायै, सेवायै, सेवाप्रियायै, सेव्यायै, सेवाफलविवर्धिन्यै, कलौकलिकप्रियायै, काल्यै, दुष्टम्लेच्छविनाशि-

प्रत्यश्वा च धनुर्यष्टिः
खड्गधारा दुरानतिः ।
अश्वप्लुतिश्च वल्गा च
सृणिः सन्मत्तवारुणा ।
वीरभूर्वीरमाता च
वीरसूर्वीरनन्दिनी ।
जयश्रीर्जयदीक्षा च
जयस्था जयवर्धिनी ।
सौभाग्यसुभगाकारा
सर्वसौभाग्यवर्धिनी ।
क्षेमङ्करी सिद्धिरूपा
सत्कीर्तिः पथिदेवता ।
सर्वतीर्थमयीमूर्तिः
सर्वदेवमयीप्रभा ।
सर्वसिद्धिप्रदाशक्तिः
सर्वमङ्गलमङ्गला १०००

न्यै, प्रत्यश्वायै, धनुर्यष्ट्यै, खड्गधारायै, दुरानतये, अश्वप्लुतये वल्गायै, सृणये, सन्मत्तवारुणायै, वीरभुवे, वीरमात्रे, वीरसुवे, वीरनन्दिन्यै, जयश्रियै, जयदीक्षायै, जयस्थायै, जयवर्धिन्यै, सौभाग्यसुभगाकारायै, सर्वसौभाग्यवर्धिन्यै, क्षेमङ्कर्यै, सिद्धिरूपायै, सत्कीर्त्यै, पथिदेवतायै, सर्वतीर्थमयीमूर्तये, सर्वदेवमयीप्रभायै, सर्वसिद्धिप्रदाशक्तये, ॐ "तेजोऽसि" सर्वमङ्गलमङ्गलायै, स्वाहा ॥१०००॥

पुण्यं सहस्रनामेदमम्बायाः शिवभाषितम् । यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः ॥ यश्चापि शृणुयान्नित्यं नरो निश्चलमानसः । एककालं द्विकालं वा त्रिकालं श्रद्धयान्वितः ॥ तेजस्वी बलवान् शूरः शोकरोगविवर्जितः । यशस्वी कीर्तिमान्धन्यः सुभगो लोकपूजितः ॥ रूपवान्गुणसम्पन्नः प्रभावीर्यसमन्वितः । यशांसि लभते नित्यं निश्चलां च शुभां श्रियम् ॥ सर्वपापविनिर्मुक्तो लोभक्रोधविवर्जितः । नित्यं बन्धुसुतादारापुत्रपौत्रमहोत्सवैः ॥ नन्दितः सेवितो भृत्यैर्बहुभिः शुचिमानसैः । विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे ।

वैश्यस्तु धनलाभाढ्यः शूद्रः सुखमवाप्नुयात् ॥ पुत्रार्थी लभते पुत्रान्धनार्थी लभते धनम् । इच्छाकामं तु कामार्थी धर्मार्थी धर्ममक्षयम् ॥ कन्यार्थी लभते कन्यां रूपशीलगुणान्विताम् । क्षेत्रं च बहुसस्यं स्याद्गावस्तु बहुदुग्धदाः ॥ नाशुभं नापदस्तस्य न भयं नृपशत्रुतः । जायते नाशुभा बुद्धिर्लभते कुलधुर्यताम् ॥ न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः । न पिशाचा न डाकिन्यो भूता व्यन्तरजम्भकाः ॥ बालग्रहाभिभूतानां बालानां शान्तिकारकम् । द्वन्द्वानां प्रीतिभेदे च मैत्रीकरणमुत्तमम् ॥ लोहपाशैर्दृढैर्बद्धो बन्दी वेश्मनि दुर्गमे । तिष्ठञ्छृण्वन्पठन्मर्त्यो मुच्यते नात्र संशयः ॥ न दाराणां न पुत्राणां न बन्धूनां न मित्रजम् । पश्यन्ति न हि ते शोकं वियोगं चिरजीविनः ॥ अन्धस्तु लभते दृष्टिं चक्षूरोगैर्न बाध्यते । बधिरः श्रुतिमाप्नोति मूको वाचं शुभां नरः ॥ पतद्गर्भा च या नारी स्थिरगर्भा च जायते । कुष्ठिनः शीर्णदेहा ये गतकेशनखत्वचः ॥ पठनाच्छ्रवणाद्वापि दिव्यकाया भवन्ति ते । ये पठन्ति सदा मर्त्याः शुचिष्मन्तो जितेन्द्रियाः । अपुत्राः प्राप्नुयुः पुत्राञ्छृण्वन्तोपि न संशयः । महाव्याधिपरिग्रस्तास्तप्ता ये विविधैर्ज्वरैः । भूताभिषङ्गसञ्जातैश्चातुर्थिकतृतीयकैः ॥ अन्यैश्च दारुणै रोगैः पीड्यमानाश्च मानवाः । गतबाधाः प्रजायन्ते ते मुक्ता नात्र संशयः ॥ श्रुतग्रन्थधरो बालो दिव्यवादी कवीश्वरः । पठनाच्छ्रवणाद्वापि भवत्येव न संशयः ॥ अष्टम्यां वा चतुर्दश्यां नवम्यां चैकचेतसः । ये पठन्ति सदा मर्त्या न ते वै दुःखभाजनाः ॥ नवरात्रं जिताहारो दृढभक्तिर्जितेन्द्रियः । चण्डिकायतने विद्वाञ्छुचिष्मान्मूर्तिसन्निधौ ॥ एकाकी तु शतावर्तं पठन्धीरश्च निर्भयः । साक्षाद्भगवती तस्मै प्रयच्छतीप्सितं फलम् ॥ सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये । पठनात्साधकस्याशु

सिद्धिर्भवति वाञ्छिता ॥ दशावर्तं पठेद्यस्तु भूमिशायी नरः शुचिः । स्वप्ने मूर्तिमतीं देवीं वरदां सोपि पश्यति ॥ आवर्तनसहस्रैर्ये पठन्ति पुरुषोत्तमाः । ते सिद्धाः सिद्धिदा लोके शापानुग्रहयोः क्षमाः ॥ कवित्वं संस्कृतौ तेषां शास्त्राणां विकृतौ स्वतः । शक्तिः प्रोन्मील्यते स्वान्तेऽप्यनधीतेषु भारती ॥ नखरागशिरोरत्नद्विगुणीकृतरोचिषः । प्रयच्छन्तश्च सर्वस्वं सेवन्ते तान्महेश्वराः ॥ रोचनालिखितं भूर्जे कुङ्कुमेन शुभे दिने । धारयेद्यन्त्रितं देहे पूजयित्वा कुमारिकाः ॥ विप्रांश्च वरनारीश्च धूपैः कुङ्कुमचन्दनैः । क्षीरखण्डाज्यभोज्यैश्च भोजयित्वा सुभूषिताः ॥ बध्नन्ति ये महारक्षां बालानां च विशेषतः । भवन्ति नृपपूज्यास्ते कीर्तिभाजो यशस्विनः ॥ शत्रुतो न भयं तेषां दुर्जनेभ्यो न राजतः । न च दाराभिचारेभ्यो न दारिद्र्यान्न दुर्गतेः ॥ महार्णवे महानद्यां पोतस्थेपि न भीः क्वचित् । रणे द्यूते विवादे च विजयं प्राप्नुवन्ति ते ॥ नृपाश्च वशतां यान्ति नृपमान्याश्च ये नराः । सर्वत्र पूजिता लोके बहुमानपुरःसरम् ॥ रतिरागविवृद्धाश्च विह्वलाः कामपीडिताः । यौवनाक्रान्तदेहास्ताञ्छ्रयन्ते वामलोचनाः ॥ लिखितं मूर्ध्नि कण्ठे वा धारयेद्यो रणे शुचिः सप्तधा युध्यमानं तं प्रतियोद्धा न पश्यति ॥ केतौ वा दुन्दुभौ येषां तिष्ठेद्धै लिखितं रणे । महासैन्यपरिग्रस्तान्कान्दिशीकान्हतौजसः ॥ विचेतनान्विमूढांश्च शस्त्रकृत्यविवर्जितान् । निर्जित्य शत्रुसङ्घांस्तु लभते विजयं ध्रुवम् ॥ नाभिचारो न शापश्च बाणवीरादिकीलनम् । डाकिनी पूतना कृत्या महामारी च शाकिनी ॥ भूताः प्रेताः पिशाचाश्च रक्षांसि व्यन्तरादयः । न विशन्ति गृहे देहे लिखितं यत्र तिष्ठति ॥ न शस्त्रानलतोयौघाद्भयं तस्योपजायते । दुर्वृत्तानां

च पापानां बलहानिकरं परम् ॥ मन्दुराकरिशालासु गवां गोष्ठे समाहितः । पठेत्तद्दोषशान्त्यर्थं कूटपाकलिनाशनम् ॥ यमदूतान्न पश्यन्ति न ते निरययातनाम् । प्राप्नुवन्त्यक्षयं प्रान्ते शिवलोकं सनातनम् ॥ सर्वबाधासु घोरासु सर्वदुःखनिवारणम् । सर्वमङ्गल्यकृत्स्वर्ग्यं पठितव्यं समाहितैः ॥ श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ॥

पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम् । चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् ॥ नातः परतरो मन्त्रो नातः परतरः स्तवः । नातः परतरा विद्या तीर्थं नातः परं परम् । ते धन्याः कृतपुण्यास्ते त एव भुवि पूजिताः । एकभावं मुदा नित्यं येऽर्चयन्ति महेश्वरीम् । देवतानां देवता या ब्रह्माद्यैर्या च पूजिता । भूयात्सा वरदा लोके साधूनां विश्वमङ्गला । एतामेव पुराराध्य विद्यां त्रिपुरभैरवीम् । त्रैलोक्यमोहनं रूपमकार्षीद्भगवद्धरिः ॥ मायाकुण्डलिनी० अनेन मन्त्रपाठेन० ॥ इति श्रीरुद्रयामले तन्त्रे नन्दिकेश्वरसंवादे महाप्रभावो भवानीनामसहस्रस्तवराजः समाप्तः ॥

---

## अथ इन्द्राक्षीस्तोत्रम् ॥

ॐ अस्य श्रीइन्द्राक्षीस्तोत्रमन्त्रस्य, पुरन्दर ऋषिः, अनुष्टुप् छन्दः, श्रीइन्द्राक्षीभगवती देवता, भुवनेश्वरी शक्तिः, माहेश्वरी कीलकं, गायत्री सावित्री सरस्वती कवचं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं अमुककामनासिद्ध्यर्थे पाठे विनियोगः ॥ ॥ लक्ष्म्यै अङ्गुष्ठाभ्यां नमः, भुवनेश्वर्यै तर्जनीभ्यां नमः, माहेश्वर्यै मध्यमाभ्यां नमः, वज्रहस्तायै अनामिकाभ्यां नमः, सहस्रनयनायै कनिष्ठिकाभ्यां नमः, इन्द्राक्षीभगवत्यै करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥

अथ षडङ्गन्यासः ॥ लक्ष्म्यै हृदयाय नमः, भुवनेश्वर्यै शिरसे स्वाहा, माहेश्वर्यै शिखायै वषट्, वज्रहस्तायै कवचाय हुं, सहस्रनयनायै नेत्राभ्यां वौषट्, इन्द्राक्षीभगवत्यै अस्त्राय फट् ॥ प्राणायामः ॥ ॥ ध्यानम् ॥ ॥ ॐ इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रधरां शुभाम् । वामे वज्रधरां सव्यहस्तेऽभयवरप्रदाम् ॥ सहस्रनेत्रां सूर्याभां नानालङ्कारभूषिताम् । प्रसन्नवदनां नित्याप्सरोगणसेविताम् ॥ श्रीदुर्गां सौम्यवदनां पाशाङ्कुशधरां पराम् । त्रैलोक्यमोहिनीं देवीं भवानीं प्रणमाम्यहम् ॥ ॥

॥ इन्द्र उवाच ॥ इन्द्राक्षी नाम सा देवी देवता समुदाहृता । गौरी शाकम्भरी देवी दुर्गानाम्नेति विश्रुता ॥ कात्यायनी महादेवी चण्डघण्टा महतपा । सावित्री सा च गायत्री ब्रह्माणी ब्रह्मवादिनी ॥ नारायणी भद्रकाली रुद्राणी कृष्णपिङ्गला । अग्निज्वाला रुद्रमुखी कालरात्री तपस्विनी ॥ मेघश्यामा सहस्राक्षी विष्णुमाया जलोदरी । महोदरी मुक्तकेशी घोररूपा महाबला ॥ आनन्दा भद्रजानन्दा रोगहर्त्री शिवप्रिया । शिवदूती कराली च प्रत्यक्षपरमेश्वरी ॥ इन्द्राणी चन्द्ररूपा च इन्द्रशक्तिः परायणा । महिषासुरसंहर्त्री चामुण्डा गर्भदेवता ॥ वाराही नारसिंही च भीमा भैरवनादिनी । श्रुतिः स्मृतिर्धृतिर्मेधा विद्या लक्ष्मीः सरस्वती ॥ अनन्ता विजया पूर्णा मनस्तोषाऽपराजिता । भवानी पार्वती दुर्गा हैमवत्यम्बिका शिवा ॥ शिवा भवानी रुद्राणी शङ्करार्धशरीरिणी ॥

एतैर्नामपदैर्दिव्यैः स्तुता शक्रेण धीमता । आयुरारोग्यमैश्वर्याऽक्षयसम्पत्तिकारकम् ॥ क्षयापस्मारकुष्ठादितापज्वरनिवारकम् । शतमावर्तयेद्यस्तु मुच्यते व्याधिबन्धनात् । आवर्तयेत्सहस्रेण लभते वाञ्छितं फलम् । राजा वशमवाप्नोति सत्यमेव न

संशयः । लक्षमेकं जपेद्यस्तु साक्षाद्देवीं स पश्यति । त्रिकालं पठते नित्यं धनधान्यांश्च सम्पदः । अर्धरात्रे पठेन्नित्यं मुच्यते व्याधिबन्धनात् । ऐन्द्रस्तोत्रमिदं पुण्यं जपे तु फलवर्धनम् । विनाशाय तु रोगाणामपमृत्युहराय च । राज्यार्थी लभते राज्यं धनार्थी विपुलं धनम् । इच्छाकामं तु कामार्थी धर्मार्थी धर्ममव्ययम् । विद्यार्थी लभते विद्यां मोक्षार्थी परमं पदम् ॥ इन्द्रेण कथितं स्तोत्रं सत्यमेव न संशयः ॥ ॥ या माया मधुकैटभप्रमथिनी या माहिषोन्मूलिनी । या धूम्रेक्षणचण्डमुण्डमथिनी या रक्तबीजाशनी ॥ शक्तिः शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः परा । सा देवी नवकोटिमूर्तिसहिता मां पातु माहेश्वरी ॥ ॥ जप्तं पापहरं नुतं बलकरं सम्पूजितं श्रीकरं ध्यातं मानकरं स्तुतं धनकरं सम्भाषितं सिद्धिदम् । गीतं सुन्दरि वाञ्छितं प्रतनुते ते पादपद्मद्वयं भक्तानां भवभीतिभञ्जनकरं सिद्ध्यष्टदं पातु नः ॥ ॥ माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी । शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥ अनेन मन्त्रपाठेन आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीइष्टदेवीप्रीत्यर्थं भगवती अमा कामा चार्वङ्गी टङ्कधारिणी तारा पार्वती यक्षिणी श्रीशारिकाभगवती श्रीशारदाभगवती श्रीमहाराज्ञी भगवती श्रीज्वालाभगवती श्रीडाभगवती वैखरीभगवती वितस्ताभगवती गङ्गाभगवती यमुनाभगवती कालिकाभगवती सिद्धलक्ष्मीः महालक्ष्मीः महात्रिपुरसुन्दरी सहस्रनाम्नी देवी भवानी सपरिवारा सवाहना सायुधा साङ्गा प्रीयतां प्रीतास्तु ॥ इति इन्द्राक्षीस्तोत्रं सम्पूर्णम् ॥

---

# अथ विष्णुसहस्रनामस्तोत्रं नामावली च प्रारभ्यते

ॐ नमो नारायणाय ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ब्रह्मलोकादिह प्राप्तं नारदं भगवत्प्रियम् । दृष्ट्वा नुत्वा सभायां ते पप्रच्छुर्मुनयो मुदा ॥ नैमिषे निमिषक्षेत्रे ऋषयः शौनकादयः । देवर्षिमुपसङ्गम्य पप्रच्छुरिदमादृताः ॥ ऋषय ऊचुः ॥ ब्रह्मन् केन प्रकारेण सर्वपापक्षयो भवेत् । विना दानेन तपसा विना तीर्थैर्विना मखैः ॥ विना ज्ञानैर्विना ध्यानैर्विना चेन्द्रियनिग्रहैः । विना शास्त्रसमूहैश्च कथं मुक्तिरवाप्यते ॥ नारद उवाच ॥ देवादिदेवो देवेशः स्थितस्तपसि शङ्करः । विष्णुमाराधयद्देवं जपध्यानपरायणः ॥ इदमेव पुरा पृष्टः पार्वत्या परमेश्वरः । यदुवाच शृणुध्वं तत्कथयामि सुविस्तरम् ॥ कैलासशिखरासीनं देवदेवं जगद्गुरुम् । प्रणिपत्य महादेवं पर्यपृच्छदुमा प्रियम् ॥ श्रीपार्वत्युवाच ॥ भगवंस्त्वं परो देवः सर्वज्ञः सर्वपूजितः । त्वल्लिङ्गमर्च्यते देवैर्ब्रह्मसूर्यादिकैरपि ॥ त्वत्तो लभन्तेऽभिमतां सिद्धिं सर्ववरप्रद । त्वं जन्ममृत्युरहितः स्वयम्भूः सर्वशक्तिमान् ॥ सदा ध्यायसि किं स्वामिन् दिग्वासा मदनान्तकः । तपश्चरसि कस्मात्त्वं जटिलो धूलिधूसरः ॥ किंवा जपसि देवेश परं कौतूहलं हि मे । अनुग्राह्या प्रिया तेऽसि तत्त्वं कथय सुव्रत ॥ श्रीमहादेव उवाच ॥ नेदं कस्यापि कथितं गोपनीयमिदं मम । किन्तु वक्ष्यामि ते भद्रे सर्वज्ञासि प्रियासि मे ॥ पुरा सत्ययुगे देवि विशुद्धमतयोऽखिलाः । यजन्ति विष्णुमे-

वैकं ज्ञात्वा सर्वेश्वरेश्वरम् ॥ प्रयान्ति परमामृद्धिमैहिकयामुष्मिकीं पराम् । या न प्राप्या सुरैः सर्वैरक्षया क्लेशवर्जिता ॥ न तां गतिं प्रपद्यन्ते विना भागवतान्नरान् । मन्मुखादपि संश्रुत्य देवा विष्णुबहिर्मुखाः ॥ वेदैः पुराणैः सिद्धान्तैर्भिन्नैर्विभ्रान्तचेतसः । निश्चयं नाधिगच्छन्ति किं तत्त्वं किं परं पदम् ॥ तुलापुरुषदानाद्यैरश्वमेधादिभिर्मखैः । वाराणसीप्रयागादितीर्थस्नानादिभिः प्रिये ॥ गयाश्राद्धादिभिः पित्र्यैर्वेदपाठादिभिर्जपैः । तपोभिरुग्रैर्नियमैर्यमैर्भूतदयादिभिः ॥ गुरुशुश्रूषणैः सत्यैर्धर्मैर्वर्णाश्रमोचितैः । ज्ञानध्यानादिभिः सम्यकचरितैर्जन्मजन्मभिः ॥ न यान्ति तत्परं श्रेयो विष्णुं सर्वेश्वरेश्वरम् । सर्वभावैरनाश्रित्य पुराणं पुरुषोत्तमम् ॥ अनन्यगतयो मर्त्या भोगिनोपि परन्तपाः । ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः ॥ सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पकाः ॥ सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न कर्हिचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥ किन्तु ब्रह्मादिभिर्देवैः पुरा दृष्ट्वा निरंहसः । निर्भयं विष्णुनाम्नैव यथेष्टं पदमागतान् ॥ अलब्ध्वा चात्मनः पूजां सम्यगाराधितो हरिः । मया चास्मादधिश्रैष्ठ्यं वाञ्छिताहङ्कृतात्मना ॥ ततः साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सलः । अंशांशेनात्मनो वै तान्पूजयामास केशवः ॥ देवान्पितॄन्द्विजान् हव्यकव्याद्यैः करुणामयः । ततःप्रभृति पूज्यन्ते त्रैलोक्ये सचराचरे ॥ मां चोवाच यथा मत्तः पूज्यः श्रेष्ठो भविष्यसि । त्वामाराध्य यथा शम्भो ग्रहीष्यामि वरं सदा ॥ द्वापरादौ युगे भूत्वा कलया मानुषादिषु । आगमैः कल्पितैस्त्वं च

जनान्मद्विमुखान्कुरु ॥ मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा । ततस्तं प्रणिपत्याऽहमऽवोचं परमेश्वरम् ॥ श्रीमहादेव उवाच ॥ ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथञ्चन । न पुनस्त्वदवज्ञाने कल्पकोटिशतैरपि ॥ यस्मात्त्वयि कृतस्पर्धः पवित्रः स्यां कथं हरे । तन्मे कथय देवेश प्रायश्चित्तं यथा तथा ॥ श्रीभगवानुवाच ॥ सदा नामसहस्रं मे पावनं मत्पदावहम् । तत्पठाऽनुदिनं शम्भो सर्वैश्वर्यं यदेच्छसि ॥ श्रीमहादेव उवाच ॥ तमेव तपसा नित्यं भजामि स्तौमि चिन्तये । तेनाद्वितीयमहिमा जगत्पूज्योऽस्मि पार्वति ॥ श्रीपार्वत्युवाच ॥ तन्मे कथय देवेश यथाहमपि शङ्कर । सर्वेश्वरी निरुपमा तव स्यां सदृशी प्रभो ॥ श्रीमहादेव उवाच ॥ साधु साधु त्वया पृष्टं विष्णोर्भगवतः प्रभोः । नाम्नां सहस्रं वक्ष्यामि मुख्यं त्रैलोक्यमुक्तिदम् ॥ ॥ अस्य श्रीवासुदेवनामसहस्रस्य, श्रीमहादेव ऋषिः, अनुष्टुप्छन्दः, श्रीकृष्णः परमात्मा देवता, प्रणवो बीजम्, हरिः शक्तिः, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीविष्णुप्रीत्यर्थे पाठे होमे वा विनियोगः ॥ ॥ अथ षडङ्गन्यासः ॥ वासुदेवः परंब्रह्मेति हृदयाय नमः । मूलप्रकृतिरानन्द इति शिरसे स्वाहा । महावराहो यज्ञाङ्गध्वंसन इति शिखायै वौषट् । सूर्यवंशध्वजो राम इति कवचाय हुम् । ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशव इति नेत्राभ्यां वषट् । पार्थार्थखण्डिताशेषदिव्यास्त्र इति अस्त्राय फट् ॥ एवं करन्यासः ॥ ॥ वासुदेवः परंब्रह्म इति अङ्गुष्ठाभ्यां नमः । मूलप्रकृतिरानन्द इति तर्जनीभ्यां नमः । महावराहो यज्ञाङ्गध्वंसन इति मध्यमाभ्यां

नमः। सूर्यवंशध्वजो राम इति अनामिकाभ्यां नमः। ब्रह्मादि-
काम्यलालित्यजगदाश्चर्यशैशव इति कनिष्ठिकाभ्यां नमः। पा-
र्थार्थखण्डिताशेषदिव्यास्त्र इति करतलकरपृष्ठाभ्यां नमः॥ प्रा-
णायामः॥ ध्यानं॥ विष्णुं भास्वत्किरीटाङ्गदवलयगदाकल्पहा-
रोदराङ्घ्रिश्रेणीभूषं सुवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गम्।
हस्तोद्यच्छङ्खचक्राम्बुजगदममलं पीतकौशेयवासोद्योतद्भासं स-
मुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि॥ ॥ ॐ नमो नारायणाय
पुरुषाय महात्मने। विशुद्धसत्वधिष्ण्याय महाहंसाय धीमहि॥ २॥
ॐ नमो नारायणाय इति मन्त्रः॥ ॐ वासुदेवाय स्वाहा, प-
रस्मै ब्रह्मणे, परमात्मने, परात्पराय, परस्मै धाम्ने, परस्मै ज्योतिषे,
परस्मै तत्वाय, परस्मै पदाय, परस्मै शिवाय, परस्मै ध्येयाय[१०],
परस्मै ज्ञानाय, परायै गत्यै, परमार्थाय, परस्मै श्रेयसे, परा-
नन्दाय, परोदयाय, अव्यक्तात्पराय, परस्मै व्योम्ने, परर्द्धये,
परमेश्वराय[२०], निरामयाय, निर्विकाराय, निर्विकल्पाय, निराश्र[२५]-
याय, निरञ्जनाय, निरालम्बाय, निर्लेपाय, निरवग्रहाय, निर्गु-
णाय, निष्कलाय[३०], अनन्ताय, अभयाय, अचिन्त्याय, अचलाय[३५],
अच्युताय, अतीन्द्रियाय, अमिताय, अपराय, अनीशाय, अनी-
हाय[४०], अव्ययाय, अक्षयाय, सर्वज्ञाय, सर्वगाय[४४], सर्वस्मै, सर्व-
दाय, सर्वभावनाय, सर्वशास्त्रे, सर्वसाक्षिणे, सर्वपूज्याय[५०], स-
र्वदृशे, सर्वशक्तये, सर्वसाराय, सर्वात्मने[५४], सर्वतोमुखाय, सर्वा-
वासाय, सर्वरूपाय, सर्वादये, सर्वदुःखघ्ने, सर्वार्थाय, सर्वतो-
भद्राय, सर्वकारणकारणाय, सर्वातिशायकाय, सर्वाध्यक्षाय[६४],
सर्वेश्वरेश्वराय, षड्विंशकाय, महाविष्णवे, महागुह्याय, महावि-

भवे, नित्योदिताय, नित्ययुक्ताय, नित्यानन्दाय, सनातनाय, मायापतये, योगपतये, कैवल्यपतये, आत्मभुवे, जन्मम्रृत्युजरातीताय, कालातीताय, भवातिगाय, पूर्णाय, सत्याय, शुद्धबुद्धस्वरूपाय, नित्यचिन्मयाय, योगिप्रियाय, योगमयाय, भवबन्धैकमोचकाय, पुराणपुरुषाय, प्रत्यक्चैतन्याय, पुरुषोत्तमाय, वेदान्तवेद्याय, दुर्ज्ञेयाय, तापत्रयविवर्जिताय, ब्रह्मविद्याश्रयाय, अनघ्याय, स्वप्रकाशाय, स्वयंप्रभाय, सर्वोपेयाय, उदासीनाय, "तेजोऽसि" प्रणवाय, ॥१००॥

नृत्यन्ती तव वीक्षणाङ्गणगता कालस्वभावादिभिर्भावान्सत्त्वरजस्तमोगुणमयानुन्मीलयन्ती बहून् । मामाऽक्रम्य पदा शिरस्यऽतिभरं संमर्दयत्यातुरं माया ते शरणं गतोऽस्मि नृहरे त्वमेव तां वारय ॥ ॥ ॐ सर्वतःसमाय स्वाहा, सर्वानवद्याय, दुष्प्राप्याय, तुरीयाय, तमसःपराय, कूटस्थाय, सर्वसंश्लिष्टाय, वाङ्मनोगोचरातिगाय, सङ्कर्षणाय, सर्वहराय, कालाय, सर्वभयङ्कराय, अनुल्लङ्घ्याय, सर्वगतये, महारुद्राय, दुरासदाय, मूलप्रकृतये, आनन्दाय, प्रद्युम्नाय, विश्वमोहनाय, महामायाय, विश्वबीजाय, परशक्तये, सुखैकभुवे, सर्वकाम्याय, अनन्तलीलाय, सर्वभूतवशंकराय, अनिरुद्धाय, सर्वजीवाय, हृषीकेशाय, मनस्पतये, निरुपाधिप्रियाय, हंसाय, अक्षराय, सर्वनियोजकाय, ब्रह्मणे, प्राणेश्वराय, सर्वभूतभृते, देहनायकाय, क्षेत्रज्ञाय, प्रकृतिस्वामिने, पुरुषाय, विश्वसूत्रधृते, अन्तर्यामिणे, त्रिधाम्ने, अन्तःसाक्षिणे, त्रिगुणाय, ईश्वराय, योगिगम्याय, पद्मनाभाय, शेषशायिने, श्रियःपतये,

श्रीसदोपास्यपादाब्जाय, अनन्तश्रिये, श्रीनिकेतनाय, नित्यंवक्षःस्थलस्थश्रिये, श्रीनिधये, श्रीधराय, हरये, वश्यश्रिये, निश्चलश्रीदाय, विष्णवे, क्षीराब्धिमन्दिराय कौस्तुभोद्भासितोरस्काय, माधवाय, जगदार्तिघ्ने, श्रीवत्सवक्षसे, निःसीमकल्याणगुणभाजनाय, पीताम्बराय, जगन्नाथाय, जगत्त्रात्रे, जगत्पित्रे, जगद्बन्धवे, जगत्स्रष्ट्रे, जगद्धात्रे, जगन्निधये, जगदेकस्फुरद्वीर्याय, अनहंवादिने, जगन्मयाय, सर्वाश्चर्यमयाय, सर्वसिद्धार्थाय, सर्ववीरजिते, सर्वामोघोद्यमाय, ब्रह्मरुद्राद्युत्कृष्टचेतनाय, शम्भोःपितामहाय, ब्रह्मपित्रे, शक्राद्यधीश्वराय, सर्वदेवप्रियाय, सर्वदेवमूर्तये, अनुत्तमाय, सर्वदेवैकशरणाय, सर्वदेवैकदैवताय, यज्ञभुजे, यज्ञफलदाय, यज्ञेशाय, यज्ञभावनाय, यज्ञत्रात्रे, यज्ञपुंसे, वनमालिने, "तेजोसि" द्विजप्रियाय ॥२००॥

दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुरं, सम्मुह्यन्तमहर्निशं नियमितोद्योगक्रमैः संकुलम् । आज्ञालङ्घिनमऽज्ञमऽज्ञजनतासंमाननासंमदं, दीनानाथ दयानिधान परमानन्द प्रभो पाहि माम् ॥ ॥ ॐ द्विजैकमानदाय स्वाहा, विप्रकुलदेवाय, असुरान्तकाय, सर्वदुष्टान्तकृते, सर्वसज्जनानन्यपालकाय, सप्तलोकैकजठराय, सप्तलोकैकमण्डनाय, सृष्टिस्थित्यन्तकृते, चक्रिणे, शार्ङ्गधन्वने, गदाधराय, शङ्खभृते, नन्दकिने, पद्मपाणये, गरुडवाहनाय, अनिर्देश्यवपुषे, सर्वपूज्याय, त्रैलोक्यपावनाय, अनन्तकीर्तये, निःसीमपौरुषाय, सर्वमङ्गलाय, सूर्यकोटिप्रतीकाशाय, यमकोटिदुरासदाय, ब्रह्मकोटिजगत्स्रष्ट्रे, वायुकोटिमहाबलाय, कोटीन्दुजगदानन्दिने, शम्भु-

कोटिमहेश्वराय, कुबेरकोटिलक्ष्मीवते, शक्रकोटिविलासवते, कन्दर्पकोटिलावण्याय, दुर्गाकोट्यरिमर्दनाय, समुद्रकोटिगम्भीराय, तीर्थकोटिसमाह्वयाय, हिमवत्कोटिनिष्कम्पाय, कोटिब्रह्माण्डविग्रहाय, कोट्यश्वमेधपापघ्नाय, यज्ञकोटिसमार्चनाय, स्वधाकोटिस्वास्थ्यहेतवे, कामधुकोटिकामदाय, ब्रह्मविद्याकोटिरूपाय, शिपिविष्टाय, शुचिश्रवसे, विश्वम्भराय, तीर्थपादाय, पुण्यश्रवणकीर्तनाय, आदिदेवाय, जगज्जैत्राय, मुकुन्दाय, कालनेमिघ्ने, वैकुण्ठाय, अनन्तमाहात्म्याय, महायोगीश्वरोत्सवाय, नित्यतृप्ताय, लसद्भावाय, निःशङ्काय, नरकान्तकाय, दीनानाथैकशरणाय, विश्वैकव्यसनापहाय, जगत्कृपाक्षमाय, नित्यकृपालवे, सज्जनाश्रयाय, योगीश्वराय, सदोदीर्णाय, वृद्धिक्षयविवर्जिताय, अधोक्षजाय, विश्वरेतसे, प्रजापतिशताधिपाय, शक्रब्रह्मार्चितपदाय, शम्भुब्रह्मोर्ध्वधामगाय, सूर्यसोमेक्षणाय, विश्वभोक्त्रे, सर्वस्यपारगाय, जगत्सेतवे, धर्मसेतवे, धराय, विश्वधुरन्धराय, निर्ममाय, अखिललोकेशाय, निःसङ्गाय, अद्भुतभोगवते, वश्यमायाय, वश्यविश्वाय, विष्वक्सेनाय, सुरोत्तमाय, सर्वश्रेयस्पतये, दिव्यानर्घभूषणभूषिताय, सर्वलक्षणलक्षण्याय, सर्वदैत्येन्द्रदर्पघ्ने, समस्तदेवसर्वस्वाय, सर्वदैवतनायकाय, समस्तदेवतादुर्गाय, प्रपन्नाशनिपञ्जराय, समस्तदेवकवचाय, सर्वदेवशिरोमणये, समस्तभयभिन्नाम्ने, भगवते, विष्टरश्रवसे, विभवे, सर्वहितोदर्काय, "तेजोऽसि" हतारिस्वगतिप्रदाय ॥३००॥ येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो यश्चोद्वृत्तभुजङ्गहारवलयोऽगङ्गां च योऽधारयत्।

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामाऽमराः पायात्स स्वयमन्धकक्षयकरो नः सर्वदो माधवः ॥ ॥ ॐ सर्वदेवतजीवेशाय, ब्राह्मणादये, नियोजकाय, ब्रह्मशम्भुपरार्ध्यायुषे, ब्रह्मज्येष्ठाय, शिशवे, स्वराजे, विराजे, भक्तपराधीनाय, स्तुत्याय, स्तोत्रार्थसाधकाय, परार्थकर्त्रे, कृत्यज्ञाय, स्वार्थकृत्यसदोज्झिताय, सदानवाय, सदाभद्राय, सदाशान्ताय, सदाशिवाय, सदाप्रियाय, सदातुष्टाय, सदापुष्टाय, सदार्चिताय, सदापूताय, पावनाग्र्याय, वेदगुह्याय, वृषाकपये, सहस्रनाम्ने, त्रियुगाय, चतुर्मूर्तये, चतुर्भुजाय, भूतभव्यभवन्नाथाय, महापुरुषपूर्वजाय, नारायणाय, मुञ्जकेशाय, सर्वयोगविनिःसृताय, वेदसाराय, यज्ञसाराय, सामसाराय, तपोनिधये, साध्याय, श्रेष्ठाय, पुराणर्षये, निष्ठायै, शान्त्यै, परायणाय, शिवत्रिशूलविध्वंसिने, श्रीकण्ठैकवरप्रदाय, नराय, कृष्णाय, हरये, धर्मनन्दनाय, धर्मजीवनाय, आदिकर्त्रे, सर्वसत्याय, सर्वस्त्रीरत्नदर्पघ्ने, त्रिकालजितकंदर्पाय, उर्वशीसृजे, मुनीश्वराय, आद्याय, कवये, हयग्रीवाय, सर्ववागीश्वरेश्वराय, सर्वदेवमयाय, ब्रह्मगुरवे, वागीश्वरीपतये, अनन्तविद्याप्रभवाय, मूलविद्याविनाशकाय, सार्वज्ञदाय, जगज्जाड्यनाशकाय, मधुसूदनाय, अनेकमन्त्रकोटीशाय, शब्दब्रह्मैकपारगाय, आदिविदुषे, वेदकर्त्रे, वेदात्मने, श्रुतिपारगाय, ब्रह्मार्थवेदाहरणाय, सर्वविज्ञानजन्मभुवे, विद्याराजाय, ज्ञानमूर्तये, ज्ञानसिन्धवे, अखण्डधिये, मत्स्यदेवाय, महाशृङ्गाय, जगद्बीजवहित्रधृते, लीलाव्याप्ताखिलाम्बोधये, चतुर्वेदप्रवर्तकाय, आदिकूर्माय, अखिलाधा-

राय, तृणीकृतजगद्भराय, अमरीकृतदेवौघाय, पीयूषोत्पत्तिकारणाय, आत्माधाराय, धराधाराय, यज्ञाङ्गाय, धरणीधराय, हिरण्याक्षहराय, पृथ्वीपतये, श्राद्धादिकल्पकाय, "तेजोऽसि" समस्तपितृभीतिघ्नाय ॥ ॥४००॥ ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्। लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ॥ ॐसमस्तपितृजीवनाय स्वाहा, हव्यकव्यैकभुजे, हव्यकव्यैकफलदायकाय, लोमान्तर्लीनजलधये, क्षोभिताशेषसागराय, महावराहाय, यज्ञघ्नध्वंसनाय, याज्ञिकाश्रयाय, नरसिंहाय, दिव्यसिंहाय, सर्वारिष्टार्तिदुःखघ्ने, एकवीराय, अद्भुतबलाय, मन्त्रयन्त्रैकभञ्जनाय, ब्रह्मादिदुःसहज्योतिषे, युगान्ताग्न्यतिभीषणाय, कोटिवज्राधिकनखाय, जगद्दुष्प्रेक्ष्यमूर्तिधृते, मातृचक्रप्रमथनाय, महामातृगणेश्वराय, अचिन्त्यामोघवीर्याढ्याय, समस्तासुरघस्मराय, हिरण्यकश्यपुच्छेदिने, कालसङ्कर्षणीपतये, कृतान्तवाहनाय, सद्यःसमस्तभयनाशनाय, सर्वविघ्नान्तकाय, सर्वसिद्धिदाय, सर्वपूरकाय, समस्तपातकध्वंसिने, सिद्धमन्त्राधिकाह्वयाय, भैरवेशाय, हरार्तिघ्नाय, कालकोटिदुरासदाय, दैत्यगर्भस्राविनाम्ने, स्फुटद्ब्रह्माण्डगर्जिताय, स्मृतमात्राखिलत्रात्रे, अद्भुतरूपाय, महाहरये, ब्रह्मचर्मशिरःपट्टिने, दिक्पालोर्धाङ्गभूषणाय, द्वादशार्कशिरोदाम्ने, रुद्रशीर्षैकनूपुराय, योगिनीत्रस्तगिरिजात्रात्रे, भैरवतर्जकाय, वीरचक्रेश्वराय, अत्युग्राय, यमारये, कालशम्बराय, क्रोधेश्वराय, रुद्रचण्डीपरिवारादिदुष्टभुजे, सर्वाक्षोभ्याय,

मृत्युमृत्यवे, कालाय, मृत्युनिवर्तकाय, असाध्यसर्वरोगघ्नाय, सर्वदुर्ग्रहसौम्यकृते, गणेशकोटिदर्पघ्नाय, दुःसहाशेषगोत्रघ्ने, देवदानवदुर्दर्शाय, जगद्भयदभीषकाय, समस्तदुर्गतित्रात्रे, जगद्भक्षकभक्षकाय, उग्रेशाय, अम्बरमार्जाराय, कालमूषकभक्षकाय, अनन्तायुधदोर्दण्डाय, नृसिंहाय, वीरभद्रजिते, योगिनीचक्रगुह्येशाय, शक्रारिपशुमांसभुजे, रुद्राय, नारायणाय, मेषरूपशङ्करवाहनाय, मेषरूपशिवत्रात्रे, दुष्टशक्तिसहस्रभुजे, तुलसीवल्लभाय, वीराय, वामाचाराय, अखिलेष्टदाय, महाशिवाय, शिवारूढाय, भैरवैककपालभृते, झिल्लीचक्रेश्वराय, शक्रदिव्यमोहनरूपदाय, गौरीसौभाग्यदाय, मायानिधये, मायाभयापहाय, ब्रह्मतेजोमयाय, ब्रह्मणे, श्रीमयाय, त्रयीमयाय, सुब्रह्मण्याय, बलिध्वंसिने, वामनाय, अदितिदुःखघ्ने, उपेन्द्राय, नृपतये, विष्णवे, "तेजोऽसि" कश्यपान्वयमण्डनाय स्वाहा ॥५००॥ ॥ विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः । किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ ॥ ॐ बलिस्वाराज्यदाय स्वाहा, सर्वदेवविप्रान्नदाय, अच्युताय, उरुक्रमाय, तीर्थपादाय, त्रिपदाय, त्रिविक्रमाय, व्योमपादाय, स्वपादाम्भःपवित्रितजगत्त्रयाय, ब्रह्मेशाद्यभिवन्द्याङ्घ्रये, द्रुतधर्माङ्घ्रिधावनाय, अचिन्त्याद्भुतविस्ताराय, विश्ववृक्षाय, महाबलाय, राहुमूर्धपराङ्गच्छिदे, भृगुपत्नीशिरोहराय, पापत्रस्ताय, सदापुण्याय, दैत्याशानित्यखण्डनाय, पूरिताखिलदेवाशाय, विश्वार्थैकावतारकृते, स्वमायानित्यगुप्तात्मने,

भक्तचिन्तामणये, सदावरदाय, कार्तवीर्यादिराजराज्यप्रदाय, अनघाय, विश्वश्लाघ्याय, अमिताचाराय, दत्तात्रेयाय, मुनीश्वराय, परशक्तिसदाश्लिष्टाय, योगानन्दसदोन्मदाय, समस्तेन्द्रारितेजोहृते, परमामृतपद्मपाय, अनुसूयागर्भरत्नाय, भोगमोक्षसुखप्रदाय, जामदग्निकुलादित्याय, रेणुकाद्भुतशक्तिकृते, मातृहत्यादिनिर्लेपाय, स्कन्दजिते, विप्रराज्यदाय, सर्वक्षत्रान्तकृते, वीरदर्पघ्ने, कार्तवीर्यजिते, सप्तद्वीपवतीदात्रे, शिवाचार्ययशःप्रदाय, भीमाय, परशुरामाय, शिवाचार्यैकविश्वभुवे, शिवाखिलज्ञानकोशाय, भीष्माचार्याय, अग्निदैवताय, द्रोणाचार्यगुरवे, विश्वजैत्रधन्वने, कृतान्तजिते, अद्वितीयतपोमूर्त्तये, ब्रह्मचर्यैकदक्षिणाय, मनवे, श्रेष्ठाय, सतांसेतवे, महीयसे, वृषभाय, विराजे, आदिराजाय, क्षितिपित्रे, सर्वरत्नैकदोहकृते, पृथवे, जन्माद्येकदक्षाय, गीःश्रीकीर्तिस्वयंवृताय, जगद्वृत्तिप्रदाय, चक्रवर्तिश्रेष्ठाय, अद्वयास्त्रधृते, सनकादिमुनिप्राप्यभगवद्भक्तिवर्धनाय, वर्णाश्रमादिधर्माणांकर्त्रे, धर्मप्रवर्तकाय, सूर्यवंशध्वजाय, रामाय, राघवाय, सद्गुणार्णवाय, काकुत्स्थाय, वीरराजे, आर्यराजाय, धर्मधुरन्धराय, नित्यस्वस्थाशयाय, सर्वभद्रग्राहिणे, शुभैकदृशे, नररत्नाय, रत्नगर्भाय, धर्माध्यक्षाय, महानिधये, सर्वश्रेष्ठाश्रयाय, सर्वशस्त्रास्त्रग्रामवीर्यवते, जगद्वशिने, दाशरथये, सर्वरत्नाश्रयाय, नृपाय, समस्तधर्मसुवे, सर्वधर्मद्रष्ट्रे, अखिलार्तिहृते, "तेजोऽसि" अतीन्द्राय स्वाहा ॥ ॥६००॥

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः। ध्यानावस्थिततद्गतेन

मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ ॐ ज्ञानविज्ञानपारद्दश्वने स्वाहा, क्षमाम्बुधये, सर्वप्रकृष्टाय, शिष्टेष्टाय, हर्षशोकाद्यनाकुलाय, पित्राज्ञात्यक्तसाम्राज्याय, सपत्नोदयनिर्भयाय, गुहादेशार्पितैश्वर्याय, शिवस्पर्धाजटाधराय, चित्रकूटाप्तरत्नाद्रये, जगदीशाय, वनेचराय, यथेष्टामोघसर्वास्त्राय, देवेन्द्रतनयाक्षिघ्ने, ब्रह्मेन्द्रादिनतैषीकाय, मारीचघ्नाय, विराधघ्ने, ब्रह्मशापहताशेषदण्डकारण्यपावनाय, चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैककृते, खरारये, त्रिशिरोहन्त्रे, दूषणघ्नाय, जनार्दनाय, जटायुषोऽग्निगतिदाय, अगस्त्याय, सर्वस्वपात्रराजे, लीलाधनुष्कोट्यपास्तदुन्दुभ्यस्थिमहाचयाय, सप्ततालव्यधाकृष्टध्वस्तपातालदानवाय, सुग्रीवराज्यदाय, अहीनमनसैवाभयप्रदाय, हनुमद्रुद्रमुख्येशाय, समस्तकपिदेहभृते, सनागदैत्यबाणैकव्याकुलीकृतसागराय, सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागराय, समुद्राद्भुतपूर्वैकबद्धसेतवे, यशोनिधये, असाध्यसाधकाय, लङ्कासमूलोत्कर्षदक्षिणाय, वरदृप्तजगच्छल्यपुलस्त्यकुलकृन्तनाय, रावणिघ्नाय, प्रहस्तच्छिदे, कुम्भकर्णभिदे, उग्रघ्ने, रावणैकशिरश्छेत्रे, निःशङ्केन्द्रैकराज्यदाय, स्वर्गास्वर्गत्वविघ्नाय, पुरुष्टुताय, नतिमात्रदशास्यारिदत्तराज्याय, धर्माधर्मत्वस्वधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृते, विभीषणाय, सर्वामरार्चिताय, ब्रह्मसूर्येन्द्ररुद्रादिवन्द्यार्पितसतीप्रियाय, अयोध्याखिलराज्याग्र्याय, सर्वभूतमनोहराय, स्वामितुल्यकृपादण्डाय, हीनोत्कृष्टैकसत्प्रियाय, श्वपक्ष्यादिन्यायदर्शिने, ही-

नार्थाधिकसाधकाय, वधव्याधानुचितकृत्तारकाय, अखिलतुल्यकृते, पार्वत्यधिकमुक्तात्मने, प्रियात्यक्तस्मरारिजिते, साक्षात्कुशलवच्छन्नेन्द्राग्निताताय, अपराजिताय, कौसलेन्द्राय, वीरबाहवे, सत्यार्थत्यक्तसोदराय, शरसन्धाननिर्धूतधरणीमण्डलाय, जयाय, ब्रह्मादिकाम्यसान्निध्यसनाथीकृतदैवताय, ब्रह्मलोकाप्तचण्डालाद्यशेषप्राणिसार्थपाय, स्वर्नीतगर्दभाश्वादये, चिरायोध्यावनैककृते, रामद्वितीयाय, सौमित्रये, लक्ष्मणाय, प्रहतेन्द्रजिते, विष्णुभक्तांशरामाङ्घ्रिपादुकाराज्यनिर्वृताय, भरताय, असह्यगन्धर्वकोटिघ्नाय, लवणान्तकाय, शत्रुघ्नाय, वैद्यराजे, आयुर्वेदस्रजे, ओषधीपतये, नित्यामृतकराय, धान्वन्तरये, यज्ञाय, जगद्धराय, सूर्यारिघ्नाय, सुराजीवाय, दक्षिणेशाय, द्विजप्रियाय, च्छिन्नमूर्धापदेशार्काय, शेषाङ्गस्थापितामराय, "तोजोसि" विश्वार्थाशेषरुद्रार्थशिरश्छेदक्षताकृतये स्वाहा ॥७००॥

प्राह्लाद प्रभुरस्ति चेत्तव हरिः सर्वत्र मे दर्शय स्तम्भे चैनमिति ब्रुवाण असुरे तत्राविरासीद्धरिः। वक्षस्तस्य विदारयन् निजनखैर्वात्सल्यमावेदयन्नार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ॥ ॐ वाजपेयादिनाम्ने स्वाहा, अग्नये, वेदधर्मपरायणाय, श्वेतद्वीपपतये, सांख्यप्रनेत्रे, सर्वसिद्धराजे, विश्वप्रकाशितज्ञानयोगाय, मोहतमिस्रघ्ने, योगस्वामिने, ध्यानभङ्गसगरात्मजभस्मकृते, धर्माय, वृषेन्द्राय, सुरभीपतये, शुद्धात्मभाविताय, शम्भुत्रिपुरदाहैकस्थैर्यविश्वरथोद्वहाय, भक्तशम्भुजिताय, दैत्यामृतवापीसमस्तपाय, महाप्रबलविश्वैकद्वितीयाय, अखिलनागराजे,

शेषदेवाय, सहस्राक्षाय, सहस्रास्यशिरोभुजाय, फणामणिकणा-
कारयोजिताब्ध्यम्बुदक्षितये, कालाग्निरुद्राय, जनकाय, मुस-
लास्त्राय, हलायुधाय, नीलाम्बराय, वारुणीशाय, मनोवाक्काय-
दोषघ्ने, असन्तोषादृष्टिमात्रपातितैकदशाननाय, बलिसंयम-
नाय, घोराय, रौहिणेयाय, प्रलम्बघ्ने, मुष्टिकघ्नाय, द्विविदघ्ने,
कालिन्दीकर्षणाय, बलाय, रेवतीरमणाय, पूर्वभक्तिखेदाच्यु-
ताग्रजाय, देवकीवसुदेवाह्वकश्यपादितिनन्दनाय, वार्ष्णेयाय,
सात्त्वतांश्रेष्ठाय, शौरये, यदुकुलोद्वहाय, नराकृतये, परंब्र-
ह्मणे, सव्यसाचिवरप्रदाय, ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशै-
शवाय, पूतनाघ्नाय, शकटभिदे, यमलार्जुनभञ्जनाय, वाता-
सुरारये, केशिघ्नाय, धेनुकारये, गवीश्वराय, दामोदराय, गोप-
देवाय, यशोदानन्दकारकाय, कालीयमर्दनाय, सर्वगोपगोपी-
जनप्रियाय, लीलागोवर्धनधराय, गोविन्दाय, गोकुलोत्सवाय,
अरिष्टमथनाय, कामोन्मत्तगोपीविमुक्तिदाय, सद्यःकुवलया-
पीडघातिने, चाणूरमर्दनाय, कंसारये, उग्रसेनादिराज्यव्या-
पारितामराय, स्वधर्माङ्कितभूर्लोकाय, जरासन्धबलान्तकाय,
त्यक्तभग्नजरासन्धाय, भीमसेनयशःप्रदाय, सान्दीपनिमृताप-
त्यदात्रे, कालान्तकादिजिते, समस्तनरकत्रात्रे, सर्वभूपतिकोटि-
जिते, रुक्मिणीरमणाय, रुक्मिशासनाय, नरकान्तकृते, सम-
स्तसुन्दरीकान्ताय, मुरारये, गरुडध्वजाय, एकाकिजितरुद्रा-
र्कमरुदाद्यखिलेश्वराय, देवेन्द्रदर्पघ्ने, कल्पद्रुमालङ्कृतभूतलाय,
बाणबाहुसहस्रजिते, नन्द्यादिगणकोटिजिते, लीलाजितमहादे-
वाय, महादेवैकपूजिताय, इन्द्रार्थार्जुननिर्भङ्गजयदाय, पाण्ड-

वैकधृते, काशीराजशिरश्छेत्रे, रुद्रशक्त्यैकमर्दनाय, विश्वेश्वर-प्रसादाढ्याय, काशीराजसुतार्दनाय, शम्भुप्रतिज्ञाविध्वंसिने "तेजोसि" काशीनिर्दग्धनायकाय, ॥ ॥८००॥ ॥

क्षीरसारमपनीय शङ्कया स्वीकृतं यदि पलायनं त्वया।
मानसे मम नितान्ततामसे नन्दनन्दन कुतो न लीयसे ॥ ॐ

काशीशाय, गणकोटिघ्नाय, लोकशिक्षाद्विजार्चकाय, युवतीव्रतपाय, अवश्याय, पुराशिववरप्रदाय, शङ्करैकप्रतिष्ठाधृते, स्वांशशङ्करपूजकाय, शिवकन्याव्रतपतये, कृष्णारूपशिवारिघ्ने, महालक्ष्मीवपुषे गौरीत्रात्रे, वेदलवितृघ्ने, श्रीधाममुचुकुन्दैकनिष्कालयवनेष्टकृते, यमुनापतये, आनीतपरिलीनद्विजात्मजाय, श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवाय, दुर्वृत्तशिशुपालादिमुक्तिदाय, द्वारकेश्वराय, आचण्डालादिकप्राप्यद्वारकानिधिकोटिकृते, अक्रूरोद्धवमुख्यैकभक्तस्वच्छन्दमुक्तिदाय, सबालस्त्रीजलक्रीडामृतवापीकृतार्णवाय, ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैककृते, परिलीनद्विजसुतानीताऽर्जुनमदापहाय, गूढमुद्राकृतिध्वस्तभीष्माद्यखिलकौरवाय, पार्थार्थखण्डिताशेषदिव्यास्त्राय, पार्थमोहभिदे, गर्भशापच्छलध्वस्तयादवोर्वीभरापहाय, जराव्याधारिगतिदाय, स्मृतमात्राखिलेष्टदाय, कामदेवाय, रतिपतये, मन्मथाय, शम्बरान्तकाय, अनङ्गजितगौरीशाय, रतिकान्ताय, सदीप्सिताय, पुष्पेषवे, विश्वविजयिने, स्मराय, कामेश्वरीप्रियाय, उषापतये, विश्वकेतवे, विश्वतृप्ताय, अधिपूरुषाय, चतुरात्मने, चतुर्वर्णाय, चतुर्युगविधायकाय, चतुर्वेदैकविश्वात्मने, सर्वोत्कृष्टांशकोटिसुवे, आश्रमात्मने, पुराणर्षये, व्यासाय,

शाखासहस्रकृते, महाभारतनिर्मात्रे, कवीन्द्राय, बादरायणाय, कृष्णद्वैपायनाय, सर्वपूरुषार्थैकबोधकाय, वेदान्तकर्त्रे, ब्रह्मैकव्यञ्जकाय, पूरुवंशकृते, बुद्धाय, ध्यानजिताशेषदेवदेवाय, जगत्प्रियाय, निरायुधजगज्जैत्राय, श्रीघनाय, दुष्टमोहनाय, दैत्यवेदबहिष्कर्त्रे, वेदार्थश्रुतिगोपकाय, शौद्धोदनये, नष्टदिष्टसुखदाय, सदसत्पतये, यथायोग्याखिलकृपाय, सर्वशून्याय, अखिलेष्टदाय, चतुष्कोटिपृथक्तत्त्वाय, प्रज्ञापारमितेश्वराय, पाषाण्डश्रुतिमार्गेशाय, पाषाण्डश्रुतिगोपकाय, कल्किने, विष्णुयशःपुत्राय, कलिकालविलोपकाय, समस्तम्लेच्छदुष्टघ्नाय, सर्वशिष्टद्विजार्तिकृते, सत्यप्रवर्तकाय, देवद्विजदीर्घक्षुधापहाय, अश्ववारादिरेवन्ताय, पृथ्वीदुर्गतिनाशनाय, सद्यःक्ष्मानन्तलक्ष्मीकृते, नष्टनिःशेषधर्मकृते, अनन्तस्वर्णयागैकहेमपूर्णाखिलद्विजाय, असाध्यैकजगच्छास्त्रे, विश्ववन्द्यजयध्वजाय, आत्मने, तत्त्वाधिपाय, कर्तृश्रेष्ठाय, विधये, उमापतये, "तेजोसि" भर्तृश्रेष्ठाय ॥१००॥ क्षीरसागरतरङ्गशीकरासारतारकितचारुमूर्त्तये । भोगिभोगशयनीयशायिने माधवाय मधुविद्विषे नमः ॥ ॐ प्रजेशाग्र्यायस्वाहा, मरीचये, जनकाग्रण्ये, कश्यपाय, देवराजे, इन्द्राय, प्रह्लादाय, दैत्यराजे, शशिने, नक्षत्रेशाय, रवये, तेजःश्रेष्ठाय, शुक्राय, कवीश्वराय, महर्षिराजे, भृगवे, विष्णवे, आदित्येशाय, बलिसुराजे, वायवे, वह्नये, शुचिश्रेष्ठाय, शङ्कराय, रुद्रराजे, गुरवे, विदुत्तमाय, चित्ररथाय, गन्धर्वाग्र्याय, अक्षरोत्तमाय, वर्णादये, अग्र्याय, स्त्रियै, गौर्यै, शक्त्यग्र्याय, श्रियै, नारदाय, देवर्षिराजे, पाण्डवाग्र्याय, अर्जुनाय, वादाय, प्रवा-

दराजे, पवनाय, पवनेशानाय, वरुणाय, यादसांपतये, गंगायै, तीर्थोत्तमाय, द्यूताय, च्छलकाग्र्याय, वरौषधाय, अन्नाय, सुदर्शनाय, अस्त्राग्र्याय, वज्राय, प्रहरणोत्तमाय, उच्चैःश्रवसे, वाजिराजाय, ऐरावताय, इभेश्वराय, अरुन्धत्यै, एकपत्नीशाय, अश्वत्थाय, अशेषवृक्षराजे, अध्यात्मविद्यायै, विद्याग्र्याय, प्रणवाय, च्छन्दसांवराय, मेरवे, गिरिपतये, मार्गाय, मासाग्र्याय, कालसत्तमाय, दिनाद्यात्मने, पूर्वसिद्धाय, कपिलाय, सामवेदराजे, तार्क्ष्याय, खगेन्द्राय, ऋत्वग्र्याय, वसन्ताय, कल्पपादपाय, धातृश्रेष्ठाय, कामधेनवे, आर्तिघ्नाग्र्याय, सुहृत्तमाय, चिन्तामणये, गुरुश्रेष्ठाय, मात्रे, हिततमाय, पित्रे, सिंहाय, मृगेन्द्राय, नागेन्द्राय, वासुकये, नृवराय, नृपाय, वर्णेशाय, ब्राह्मणाय, चेतसे, "तेजोसि" ॐकरणाग्र्याय स्वाहा ॥१०००॥

ॐ श्रीमहादेव उवाच ॥ ॐ वासुदेवः परंब्रह्म परमात्मा परात्परः । परंधाम परंज्योतिः परंतत्त्वं परंपदम् ॥ परःशिवः परो ध्येयः परंज्ञानं परागतिः । परमार्थः परंश्रेयः परानन्दः परोदयः ॥ परोऽव्यक्तात्परंव्योम परार्द्धिः परमेश्वरः । निरामयो निर्विकारो निर्विकल्पो निराश्रयः ॥ निरञ्जनो निरालम्बो निर्लेपो निरवग्रहः । निर्गुणो निष्कलोऽनन्तोऽभयोऽचिन्त्योऽचलोऽच्युतः ॥ अतीन्द्रियोऽमितोऽपारोऽनीशोऽनीहोऽव्ययोऽक्षयः । सर्वज्ञः सर्वगः सर्वः सर्वदः सर्वभावनः ॥ सर्वशास्ता सर्वसाक्षी पूज्यः सर्वस्य सर्वदृक् । सर्वशक्तिः सर्वसारः सर्वात्मा सर्वतोमुखः ॥ सर्वावासः सर्वरूपः सर्वादिः सर्वदुःखहा । सर्वार्थः सर्वतोभद्रः सर्वकारणकारणम् ॥ सर्वातिशायकः सर्वा-

ध्यक्षः सर्वेश्वरेश्वरः । षड्विंशको महाविष्णुर्महागुह्यो महाविभुः ॥ नित्योदितो नित्ययुक्तो नित्यानन्दः सनातनः । मायापतिर्योगपतिः कैवल्यपतिरात्मभूः ॥ जन्ममृत्युजरातीतः कालातीतो भवातिगः । पूर्णः सत्यः शुद्धबुद्धस्वरूपो नित्यचिन्मयः ॥ योगिप्रियो योगमयो भवबन्धैकमोचकः । पुराणपुरुषः प्रत्यक्चैतन्यः पुरुषोत्तमः ॥ वेदान्तवेद्यो दुर्ज्ञेयस्तापत्रयविवर्जितः । ब्रह्मविद्याश्रयोऽनर्घ्यः स्वप्रकाशः स्वयंप्रभः ॥ सर्वोपेय उदासीनः प्रणवः सर्वतः समः । सर्वानवद्यो दुष्प्राप्यस्तुरीयस्तमसः परः ॥ कूटस्थः सर्वसंश्लिष्टो वाङ्मनोगोचरातिगः । सङ्कर्षणः सर्वहरः कालः सर्वभयङ्करः ॥ अनुल्लङ्घ्यः सर्वगतिर्महारुद्रो दुरासदः । मूलप्रकृतिरानन्दः प्रद्युम्नो विश्वमोहनः ॥ महामायो विश्वबीजं परशक्तिः सुखैकभूः । सर्वकाम्योऽनन्तलीलः सर्वभूतवशङ्करः ॥ अनिरुद्धः सर्वजीवो हृषीकेशो मनस्पतिः । निरुपाधिप्रियो हंसोऽक्षरः सर्वनियोजकः ॥ ब्रह्मा प्राणेश्वरः सर्वभूतभृद्देहनायकः । क्षेत्रज्ञः प्रकृतिस्वामी पुरुषो विश्वसूत्रधृत् ॥ अन्तर्यामी त्रिधामाऽन्तःसाक्षी त्रिगुण ईश्वरः । योगगम्यः पद्मनाभः शेषशायी श्रियःपतिः ॥ श्रीसदोपास्यपादाब्जोऽनन्तश्रीः श्रीनिकेतनः । नित्यंवक्षःस्थलस्थश्रीः श्रीनिधिः श्रीधरो हरिः ॥ वश्यश्रीर्निश्चलश्रीदो विष्णुः क्षीराब्धिमन्दिरः । कौस्तुभोद्भासितोरस्को माधवो जगदार्तिहा ॥ श्रीवत्सवक्षा निःसीमकल्याणगुणभाजनम् । पीताम्बरो जगन्नाथो जगत्त्राता जगत्पिता ॥ जगद्बन्धुर्जगत्स्रष्टा जगद्धाता जगन्निधिः । जगदेकस्फुरद्वीर्यो नाहंवादी जगन्मयः ॥ सर्वाश्चर्यमयः सर्वसिद्धार्थः सर्ववीरजित् । सर्वामोघोद्यमो ब्रह्मरुद्राद्युत्कृष्टचेतनः ॥

शम्भोः पितामहो ब्रह्मपिता शक्राद्यधीश्वरः । सर्वदेवप्रियः सर्वदेवमूर्तिरनुत्तमः ॥ सर्वदेवैकशरणं सर्वदेवैकदैवतम् । यज्ञभुग्यज्ञफलदो यज्ञेशो यज्ञभावनः ॥ यज्ञत्राता यज्ञपुमान्वनमाली द्विजप्रियः । द्विजैकमानदो विप्रकुलदेवोऽसुरान्तकः ॥ सर्वदुष्टान्तकृत्सर्वसज्जनानन्यपालकः । सप्तलोकैकजठरः सप्तलोकैकमण्डनम् ॥ सृष्टिस्थित्यन्तकृच्चक्री शार्ङ्गधन्वा गदाधरः । शङ्खभृन्नन्दकी पद्मपाणिर्गरुडवाहनः ॥ अनिर्देश्यवपुः सर्वपूज्यस्त्रैलोक्यपावनः । अनन्तकीर्तिर्निःसीमपौरुषः सर्वमङ्गलः ॥ सूर्यकोटिप्रतीकाशो यमकोटिदुरासदः । ब्रह्मकोटिजगत्स्रष्टा वायुकोटिमहाबलः ॥ कोटीन्दुजगदानन्दी शम्भुकोटिमहेश्वरः । कुबेरकोटिलक्ष्मीवाञ्छक्रकोटिविलासवान् ॥ कन्दर्पकोटिलावण्यो दुर्गाकोट्यरिमर्दनः । समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः ॥ हिमवत्कोटिनिष्कम्पः कोटिब्रह्माण्डविग्रहः । कोट्यश्वमेधपापघ्नो यज्ञकोटिसमार्चनः ॥ सुधाकोटिस्वास्थ्यहेतुः कामधुक्कोटिकामदः । ब्रह्मविद्याकोटिरूपः शिपिविष्टः शुचिश्रवाः ॥ विश्वम्भरस्तीर्थपादः पुण्यश्रवणकीर्तनः । आदिदेवो जगज्जैत्रो मुकुन्दः कालनेमिहा ॥ वैकुण्ठोऽनन्तमाहात्म्यो महायोगीश्वरोत्सवः । नित्यतृप्तो लसद्भावो निःशङ्को नरकान्तकः ॥ दीनानाथैकशरणं विश्वैकव्यसनापहः । जगत्कृपाक्षमो नित्यकृपालुः सज्जनाश्रयः ॥ योगीश्वरः सदोदीर्णो वृद्धिक्षयविवर्जितः । अधोक्षजो विश्वरेताः प्रजापतिशताधिपः ॥ शक्रब्रह्मार्चितपदः शम्भुब्रह्मोर्ध्वधामगः । सूर्यसोमेक्षणो विश्वभोक्ता सर्वस्य पारगः ॥ जगत्सेतुर्धर्मसेतुर्धरो विश्वधुरन्धरः । निर्ममोऽखिललोकेशो निःसङ्गोऽद्भुतभोगवान् ॥ वश्यमायो वश्यविश्वो विष्वक्सेनः

सुरोत्तमः । सर्वश्रेयस्पतिर्दिव्यानर्घभूषणभूषितः ॥ सर्वलक्षण-
लक्षण्यः सर्वदैत्येन्द्रदर्पहा । समस्तदेवसर्वस्वं सर्वदैवतनायकः ॥
समस्तदेवतादुर्गं प्रपन्नाशनिपञ्जरः । समस्तदेवकवचं सर्वदेव-
शिरोमणिः ॥ समस्तभयभिन्नामा भगवान्विष्टरश्रवाः । विभुः
सर्वहितोदर्को हतारिस्वगतिप्रदः ॥ सर्वदैवतजीवेशो ब्राह्मणा-
दिनियोजकः । ब्रह्मशम्भुपरार्ध्यायुर्ब्रह्मज्येष्ठः शिशुः स्वराट् ॥
विराट् भक्तपराधीनः स्तुत्यः स्तोत्रार्थसाधकः । परार्थकर्ता
कृत्यज्ञः स्वार्थकृत्यसदोज्झितः ॥ सदानवः सदाभद्रः सदा-
शान्तः सदाशिवः । सदाप्रियः सदातुष्टः सदापुष्टः सदार्चितः ॥
सदापूतः पावनाग्र्यो वेदगुह्यो वृषाकपिः । सहस्रनामा त्रियु-
गश्चतुर्मूर्तिश्चतुर्भुजः ॥ भूतभव्यभवन्नाथो महापुरुषपूर्वजः ।
नारायणो मुञ्जकेशः सर्वयोगविनिस्सृतः ॥ वेदसारो यज्ञसारः
सामसारस्तपोनिधिः । साध्यः श्रेष्ठः पुराणर्षिर्निष्ठा शान्तिः
परायणम् ॥ शिवत्रिशूलविध्वंसी श्रीकण्ठैकवरप्रदः । नरः कृष्णो
हरिर्धर्मनन्दनो धर्मजीवनः । आदिकर्ता सर्वसत्यः सर्वस्त्रीरत्नद-
र्पहा । त्रिकालजितकन्दर्प उर्वशीसृड्मुनीश्वरः ॥ आद्यः कवि-
हयग्रीवः सर्ववागीश्वरेश्वरः । सर्वदेवमयो ब्रह्मगुरुर्वागीश्वरी-
पतिः ॥ अनन्तविद्याप्रभवो मूलविद्याविनाशकः । सार्वज्ञदो
जगज्जाड्यनाशको मधुसूदनः । अनेकमन्त्रकोटीशः शब्दब्रह्मैक-
पारगः । आदिविद्वान्वेदकर्ता वेदात्मा श्रुतिपारगः ॥ ब्रह्मा-
र्थवेदाहरणः सर्वविज्ञानजन्मभूः । विद्याराजो ज्ञानमूर्तिर्ज्ञान-
सिन्धुरखण्डधीः । मत्स्यदेवो महाशृङ्गो जगद्बीजवहित्रधृत् ।
लीलाव्याप्ताखिलाम्बोधिश्चतुर्वेदप्रवर्तकः ॥ आदिकूर्मोऽखि-
लाधारस्तृणीकृतजगद्भरः । अमरीकृतदेवौघः पीयूषोत्पत्तिका-

रणम् । आत्माधारो धराधारो यज्ञाङ्गो धरणीधरः । हिरण्याक्षहरः पृथ्वीपतिः श्राद्धादिकल्पकः ॥ समस्तपितृभीतिघ्नः, समस्तपितृजीवनः । हव्यकव्यैकभुग्हव्यकव्यैकफलदायकः ॥ लोमान्तर्लीनजलधिः क्षोभिताशेषसागरः । महावराहो यज्ञघ्नध्वंसनो याज्ञिकाश्रयः ॥ नरसिंहो दिव्यसिंहः सर्वारिष्टार्तिदुःखहा । एकवीरोऽद्भुतबलो मन्त्रयन्त्रैकभञ्जनः ॥ ब्रह्मादिदुःसहज्योतिर्युगान्ताग्न्यतिभीषणः । कोटिवज्राधिकनखो जगद्दुष्प्रेक्ष्यमूर्तिधृत् ॥ मातृचक्रप्रमथनो महामातृगणेश्वरः । अचिन्त्यामोघवीर्याढ्यः समस्तासुरघस्मरः ॥ हिरण्यकशिपुच्छेदी कालसङ्कर्षणीपतिः । कृतान्तवाहनः सद्यः समस्तभयनाशनः ॥ सर्वविघ्नान्तकः सर्वसिद्धिदः सर्वपूरकः । समस्तपातकध्वंसी सिद्धमन्त्राधिकाह्वयः । भैरवेशो हरार्तिघ्नः कालकोटिदुरासदः । दैत्यगर्भस्राविनामा स्फुटब्रह्माण्डगर्जितः ॥ स्मृतमात्राखिलत्राताऽद्भुतरूपो महाहरिः । ब्रह्मचर्मशिरःपट्टी दिक्पालोर्ध्वाङ्गभूषणः ॥ द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः । योगिनीग्रस्तगिरिजात्राता भैरवतर्जकः ॥ वीरचक्रेश्वरोऽत्युग्रो यमारिः कालशम्बरः । क्रोधेश्वरो रुद्रचण्डीपरिवारादिदुष्टभुक् ॥ सर्वाक्षोभ्यो मृत्युमृत्युः कालो मृत्युनिवर्तकः । असाध्यसर्वरोगघ्नः सर्वदुर्ग्रहसौम्यकृत् ॥ गणेशकोटिदर्पघ्नो दुःसहाशेषगोत्रहा । देवदानवदुर्दर्शो जगद्भयदभीषकः ॥ समस्तदुर्गतित्राता जगद्भक्षकभक्षकः । उग्रशोऽम्बरमार्जारः कालमूषकभक्षकः ॥ अनन्तायुधदोर्दण्डो नृसिंहो वीरभद्रजित् । योगिनीचक्रगुह्येशः शक्रारिपशुमांसभुक् ॥ रुद्रो नारायणो मेषरूपशङ्करवाहनः । मेषरूपशिवत्राता दुष्टशक्तिसहस्रभुक् ॥ तुलसीवल्लभो वीरो

वामाचारोऽखिलेष्टदः । सदाशिवः शिवारूढो भैरवैककपाल-
भृत् ॥ झिल्लीचक्रेश्वरः शक्रदिव्यमोहनरूपदः । गौरीसौभाग्यदो
मायानिधिर्मायाभयापहः ॥ ब्रह्मतेजोमयो ब्रह्म श्रीमयश्च त्रयी-
मयः । सुब्रह्मण्यो बलिध्वंसी वामनोऽदितिदुःखहा ॥ उपेन्द्रो
नृपतिर्विष्णुः कश्यपान्वयमण्डनः । बलिस्वाराज्यदः सर्वदेव-
विप्रान्नदोऽच्युतः । उरुक्रमस्तीर्थपादस्त्रिपदश्च त्रिविक्रमः । व्यो-
मपादः स्वपादाम्भःपवित्रितजगत्त्रयः ॥ ब्रह्मेशाद्यऽभिवन्द्या-
ङ्घ्रिर्द्रुतधर्माङ्घ्रिधावनः । अचिन्त्याद्भुतविस्तारो विश्ववृक्षो महा-
बलः ॥ राहुमूर्धापराङ्गच्छिद्भृगुपत्नीशिरोहरः । पापत्रस्तः स-
दापुण्यो दैत्याशानित्यखण्डनः ॥ पूरिताखिलदेवाशो विश्वा-
र्थैकावतारकृत् । स्वमायानित्यगुप्तात्मा भक्तचिन्तामणिः सदा ॥
वरदः कार्तवीर्यादिराजराज्यप्रदोऽनघः । विश्वश्लाघ्योऽमिता-
चारो दत्तात्रेयो मुनीश्वरः ॥ परशक्तिसदाश्लिष्टो योगानन्दस-
दोन्मदः । समस्तेन्द्रारितेजोहृत्परमामृतपद्मपः ॥ अनसूयागर्भ-
रत्नं भोगमोक्षसुखप्रदः । जमदग्निकुलादित्यो रेणुकाद्भुतशक्ति-
कृत् ॥ मातृहत्यादिनिर्लेपः स्कन्दजिद्विप्रराज्यदः । सर्वक्षत्रा-
न्तकृद्वीरदर्पहा कार्तवीर्यजित् ॥ सप्तद्वीपवतीदाता शिवाचार्य-
यशःप्रदः । भीमः परशुरामश्च शिवाचार्यैकविश्वभूः ॥ शिवा-
खिलज्ञानकोशो भीष्माचार्योऽग्निदैवतः । द्रोणाचार्यगुरुर्विश्व-
जैत्रधन्वा कृतान्तजित् ॥ अद्वितीयतपोमूर्तिर्ब्रह्मचर्यैकदक्षिणः ।
मनुः श्रेष्ठः सतांसेतुर्महीयान्वृषभो विराट् ॥ आदिराजः क्षि-
तिपिता सर्वरत्नैकदोहकृत् । पृथुर्जन्माद्येकदक्षो गीःश्रीकीर्तिस्व-
यंवृतः ॥ जगद्वृत्तिप्रदश्चक्रवर्तिश्रेष्ठोऽद्वयास्त्रधृत् । सनकादिमु-
निप्राप्यभगवद्भक्तिवर्धनः । वर्णाश्रमादिधर्माणां कर्ता धर्मप्रव-

र्तकः ॥ सूर्यवंशध्वजो रामो राघवः सद्गुणार्णवः ॥ काकुत्स्थो वीरराडार्यराजो धर्मधुरन्धरः । नित्यस्वस्थाशयः सर्वभद्रग्राही शुभैकदृक् ॥ नवरत्नं रत्नगर्भो धर्माध्यक्षो महानिधिः । सर्वश्रेष्ठाश्रयः सर्वशस्त्रास्त्रग्रामवीर्यवान् ॥ जगद्वशी दाशरथिः सर्वरत्नाश्रयो नृपः । समस्तधर्मसूः सर्वधर्मद्रष्टाऽखिलार्तिहृत् ॥ अतीन्द्रो ज्ञानविज्ञानपारदश्वा क्षमाम्बुधिः । सर्वप्रकृष्टः शिष्टेष्टो हर्षशोकाद्यनाकुलः ॥ पित्राज्ञात्यक्तसाम्राज्यः सपत्नोदयनिर्भयः । गुहादेशार्पितैश्वर्यः शिवस्पर्धाजटाधरः ॥ चित्रकूटाप्तरत्नाद्रिर्जगदीशो वनेचरः । यथेष्टामोघसर्वास्त्रो देवेन्द्रतनयाक्षिहा ॥ ब्रह्मेन्द्रादिनतैषीको मारीचघ्नो विराधहा । ब्रह्मशापहताशेषदण्डकारण्यपावनः ॥ चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैककृत् । खरारिस्त्रिशिरोहन्ता दूषणघ्नो जनार्दनः ॥ जटायुषोऽग्निगतिदोऽगस्त्यः सर्वस्वपात्रराट् । लीलाधनुष्कोट्यपास्तदुन्दुभ्यस्थिमहाचयः ॥ सप्ततालव्यधाकृष्टध्वस्तपातालदानवः । सुग्रीवराज्यदोऽहीनमनसैवाभयप्रदः ॥ हनुमद्रुद्रमुख्येशः समस्तकपिदेहभृत् । सनागदैत्यबाणैकव्याकुलीकृतसागरः ॥ सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः । समुद्राद्भुतपूर्वैकबद्धसेतुर्यशोनिधिः ॥ असाध्यसाधको लङ्कासमूलोत्कर्षदक्षिणः । वरदृप्तजगच्छल्यपुलस्त्यकुलकृन्तनः ॥ रावणिघ्नः प्रहस्तच्छित्कुम्भकर्णभिदुग्रहा । रावणैकशिरच्छेत्ता निःशङ्केन्द्रैकराज्यदः ॥ स्वर्गास्वर्गत्वविच्छेदी देवेन्द्रानिन्द्रताहरः । रक्षोदेवत्वहृद्धर्माधर्मत्वघ्नः पुरुष्टुतः । नतिमात्रदशास्यारिदत्तराज्यो विभीषणः । स्वधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत् ॥ देवब्राह्मणनामैकधाता सर्वामरार्चितः । ब्रह्मसूर्येन्द्ररुद्रादिवन्द्यार्पितसतीप्रियः ॥

अयोध्याखिलराज्याग्र्यः सर्वभूतमनोहरः। स्वामितुल्यकृपादण्डो हीनोत्कृष्टैकसत्प्रियः॥ श्वपक्ष्यादिन्यायदर्शी हीनार्थाधिकसाधकः। वधव्याधानुचितकृत्तारकोऽखिलतुल्यकृत्॥ पार्वत्यधिकमुक्तात्मा प्रियात्यक्तस्मरारिजित्। साक्षात्कुशलवच्छद्मेन्द्राग्निताततोऽपराजितः॥ कौसलेन्द्रो वीरबाहुः सत्यार्थत्यक्तसोदरः। शरसन्धाननिर्धूतधरणीमण्डलो जयः॥ ब्रह्मादिकाम्यसान्निध्यसनाथीकृतदैवतः। ब्रह्मलोकाप्तचण्डलाद्यशेषप्राणिसार्थपः॥ स्वर्नीतगदभाश्वादिश्चिरायोध्यावनैककृत्। रामद्वितीयः सौमित्रिर्लक्ष्मणः प्रहतेन्द्रजित्॥ विष्णुभक्तांशरामाङ्घ्रिपादुकाराज्यनिर्वृतः। भरतो, सह्यगन्धर्वकोटिघ्नो लवणान्तकः॥ शत्रुघ्नो वैद्यराडायुर्वेदराडोषधीपतिः। नित्यामृतकरो धान्वन्तरिर्यज्ञो जगद्धरः॥ सूर्यारिघ्नः सुराजीवो दक्षिणेशो द्विजप्रियः छिन्नमूर्धापदेशार्कः शेषाङ्गस्थापितामरः॥ विश्वार्थाशेषरुद्रार्थशिरच्छेदाक्षताकृतिः। वाजपेयादिनामाऽग्निर्वेदधर्मपरायणः॥ श्वेतद्वीपपतिः साङ्ख्यप्रणेता सर्वसिद्धराट्। विश्वप्रकाशितज्ञानयोगो मोहतमिस्रहा॥ योगस्वामी ध्यानभङ्गसगरात्मजभस्मकृत्। धर्मो वृषेन्द्रः सुरभीपतिः शुद्धात्मभावितः॥ शम्भुत्रिपुरदाहैकस्थैर्यविश्वरथोद्वहः। भक्तशम्भुजितो दैत्यामृतवापीसमस्तपः॥ महाप्रबलविश्वैकद्वितीयोऽखिलनागराट्। शेषदेवः सहस्राक्षः सहस्रास्यशिरोभुजः॥ फणामणिकणाकारयोजिताब्ध्यम्बुदक्षितिः। कालाग्निरुद्रो जनको मुसलास्त्रो हलायुधः॥ नीलाम्बरो वारुणीशो मनोवाक्कायदोषहा। असन्तोषादृष्टिमात्रपातितैकदशाननः॥ बलिसंयमनो घोरो रौहिणीयः प्रलम्बहा। मुष्टिकघ्नो द्विविदहा कालिन्दीकर्षणो बलः॥ रेवतीरमणः

पूर्वभक्तिखेदाच्युताग्रजः । देवकीवसुदेवाह्वकश्यपादितिनन्दनः ॥ वार्ष्णेयः सात्वतांश्रेष्ठो शौरिर्यदुकुलोद्वहः । नराकृतिः परंब्रह्म सव्यसाचिवरप्रदः ॥ ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशवः । पूतनाघ्नः शकटभिद्यमलार्जुनभञ्जनः ॥ वातासुरारिः केशिघ्नो धेनुकारिर्गवीश्वरः । दामोदरो गोपदेवो यशोदानन्दकारकः ॥ कालीयमर्दनः सर्वगोपगोपीजनप्रियः । लीलागोवर्धनधरो गोविन्दो गोकुलोत्सवः ॥ अरिष्टमथनः कामोन्मत्तगोपीविमुक्तिदः । सद्यःकुवलयापीडघाती चाणूरमर्दनः ॥ कंसारिरुग्रसेनादिराज्यव्यापारितामरः । स्वधर्माङ्कितभूलोको जरासन्धबलान्तकः ॥ त्यक्तभग्नजरासन्धो भीमसेनयशःप्रदः । सान्दीपनिमृतापत्यदाता कालान्तकादिजित् ॥ समस्तनरकत्राता सर्वभूपतिकोटिजित् । रुक्मिणीरमणो रुक्मिशासनो नरकान्तकृत् ॥ समस्तसुन्दरीकान्तो मुरारिर्गरुडध्वजः । एकाकिजितरुद्रार्कमरुदाद्यखिलेश्वरः ॥ देवेन्द्रदर्पहा कल्पद्रुमालङ्कृतभूतलः । बाणबाहुसहस्रजिन्नन्द्यादिगणकोटिजित् ॥ लीलाजितमहादेवो महादेवैकपूजितः । इन्द्रार्थार्जुननिर्भङ्गजयदः पाण्डवैकधृत् ॥ काशिराजशिरच्छेत्ता रुद्रशक्त्येकमर्दनः । विश्वेश्वरप्रसादाढ्यः काशिराजसुतार्दनः॥ शम्भुप्रत्याज्ञाविध्वंसी काशीनिर्दग्धनायकः । काशीशो गणकोटिघ्नो लोकशिक्षाद्विजार्चकः ॥ युवतीव्रतपो वश्यः पुराशिववरप्रदः । शङ्करैकप्रतिष्ठाधृत्स्वांशशङ्करपूजकः ॥ शिवकन्याव्रतपतिः कृष्णरूपशिवारिहा । महालक्ष्मीवपुर्गौरीत्राता वेदलवित्रहा ॥ स्वधाममुचुकुन्दैकनिष्कालयवनेष्टकृत् । यमुनापतिरानीतपरिलीनद्विजात्मजः ॥ श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः ॥ दुर्वृत्तशिशुपालादिमु-

क्तिदो द्वारकेश्वरः । आचण्डालादिकप्राप्यद्वारकानिधिकोटि-कृत् ॥ अक्रूरोद्धवमुख्यैकभक्तस्वच्छन्दमुक्तिदः । सबालस्त्रीजल-क्रीडामृतवापीकृतार्णवः ॥ ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैक-कृत् । परिलीनद्विजसुतानीतार्जुनमदापहः ॥ गूढमुद्राकृतिध्व-स्तभीष्माद्यखिलकौरवः । पार्थार्थखण्डिताशेषदिव्यास्त्रः पार्थ-मोहभित् ॥ गर्भशापच्छलध्वस्तयादवोर्वीभरापहः । जराव्या-धारिगतिदः स्मृतिमात्राखिलेष्टदः ॥ कामदेवो रतिपतिर्मन्मथः शम्बरान्तकः । अनङ्गजितगौरीशो रतिकान्तः सदीप्सितः ॥ पुष्पेषुर्विश्वविजयी स्मरः कामेश्वरीप्रियः । उषापतिर्विश्वकेतु-र्विश्वतृप्तोऽधिपूरुषः ॥ चतुरात्मा चतुर्वर्णश्चतुर्युगविधायकः । चतुर्वेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिसूः ॥ आश्रमात्मा पुरा-णर्षिर्व्यासः शाखासहस्रकृत् । महाभारतनिर्माता कवीन्द्रो बा-दरायणः ॥ कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधकः । वेदान्तकर्ता ब्रह्मैकव्यञ्जकः पूरुवंशकृत् ॥ बुद्धो ध्यानजिताशेषदेवदेवो जगत्प्रियः । निरायुधजगज्जैत्रः श्रीधनो दुष्टमोहनः ॥ दैत्यवे-दबहिष्कर्ता वेदार्थश्रुतिगोपकः । शुद्धोदनिर्नष्टदिष्टसुखदः सदसत्पतिः ॥ यथायोग्याखिलकृपः सर्वशून्योऽखिलेष्टदः । चतुष्कोटिपृथक्तत्त्वं प्रज्ञापारमितेश्वरः ॥ पाषाणश्रुतिमार्गेशः पाषण्डश्रुतिगोपकः । कल्की विष्णुयशःपुत्रः कलिकालवि-लोपकः ॥ समस्तम्लेच्छदुष्टघ्नः सर्वशिष्टद्विजातिकृत् । सत्यप्रव-र्तको देवद्विजदीर्घक्षुधापहः ॥ अश्ववारादिरेवान्तःपृथ्वीदुर्ग-तिनाशनः । सद्यः क्ष्मानन्तलक्ष्मीकृन्नष्टनिःशेषधर्मकृत् ॥ अ-नन्तस्वर्णयागैकहेमपूर्णाखिलद्विजः । असाध्यैकजगच्छास्ता वि-श्ववन्द्यजयध्वजः॥ आत्मा तत्त्वाधिपः कर्तृश्रेष्ठो विधिरुमापतिः।

भर्तृश्रेष्ठः प्रजेशाग्र्यो मरीचिर्जनकाग्रणीः ॥ कश्यपो देवराडिन्द्रः प्रह्लादो दैत्यराट् शशी । नक्षत्रेशो रविस्तेजःश्रेष्ठः शुक्रः कवीश्वरः ॥ महर्षिराड्भृगुर्विष्णुरादित्येशो बली सुराट् । वायुर्वह्निः शुचिश्रेष्ठः शङ्करो रुद्रराड्गुरुः ॥ विदुत्तमश्चित्ररथो गन्धर्वाग्र्योऽक्षरोत्तमः । वर्णादिरग्र्यः स्त्रीगौरीशक्त्यग्र्यः श्रीश्च नारदः ॥ देवर्षिराड्पाण्डवाग्र्योऽर्जुनो वादः प्रवादराट् । पवनः पवनेशानो वरुणो यादसांपतिः ॥ गङ्गातीर्थोत्तमो द्यूतं च्छलकाग्र्यं वरौषधम् । अन्नं सुदर्शनोऽस्त्रयाग्र्यं वज्रं प्रहरणोत्तमम् ॥ उच्चैःश्रवा वाजिराज ऐरावत इभेश्वरः । अरुन्धत्येकपत्नीशो ह्यश्वत्थोऽशेषवृक्षराट् ॥ अध्यात्मविद्या विद्याग्र्यः प्रणवश्छन्दसांवरः । मेरुर्गिरिपतिर्मार्गो मासाग्र्यः कालसत्तमः । दिनाद्यात्मा पूर्वसिद्धः कपिलः सामवेदराट् । तार्क्ष्यः खगेन्द्र ऋत्वग्र्यो वसन्तः कल्पपादपः । धातृश्रेष्ठः कामधेनुरार्तिघ्नाग्र्यः सुहृत्तमः । चिन्तामणिर्गुरुश्रेष्ठो माता हिततमः पिता ॥ सिंहो मृगेन्द्रो नागेन्द्रो वासुकिर्नृवरो नृपः । वर्णेशो ब्राह्मणश्चेतः करणाग्र्यं नमोनमः ॥

इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकम् । सर्वापराधशमनं परं भक्तिविवर्धनम् ॥ अक्षयब्रह्मलोकादिसर्वस्वर्गैकसाधनम् । विष्णुलोकैकसोपानं सर्वदुःखविनाशनम् ॥ समस्तसुखदं सद्यः परं निर्वाणदायकम् । कामक्रोधादिनिःशेषमनोमलविशोधनम् ॥ शान्तिदं पावनं नृणां महापातकिनामपि । सर्वेषां प्राणिनामाशु सर्वाभीष्टफलप्रदम् ॥ समस्तविघ्नशमनं सर्वारिष्टविनाशनम् । घोरदुःखप्रशमनं तीव्रदारिद्र्यनाशनम् ॥ ऋणत्रयापहं गुह्यं धनधान्ययशस्करम् । सर्वैश्वर्यप्रदं सर्वसिद्धिदं सर्वधर्मदम् ॥ तीर्थ-

यज्ञतपोदानव्रतकोटिफलप्रदम् । जगज्जाड्यप्रशमनं सर्वविद्याप्रवर्तकम् ॥ राज्यदं भ्रष्टराज्यानां रोगिणां सर्वरोगनुत् । वन्ध्यानां सुतदं चासुक्षीणानां जीवितप्रदम् ॥ भूतग्रहविषध्वंसि ग्रहपीडाविनाशनम् । मङ्गल्यं पुण्यमायुष्यं श्रवणात्पठनाज्जपात् ॥ सकृदस्याखिला वेदाः साङ्गा मन्त्राश्च कोटिशः । पुराणशास्त्रस्मृतयः श्रुताः स्युः पठितास्तथा ॥ यस्त्वस्यैकाक्षरं श्लोकं पादं वा पठति प्रिये । नित्यं सिद्ध्यति सर्वेष्टमचिरात्किमुताखिलम् ॥ नानेन सदृशं सद्यःप्रत्ययः सर्वकर्मसु । इदं भद्रे त्वया गोप्यं पाठ्यं स्वार्थैकसिद्धये ॥ नावैष्णवाय दातव्यं विकल्पोपहतात्मने । भक्तिश्रद्धाविहीनाय विष्णुसामान्यदर्शिने ॥ देयं पुत्राय शिष्याय सुहृदे हितकाम्यया । मत्प्रसादादृते नेदं ग्रहीष्यन्त्यल्पमेधसः ॥ कलौ च सद्यः फलदं पापहृत्पार्वति प्रिये । लोकानां भाग्यहीनानां येन दुःखं विनश्यति ॥ द्वित्रेषु वैष्णवेष्वेतदार्यावर्ते भविष्यति । नास्ति विष्णोः परं सत्यं नास्ति विष्णोः परं पदम् ॥ नास्ति विष्णोः परं ज्ञानं नास्ति मोक्षमवैष्णवम् । नास्ति विष्णोः परं स्थानं नास्ति विष्णोः परं तपः ॥ नास्ति विष्णोः परं ध्यानं नास्ति मन्त्रमवैष्णवम् । किं तस्य बहुभिर्मन्त्रैः शास्त्रैः किं बहुविस्तरैः ॥ वाजपेयसहस्रैस्तु भक्तिर्यस्य जनार्दने । सर्वतीर्थमयो विष्णुः सर्वशास्त्रमयः प्रभुः ॥ सर्वक्रतुमयो विष्णुः सत्यं सत्यं वदाम्यहम् । आब्रह्मसारसर्वस्वं सत्यमेतन्मयोदितम् ॥ श्रीपार्वत्युवाच ॥ धन्यास्म्यऽनुगृहीतासि कृतार्थासि जगत्प्रभो । यन्मयेदं श्रुतं स्तोत्रं त्वद्रहस्यं सुदुर्लभम् ॥ अहो बत महत्कष्टं समस्तसुखदे हरौ । विद्यमानेऽपि सर्वेशे मूढः क्लिश्यति संसृतौ ॥ यमुद्दिश्य रमानाथं

महेशोपि दिगम्बरः । जटी भस्मानुलिप्ताङ्गस्तपस्वी वीक्षते जनैः ॥ ततोऽधिकोस्ति को देवो लक्ष्मीकान्तान्मधुद्विषः । यत्तत्वं चिन्त्यते नित्यं त्वया योगीश्वरेण हि ॥ ततः परं किमधिकं पदं श्रीपुरुषोत्तमात् । तमवज्ञाय किं मूढा भजन्ते ज्ञानमानिनः । मुषितास्मि त्वया नाथ चिरं यदयमीश्वरः । प्रकाशितो न मे यस्मात्त्वदाद्या दिव्यशक्तयः ॥ अहो सर्वेश्वरो विष्णुः सर्वदेवोत्तमोत्तमः । भवदादिगुरुर्मूढैः सामान्य इव वीक्ष्यते ॥ महीयसां च माहात्म्यं भजमानान्भजन्ति ते । द्विषतोपि तथा पापानुपेक्ष्यन्ते क्षमान्विताः । मयापि बाल्ये स्वपितुः प्रजा दृष्ट्वा बुभुक्षिताः । दुःखादशक्ताः संपोष्टुं श्रिया पुष्टास्तु ताः पुरा ॥ तया संविहिताभिश्च मुनिभिर्भवदादयः । विलसन्ति सशक्राद्याः ससुहृन्मित्रबान्धवाः ॥ तया विना क्व देवत्वं कैश्वर्यं क्व परिग्रहः । सर्वे भजन्ति जीवन्तो यातनास्विव संस्थिताः ॥ तामृते नैव धर्मार्थौ काममोक्षौ न दूरतः । क्षुधितानां दुर्गतानां कुतो योगसमाधयः ॥ सा च संसारसारैका सर्वलोकैकनायिका । कमला वशगा यस्य त्यक्त्वा त्वामपि शङ्कर ॥ अनौद्धत्येन शौचेन रूपेणार्जवसम्पदा । सर्वातिशयवीर्येण सम्पूर्णस्य महात्मनः ॥ कस्तेन तुल्यतामेति देवदेवेन विष्णुना । यस्यांशांशावतारेण विना सद्यो विलीयते ॥ जगदेतत्तथाप्याहुर्दोषायैतद्विमोहितः । नास्य जन्म नवा मृत्युर्न प्राप्यं स्वार्थ एव वा ॥ कामाद्यासक्तचित्तत्वात्किन्तु सर्वेश्वर प्रभो । तन्मयत्वात्प्रमादाद्वा शक्नोमि पठितुं न चेत् ॥ विष्णोर्नामसहस्रं तत्प्रत्यहं वृषभध्वज । नाम्नैकेन तु येन स्यात्तत्फलं ब्रूहि मे प्रभो ॥ श्रीमहादेव उवाच ॥ रकारादीनि नामानि शृ-

ण्वतो मम पार्वति । मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥ रमन्ते योगिनो यत्र सदानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ श्रीराम रामरामेति रमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ इति श्रीपद्मपुराणे पार्वतीपरमेश्वरसंवादे परमरहस्ये श्रीवासुदेवनामसहस्रस्तोत्रं सम्पूर्णम् ॥

---

## अथ गोविन्दाष्टकम् ॥

ॐसत्यं ज्ञानमनन्तं नित्यमनाकाशं परमाकाशं, गोष्ठप्राङ्गणरिङ्खणलोलमनायासं परमायासम् । मायाकल्पितनानाकारमनाकारं भुवनाकारं, क्ष्मामानाथमनाथं प्रणमत गोविन्दं परमानन्दम् ॥ १ ॥ मृत्स्नामत्सीहेति यशोदाताडनशैशवसन्त्रासं, व्यादितवक्त्रालोकितलोकालोकचतुर्दशलोकालिम् । लोकत्रयपुरमूलस्तम्भं लोकालोकमनालोकं लोकेशं परमेशं प्रण० ॥ २ ॥ त्रैविष्टपरिपुवीरघ्नं क्षितिभारघ्नं भवरोगघ्नं, कैवल्यं नवनीताहारमनाहारं भुवनाहारम् । वैमल्यस्फुटचेतोवृत्तिविशेषाभासमनाभासं, शैवं केवलशान्तं प्रणमत० ॥ ३ ॥ गोपालं प्रभुलीलाविग्रहगोपालं कुलगोपालं, गोपीखेलनगोवर्धनधृतिलीलालालितगोपालम् । गोभिर्निगदितगोविन्दस्फुटनामानं बहुनामानं, गोधीगोचरदूरं प्रण० ॥ ४ ॥ गोपीमण्डलगोष्ठीभेदं भेदावस्थमभेदाभं, शश्वद्गोखुरनिर्धूतोद्धतधूलीधूसरसौभाग्यम् । श्रद्धाभक्तिगृहीतानन्दमचिन्त्यं चिन्तितसद्भावं चिन्तामणिमणिमानं प्रण० ॥ ५ ॥ स्नानव्याकुलयोषिद्वस्त्राण्यादायागमुपारूढं, व्यादित्सन्तीरथ दिग्वस्त्रा वस्त्रं दातुमुपाकर्षन्तं ताः । निर्धूतद्वयशोकविमोहं बुद्धं बुद्धेरन्तःस्थं सत्तामात्रशरीरं प्रणमत० ॥ ६ ॥ कान्तं कारणकारणमादि-

मनादिं कालघनाभासं, कालिन्दीगतकालियशिरसि नृत्यन्तं मुहुर्नृत्यन्तम्। कालं कालकलातीतं कलिताशेषं कलिदोषघ्नं कालत्रयगतिहेतुं प्रण० ॥ ७ ॥ वृन्दावनभुवि वृन्दारकगणवृन्दाराधितवन्द्येहं कुन्दाभामलमन्दस्मेरसुधानन्दं सुहृदानन्दम्। वन्द्याशेषमहामुनिमानसवन्द्यानन्दपदद्वन्द्वं, वन्द्याशेषगुणाब्धिं, प्र० ॥८॥ गोविन्दाष्टकमेतदधीते गोविन्दार्पितचेता यो, गोविन्दाच्युतमाधव विष्णो! गोकुलनायक कृष्णेति। गोविन्दाङ्घ्रिसरोजध्यानसुधाजलधौतसमस्ताघो, गोविन्दं परमानन्दामृतमन्तःस्थं समभ्येति ॥९॥ इति श्रीशङ्कराचार्यकृतं गोविन्दाष्टकम् ॥

## अथ श्रीकृष्णलीला।

ॐ निगमतरोः प्रतिशाखं मृगितं च मया परंब्रह्म। मिलितमिदानीमङ्के गोकुलपङ्केरुहाक्षीणाम् ॥ १ ॥ तप्तं तपोभिरन्यैः फलितं च तद्गोपबालानाम्। आसां यत्कुचकुम्भे नीलनिचोलायते परंब्रह्म ॥२॥ श्रुतिमपरे स्मृतिमपरे भारतमन्ये भजन्तु भवभीताः। अहमपि नन्दं वन्दे यस्यालिन्दे परंब्रह्म ॥ ३ ॥ किं कथयामः कस्मै कस्य मनः प्रत्ययमाधत्ते। रमयति गोपवधूटीकुञ्जकुटीरे परंब्रह्म ॥ ४ ॥ नीतं नीतं नवनवनीतं केन च पीतं पयः क्व मे मुरली। इति समुदीर्य लुठन्तं भूमौ बालं नमामि गोपालम् ॥ ५ ॥ पश्यत बलमबलानामनाविले हृद्बिले बबन्धुर्याः। तनुदृष्टिपातरश्म्याऽकृष्टममूर्तं परंब्रह्म ॥ ६ ॥ एतत्त्वामहमर्थयामि सततं रे चित्त चिन्तातुर, मा चिन्तां कुरु चञ्चलेषु विषयेष्वागारदारादिषु। गायन्तं यमुनातटद्रुमतले नीलाम्बुदश्यामलं गोपालं वनमालिनं कमलिनं नन्दात्मजं चिन्तय ॥ ७ ॥ ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं

निष्क्रियं ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते। अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं कालिन्दीपुलिनेषु तत्किमपि यन्नीलं तमो धावति ॥८॥ इति कृष्णलीला ॥

## शिवस्तोत्रम्

ॐ विश्वेश्वराय नरकार्णवतारणाय, ज्ञानप्रदाय करुणामृतसागराय । कर्पूरकुन्दधवलेन्दुजटाधराय, दारिद्र्यदुःखदहनाय नमः शिवाय ॥१॥ गौरीप्रियाय निशिराजकलाधराय, लोकान्तकाय भुजगाधिपकङ्कणाय । गङ्गाधराय जलदानवमर्दनाय दारिद्र्यदुःखदहनाय नमः शिवाय ॥ २ ॥ भानुप्रियाय भवसागरनाशनाय कामान्तकाय कमलाप्रियपूजिताय । नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्य० ॥ ३ ॥ पञ्चाननाय फणिराजविभूषणाय स्वर्गापवर्गफलदाय विभूतिदाय । हैमांशुकाय भवनत्रयवन्दिताय दारिद्र्य० ॥ ४ ॥ भक्तिप्रियाय भवरोगभयापहाय दिव्याय दिव्यवसनाय गुणार्णवाय । तेजोमयाय सकलार्थदसंस्थिताय दारिद्र्य० ॥५॥ रामप्रियाय रघुनाथवरप्रदाय नाथप्रियाय नगराजसुताप्रियाय । पुण्याय पुण्यचरिताय सुरार्चिताय दारिद्र्य० ॥६॥ चर्माम्बराय चितिभसविलेपनाय भालेक्षणाय मणिकुण्डलमण्डिताय । मञ्जीरपादयुगलाय वृषध्वजाय दारिद्र्य०॥७॥ मुक्ताय यज्ञफलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय । मातङ्गचर्मवसनाय महेश्वराय दारिद्र्य० ॥ ८ ॥ वसिष्ठेन कृतं स्तोत्रं सर्वरोगनिकृन्तनम् । सर्वकामप्रदं नृणां हत्याकोटिविनाशनम् ॥ ९ ॥ ब्रह्मघ्नो वा सुरापो वा स्त्रीहन्तागुरुतल्पगः । यः पठेच्छिवसान्निध्यं शिवसायुज्यमाप्नुयात् ॥ इति वसिष्ठकृतं शिवस्तोत्रम् ॥

## अथ महाराज्ञीसहस्रनामस्तोत्रम् ॥

श्रीदेवी । भगवन्वेदतत्त्वज्ञ तन्त्रमन्त्रविचक्षण । शरण्य सर्वलोकेश शरणागतवत्सल ॥ कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक् । मान्त्रिको भैरवेशान तन्मे गदितुमर्हसि ॥ श्रीभैरवः । या देवी निष्कला राज्ञी भगवत्यऽमलेश्वरी । सा सृजत्यवति व्यक्तं संहरिष्यति तामसी ॥ तस्या नामसहस्रं ते वक्ष्ये स्नेहेन पार्वति । अवाच्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम् ॥ परमार्थदं पुण्यं परमैश्वर्यकारणम् । सर्वागमरहस्याढ्यं सकलार्थप्रदीपकम् ॥ समस्तशोकशमनं महापातकनाशनम् । सर्वमन्त्रमयं दिव्यं राज्ञीनामसहस्रकम् ॥ अस्य श्रीभगवतीराज्ञीनामसहस्रस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, श्रीभूतेश्वरीराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः, क्लीं कीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं महाराज्ञीप्रसादसिद्ध्यर्थं पाठे होमे वा विनियोगः ॥ रां रीं रूं रैं रौं रः इति न्यासः प्राणायामः ॥ ध्यानं ॥ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरिगतामुरगोपवीताम् । खड्गाऽम्बुजाढ्यकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ ॐराज्यप्रदायै विद्महे पंचदशाक्षर्यै धीमहि । तन्नो राज्ञी प्रचोदयात् ३ मूलं ॐह्रीं श्रींरांक्लींसौःभगवत्यैराज्ञ्यैह्रींस्वाहा १०८ ॥ श्रीभैरवः ॥ ॐह्रींश्रींरांमहाराज्ञी क्लींसौःपञ्चदशाक्षरी । ह्रींस्वाहा त्र्यक्षरीविद्या पराभगवती विभा ॥ भास्वती भद्रिका भीमा भर्गरूपा मनस्विनी । माननीया मनीषा च मनोजा च मनोजवा ॥ मानदा मन्त्रविद्या च महाविद्या षडक्षरी । षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी शिवा ॥ शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी । महालक्ष्मी

महोरस्का महौजस्का महोदया ॥ मातङ्गी मोदकाहारा मदिरारुणलोचना। साध्वी शीलवती शाला सुधाकलशधारिणी। खड्गिनी पद्मिनी पद्मा पद्मकिञ्जल्करञ्जिता। हृत्पद्मवासिनी हृद्या पानपात्रधरा धरा॥ धराधरेन्द्रतनया दक्षिणा दक्षजा दया। दयावती महामेधा मोदिनी बोधिनी गदा॥ गदाधरार्चिता गोदा गङ्गा गोदावरी गया। महाप्रभावसंहिता महोरगविभूषणा॥ महामुनिकृतातिथ्या माध्वी मानवती मघा। बाला सरस्वती लक्ष्मीर्दुर्गा दुर्गतिनाशिनी। शारी शरीरमध्यस्था वैखरी खेचरीश्वरी। शिवदा शिववक्षःस्था कालिका त्रिपुरपुरी॥ पुरारिकुक्षिमध्यस्था मुरारिहृदयेश्वरी। बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी॥ मुण्डमालाञ्चिता मुद्रा क्षोभदा कर्षणक्षमा। ब्राह्मी नारायणी देवी कौमारी चापराजिता॥ रुद्राणी च शचीन्द्राणी वाराही वीरसुन्दरी। नारसिंही भैरवेशी भैरवाकारभीषणा॥ नागालङ्कारशोभाढ्या नागयज्ञोपवीतिनी। नागकङ्कणकेयूरा नागहारा सुरेश्वरी॥ सुरारिघातिनी पूता पूतना डाकिनी क्रिया। क्रियावती कृती कृत्या शाकिनी लाकिनी लया॥ लीलावती रसाकीर्णा नागकन्या मनोहरा। हारकङ्कणशोभाढ्या सदानन्दा शुभङ्करी॥ अट्टहासिनी मधुमती सरश्रीः सरमोहिनी। महोग्रवपुषी वार्ता वामाचारप्रिया सिरा॥ सुधामयी वेणुकरा वैरहा वामसुन्दरी। वारमध्यस्थिता वामा वामनेत्रा शशिप्रभा॥ शर्मदा शाङ्करी सीता रवीन्दुशिखिलोचना। मदिरा वारुणी वीणा गीतज्ञा मदिरावती॥ वटस्था वारुणी स्तुक्तिर्वटजा वटवासिनी।

वटुकी वीरसर्वेन्द्या स्तम्भिनी मोहिनी चमूः ॥ मुद्राङ्कुशह-स्तेड्या वराभयकरा कुटी । पाटीरद्रुमवल्ली च वटिका वटुके-श्वरी । इष्टदा कृषिभूः कीटी रेवतीरमणप्रिया । रोहिणी रेवती रम्या रमणा रोमहर्षिणी ॥ रसोल्लासा रसासारा सारिणी तारिणी तडित् ॥ तरी अरित्रहस्ता च तोतुला तरणिप्रभा । रत्नाकरप्रिया रम्भा रत्नालङ्कारशोभिता । रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा । षड्रसा द्विरसा माला मालाभरणभूषिता ॥ मालती मल्लिकामोदा मोदकाहारवल्लभा । वल्लरी मधुरा माया काशी काञ्ची अवन्तिका ॥ हसन्तिका हसन्ती च भ्रामरी च वसन्तिका । क्षेमा क्षेमङ्करी क्षामा क्षौमवस्त्रा क्षणेश्वरी ॥ क्षणदा क्षेमदा सीरा सीरपाणिसमर्चिता । क्रीता क्रीतातपा क्रूरा कमनीया कुलेश्वरी ॥ कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी । कारुण्या चैव काश्मीरी दूती द्वारवती ध्रुवा ॥ ध्रुवस्तुता द्रुतगतिः पीठेशी बगलामुखी । सुमुखी शोभनाऽनेकरत्ना ज्वालामुखी नुतिः ॥ अलकोज्जयिनी भोग्या भङ्ग्या भोगवती बला । धर्मराजपुरी पूर्णा पूर्णसत्वाऽमरावती ॥ अयोध्या योधनीया च युगमाता च यक्षिणी । यज्ञेश्वरी योगगम्या योगिध्येया यशस्विनी ॥ यशोवती च शोभाङ्गी चारुहासा चलाचला । हरेश्वरी हरेर्माया मायिनी वायुवेगिनी ॥ अम्बालिकाऽम्बा भर्गेशी भृगुकूटा महामतिः । कोशेश्वरी च कमला कीर्तिदा कीर्तिवर्धिनी ॥ कठोरवाक् कुहूमूर्तिश्चन्द्रबिम्बसमानना । चन्द्रकुङ्कुमलिप्ताङ्गी कनकाचलवासिनी ॥ मलयाचलसानुस्था हिमाद्रितनया तनुः । हिमाद्रि-

कुक्षिदेशस्था कुब्जिका कोसलेश्वरी ॥ कारैकनिगडा गूढा गूढ-
गुल्फाऽतिगोपिता । तनुजा तनुरूपा च चापबाणधरा [३००] नुतिः ।
धुरीणा धूम्रवाराही धूम्रकेशाऽरुणानना । अरुणेशी रतिः स्वा-
तिर्गरिष्ठा च गरीयसी ॥ महानसी महाकारा सुरासुरभयंकरी ।
अणुरूपा बृहज्ज्योतिरनिरुद्धा सरस्वती ॥ श्यामा श्याममुखी
शान्ता शान्तसन्तापहारिणी । गौर्गुण्या गोमयी गुह्या गोमती गु-
रुर्वाक् गतिः ॥ गीतसन्तोषसंसक्ता ग्राहिणी ग्रहिणी गुहा । गण-
प्रिया गजगतिर्गान्धारी गन्धमोदिनी ॥ गन्धमादनसानुस्था स-
ह्याचलकृतालया । गजाननप्रिया गव्या ग्रामिका ग्राहवाहना ॥
गुहप्रसूर्गुहावासा ग्रहमालाविभूषणा । कावेरी कुहक[४००]भ्रान्तिस्तर्क-
विद्या प्रियङ्करी । पीताम्बरा पटाकारा पताका सृष्टिदा सुधा ॥
दाक्षायणी दक्षसुता दक्षयज्ञविनाशिनी । ताराचक्रस्थिता तारा
तुरी तुर्या तुटिस्तुला ॥ सन्ध्यात्रयी सन्धिजरा सन्ध्या तारुण्य-
लालिता । ललिता लोहिता लुम्पा चम्पा कम्पा कुणसृणिः ॥
स्मृतिः सत्यवती स्वस्था समानी मानवर्धिनी । मनोमयी मन-
स्तुष्टिः कामधेनुः सनातनी ॥ सूक्ष्मरूपा सूक्ष्ममुखी स्थूलरूपा
कलावती । तलातलाश्रया सिन्धुस्त्र्यम्बिका लम्बिका जया ॥
सौदामिनी महादेवी सनकर्षिसमर्चिता । मन्दाकिनी च
यमुना विपाशा नर्मदानदी ॥ गण्डकी रावनी सिप्रा वितस्ता
च सरस्वती । रेवा चैरावती चेक्षुमती सागरवासिनी ॥
देवकी देवमाता च देवेशी देवसुन्दरी । दैत्यघ्नी दमनी दाता
दितिर्दितिजसुन्दरी ॥ विद्याधरी च विद्येशी विद्याधरजसु-
न्दरी । मेनका चित्रलेखा च चित्रिणी च तिलोत्तमा ॥

उर्वशी मोहिनी रम्भा अप्सरोगणसुन्दरी ॥ यक्षिणी यक्षलो-
केशी नरवाहनपूजिता ॥ यक्षेन्द्रतनया योग्या यक्षनायक-
सुन्दरी । मन्दोदरी करालाक्षी मेघनादवरप्रदा ॥ मेघवाहन-
सन्तुष्टा मेघमूर्तिश्च राक्षसी । रक्षोहर्त्री केकसी च रक्षोनायक-
सुन्दरी ॥ किन्नरी कम्बुकण्ठी च कलकण्ठस्वना स्वधा । किं-
मुखी हयवक्त्रा च केला किन्नरसुन्दरी । पिशाची राजमातङ्गी
चोच्छिष्टपदसंस्थिता । महापिशाचिनी चान्द्री पिशाचकुलसु-
न्दरी ॥ गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी । सिद्धिप्रदा
सिद्धवधूः सिद्धेशी सिद्धसुन्दरी ॥ भूतेश्वरी भूतलया भूतधात्री
भयापहा । भूतभीतिहरी भव्या भूतजा भूतसुन्दरी ॥ पृथ्वी
पार्थिवलोकेशी पृथा विष्णुसमर्चिता । वसुन्धरा वसुनता
पृथिवी भूमिसुन्दरी ॥ अम्बोधितनया लुप्ता जलजाक्षी जले-
श्वरी । अमूर्तिरम्मयी मारी जलस्था जलसुन्दरी ॥ तेजस्विनी
महोधात्री तेजस्वी सूर्यबिम्बगा । सूर्यकान्तिः सूर्यतेजास्तेजो-
रूपैकसुन्दरी ॥ वायुवाहा वायुमुखी वायुलोकैकसुन्दरी ।
गगनस्था खेचरेशी शून्यरूपा निराकृतिः ॥ निराभासा भास-
माना द्युतिराकाशसुन्दरी । क्षितिमूर्तिधराऽनन्ता क्षितिभृल्लोक-
सुन्दरी ॥ अब्धियाना रत्नशोभा वारुणेशी वरायुधा । पाश-
हस्ता पोषणा च वरुणेश्वरसुन्दरी ॥ अतिलोकरुचिर्ज्योतिः
पञ्चाननगतिस्थितिः । प्राणापानसमानेशा चोदानव्यानरू-
पिणी ॥ पञ्चवातगतिर्नाडीरूपिणी वातसुन्दरी । अग्निरूपा
वह्निशिखा वडवानलसन्निभा ॥ हेतिर्हव्यहुतज्योतिरग्निजा वह्नि-
सुन्दरी । सोमेश्वरी सोमकला सोमपानपरायणा ॥ सौम्यानना

सौम्यरूपा सोमस्था सोमसुन्दरी । सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी ॥ याज्ञिकी यज्ञभागेच्छा यजमानवरप्रदा । याजकी यज्ञविद्या च यजमानैकसुन्दरी ॥ आकाशगामिनी वन्द्या शब्दजाऽकाशसुन्दरी । मीनप्रिया मीननेत्रा मीनेशा मीनसुन्दरी ॥ कूर्मपृष्ठगता कूर्मी कूर्मजा कूर्मरूपिणी । वाराही वीरसूर्वर्ध्या वरारोहा मृगेक्षणा ॥ वराहमूर्तिर्वाचाला दंष्ट्रा वाराहसुन्दरी । नरसिंहाकृतिर्देवी दुष्टदैत्यनिषूदना ॥ प्रद्युम्नवरदा नारी नारसिंहैकसुन्दरी । वामजा वामनाकारा नारायणपरायणा ॥ बलिदानवदर्पघ्नी वामा वामनसुन्दरी । रामप्रिया रामकीला क्षत्रवंशक्षयङ्करी ॥ धर्नपुत्री राजकन्या रामा परशुधारिणी । भार्गवी भार्गवेष्टा च जमदग्निवरप्रदा । कुठारधारिणी रात्रिर्जामदग्न्यैकसुन्दरी । सीता लक्ष्मणसेव्या च रक्षःकुलविनाशिनी ॥ रामप्रिया च शत्रुघ्नी शत्रुघ्नभरतेष्टदा । लावण्यामृतधाराढ्या लवणासुरघातिनी ॥ लोहितास्या प्रसन्नास्या सुरामा रामसुन्दरी । कृष्णकेशा कृष्णमुखी यादवान्तकरी लया ॥ यादोगणार्चिता योग्या राधा श्रीकृष्णसुन्दरी । बुद्धप्रसूर्बुद्धदेवी जिनमार्गपरायणा ॥ जितक्रोधा जितालस्या जिनसेव्या जितेन्द्रिया । जिनवंशधरोग्रा च नीलान्ता बुद्धसुन्दरी ॥ काली कोलाहलप्रीता प्रेतवाहा पुरेश्वरी । कल्किप्रिया कम्बुधरा कलिकालैकसुन्दरी । विष्णुमाया ब्रह्ममाया शाम्भवी शववाहना ॥ इन्द्रावरजवक्त्रस्था स्थाणुपत्नी पलालिनी । जृम्भिनी जृम्भहर्त्री च लम्बमानकचाऽकुला ॥ कुलाकुलपदेशानी पददानफलप्रदा । कुलवागीश्वरी कुल्या कुलजा कुलसुन्दरी ॥ पुरन्दरेष्टा कारुण्यालया पुण्यजने-

श्वरी ॥ पुण्योत्साहा पापहर्त्री पाकशासनसुन्दरी ॥ सूर्यकोटि-
प्रतीकाशा सूर्यतेजोमयी मषी । लेखनी आजिता रज्जुरूपिणी
सूर्यसुन्दरी ॥ चन्द्रिका च सुधाधारा ज्योत्स्ना शीतांशुसुन्दरी ।
लोलाक्षी च शताक्षी च सहस्राक्षी सहस्रपात् ॥ सहस्रशीर्षा
चन्द्राक्षी सहस्रभुजवल्लिका । कोटिरत्नांशुशोभाढ्या शुभ्रवस्त्रा
शतानना ॥ शतानन्दा श्रुतिधरा पिङ्गलेडोग्रनादिनी । सुषुम्णा
हारकेयूरनूपुरारावसंकुला ॥ घोरनादा घोरमुखी चोन्मुखी
चोल्मुकायुधा । गोपिता गुर्जरी गाथा गायत्री वेदवल्लभा ॥
वल्लकी सुरनादा च नादविद्या नदीतटी । बिन्दुरूपा चक्रयो-
निर्बिन्दुनादस्वरूपिणी ॥ चक्रेश्वरी भैरवेशी महाभैरववल्लभा ।
कालभैरवबल्या च कल्पान्तरङ्गनर्तकी ॥ प्रलयानलधूम्राभा
योनिमध्यकृतालया । भूचरीखेचरीमुद्रा नवमुद्राविलासिनी ॥
वियोगिनी श्मशानस्था श्मशानार्चनतोषिता । भास्वराङ्गी
भर्गशिखा भर्गवामाङ्गवासिनी ॥ भद्रकाली विश्वकाली श्रीकाली
मेघकालिका । नीलकाली कालरात्रिः काली कामेशकालिका ॥
इन्द्रकाली पूर्वकाली पश्चिमाम्नायकालिका । श्मशानकालिका
श्रींह्रींकाली श्रीकृष्णकालिका ॥ क्रींकारोत्तरकाली श्रींहुंह्रींद-
क्षिणकालिका । सुन्दरी त्रिपुरेशानी त्रिकूटा त्रिपुरार्चिता ॥
त्रिनेत्रा त्रिपुराध्यक्षा त्रिपुटा पुटभैरवी । त्रिलोकजननी त्रेता
महात्रिपुरसुन्दरी ॥ कामेश्वरी कामकला कालकामेशसुन्दरी ।
द्व्यक्षरी त्र्यक्षरीदेवी भावना भुवनेश्वरी ॥ एकाक्षरी चतुष्कूटा
त्रिकूटेशी लयेश्वरी । चतुर्वर्णा चतुर्वेशी वर्णाढ्या चतुरक्षरी ॥
पञ्चाक्षरी च षड्वक्त्रा षट्कूटा च षडक्षरी । सप्ताक्षरी नवीनीवी

परमाष्टाक्षरीश्वरी ॥ नवमी पञ्चमी षष्ठी नागेशी च नवाक्षरी। दशाक्षरी दशास्येशी देविकैकादशाक्षरी ॥ द्वादशादित्यसंकाशा द्वादशी द्वादशाक्षरी। त्रयोदशी वेदगर्भा चाद्या त्रयोदशाक्षरी ॥ चतुर्दशाक्षरीविद्या विद्या पञ्चदशाक्षरी। षोडशी सर्वविद्येशी महाश्रीषोडशाक्षरी ॥ महाश्रीषोडशीविद्या चिन्तामणिमनुप्रिया। द्वाविंशत्यक्षरी श्यामा महाकालकुटुम्बिनी ॥ वज्रतारा कालतारा नारीतारोग्रतारिणी। कामतारा शब्दतारा शब्दतारा रसाश्रया ॥ रूपतारा गन्धतारा महानीलसरस्वती। कामज्वाला वह्निज्वाला ब्रह्मज्वाला जटाकुला ॥ विष्णुज्वाला जिष्णुशिखा भद्रज्वाला करालिनी। विकरालमुखी देवी कराली भूतिभूषणा ॥ चिता शवासना चिन्ता चितामण्डलमध्यगा। भूतभैरवसेव्या च भूतभैरवपालिनी ॥ बन्धकी बद्धसम्बन्धा भवबन्धविनाशिनी। भवानी देवदेवेशी दीक्षा दीक्षितपूजिता ॥ साधकेशी सिद्धिदात्री साधकानन्दवर्धिनी। साधकाश्रयभूता च साधकेष्टफलप्रदा ॥ रजोवती राजसी च रजकी च रजस्वला। पुष्पप्रिया पुष्पवती स्वयम्भूः पुष्पमालिका ॥ स्वयम्भूपुष्पगन्धाढ्या पुलस्त्यसुतघातिनी। पात्रहस्ता सुरापात्रार्पिताशा पीतभूषणा ॥ पिङ्गानना पिङ्गकेशी पिङ्गला पिङ्गलेश्वरी। मङ्गला मङ्गलेशानी सर्वमङ्गलमङ्गला ॥ पुरूरवेश्वरी पाशधरा चापधराऽध्वरा। पुण्यधात्री पुण्यमयी पुण्यलोकनिवासिनी ॥ होतृसेव्या हकारस्था मकारस्था सुखावहा। सुखी शोभावती सत्या सत्याचारपरायणा ॥ सत्यार्चना कुलेशानी वासुदेवकलाश्रया। सद्योजातकलादेवी शिवा घोरकलाकृतिः ॥ शर्वरी

क्षीरसदृशी क्षीरनीरविवेकिनी । वितर्कनिलया नित्यां नित्य-क्लिन्ना पराम्बिका ॥ पुरारिदयिता दीर्घा दीर्घनासाऽल्पभा-षिणी । काशिका कौशिकी कोशी कोशदां रूपवर्धिनी ॥ तुष्टिः पुष्टिः प्रजा प्रीता पूजिका पूजकप्रिया । प्रजावती गर्भवती गर्भपोषणपोषितां । शुक्लवासाः शुक्लरूपा शुचिहासा जयावहा । जानकी जन्यजनका जनतोषणतत्परा ॥ वादप्रिया वाद्यरता वन्दितां वातसुन्दरी । वाक्स्तम्भिनी कीरवाणी धीरा धीरधु-रन्धरी ॥ स्तनन्धयी सामधेनी निरानन्दा निरालया । समस्त-सुखदां शारी वारांनिधिवरप्रदा ॥ वालुकी वीरपानेष्टा वसुदात्री वसुप्रिया । शुक्रानन्दा शुक्ररसा शुक्रपूज्या शुकप्रियां ॥ शुकी च शुकहस्ता च समस्तनरकान्तका । समस्ततत्त्वनिलया भग-रूपा भगेश्वरी ॥ भगबिम्बा भगा हृद्या भगलिङ्गस्वरूपिणी । भगलिङ्गेश्वरी श्रीदा भगलिङ्गाऽमृतस्रवा ॥ क्षीराशना क्षीररुचि-राऽज्यपानपरायणा । मधुपानपरा प्रौढा पीवरांसा परम्परां ॥ पिलम्पिला पटोलेशा पाटलाऽरुणलोचना । क्षीराम्बुधिप्रिया क्षीवा सरला सरलायुधा ॥ सङ्ग्रामा सुनयां स्रस्ता संसृतिः सनकेश्वरी । कन्या कनकलेखा च कान्यकुब्जनिवासिनी ॥ काञ्चनाभतनुः काष्ठा कुष्ठरोगविनाशिनी । कठोरमूर्धजा कुन्ती कुन्तायुधधरा धृतिः ॥ चर्माम्बरा क्रूरनखी कठोराक्षी चतुर्भुजा । चतुर्वेदप्रिया चर्या चतुर्वर्गफलप्रदां ॥ ब्रह्माण्डचारिणी स्फूर्तिर्ब्रह्माणी ब्रह्मसंमिता । सत्कारकारिणी मूर्तिः सूतिका लतिका लता ॥ कल्पवल्ली कृशाङ्गी च कल्पपादपवासिनी । कल्पपाशा महाविद्या विद्याराज्ञी सुखाश्रया ॥ भूतराज्ञी विश्व-

राज्ञी लोकराज्ञी शिवाश्रयाँ। ब्रह्मराज्ञी विष्णुराज्ञी रुद्रराज्ञी जटाश्रया ॥ नागराज्ञी वंशराज्ञी वीरराज्ञी रजःप्रिया। सत्वराज्ञी तमोराज्ञी गुणराज्ञी चलाचला। वसुराज्ञी सत्यराज्ञी तपोराज्ञी जयप्रिया। मन्त्रराज्ञी वेदराज्ञी तन्त्रराज्ञी श्रुतिप्रियाँ। देवराज्ञी मन्त्रिराज्ञी दैत्यराज्ञी दयाकरा। कालराज्ञी प्रजाराज्ञी तेजोराज्ञी हराश्रया॥ गजराज्ञी गदाराज्ञी गणराज्ञी गुणाश्रया। पृथ्वीराज्ञी पयोराज्ञी वायुराज्ञी मदालसा ॥ सुराराज्ञी सुधाराज्ञी भीमराज्ञी भयोज्झिताँ। तथ्यराज्ञी जयाराज्ञी महाराज्ञी कुलाकृतिः ॥ वामराज्ञी चैनराज्ञी हलिराज्ञी हलेश्वरी। पराराज्ञी यक्षराज्ञी भूतराज्ञी शवासना ॥ वटुराज्ञी प्रेतराज्ञी शेषराज्ञी शमप्रदा। आकाशराज्ञी राज्येशी राज्यराज्ञी रतिप्रियाँ॥ पातालराज्ञी भूराज्ञी प्रेमराज्ञी विषापहा। सिद्धराज्ञी विभाराज्ञी ज्योतीराज्ञी विभास्वरी ॥ भास्वद्राज्ञी चन्द्रराज्ञी ताराराज्ञी खवासिनी। ग्रहराज्ञी लताराज्ञी वृक्षराज्ञी मतिप्रदा ॥ धीरराज्ञी मनोराज्ञी मनुराज्ञी च काश्यपी। मुनिराज्ञी रत्नराज्ञी युगराज्ञी मणिप्रभा ॥ सिन्धुराज्ञी नदीराज्ञी नदराज्ञी दरीस्थितिः। बिन्दुराज्ञी नादराज्ञी त्वात्मराज्ञी च सद्गतिः। पुत्रराज्ञी ध्यानराज्ञी जयराज्ञी सदेश्वरी। ईशानराज्ञी राज्ञीशी स्वाहाराज्ञी महत्तराँ॥ वह्निराज्ञी योगराज्ञी यज्ञराज्ञी चिदाकृतिः। जगद्राज्ञी तत्वराज्ञी वाग्राज्ञी विश्वरूपिणी ॥ पञ्चदशाक्षरी राज्ञी ॐह्रींभूतेश्वरीश्वरी ॥ इति नामस्तोत्रम् ॥ अथ नामावली ॥

ॐह्रींश्रींरांमहाराज्ञ्यै स्वाहा, क्लींसौःपञ्चादशाक्षर्यैह्रीं स्वाहा, त्र्यक्षरीविद्यायै, पराभगवत्यै, विभायै, भास्वत्यै, भद्रि-

कायै, भीमायै, भर्गरूपायै, महस्विन्यै, माननीयायै, मनीषायै, मनोजायै, मनोजवायै, मानदायै, मन्त्रविद्यायै, महाविद्यायै, षडक्षर्यै, षट्कूटायै, त्रिकूटायै, त्रय्यै, वेदत्रय्यै, शिवायै, शिवाकारायै, विरूपाक्ष्यै, शशिखण्डावतंसिन्यै, महालक्ष्म्यै, महोरस्कायै, महौजस्कायै, महोदर्यायै, मातङ्ग्यै, मोदकाहारायै, मदिरारुणलोचनायै, साध्व्यै, शीलवत्यै, शालायै, सुधाकलशधारिण्यै, खड्गिन्यै, पद्मिन्यै, पद्मायै, पद्मकिञ्जल्करञ्जितायै, हृत्पद्मवासिन्यै, हृद्यायै, पानपात्रधरायै, धरायै, धराधरेन्द्रतनयायै, दक्षिणायै, दक्षजायै, दयायै, दयावत्यै, महामेधायै, मेदिन्यै, बोधिन्यै, गदायै, गदाधरार्चितायै, गोधायै, गङ्गायै, गोदावर्यै, गयायै, महाप्रभावसहितायै, महोरगविभूषणायै, महामुनिकृतातिथ्यायै, माध्व्यै, मानवत्यै, मघायै, बालायै, सरस्वत्यै, लक्ष्म्यै, दुर्गायै, दुर्गतिनाशिन्यै, शार्यै, शरीरमध्यस्थायै, वैखर्यै, खेचरीश्वर्यै, शिवदायै, शिववक्षःस्थायै, कालिकायै, त्रिपुरायै, पुर्यै, पुरारिकुक्षिमध्यस्थायै, मुरारिहृदयेश्वर्यै, बलारिराज्यदायै, चण्ड्यै, चामुण्डायै, मुण्डधारिण्यै, मुण्डमालाञ्चितायै, मुद्रायै, क्षोभदायै, कर्षणक्षमायै, ब्राह्म्यै, नारायणीदेव्यै, कौमार्यै, अपराजितायै, रुद्राण्यै, शच्यै, इन्द्राण्यै, वाराह्यै, वीरसुन्दर्यै, नारसिंह्यै "तेजोसि" भैरवेश्यै स्वाहा ॥ ध्यानं ॥ भैरवाकारभीषणायै, नागालङ्कारशोभाढ्यायै, नागयज्ञोपवीतिन्यै, नागकङ्कणकेयूरायै, नागहारायै, सुरेश्वर्यै, सुरारिघातिन्यै, पूतायै, पूतनायै, डाकिन्यैक्रियायै, क्रियावत्यै, कुर्यै, कृत्यायै,

शाकिन्यै, हाकिन्यै, लयायै, लीलावत्यै, रसाकीर्णायै, नागकन्यायै, मनोहरायै, हारकङ्कणशोभाढ्यायै, सदानन्दायै, शुभङ्कर्यै, प्रहासिन्यै, मधुमत्यै, सरश्रियै, सरमोहिन्यै, महोग्रवपुष्यै, वार्तायै, वामाचारप्रियायै, सिरायै, सुधामय्यै, वेणुकरायै, वैरहायै, वामसुन्दर्यै, वारमध्यस्थितायै, वामायै, वामनेत्रायै, शशिप्रभायै, शर्मदायै, शाङ्कर्यै, सीतायै, रवीन्दुशिखिलोचनायै, मदिरायै, वारुण्यै, वीणायै, गीतज्ञायै, मदिरावत्यै, वटस्थायै, वारुण्यै, सूक्तये, वटुजायै, वटुवासिन्यै, वटुक्यै, वीरसुवे, वन्ध्यायै, स्तम्भिन्यै, मोहिन्यै, चम्वै, मुद्गराङ्कुशहस्तायै, ईड्यायै, वराभयकरायै, कुब्यै, पाटीरद्रुमवल्लयै, वटिकायै, वटुकेश्वर्यै, इष्टदायै, कृषिभुवे, कीर्ध्यै, रेवतीरमणप्रियायै, रोहिण्यै, रेवत्यै, रम्यायै, रमणायै, रोमहर्षिण्यै, रसोल्लासायै, रसासारायै, सारिण्यै, तारिण्यै, तडिते, तर्यै, अरित्रहस्तायै, तोतुलायै, तरणिप्रभायै, रत्नाकरप्रियायै, रम्भायै, रत्नालङ्कारशोभितायै, रुक्माङ्गदायै, गदाहस्तायै, गदाधरवरप्रदायै, षड्रसायै, द्विरसायै, मालायै, मालाभरणभूषितायै, मालत्यै, मल्लिकामोदायै, मोदकाहारवल्लभायै, वल्ल्यै, मधुरायै, "तेजोसि" मायायै, स्वाहा २००

॥ ध्यानं ॥ काश्यै, काञ्च्यै, अवन्तिकायै, हसन्तिकायै, हसन्त्यै, भ्रामर्यै, वसन्तिकायै, क्षमायै, क्षेमङ्कर्यै, क्षामायै, क्षौमवस्त्रायै, क्षणेश्वर्यै, क्षणदायै, क्षेमदायै, सीरायै, सीरपाणिसमर्चितायै, क्रीतायै, क्रीतातपायै, क्रूरायै, कमनीयायै, कुलेश्वर्यै, कूर्चबीजायै, कुठाराढ्यायै, कूर्मिण्यै, कूर्मसुन्दर्यै, कारुण्यायै, काश्मीर्यै, दूत्यै, द्वारवत्यै, ध्रुवायै, ध्रुवस्तुतायै, ध्रुवगतये, पी-

ठेश्यै, बगलामुख्यै, सुमुख्यै, शोभनायै, अनेकरतायै, ज्वाला-मुख्यै, नुतये, अलकायै, उज्जयिन्यै, भोग्यायै, भंग्यायै, भोग-वत्यै, बलायै, धर्मराजपुर्यै, पूर्णायै, पूर्णसत्वायै, अमरावत्यै, अयोध्यायै, योधिनीयायै, युगमात्रे, यक्षिण्यै, यज्ञेश्वर्यै, योगग-म्यायै, योगिध्येयायै, यशस्विन्यै, यशोवत्यै, शोभाङ्ग्यै, चारु-हासायै, चलाचलायै, हरेश्वर्यै, हरेमायायै, मायिन्यै, वायु-वेगिन्यै, अम्बालिकायै, अम्बायै, भर्गेश्यै, भृगुकूटायै, महा-मतये, कोशेश्वर्यै, कमलायै, कीर्तिदायै, कीर्तिवर्धिन्यै, कठोर-वाचे, कुहूमूर्तये, चन्द्रबिम्बसमाननायै, चन्द्रकुङ्कुमलिप्ताङ्ग्यै, कनकाचलवासिन्यै, मलयाचलसानुस्थायै, हिमाद्रितनयायै, तन्वे, हिमाद्रिकुक्षिदेशस्थायै, कुब्जिकायै, कोसलेश्वर्यै, कारैकनि-गडायै, गूढायै, गूढगुल्फायै, अतिगोपितायै, तनुजायै, तनुरू-पायै, चापबाणधरायै, नुतये, धुरीणायै, धूम्रवाराह्यै, धूम्रके-शायै, अरुणाननायै, अरुणेश्यै, रतये, "तेजोसि" स्वात्यै स्वाहा ३०० ॥ ध्यानं ॥ गरिष्ठायै, गरीयस्यै, महानस्यै, महाकारायै, सुरासुरभयङ्कर्यै, अणुरूपायै, बृहज्ज्योतिषे, अनिरुद्धायै, सर-स्वत्यै, श्यामायै, श्याममुख्यै, शान्तायै, शान्तसन्तापहारिण्यै, गवे, गुण्यायै, गोमय्यै, गुह्यायै, गोमत्यै, गुरुवाचे, गतये, गीतसन्तोषसंसक्तायै, ग्राहिण्यै, ग्रहिण्यै, गुहायै, गणप्रियायै, गजगतये, गान्धार्यै, गन्धमोदिन्यै, गन्धमादनसानुस्थायै, सह्याचलकृतालयायै, गजाननप्रियायै, गव्यायै, ग्रामिकायै, ग्राहवाहनायै, गुहप्रस्वै, गुहावासायै, ग्रहमालाविभूषणायै, का-वीर्यै, कुहकभ्रान्त्यै, तर्कविद्यायै, प्रियङ्कर्यै, पीताम्बरायै, पटा-

कारायै, पताकायै, सृष्टिदायै, सुधायै, दाक्षायण्यै, दक्षसुतायै, दक्षयज्ञविनाशिन्यै, ताराचक्रस्थितायै, तारायै, तुर्यै, तुर्यायै, तुटयै, तुलायै, सन्ध्यात्रय्यै, सन्धिजरायै, सन्ध्यायै, तारणलतायै, ललितायै, लोहितायै, लुम्पायै, चम्पायै, कम्पायै, कुणसृणये, सृतये, सत्यवत्यै, स्वस्थायै, समानायै, मानवर्धिन्यै, मनोमय्यै, मनस्तुष्ट्यै, कामधेन्वै, सनातन्यै, सूक्ष्मरूपायै, सूक्ष्ममुख्यै, स्थूलरूपायै, कलावत्यै, तलातलाश्रयायै, सिन्धवे, त्र्यम्बिकायै, लम्बिकायै, जयायै, सौदामिन्यै, महादेव्यै, सनकर्षिसमर्चितायै, मन्दाकिन्यै, यमुनायै, विपाशायै, नर्मदायै, गण्डक्यै, इरावत्यै, सिप्रायै, वितस्तायै, सरस्वत्यै, रेवायै, ऐरावत्यै, इक्षुमत्यै, सागरवासिन्यै, "तेजोऽसि" देवक्यै, स्वाहा ॥ ४०० । ध्यानं ॥ देवमात्रे, देवेश्यै, देवसुन्दर्यै, दैत्यघ्न्यै, दमन्यै, दात्रे, दित्यै, दितिजसुन्दर्यै, विद्याधर्यै, विद्येश्यै, विद्याधरजसुन्दर्यै, मेनकायै, चित्रलेखायै, चित्रिण्यै, तिलोत्तमायै, उर्वश्यै, मोहिन्यै, रम्भायै, अप्सरोगणसुन्दर्यै, यक्षिण्यै, यक्षलोकेश्यै, नरवाहनपूजितायै, यक्षेन्द्रतनयायै, योग्यायै, यक्षनायकसुन्दर्यै, मन्दोदर्यै, करालाक्ष्यै, मेघनादवरप्रदायै, मेघवाहनसन्तुष्टायै, मेघमूर्तये, राक्षस्यै, रक्षोहर्त्रे, केकस्यै, रक्षोनायकसुन्दर्यै, किन्नर्यै, कम्बुकण्ठ्यै, कलकण्ठसुनायै, स्वधायै, किंपुरुष्यै, हयवक्त्रायै, केलायै, किन्नरीसुन्दर्यै, पिशाच्यै, राजमातङ्ग्यै, उच्छिष्टपदसंस्थितायै, महापिशाचिन्यै, चान्द्र्यै, पिशाचकुलसुन्दर्यै, गुह्येश्वर्यै, गुह्यरूपायै, गुर्व्यै, गुह्यकसुन्दर्यै, सिद्धिप्रदायै, सिद्धवध्व्यै, सिद्धेश्यै, सिद्ध-

सुन्दर्यै, भूतेश्वर्यै, भूतलयायै, भूतधात्र्यै, भयापहायै, भूतभीतिहर्यै, भव्यायै, भूतजायै, भूतसुन्दर्यै, पृथ्व्यै, पार्थिवलोकेश्यै, पृथायै, विष्णुसमर्चितायै, वसुन्धरायै, वसुनतायै, पृथिव्यै, भूमिसुन्दर्यै, अम्भोधितनयायै, लुप्तायै, जलजाक्ष्यै, जलेश्वर्यै, अमूर्तये, अम्मव्यै, मायै, जलस्थायै, जलसुन्दर्यै, तेजस्विन्यै, महोधात्र्यै, तेजस्व्यै, सूर्यबिम्बगायै, सूर्यकान्तये, सूर्यतेजसे, तेजोरूपायै, एकसुन्दर्यै, वायुवाहायै, वायुमुख्यै, वायुलोकैकसुन्दर्यै, गगनस्थायै, देवचरिण्यै, शून्यरूपायै, निराकृतये, निराभासायै, भासमानायै, द्युतये "तेजोसि" आकाशसुन्दर्यै स्वाहा ५०० । ध्यानम् ॥ ॐक्षितिमूर्तिधरायै, अनन्तायै, क्षितिभृते, लोकसुन्दर्यै, अब्धियानायै, रत्नशोभायै, वारुणेश्यै, वरायुधायै, पाशहस्तायै, पोषणायै, वरुणेश्वरसुन्दर्यै, अतिलोकरुचये, ज्योतिषे, पञ्चाननकृतस्थितये, प्राणापानसमानेशायै, उदानव्यानरूपिण्यै, पञ्चवातगतये, नाडीरूपिण्यै, वातसुन्दर्यै, अग्निरूपायै, वह्निशिखायै, वाडवानलसन्निभायै, हेतये, हव्यहृतज्योतिषे, अग्निजायै, वह्निसुन्दर्यै, सोमेश्वर्यै, सोमकलायै, सोमपानपरायणायै, सौम्याननायै, सौम्यरूपायै, सोमस्थायै, सोमसुन्दर्यै, सूर्यप्रभायै, सूर्यमुख्यै, सूर्यजायै, सूर्यसुन्दर्यै, याज्ञिक्यै, यज्ञभागेच्छायै, यजमानवरप्रदायै, याजक्यै, यज्ञविद्यायै, यजमानैकसुन्दर्यै, आकाशगामिन्यै, वन्द्यायै, शब्दजायै, आकाशसुन्दर्यै, मीनप्रियायै, मीननेत्रायै, मीनेशायै, मीनसुन्दर्यै, कूर्मपृष्ठगतायै, कूर्म्यै, कूर्मजायै, कूर्मरूपिण्यै, वाराह्यै, वीरस्वै, वद्यायै, वरारोहायै, मृगेक्षणायै, वराहमूर्त्तये, वाचालायै, दं-

ष्ट्रायै, वाराहसुन्दर्यै, नारसिंहाकृतये, देव्यै, दुष्टदैत्यनिषूद-नायै, प्रद्युम्नवरदायै, नार्यै, नारसिंहैकसुन्दर्यै, वामजायै, वाम-नायै, कारायै, नारायणपरायणायै, बलिदानवदर्पघ्न्यै, वामायै, वामनसुन्दर्यै, रामप्रियायै, रामकीलायै, क्षत्रवंशक्षयङ्कर्यै, धन-पुत्र्यै, राजकन्यायै, रामायै, परशुधारिण्यै, भार्गव्यै, भार्गवे-ष्टायै, जमदग्निवरप्रदायै, कुठारधारिण्यै, रात्र्यै, जामदग्न्यैकसु-न्दर्यै, सीतायै, लक्ष्मणसेव्यायै, रक्षःकुलविनाशिन्यै, रामप्रि-यायै, शत्रुघ्न्यै, शत्रुघ्नभरतेष्टदायै, लावण्यामृतधाराढ्यायै, लव-णासुरघातिन्यै, लोहितास्यायै, "तेजोऽसि" प्रसन्नास्यायै स्वाहा ६०० ॥ ध्यानम् ॥ सुरामायै, रामसुन्दर्यै, कृष्णकेशायै, कृष्ण-मुख्यै, यादवान्तकर्यै, लयायै, यादोगणार्चितायै, योग्यायै, राधायै, श्रीकृष्णसुन्दर्यै, बुद्धप्रस्वै, बुद्धदेव्यै, जिनमार्गपराय-णायै, जितक्रोधायै, जितालस्यायै, जिनसेव्यायै, जितेन्द्रियायै, जिनवंशधरायै, उग्रायै, नीलान्तायै, बुद्धसुन्दर्यै, काल्यै, को-लाहलप्रीतायै, प्रेतवाहायै, पुरीश्वर्यै, कल्किप्रियायै, कम्बुधरायै, कलिकालैकसुन्दर्यै, विष्णुमायायै, ब्रह्ममायायै, शाम्भव्यै, शव-वाहनायै, इन्द्रावरजवक्षःस्थायै, स्थाणुपत्न्यै, पलालिन्यै, जृम्भि-न्यै, जृम्भहर्त्र्यै, लम्बमानकचाकुलायै, कुलाकुलपदेशान्यै, पद-दानफलप्रदायै, कुलवागीश्वर्यै, कुल्यायै, कुलजायै, कुलसुन्दर्यै, पुरन्दरेष्टायै, कारुण्यालयायै, पुण्यजनेश्वर्यै, पुण्योत्साहायै, पापहर्त्र्यै, पाकशासनसुन्दर्यै, सूर्यकोटिप्रतीकाशायै, सूर्यतेजो-मय्यै, मण्यै, लेखन्यै, भ्राजितायै, रज्जुरूपिण्यै, सूर्यसुन्दर्यै, चन्द्रिकायै, सुधाधारायै, ज्योत्स्नायै, शीतांशुसुन्दर्यै, लोला-

क्ष्यै, शताक्ष्यै, सहस्राक्ष्यै, सहस्रपादे, सहस्रशीर्षायै, चन्द्राक्ष्यै, सहस्रभुजवल्लिकायै, कोटिरत्नांशुशोभाढ्यायै, शुभ्रवस्त्रायै, शताननायै, शतानन्दायै, श्रुतिधरायै, पिङ्गलायै, इडायै, उग्रनादिन्यै, सुषुम्णायै, हारकेयूरनूपुरारवसंकुलायै, घोरनादायै, घोरमुख्यै, उन्मुख्यै, उल्मुकायुधायै, गोपितायै, गूर्ज्यै, गाथायै, गायत्र्यै, वेदवल्लभायै, वल्लक्यै, सुरनादायै, नादविद्यायै, नदीतट्यै, बिन्दुरूपायै, चक्रयोनये, बिन्दुनादस्वरूपिण्यै, चक्रेश्वर्यै, भैरवेश्यै, महाभैरववल्लभायै, कालभैरववल्लयायै, कल्पान्तरङ्गनर्तक्यै, "तेजोसि" प्रलयानलधूम्राभायै, स्वाहा ७०० ॥

ध्यानं ॥ योनिमध्यकृतालयायै, भूचरीखेचरीमुद्रायै, नवमुद्राविलासिन्यै, वियोगिन्यै, श्मशानस्थायै, श्मशानार्चनतोषितायै, भास्वराङ्ग्यै, भर्गशिखायै, भर्गवामाङ्गवासिन्यै, भद्रकाल्यै, विश्वकाल्यै, श्रीकाल्यै, मेघकालिकायै, नीलकाल्यै, कालरात्र्यै, काल्यै, कामेशकालिकायै, इन्द्रकाल्यै, पूर्वकाल्यै, पश्चिमाम्नायकालिकायै, श्मशानकालिकायै, श्रींह्रींकाल्यै, श्रींकृष्णकालिकायै, क्रींकारोत्तरकाल्यै, श्रींहुंह्रींदक्षिणकालिकायै, सुन्दर्यै, त्रिपुरेशान्यै, त्रिकूटायै, त्रिपुरार्चितायै, त्रिनेत्रायै, त्रिपुराध्यक्षायै, त्रिपुटायै, पुटभैरव्यै, त्रिलोकजनन्यै, त्रेतायै, महात्रिपुरसुन्दर्यै, कामेश्वर्यै, कामकलायै, कालकामेशसुन्दर्यै, त्र्यक्षर्यै, त्र्यक्षरीदेव्यै, भावनायै, भुवनेश्वर्यै, एकाक्षर्यै, चतुष्कूटायै, त्रिकूटेश्यै, लयेश्वर्यै, चतुर्वर्णायै, चतुर्वेश्यै, वर्णाढ्यायै, चतुरक्षर्यै, पञ्चाक्षर्यै, षड्वक्रायै, षट्कूटायै, षडक्षर्यै, सप्ताक्षर्यै, नवीनीव्यै, परमाष्टाक्षरीश्वर्यै, नवम्यै, पञ्चम्यै, षष्ठ्यै, नागेश्यै, नवाक्षर्यै,

दशाक्षर्यै, दशास्यै, देविकायै, एकादशाक्षर्यै, द्वादशादित्य-सङ्काशायै, द्वादश्यै, द्वादशाक्षर्यै, त्रयोदश्यै, वेदगर्भायै, वाद्यायै, त्रयोदशाक्षर्यै, चतुर्दशाक्षरीविद्यायै, पञ्चदशाक्षरी-विद्यायै, षोडशीविद्यायै, सर्वविद्येश्यै, महाश्रीषोडशाक्षर्यै, महा-श्रीषोडशीविद्यायै, चिन्तामणिमनुप्रियायै, द्वाविंशत्यक्षर्यै, श्या-मायै, महाकालकुटुम्बिन्यै, वज्रतारायै, कालतारायै, नारी-तारायै, उग्रतारिण्यै, कामतारायै, शब्दतारायै, शब्दताररसा-श्रयायै, रूपतारायै, गन्धतारायै, महानीलायै, सरस्वत्यै, काम-ज्वालायै, वह्निज्वालायै, ब्रह्मज्वालायै, जटाकुलायै, "तेजोसि" ॐविष्णुज्वालायै, स्वाहा ॥ ८०० ॥ ध्यानं ॥ ॐजिष्णुशिखायै, भद्रज्वालायै, करालिन्यै, विकरालमुखीदेव्यै, करालयै, भूतिभूष-णायै, चितायै, शवासनायै, चिन्तायै, चिन्तामण्डलमध्यगायै, भूतभैरवसेव्यायै, भूतभैरवपालिन्यै, बन्धकयै, बद्धसम्बन्धायै, भवबन्धविनाशिन्यै, भवान्यै, देवदेवेश्यै, दीक्षायै, दीक्षितपू-जितायै, साधकेश्यै, सिद्धिदात्र्यै, साधकानन्दवर्धिन्यै, साधका-श्रयभूतायै, साधकेष्टफलप्रदायै, रजोवत्यै, राजस्यै, रजकयै, रजस्वलायै, पुष्पप्रियायै, पुष्पवत्यै, स्वयम्भुवे, पुष्पमालिकायै, स्वयम्भूपुष्पगन्धाढ्यायै, पुलस्त्यसुतघातिन्यै, पात्रहस्तायै, सु-रापात्रार्पिताशायै, पीतभूषणायै, पिङ्गाननायै, पिङ्गकेश्यै, पि-ङ्गलायै, पिङ्गलेश्वर्यै, मङ्गलायै, मङ्गलेशान्यै, सर्वमङ्गलमङ्गलायै, पुरूरवेश्वर्यै, पाशधरायै, चापधरायै, अध्वरायै, पुण्यधात्र्यै, पुण्यमय्यै, पुण्यलोकनिवासिन्यै, होतृसेव्यायै, हकारस्थायै, मकारस्थायै, सुखावहायै, सुख्यै, शोभावत्यै, सत्यायै, सत्या-

चारपरायणायै, सत्यार्चनायै, कुलेशान्यै, वामदेवकलाश्रयायै, सद्योजातकलादेव्यै, शिवायै, घोरकलाकृत्यै, शर्वर्यै, क्षीरसदृश्यै, क्षीरनीरविवेकिन्यै, वितर्कनिलयायै, नित्यायै, नित्यक्लिन्नायै, परामि्बकायै, पुरारिदयितायै, दीर्घायै, दीर्घनासायै, अल्पभाषिण्यै, काशिकायै, कौशिक्यै, कोश्यै, कोशदायै, रूपवर्धिन्यै, तुष्ट्यै, पुष्ट्यै, प्रजायै, प्रीतायै, पूजकायै, पूजकप्रियायै, प्रजावत्यै, गर्भवत्यै, गर्भपोषणपोषितायै, शुक्रवाससे, शुक्ररूपायै, शुक्रहासायै, जयावहायै, जानक्यै, जन्यजनकायै, जनतोषणतत्परायै, वादप्रियायै, वाद्यरतायै, "तेजोसि" ॐवन्दितायैस्वाहा ॥ ९०० ॥ ध्यानं ॥ वातसुन्दर्यै, वाक्स्तम्भिन्यै, कीरवाण्यै, धीरायै, धीरधुरन्धर्यै, स्तनन्धय्यै, सामिधेन्यै, निरानन्दायै, निरामयायै, समस्तसुखदायै, शार्यै, वारांनिधिवरप्रदायै, वालुक्यै, वीरपानेष्टायै, वसुदात्र्यै, वसुप्रियायै, शुक्रानन्दायै, शुक्ररसायै, शुक्रपूज्यायै, शुक्रप्रियायै, शुक्यै, शुकहस्तायै, समस्तनरकान्तकायै, समस्ततत्त्वनिलयायै, भगरूपायै, भगेश्वर्यै, भगबिम्बायै, भगायै, हृद्यायै, भगलिङ्गस्वरूपिण्यै, भगलिङ्गेश्वर्यै, श्रीदायै, भगलिङ्गाऽमृतस्रवायै, क्षीराशनायै, क्षीररुचये, आज्यपानपरायणायै, मधुपानपरायै, प्रौढायै, पीवरांसायै, परम्परायै, पिलम्पिलायै, पटोलेशायै, पाटलायै, अरुणलोचनायै, क्षीराम्बुधिप्रियायै, क्षीवायै, सरलायै, सरलायुधायै, संग्रामायै, सुनयायै, स्रस्तायै, संसृतये, सनकेश्वर्यै, कन्यायै, कनकलेखायै, कान्यकुब्जनिवासिन्यै, काञ्चनाभतन्व्यै, काष्ठायै, कुष्ठरोगविनाशिन्यै, कठोरमूर्धजायै, कुन्त्यै, कुन्तायुधधरायै, धृत्यै,

चर्माम्बरायै, क्रूरनख्यै, कठोराक्ष्यै, चतुर्भुजायै, चतुर्वेदप्रियायै, चर्यायै, चतुर्वर्गफलंप्रदायै, ब्रह्माण्डचारिण्यै, स्फूर्तये, ब्रह्माण्यै, ब्रह्मसंमितायै, सत्कारकारिण्यै, मूर्तये, सूतिकायै, लतिकायै, लतायै, कल्पवल्ल्यै, कृशांग्यै, कल्पपादपवासिन्यै, कल्पपाशायै, महाविद्यायै, विद्याराज्ञ्यै, सुखाश्रयायै, भूतराज्ञ्यै, विश्वराज्ञ्यै, लोकराज्ञ्यै, शिवाश्रयायै ब्रह्मराज्ञ्यै, विष्णुराज्ञ्यै, रुद्रराज्ञ्यै, जटाश्रयायै, नागराज्ञ्यै, वंशराज्ञ्यै, वीरराज्ञ्यै, रजःप्रियायै, सत्वराज्ञ्यै, "तेजोसि"। ॐतमोराज्ञ्यै स्वाहा ॥ १००० ॥ ध्यानं ॥ गुणराज्ञ्यै, चलाचलायै, वसुराज्ञ्यै, सत्यराज्ञ्यै, तपोराज्ञ्यै, जपप्रियायै, मन्त्रराज्ञ्यै, वेदराज्ञ्यै, तन्त्रराज्ञ्यै, श्रुतिप्रियायै, देवराज्ञ्यै, मन्त्रिराज्ञ्यै, दैत्यराज्ञ्यै, दयाकरायै, कालराज्ञ्यै, प्रजाराज्ञ्यै, तेजोराज्ञ्यै, हराश्रयायै, गजराज्ञ्यै, गदाराज्ञ्यै, गणराज्ञ्यै, गुणाश्रयायै, पृथ्वीराज्ञ्यै, पयोराज्ञ्यै, वायुराज्ञ्यै, मदालसायै, सुराराज्ञ्यै, सुधाराज्ञ्यै, भीमराज्ञ्यै, भयोज्झितायै, तथ्यराज्ञ्यै, जयाराज्ञ्यै, महाराज्ञ्यै, कुलाकृतये, वामराज्ञ्यै, चैनराज्ञ्यै, हलिराज्ञ्यै, हलेश्वर्यै, पराराज्ञ्यै, यक्षराज्ञ्यै, भूतराज्ञ्यै, शवासनायै, वडराज्ञ्यै, प्रेतराज्ञ्यै, शेषराज्ञ्यै, शमप्रदायै, आकाशराज्ञ्यै, राज्येश्यै, राज्यराज्ञ्यै, रतिप्रियायै, पातालराज्ञ्यै, भूराज्ञ्यै, प्रेमराज्ञ्यै, विषापहायै, सिद्धराज्ञ्यै, विभाराज्ञ्यै, ज्योतीराज्ञ्यै, विभास्वर्यै, भास्वद्राज्ञ्यै, चन्द्रराज्ञ्यै, ताराराज्ञ्यै, खवासिन्यै, ग्रहराज्ञ्यै, लताराज्ञ्यै, वृक्षराज्ञ्यै, मतिप्रदायै, धीरराज्ञ्यै, मनोराज्ञ्यै, मनुराज्ञ्यै, काश्यप्यै, मुनिराज्ञ्यै, रत्नराज्ञ्यै, युगराज्ञ्यै, मणिप्रभायै, सिन्धुराज्ञ्यै, नदीराज्ञ्यै, नदराज्ञ्यै, दरीस्थितये,

बिन्दुराज्ञ्यै, नादराज्ञ्यै, आत्मराज्ञ्यै, सद्गतये, पुत्रराज्ञ्यै, ध्यानराज्ञ्यै, जयराज्ञ्यै, सदेश्वर्यै, ईशानराज्ञ्यै, राज्ञीज्ञ्यै, स्वाहाराज्ञ्यै, महत्तराये, वह्निराज्ञ्यै, योगराज्ञ्यै, यज्ञराज्ञ्यै, चिदाकृतये, जगद्राज्ञ्यै, तत्वराज्ञ्यै, वाग्राज्ञ्यै, विश्वरूपिण्यै, पञ्चदशाक्षरीराज्ञ्यै । तेजोसि ॥ ॐ ह्रीं भूतेश्वरीश्वर्यैस्वाहा ११०० ॥ इतीदं मन्त्रसर्वस्वं राज्ञीनामसहस्रकम् । पञ्चदशाक्षरीतत्त्वं तत्त्वसारं मनुप्रियम् ॥ सर्वतत्त्वमयं पुण्यं महापातकनाशनम् । सर्वसिद्धिप्रदं लोके सर्वरोगनिवर्हणम् ॥ महोत्पातप्रशमनं ग्रहशान्तिकरं परम् । सर्वदेवमयं श्राज्यं सर्वशत्रुभयापहम् ॥ सर्वदुःखौघशमनं सर्वशोकविनाशनम् । पठेद्वा पाठयेन्नाम्नां सहस्रं शक्तिसन्निधौ ॥ दूरादेव पलायन्ते विपदः शत्रुभीतयः । राक्षसा भूतवेतालाः पन्नगा हरिणद्विषः ॥ पठनाद्विद्रवन्त्याशु महाकालादिव प्रजाः । श्रवणात्पातकं नश्येच्छ्रावयेद्यः सुभाग्यवान् ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च । सहस्रनामपाठे तु फलमाप्नोति मानवः ॥ गङ्गास्नानसहस्राणि चान्द्रायणयुतानि च । तप्तकृच्छ्रस्य लक्षाणि पराकस्यायुतानि च ॥ सहस्रनामपाठस्य कलां नार्घन्ति षोडशीम् । सर्वसिद्धीश्वरं साध्यं राज्ञीनामसहस्रकम् ॥ मन्त्रगर्भं पठेद्यस्तु राज्यकामो महेश्वरि । वर्षमेकं शतावर्तं महाचीनक्रमाकुलः ॥ शक्तिपूजापरो रात्रौ स लभेद्राज्यमीश्वरि । श्मशाने तु लभेत्पुत्रं साक्षाद्वैश्रवणोपमम् ॥ परदारार्चनरतो भगबिम्बं स्मरन्सुधीः । पठेन्नामसहस्रं तु वसुकामो लभेद्धनम् ॥ रात्रौ वारत्रयं देवि पठेन्नामसहस्रकम् । मृदुविष्टरनिर्विष्टः क्षीरपानपरायणः ॥ स्वप्ने सिंहासनां राज्ञीं वरदां सोपि पश्यति ।

क्षीराचरणसन्तुष्टो वीरपानरसालसः ॥ यः पठेत्परया भक्त्या राज्ञीनामसहस्रकम् । स सद्यो मुच्यते घोरान्महापातकजाद्भयात् ॥ यः पठेत्साधको भक्त्या शक्तिवक्षःकृतासनः । शुक्रोच्चरेण काले तु तस्य हस्ते च सिद्धयः ॥ यः पठेन्निशि चक्राग्रः परस्त्रीध्यानतत्परः । सर्वस्वं वरमानन्दी स लभेत्संयुगे जयम् ॥ इदं नामसहस्रं तु सर्वमन्त्रमयं शिवे । भूर्जत्वचि लिखेद्रात्रौ चक्रार्चनसमागमे ॥ अष्टगन्धेन पूतेन वेष्टयेत् स्वर्णपत्रके । धारयेत्कण्ठदेशे तु सर्वसिद्धिः प्रजायते ॥ यो धारयेन्महारक्षां सर्वदेवातिदुर्लभाम् । रणे राजकुले द्यूते चौररोगाद्युपद्रवे ॥ समाप्नोति जयं सद्यः साधको धीरनायकः । श्रीचक्रं पूजयेद्यस्तु धारयेद्यो हि मस्तके ॥ पठेन्नामसहस्रं तु स्तोत्रं मन्त्रात्मकं तथा । किं किं न लभते कामं देवानामपि दुर्लभम् ॥ सुरापात्रं ततः संविच्चर्वणं मीनमांसकम् । नवकन्यासमायोगो मुद्रावीणारवाः प्रिये ॥ तत्सङ्गो गुरुसान्निध्यं राज्ञीश्रीचक्रमग्रतः । यस्य देवि स एव स्याद्योगी ब्रह्मविदीश्वरः ॥ इदं रहस्यं परमं भक्त्या तव मयोदितम् । अप्रकाश्यमदातव्यं न देयं यस्य कस्यचित् ॥ अन्यशिष्याय दुष्टाय दुर्जनाय दुरात्मने । गुरुभक्तिविहीनाय सुरास्त्रीनिन्दकाय च ॥ नास्तिकाय कुशीलाय न देयं तत्त्वदर्शिभिः ॥ देयं शिष्याय शान्ताय भक्तायाऽद्वैतवादिने ॥ दीक्षिताय कुलीनाय राज्ञीभक्तिपराय च । दत्त्वा भोगापवर्गत्वं लभेत्साधकसत्तमः ॥ इति नामसहस्रं तु राज्ञ्याः शिवमुखोद्गतम् । अत्यन्तदुर्लभं गोप्यं गोपनीयं स्वयोनिवत् ॥

इति श्रीरुद्रयामले तन्त्रे श्रीमहाराज्ञीनामसहस्रं समाप्तम् ॥

## अथ ज्वालामुखीसहस्रनामस्तोत्रम् ॥

युवाच ॥ ॐभगवन्सर्वधर्मज्ञ भक्तानामभयप्रद । पुरा मे
दत्तो वरः कैलाससानुतः ॥ कृपया परया नाथ तं मे
ो भव ॥ श्रीभैरव उवाच ॥ सत्यमेतन्मया प्रोक्तं वरं
ीति । तं प्रयच्छामि संसिद्ध्यै मनसा यदभीप्सितम् ॥
च ॥ ज्वालामुख्यास्त्वया देव सहस्राणि च तत्वतः ।
ब्रूहि नामानि यदि मे त्वत्कृपा भवेत् ॥ श्रीभैरवः ॥
म महादेवि ज्वालानामानि तत्त्वतः । सहस्राणि कलौ
दानि यथेप्सितम् ॥ अभक्ताय न दातव्यं सहस्राणां
म् । या सा ज्वालामुखी देवी त्रैलोक्यजननी स्मृता ।
मानि वक्ष्यामि दुर्लभानि जगत्त्रये । विना नित्यबलिं
रक्ष्यं साधकोत्तमैः । दुर्भिक्षे शत्रुभीतौ च मारणे स्त-
ठत् । सहस्राख्यं स्तवं देव्याः सद्यः सिद्धिर्भविष्यति ।
न्धाक्षतैः पुष्पैर्धूपैर्दीपैर्विना बलिम् । न रक्ष्यं साधके-
लानामसहस्रकम् । देवि सत्यं मया प्रोक्तं सर्वसिद्धिभ-
॥ ॐ अस्य श्रीज्वालामुखीसहस्रनामस्तोत्रस्य, भैरवऋषिः,
ः, अद्वैतरूपिणी ज्वालामुखी देवता, ह्रींबीजं, श्रींशक्तिः,
, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीज्वालामुखी-
यर्थं पाठे होमे वा विनियोगः ॥ हां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः
ः ॥ ध्यानं ॥ ॐ उद्यच्चन्द्रमरीचिसन्निभमुखीमेकाद-
ां पाशाम्भोजवराभयां करतलैः संबिभ्रतीमादरात् ।
कविलोचनां शशिकलाचूडां त्रिवर्गोज्ज्वलां प्रेतस्थां
ामण्डलशिखां ज्वालामुखीं नौम्यहम् ॥ ॐज्वालामुख्यै

## अथ ज्वालामुखीसहस्रनामस्तोत्रम् ॥

श्रीदेव्युवाच ॥ ॐभगवन्सर्वधर्मज्ञ भक्तानामभयप्रद। पुरा मे यत्त्वया दत्तो वरः कैलाससानुतः ॥ कृपया परया नाथ तं मे दातुं क्षमो भव ॥ श्रीभैरव उवाच ॥ सत्यमेतन्मया प्रोक्तं वरं वरय पार्वति । तं प्रयच्छामि संसिद्ध्यै मनसा यदभीप्सितम् ॥ श्रीदेव्युवाच ॥ ज्वालामुख्यास्त्वया देव सहस्राणि च तत्वतः । प्रोक्तानि ब्रूहि नामानि यदि मे त्वत्कृपा भवेत् ॥ श्रीभैरवः ॥ प्रवक्ष्यामि महादेवि ज्वालानामानि तत्त्वतः । सहस्राणि कलौ नृणां वरदानि यथेप्सितम् ॥ अभक्ताय न दातव्यं सहस्राणां स्तवोत्तमम् । या सा ज्वालामुखी देवी त्रैलोक्यजननी स्मृता । तस्या नामानि वक्ष्यामि दुर्लभानि जगत्त्रये । विना नित्यबलिं स्तोत्रं न रक्ष्यं साधकोत्तमैः । दुर्भिक्षे शत्रुभीतौ च मारणे स्तम्भने पठेत् । सहस्राख्यं स्तवं देव्याः सद्यः सिद्धिर्भविष्यति । विना गन्धाक्षतैः पुष्पैर्धूपैर्दीपैर्विना बलिम् । न रक्ष्यं साधकेनैव ज्वालानामसहस्रकम् । देवि सत्यं मया प्रोक्तं सर्वसिद्धिर्भविष्यति ॥ ॐ अस्य श्रीज्वालामुखीसहस्रनामस्तोत्रस्य, भैरवऋषिः, त्रिष्टुप्छन्दः, अद्वैतरूपिणी ज्वालामुखी देवता, ह्रींबीजं, श्रींशक्तिः, ॐकीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीज्वालामुखीप्रसादसिद्ध्यर्थं पाठे होमे वा विनियोगः ॥ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति न्यासः ॥ ध्यानं ॥ ॐ उद्यच्चन्द्रमरीचिसन्निभमुखीमेकादशाराब्जगां पाशाम्भोजवराभयां करतलैः संबिभ्रतीमादरात् । अग्नीन्द्वर्कविलोचनां शशिकलाचूडां त्रिवर्गोज्ज्वलां प्रेतस्थां ज्वलदग्निमण्डलशिखां ज्वालामुखीं नौम्यहम् ॥ ॐज्वालामुख्यै

विद्महे, जगद्भक्षिण्यै धीमहि, तन्नो ज्वाला प्रचोदयात् ॥ ३ ॥ मूलं ॥ ॐ ह्रींश्रींज्वालामुखि मम सर्वशत्रून् भक्षय भक्षय ह्रींफट् स्वाहा १०८ ॥ श्रीभैरवः ॥ ॐह्रींज्वालामुखी जैत्री श्रीज्योत्स्ना जयदा जया । औदुम्बरा महानीला शुक्रलिप्ता शची श्रुतिः । स्मयदा स्मयहर्त्री च स्मरशत्रुप्रियङ्करी । मानदा मोहिनी मत्ता माया बाला बलन्धरा । भगरूपा भगावासा भीरुण्डा भयघातिनी । भीतिर्भयानकास्या च भ्रूः सुभ्रूः सुखिनी सती । शूलिनी शूलहस्ता च शूलिग्रामाङ्कवासिनी । शशाङ्कजननी शीता शीतला शारिका शिवा । सुचिका मधुमन्मान्या त्रिवर्गफलदायिनी । त्रेता त्रिलोचना दुर्गा दुर्गमा दुर्गतिर्गतिः । पूता प्रुतिर्विसर्गा च सृष्टिकर्त्री सुखावहा । सुखदा सर्वमध्यस्था लोकमाता महेश्वरी । लोकेष्टा वरदा स्तुत्या स्तुतिर्द्रुतगतिर्नुतिः । नयदा नयनेत्रा च नवग्रहनिषेविता । अम्बा वरूथिनी वीरजननी वीरसुन्दरी । वीरसर्वाणी वार्ता वराभयकरा वधूः । वानीरतलगा वाम्या वामाचारफलप्रदा । वीरा चौर्यकरी शान्ता शार्दूलत्वक्क शर्वरी । शलभी शास्त्रमर्यादा शिवदा शम्बरान्तका । शम्बरारिप्रिया शम्भुकान्ता शशिनिभानना । शस्त्रायुधधरा धीरा ज्योतिर्दीप्तिर्जगत्प्रिया । जगती जित्वरी जारी मार्जारी पशुपालिनी । मेरुमध्यगता मैत्री मुसलायुधधारिणी । मान्या मन्त्रेष्टदा माध्वी माध्वीरसविघूर्णिता । मोदकाहारमत्ता च मत्तमातङ्गगामिनी । महेश्वरप्रियोन्मत्ता दार्वी दैत्यविमर्दिनी । देवेष्टा साधकेष्टा च साध्वी सर्वत्रगा समा । सन्तानकतरुच्छाया

सन्तुष्टाऽध्वश्रमापहा । शारदा शरदब्जाक्षी शरच्चन्द्रनिभा-
नना । नम्राङ्गी कर्कशाङ्गी च वज्राङ्गी वज्रधारिणी । वज्रेष्टा
वज्रकङ्काली वानरी वायुवेगिनी । वराकी कुलकी काम्या
कुलेष्टा कुलकामिनी । कुन्ता कामेश्वरी क्रूरा कुल्या कामान्त-
कारिणी । कुन्ती कुन्तधरा कुब्जा काष्टदा बगलामुखी ।
मृडानी मधुरा मूका प्रमत्ता वैन्धवीश्वरी । कुमारी कुष्टहा
काम्या कूवरी नडकूवरी । नगेश्वरी नगावासा नगपुत्री नगा-
रिहा । नागकन्या कुहू कुण्ठी करुणा कृपयान्विता । ककार-
वर्णरूपाढ्या ह्रीर्लज्जा श्रीः शुभाऽशुभा । खेचरी खगपुत्री च
खगनेत्रा खगेश्वरी । खाता खनित्री खस्था च जप्या जप्ता
जरात्मिका । जगतो जन्मदा जम्भी जम्बुवृक्षतलस्थिता । जा-
म्बूनदप्रिया सत्या सात्त्विकी सत्वसंस्थिता । सर्वमाता समा-
लोका लोकाख्यातिर्लयात्मिका । लूता लतारतिर्लाजा वाजिगा
वारुणीप्रिया । कुटिला कुत्सिता ब्राह्मी ब्रह्माणी ब्रह्मदा-
यिनी । व्रतेष्टा वाजिनी वस्तिर्वामनेत्रा वशङ्करी । शाङ्करी
शङ्करेष्टा च शशाङ्ककृतशेखरा । कुम्भेश्वरी कुरुघ्नी च पाण्डवेष्टा
परात्परा । महिषासुरसंहर्त्री माननीया मनुप्रिया । दक्षिणा
दक्षजा दक्षा द्राक्षा दूती धराद्युतिः । धर्मदा धर्मराजेष्टा
धर्मस्था धर्मपालिनी । धनदा धनिका धर्म्या पताका पार्वती
प्रजा । प्रजावती पुरी प्रज्ञा पूः पुत्री पत्रिवाहिनी । पत्रिहस्ता
च मातङ्गी पुत्रिका च पतिव्रता । पुष्टिः पुक्षा श्मशानस्था
देवी धनदसेविता । दयावती दयापूरा गयानिकटवासिनी ।
नर्मदा शर्मदा नन्दा नाकिनी नाकिसेविता । नासा संक्रा-

न्तिरीज्या च भैरवी छिन्नमस्तिका । श्यामा श्यामाम्बरा पीता पीतवस्त्रा कलावती । कुन्तकी कौतुकाचारा कुलधर्मप्रकाशिनी । शाम्भवी गारुडीविद्या गरुडासनसंस्थिता । विनता वैनतेयेष्टा वैष्णवी विष्णुपूजिता । वार्ताका वालुकावेत्री वेत्रहस्ता वराङ्गना । विवेकलोचना लुप्ता नौर्नारायणपूजिता । नारायणी च सुमुखी दुर्जया दुःखहारिणी । दुर्भाग्यहा दुराचारा दुष्टहर्त्री च द्वेषिणी । वाङ्मयी भारती भाषा मषी लेखकपूजिता । लेखपत्री च लोलाक्षी लास्या हास्या प्रियङ्करी । प्रमदा प्रणयज्ञा च प्रमाणप्रत्ययाङ्किता । वाराही कुब्जिकाकारा कारावन्धनमोक्षदा । उग्रा चोग्रतरोग्रेष्टा नृमान्या नारसिंहिका । नरनारायणस्तुत्या नरवाहनपूजिता । नृमुण्डा नूपुराढ्या च नृमाता त्रिपुरीश्वरी । दिव्यायुधोग्रतारा च त्र्यक्षा त्रिपुरमालिनी । त्रिनेत्रा कोटराक्षी च षट्चक्रस्था क्रमेश्वरी । क्रिमिका क्रिमियोनिश्च कला चन्द्रकला चमूः । चर्माम्बरा च चार्वङ्गी चञ्चलाक्षी च भद्रदा । भद्रकाली सुभद्रा च भद्राङ्गी प्रेतवाहिनी । सुषमा स्त्रीप्रिया कान्ता कौलिनी कुटिलालका । कुशब्दा कुगतिर्मध्या मध्यमा ज्या च काश्यपी । दक्षिणा कालिका काली कालभैरवपूजिता । क्लींकारी कुमतिर्वाणी वाणासुरनिसूदिनी । निर्मदा निर्ममेष्टा च नरयोनिर्निराश्रया । निर्विकारा निरीक्ष्या च निलया नृपपुत्रिणी । नृपसेव्या विरिञ्चेष्टा विशिष्टा विश्वमातृका । मातृकार्णविलिप्ताङ्गी मधुस्नाता मधुस्रवा । शुक्रेष्टा शुक्रसन्तुष्टा शुक्रस्नाता कृशोदरी । वृषा वृष्टिरनावृष्टिर्लभ्या लोभविवर्जिता । लुब्धिश्च

ललना लक्ष्या लक्ष्मी रामा रमा नुतिः । रेवा रम्भोर्वशी वश्या वासुकिप्रियकारिणी । शेषा शेषरता श्रेष्ठा शेषशायिनमस्कृता । शिष्या शर्वप्रिया शस्ता प्रशस्ता शम्भुसेविता । आशुशुक्षणिनेत्रा च क्षणदा क्षणसेविता । क्षुरिका कर्णिकासंस्था साचाराऽचाररूपिणी । चरित्री च धरित्रीशी देवदैत्येन्द्रपूजिता । गुणिनी गुणरूपा च त्रिगुणा निर्गुणा घृणा । घोषा गजाननेष्टा च गजाकारा गजप्रिया । गीता गीतप्रिया तथ्या पथ्या त्रिपुरसुन्दरी । पीनस्तनी च रमणी रमणेष्टा च मैथिली । पद्मा पद्मधरा वत्सा धेनुर्मेरुधरा मघा । मालती मधुरालापा मातृज्ञा मासिनी तथा । वैश्वानरप्रिया वेद्या चिकित्सा वैद्यपूजिता । वेदिका वारपुत्री च वयस्या वाग्भवी प्रसूः । क्रीता पद्मासना सिद्धा सिद्धलक्ष्मीः सरस्वती । सत्त्वश्रेष्ठा सत्त्वसंस्था सामान्या सामवायिका । साधकेष्टा च सत्पती सत्पुत्री सत्कुलाश्रया । समदा प्रमदा प्रान्ता परलोकगतिप्रदा । घोररूपा घोररावा मुक्तकेशी च मुक्तिदा । मोक्षदा बलदा मुक्तिर्भुक्तिर्बलिप्रिया बला । तिलप्रसूननासा च प्रसूना कुलशीर्षिणी । परद्रोहकरी पन्थाः पारावारसुता भगा । भगप्रिया भर्गरता होला हैमवतीश्वरी । हेरुकेष्टा वटुस्था च वटुमाता वटेश्वरी । नटिनी त्रोटिनी त्राता स्वसा सारवती सभा । सौभाग्यभाग्यदा भाग्या भोगदा भूः प्रभावती । चन्द्रिका कालहर्त्री च ज्योत्स्नोल्काऽशनिराह्विका । ऐहिक्यामुष्मिकी चोष्मा ग्रीष्मार्कद्युतिरूपिणी । ग्रीवा ग्रीष्मा नागकन्या कैलासाचलवासिनी । मल्ली मार्तण्डरूपा च मानहर्त्री

मनोरमा । मानिनी मानकर्त्री च मानसी तापसीश्वरी । पयःस्था तु परंब्रह्मस्तुता स्तोत्रप्रिया तनुः[३०] । तन्वी तनुतरा सूक्ष्मा स्थूला शूरप्रियाऽधमा । उत्तमा मणिभूषाढ्या मणिमण्डपसंस्थिता । भार्या[४०] तीक्ष्णा त्रपा चिन्ता चण्डिका चर्चिका चला । चण्डी चुल्ली चमत्कारकर्त्री हरिहरेश्वरी[५०] । हरिसेव्या कपिश्रेष्ठा चर्चिता चारुरूपिणी । चण्डेश्वरी चण्डरूपा मुण्डहस्ता मनोगतिः । पूता श्रोता[६०] पवित्रा च मज्जा मेध्या सुगन्धिनी । सुगन्धा पुष्पिणी पुष्पा प्रेरिता[७०] पवनेश्वरी । प्रेता क्रोधाकुला न्यस्ता न्यक्काराम्बरवाहिनी । स्रोतस्वती मधुमती वेदमाता सुरा सुधा । मत्स्या मत्स्येन्द्र[८०]पीठस्था वीरपानमदातुरा । पृथिवी तैजसी वृत्तिर्मूलाधारा प्रभा पृथुः । नागपाशधराऽनन्ता पाशहस्तप्रबोधिनी[९०] । प्रसाधना कलिङ्गाख्या मदनाशा मदद्रवा । मधुवीरा मदान्धा च पावनी वेदना स्मृतिः । बोधिका[१००] बोधिनी पुष्टिः काशी वाराणसी गया । कौशिक्युज्जयिनी धारा काश्मीरी कुङ्कुमालया[१०] । भूमिः सिन्धुः प्रभासा च गङ्गा गौरी शुभाश्रया । नानाविद्यामयी वेत्रवती गोदावरीनदी । गदहन्त्री[२०] गजारूढा चेन्द्राणी कुरुकौलिनी । कुलाचारा कुरूपा च सुरूपा रूपवर्जिता । चन्द्रभागा च यमुना यामी[३०] यमक्षयङ्करी । काम्भोजी सरयूश्चित्रा वितस्तैरावती झषा । चषका मथिका तन्त्री[४०] वीणा वेणुप्रियंकरी । कुण्डलिनी निर्विकारा गायत्री नरकान्तका । कृष्णा सरस्वती तापी पयोष्णी[५०] शतरुद्रिका । कावेरी शतपत्राभा शतबाहुः शतह्रदा । रेवती रोहिणी क्षिप्या क्षीणा क्षोणी[६०] क्षमा क्षया । क्षान्तिर्भ्रान्तिर्गुरुर्गुर्वी ग-

रिष्टा गोकुलालया । नादिनी कूँषिणी कृष्टा सत्कुटी भूमिका भ्रमा । विभ्राजमाना तीर्था च तीर्थाऽतीर्थफलप्रदा । तरुणी तापसी पाशीं विपाशा पाशधारिणी । पशूपहारसन्तुष्टा कुक्कुटी हंसवाहना । मदना विपुला काण्डी वेदकाण्डी विचित्रिंणी । स्वप्नावती सरित्सीताधारिणी मत्सरी चमत् । शतद्रूर्भारती कद्रूरनन्तानन्तशायिनी । वेदनाँ वासवी वेश्या पूतना पुष्पहासिनी । त्रिशक्तिः शक्तिरूपा च क्षुरमाता क्षुरी क्षुधा । मंन्दा मन्दाकिनी मुद्रा भूताभूतपतिव्रता । भूतेष्टा पञ्चभूतघ्नी स्वक्षा कोमलहासिनी । वासिनी कुहिका लम्बाँ लम्बकेशी सुकेशिनी । ऊर्ध्वकेशी विशालाक्षी घोरा पुण्यपतिव्रता । पांसुला पात्रहस्ता च खर्परी खर्परायुधा । केकरी काकिनी कुम्भी सुफला केकराकृतिः । विफला विजया श्रीदा श्रीदसेव्या शुभंकरी । शैत्या शीतालया शीधुपात्रहस्ता कृपावती । कारुण्यविश्वसारा च करुणा करुणाकुला । प्रज्ञाऽज्ञाना च षँड्वर्गा-षडास्या षण्मुखप्रिया । क्रौञ्ची क्रौञ्चाद्रिदलिनी दान्ता दारिद्र्यहारिणी । सुशीलभास्वरा साध्या साधनीया च सामगाँ । सप्तस्वरा सप्तिवाहा सप्तसप्तिविलोचना । स्थितिः क्षेमङ्करी स्वाहा वाचाली विधिभास्वरा । कालकण्ठी घोषधराँ सुग्रीवा स्कन्दसंरुचिः । शुचिस्मिता समुद्रेष्टा शशिनी वशिनी सुदृक् । सर्वज्ञा सर्वदा शौरी सुनासा सुरकन्यका । मीना मीनासुता भृङ्गी भृङ्गिनी हाटकेश्वरी । होटिका हारिणी लिङ्गाँ भगलिङ्गस्वरूपिणी । भगमाता च लिङ्गाख्या लिङ्गप्रीता कलिङ्गजा ! कुमारी युवतिः प्रौढा नवोढा प्रौढंरूपिणी । रम्या रजोवती

रज्जू राजोली राजसी घटी। कैवर्ती राक्षसी रात्री रात्रिश्चर-क्षयङ्करी। महोग्रा मुदिता भिल्ली भल्लहस्ता भयङ्करी। नीलाभा द्वारिका द्वाःस्था दारिकामध्यदेशगा। चित्रलेखा वसुमती सु-न्दराङ्गी वसुन्धरा। देवता पर्वतस्था च स्वयम्भूः परमाकृतिः। परमेशमुण्डमाला नागयज्ञोपवीतिनी। श्मशानकालिका श्मश्रुः प्रलयात्मप्रलोपिणी। प्रस्थस्था प्रस्थिनी प्रस्था धूम्रार्चिर्धूम्रधू-मिनी। धूम्राङ्गी धूम्रकेशा च कपिला कालनाशिनी। कङ्काली कालरूपा च कालमाता मलिम्लुची। शर्वाणी रुद्रपत्नी च रूक्षा रुद्रस्वरूपिणी। सन्ध्या त्रिसन्ध्या संपूज्या सर्वैश्वर्यप्रदा-यिनी। कुलजा सत्यलोकेशा सत्यवाक् सत्यवादिनी। सप्तस्वरा सत्यमयी हरिद्वारा हरिन्मयी। हरिद्रत्नमयी राशिर्ग्रहतारा तिथिस्तमी। तुम्बुरुस्त्रुटिका त्रोटिर्भुवनेशी भयापहा। राज्ञी राज्यप्रदा योग्या योगिनी भुवनेश्वरी। तुरीया च तमस्पारा व्रीडा भर्गी भयानका। कालरात्रिर्महारात्रिर्महाविद्या शिवा-लया। शिवसञ्ज्ञा शिवस्था च समाधिरग्निवाहना। अग्नीश्वरी सदाव्याप्तिर्व्रलाका बालरूपिणी। वटुकेशी वामरूपा सदसत्पुर-भैरवी। विघ्नहा खलहा गाथा कथा कन्था शुभाम्बरा। ऋ-तुजा ऋतुहा क्रान्ता माधवेशाऽमरावती। अरुणाक्षी विशा-लाक्षी पुण्यशीला विलासिनी। स्वमाता स्कन्दमाता च कृत्तिका भरणी बलिः। जिनेश्वरी सुकुशला गोपी गोपति-पूजिता। गुप्ता गोप्यतरा ख्याता प्रकटा गोपितात्मिका। कुलाम्नायवती कीला पूर्णा स्वर्णाङ्गदोत्सुका। उत्कण्ठा काल-कण्ठा च रक्तपा पानपाऽमला। सम्पूर्णचन्द्रवदना यशोदा

च यशस्विनी। आनन्दा सुन्दरी सर्वानन्दा नन्दात्मजाऽऽलया। विद्युत् खद्योतरूपा च सादरा जविका जनिः। मन्त्रदा मानदा मान्या सर्वपूज्या सुरेश्वरी। जनिकर्त्री जगद्रूपा जगद्वन्द्या प्रियङ्करी। मुग्धास्या मुग्धनेत्रा च लोकेशी च मनोरमा। वरदा शौर्यदा मुग्धा प्रेतस्था वह्निलोचना। अग्निमुखी महादीप्ती रौद्रा संहारकारिणी। बृहन्नेत्रा कृशाङ्गी च घोरा घोरतरा, शिवा। देवेन्द्रसेविता नित्या भार्ग्यदा सर्वमङ्गला। सौख्यदा शुभकर्त्री च भक्तानांहितकारिणी। जननी जनिहर्त्री च जम्भारिवरदा जनुः। जीर्णा जीमूतलक्ष्यां च जयिनी जयवर्धिनी। जलस्था च जयन्ती च जम्भारिप्रियकारिणी। सहस्रनामसम्पूर्णा देवी ज्वालामुखीश्वरी। महादेवी महेशानी महात्रिपुरसुन्दरी॥ इति नामस्तोत्रम्॥ अथ नामावली॥

ॐ ॐ ह्रींज्वालामुख्यैस्वाहा, जैत्र्यै, श्रींज्योत्स्नायै, जयदायै, जयायै, औदुम्बरायै, महानीलायै, शुक्रलिप्तायै, शच्यै, श्रुत्यै, स्मयदायै, स्मयहर्त्र्यै, स्मरशत्रुप्रियङ्कर्यै, मानदायै, मोहिन्यै, मत्तायै, मायायै, बालायै, बलन्धरायै, भगरूपायै, भगावासायै, भीरुण्डायै, भयघातिन्यै, भीत्यै, भयानकास्यायै, भ्रुवे, सुभ्रुवे, सुखिन्यै, सत्यै, शूलिन्यै, शूलहस्तायै, शूलिवामाङ्गवासिन्यै, शशाङ्कजनन्यै, शीतायै, शीतलायै, शारिकायै, शिवायै, स्रुचिकायै, मधुमन्मान्यायै, त्रिवर्गफलदायिन्यै, त्रेतायै, त्रिलोचनायै, दुर्गायै, दुर्गमायै, दुर्गतये, गतये, पूतायै, पुत्यै, विसर्गायै, सृष्टिकर्त्र्यै, सुखावहायै, सुखदायै, सर्वमध्यस्थायै, लोकमात्रे, महेश्वर्यै, लोकेष्टायै, वरदायै, स्तु-

त्यायै, स्तुतये, द्रुतगतये, नुतये, नयदायै, नयनेत्रायै, नवग्रहनिषेवितायै, अम्बायै, वरूथिन्यै, वीरजनन्यै, वीरसुन्दर्यै, वीरस्वै, वारुण्यै, वार्तायै, वराभयकरायै, वध्वै, वानीरतलगायै, वाम्यायै, वामाचारफलप्रदायै, वीरायै, चौर्यकर्यै, शान्तायै, शार्दूलत्वचे, शर्वर्यै, शलभ्यै, शास्त्रमर्यादायै, शिवदायै, शम्बरान्तकायै, शम्बरारिप्रियायै, शम्भुकान्तायै, शशिनिभाननायै, शस्त्रायुधधरायै, धीरायै, ज्योतिषे, दीप्तये, जगत्प्रियायै, जगत्यै, जित्वर्यै, जायै, मार्जार्यै, पशुपालिन्यै, मेरुमध्यगतायै, तेजोसिमत्र्यै स्वाहा ॥ ध्यानं ॥ ॐमुसलायुधधारिण्यैस्वाहा, ॐमान्यायै, मन्त्रेष्टदायै, माध्व्यै, माध्वीरसविघूर्णितायै, मोदकाहारमत्तायै, मत्तमातङ्गगामिन्यै, महेश्वरप्रियायै, उन्मत्तायै, दैत्यै, दैत्यविमर्दिन्यै, देवेष्टायै, साधकेष्टायै, साध्व्यै, सर्वत्रगायै, समायै, सन्तानकतरुच्छायायै, सन्तुष्टायै, अध्वश्रमापहायै, शारदायै, शरदब्जाक्ष्यै, शरच्चन्द्रनिभाननायै, नम्राङ्ग्यै, कर्कशाङ्ग्यै, वज्राङ्ग्यै, वज्रधारिण्यै, वज्रेष्टायै, वज्रकङ्काल्यै, वानर्यै, वायुवेगिन्यै, वराक्यै, कुलक्यै, काम्यायै, कुलेष्टायै, कुलकामिन्यै, कुन्तायै, कामेश्वर्यै, क्रूरायै, कुल्यायै, कामान्तकारिण्यै, कुन्त्यै, कुन्तधरायै, कुब्जायै, काष्टदायै, बगलामुख्यै, मृडान्यै, मधुरायै, मूकायै, प्रमत्तायै, बैन्दुवीश्वर्यै, कुमार्यै, कुष्टहायै, काम्यायै, कूवर्यै, नडकूवर्यै, नगेश्वर्यै, नागावासायै, नगपुत्र्यै, नगारिघ्ने, नागकन्यायै, कुह्वै, कुण्ठ्यै, करुणायै, कृपयान्वितायै, ककारवर्णरूपाढ्यायै, ह्रियै, लज्जायै, श्रियै, शुभायै, अशुभायै, खेचर्यै, खगपुत्र्यै, खगनेत्रायै, खगेश्वर्यै, खातायै,

खनित्र्यै, खस्थायै, जप्यायै, जप्तायै, जरांत्मिकायै, जगतो-
जन्मदायै, जम्भ्यै, जम्बुवृक्षतलस्थितायै, जाम्बूनदप्रियायै,
सत्यायै, सात्त्विकयै, सत्त्वसंस्थितायै, सर्वमात्रे, समालोकायै,
लोकाख्यांत्यै, लयात्मिकायै, लूतायै, लतारतये, लाजाभ्यः,
वाजिगायै वारुणीप्रियायै, कुटिलायै, कुत्सितायै, ब्राह्म्यै,
तेजोसि ॐ ब्रह्माण्यैस्वाहां ॥ ध्यानं ॥ ॐ ब्रह्मदायिन्यै स्वाहा,
व्रतेष्टायै, वाजिन्यै, वस्त्यै, वामनेत्रायै, वशङ्कर्यै, शाङ्कर्यै, शङ्क-
रेष्टायै, शशाङ्ककृतशेखरायै, कुम्भेश्वर्यै, कुरुघ्न्यै, पाण्डवेष्टायै,
परात्परायै, महिषासुरसंहर्त्र्यै, माननीयायै, मनुप्रियायै, दक्षि-
णायै, दक्षजायै, दक्षायै, द्राक्षांयै, दूत्यै, धराद्युतये, धर्मदायै,
धर्मराजेष्टायै, धर्मस्थायै, धर्मपालिन्यै, धनदायै, धनिकायै,
धर्म्यायै, पताकांयै, पार्वत्यै, प्रजायै, प्रजावत्यै, पुर्यै, प्रज्ञायै,
पुरे, पुत्र्यै, पत्रिवाहिन्यै, पत्रिहस्तायै, मांतंग्यै, पुत्रिकायै,
पतिव्रतायै, पुष्ट्यै, पुक्षायै, श्मशानस्थायै, देव्यै, धनदसेवि-
तायै, दयावत्यै, दयापूरायै, गयानिकटवांसिन्यै, नर्मदायै,
शर्मदायै, नन्दायै, नाकिन्यै, नाकिसेवितायै, नासायै, सङ्क्रान्त्यै,
ईड्यायै, भैरव्यै, च्छिन्नमस्तंकायै, श्यामायै, श्यामाम्बरायै,
पीतायै, पीतवस्त्रायै, कलावत्यै, कुन्तकयै, कौतुकाचारायै, कुल-
धर्मप्रकाशिन्यै, शाम्भव्यै, गारुडीविद्यांयै, गरुडासनसंस्थितायै,
विनतायै, वैनतेयेष्टायै, वैष्णव्यै, विष्णुपूजितायै, वार्तांकायै,
वालुकायै, वेत्र्यै, वेत्रहस्तायै, वराङ्गनांयै, विवेकलोचनायै,
लुप्तायै, नावे, नारायणपूजितायै, नारायण्यै, सुमुख्यै, दुर्जयायै,
दुःखहारिण्यै, दुर्भाग्यहायै, दुरांचारायै, दुष्टहर्त्र्यै, द्वेषिण्यै, वा-

श्रव्यै, भारत्यै, भाषायै, मष्यै, लेखकपूजितायै, लेखपत्र्यै, लोलाक्ष्यै, तेजोऽसि ॥ ॐ लास्यायै स्वाहा ॥ ध्यानम् ॥ ॐ हास्यायै स्वाहा, प्रियङ्कर्यै, प्रमदायै, प्रणयज्ञायै, प्रमाणप्रत्ययाङ्कितायै, वाराह्यै, कुब्जिकाकारायै, कारावन्धनमोक्षदायै, उग्रायै, उग्रतरायै, उग्रेष्टायै, नृमान्यायै, नारसिंहिकायै, नरनारायणस्तुत्यायै, नरवाहनपूजितायै, नृमुण्डायै, नूपुराढ्यायै, नृमात्रे, त्रिपुरीश्वर्यै, दिव्यायुधायै, उग्रतारायै, त्र्यक्षायै, त्रिपुरमालिन्यै, त्रिनेत्रायै, कोटराक्ष्यै, षट्चक्रस्थायै, क्रमेश्वर्यै, क्रिमिकायै, क्रिमियोनये, कलायै, चन्द्रकलायै, चम्वै, चर्माम्बरायै, चार्वङ्ग्यै, चञ्चलाक्ष्यै, भद्रदायै, भद्रकाल्यै, सुभद्रायै, भद्राङ्ग्यै, प्रेतवाहिन्यै, सुषमायै, स्त्रीप्रियायै, कान्तायै, कौलिन्यै, कुटिलालकायै, कुशब्दायै, कुगतये, मेध्यायै, मध्यमायै, ज्यायै, काश्यप्यै, दक्षिणाकालिकायै, काल्यै, कालभैरवपूजितायै, क्लींकार्यै, कुमत्यै, वाण्यै, बाणासुरनिसूदिन्यै, निर्मदायै, निर्ममेष्टायै, नरयोनये, निराश्रयायै, निर्विकारायै, निरीक्ष्यायै, निलयायै, नृपपुत्रिण्यै, नृपसेव्यायै, विरिञ्चेष्टायै, विशिष्टायै, विश्वमातृकायै, मातृकार्णविलिप्ताङ्ग्यै, मधुस्नातायै, मधुस्रवायै, शुक्रेष्टायै, शुक्रसन्तुष्टायै, शुक्रस्नातायै, कृशोदर्यै, वृषायै, वृष्ट्यै, अनावृष्ट्यै, लुभ्यायै, लोभविवर्जितायै, लुब्ध्यै, ललनायै, लक्ष्यायै, लक्ष्म्यै, रामायै, रमायै, नुतये, रेवायै, रम्भायै, उर्वश्यै, वश्यायै, वासुकिप्रियकारिण्यै, शेषायै, शेषरतायै, श्रेष्ठायै, शेषशायिनमस्कृतायै, शिष्यायै, तेजोऽसि ॐ शर्वप्रियायै स्वाहा, । ध्यानम् ॥ ॐ शस्तायैस्वाहा, प्रशस्तायै, शम्भुसेवितायै, आशुशुक्षणिनेत्रायै, क्ष-

णदायै, क्षणसेवितायै, क्षुरिकायै, कर्णिकासंस्थायै, साचारायै, आचाररूपिण्यै, चरित्र्यै, धरित्रीश्यै, देवदैत्येन्द्रपूजितायै, गुणिन्यै, गुणरूपायै, त्रिगुणायै, निर्गुणायै, घृणायै, घोषायै, गजाननेष्टायै, गजाकारायै, गजप्रियायै, गीतायै, गीतप्रियायै, तथ्यायै, पथ्यायै, त्रिपुरसुन्दर्यै, पीनस्तन्यै, रमण्यै, रमणेष्टायै, मैथिल्यै, पद्मायै, पद्मधरायै, वत्सायै, धेन्वै, मेरुधरायै, मघायै, मालत्यै, मधुरालापायै, मातृजायै, मासिन्यै, वैश्वानरप्रियायै, वैद्यायै, चिकित्सायै, वैद्यपूजितायै, वेदिकायै, वारपुत्र्यै, वयस्यायै, वाग्भव्यै, प्रस्वै, क्रीतायै, पद्मासनायै, सिद्धायै, सिद्धलक्ष्म्यै, सरस्वत्यै, सत्वश्रेष्टायै, सत्त्वसंस्थायै, सामान्यायै, सामवायिकायै, साधकेष्टायै, सत्पत्न्यै, सत्पुत्र्यै, सत्कुलाश्रयायै, समदायै, प्रमदायै, प्रान्तायै, परलोकगतिप्रदायै, घोररूपायै, घोररावायै, मुक्तकेश्यै, मुक्तिदायै, मोक्षदायै, बलदायै, मुक्तये, भुक्तये, बलिप्रियायै, बलायै, तिलप्रसूननासायै, प्रसूनायै, कुलशीर्षिण्यै, परद्रोहकर्यै, पथे, पारावारसुतायै, भगायै, भगप्रियायै, भर्गरतायै, होलायै, हैमवत्यै, ईश्वर्यै, हेरुकेष्टायै, वटुस्थायै, वटुमात्रे, वटेश्वर्यै, नटिन्यै, त्रोटिन्यै, त्रात्रे, स्वस्रे, सारवत्यै, सभायै, तेजोसि ॐ सौभाग्यभाग्यदायै स्वाहा ॥ ध्यानम् ॥ ॐ भाग्यायै स्वाहा, भोगदायै, भुवे, प्रभावत्यै, चन्द्रिकायै, कालहर्त्र्यै, ज्योत्स्नायै, उल्कायै, अशनये, आह्निकायै, ऐहिक्यै, आमुष्मिक्यै, उष्मायै, ग्रीष्मार्कद्युतिरूपिण्यै, ग्रीवायै, ग्रीष्मायै, नागकन्यायै, कैलासाचलवासिन्यै, मह्यै, मार्तण्डरूपायै, मानहर्त्र्यै, मनोरमायै, मानिन्यै, मानकर्त्र्यै, मानस्यै, तापसी-

श्वर्यै, पयःस्थायै, परंब्रह्मस्तुतायै, स्तोत्रप्रियायै, तंन्वै, तन्व्यै, तनुतरायै, सूक्ष्मायै, स्थूलायै, शूरप्रियायै, अधमायै, उत्तमायै, मणिभूषाढ्यायै, मणिमण्डपसंस्थितायै, भार्यांयै, तीक्ष्णायै, त्रपायै, चिन्तायै, चण्डिकायै, चर्चिकायै, चलायै, चण्ड्यै, चुह्ल्यै, चमत्कारकर्त्र्यै, हरिहरेश्वर्यै, हरिसेव्यायै, कपिश्रेष्ठायै, चर्चितायै, चारुरूपिण्यै, चण्डेश्वर्यै, चण्डरूपायै, मुण्डहस्तायै, मनोगतये, पूतायै, प्रोतांयै, पवित्रायै, मज्ञायै, मेध्यायै, सुगन्धिन्यै, सुगन्धायै, पुष्पिण्यै, पुष्पायै, प्रेरितायै, पवनेश्वर्यै, प्रेतांयै, क्रोधाकुलायै, न्यस्तायै, न्यक्काराम्बरवाहिन्यै, स्रोतस्वत्यै, मधुमत्यै, वेदमात्रे, सुरायै, सुधायै, मत्स्यायै मत्स्येन्द्रंपीठस्थायै, वीरपानमदातुरायै, पृथिव्यै, तैजस्यै, तृष्यै, मूलाधारायै, प्रभायै, पृथवे, नागपाशधरायै, अनन्तायै, पाशहस्तंप्रबोधिन्यै, प्रसाधनायै, कलिङ्गाख्यायै, मदनाशायै, मदद्रवायै, मधुवीरायै, मदान्धायै, पावन्यै, वेदनायै, स्मृत्यै तेजोसि ॐ बोधिकायैस्वांहां ॥ ध्यानं ॥ ओंबोधिन्यैस्वाहा, पुष्ट्यै, काश्यै, वाराणस्यै, गयायै, कौशिक्यै, उज्जयिन्यै, धारायै, काश्मीर्यै, कुंकुंमालयायै, भूम्यै, सिन्ध्वै, प्रभासायै, गङ्गायै, गौर्यै, शुभाश्रयायै, नानाविद्यामय्यै, वेत्रवत्यै, गोदावरीनद्यै, गदहंर्त्र्यै, गजारूढायै, इन्द्राण्यै, कुरुकौलिन्यै, कुलाचारायै, कुरूपायै, सुरूपायै, रूपवर्जितायै, चन्द्रभागायै, यमुनायै, यांम्यै, यमक्षयङ्कर्यै, काम्भोज्यै, सरय्वै, चित्रायै, वितस्तायै, ऐरावत्यै, झषायै, चषकायै, मथिकायै, तंत्र्यै, वीणायै, वेणुप्रियङ्कर्यै, कुण्डलिन्यै, निर्विकारायै, गायत्र्यै, नरकान्तकायै, कृष्णायै, सरस्वत्यै, ताप्त्यै,

पयोष्ण्यै, शतरुद्रिकायै, कावेर्यै, शतपत्राभायै, शतबाहवे, शतह्रदायै, रेवत्यै, रोहिण्यै, क्षिप्यायै, क्षीणायै, क्षोण्यै, क्षमायै, क्षयायै, क्षान्त्यै, भ्रान्त्यै, गुरवे, गुर्व्यै, गरिष्ठायै, गोकुलालयायै, नादिन्यै, कृषिण्यै, कृष्टायै, सत्कुट्यै, भूमिकायै, भ्रमायै, विभ्राजमानायै, तीर्थायै, तीर्थातीर्थफलप्रदायै, तरुण्यै, तापस्यै, पाशायै, विपाशायै, पाशधारिण्यै, पशूपहारसन्तुष्टायै, कुकुट्यै, हंसवाहनायै, मदनायै, विपुलायै, काण्ड्यै, वेदकाण्ड्यै, विचित्रिण्यै, स्वप्नावत्यै, सरिते, सीताधारिण्यै, मत्सर्यै, चमते, शतद्रवै, भारत्यै कद्रवै, अनन्तानन्तशायिन्यै तेजोसि ॥ ॐ वेदनायैस्वाहा ॥ ध्यानं ॥ ॐ वासन्यैस्वाहा, वेश्यायै, पूतनायै, पुष्पहासिन्यै, त्रिशक्तये, शक्तिरूपायै, क्षुरमात्रे, क्षुर्यै, क्षुधायै, मन्दायै, मन्दाकिन्यै, मुद्रायै, भूताभूतपतिव्रतायै, भूतेष्टायै, पञ्चभूतङ्ग्यै, स्वक्षायै, कोमलहासिन्यै, वासिन्यै, कुहिकायै, लम्बायै, लम्बकेश्यै, सुकेशिन्यै, ऊर्ध्वकेश्यै, विशालाक्ष्यै, घोरायै, पुण्यपतिव्रतायै, पांसुलायै, पात्रहस्तायै, खर्पर्यै खर्परायुधायै, केकर्यै, काकिन्यै कुम्भ्यै, सफलायै, केकराकृतये, विफलायै विजयायै, श्रीदायै, श्रीदसेव्यायै, शुंभङ्कर्यै, शैत्यायै, शीतालयायै, शीधुपात्रहस्तायै, कृपावत्यै, कारुण्यविश्वसारायै, करुणायै, करुणाकुलायै, प्रज्ञायै, अज्ञानायै, षड्वर्गायै, षडास्यायै, षण्मुखप्रियायै, क्रौञ्च्यै, क्रौञ्चाद्रिदलिन्यै, दान्तायै, दारिद्र्यहारिण्यै, सुशीलभास्वरायै, साध्यायै, साधनीयायै, सामगायै, सप्तस्वरायै, सप्तिवाहायै, सप्तसप्तिविलोचनायै, स्थितये, क्षेमङ्कर्यै, स्वाहायै, वाचाल्यै,

विधिभास्वरायै, कालकण्ठ्यै, घोषधरायै, सुग्रीवायै, स्कन्दसं-रुचये, शुचिस्मितायै, समुद्रेष्टायै, शशिन्यै, वशिन्यै, सुदृशे, सर्वज्ञायै, सर्वदायै, शार्यै, सुनासायै, सुरकन्यकायै, मीनायै, मीनासुतायै, भृङ्ग्यै, भृङ्गिन्यै, हाटकेश्वर्यै, होटिकायै, हारिण्यै, लिङ्गायै, भगलिङ्गस्वरूपिण्यै, भगमात्रे, लिङ्गाख्यायै, लिङ्गप्रीतायै, कलिङ्गजायै, कुमार्यै, युवत्यै, प्रौढायै, नवोढायै, तेजोसि ॐ प्रौढरूपिण्यैस्वाहा ॥ ८०० ध्यानम् ॥ ॐ रम्यायैस्वाहा, रजोवत्यै, रज्वे, राजोल्यै, राजस्यै, घट्यै, कैवर्त्यै, राक्षस्यै, रात्र्यै, रात्रिश्चरक्षयङ्कर्यै, महोग्रायै, मुदितायै, भिद्दयै, भल्ल-हस्तायै, भयङ्कर्यै, नीलाभायै, द्वारिकायै, द्वाःस्थायै, द्वारिका-मध्यदेशगायै, चित्रलेखायै, वसुमत्यै, सुन्दराङ्ग्यै, वसुंधरायै, देवतायै, पर्वतस्थायै, स्वयम्भुवे, परमाकृतये, परमेशमुण्डमा-लायै, नागयज्ञोपवीतिन्यै, श्मशानकालिकायै, श्मश्रवे, प्रल-यात्मप्रलोपिन्यै, प्रस्थस्थायै, प्रस्थिन्यै, प्रस्थायै, धूम्रार्चिषे, धूम्रधूमिन्यै, धूम्राङ्ग्यै, धूम्रकेशायै, कपिलायै, कालनाशिन्यै, कङ्काल्यै, कालरूपायै, कालमात्रे, मलिम्लुच्यै, शर्वाण्यै, रुद्र-पत्न्यै, रूक्षायै, रुद्रस्वरूपिण्यै, संन्ध्यायै, त्रिसन्ध्यायै, संपूज्यायै, सर्वैश्वर्यप्रदायिन्यै, कुलजायै, सत्यलोकेशायै, सत्यवाचे, सत्य-वादिन्यै, सप्तस्वरायै, सत्यमय्यै, हरिद्वारायै, हरिन्मय्यै, हरि-द्रत्नमय्यै, राश्यै, ग्रहतारायै, तिथ्यै, तम्यै, तुम्बुरवे, त्रुटिकायै, त्रोट्यै, भुवनेश्यै, भयापहायै, राज्यै, राज्यप्रदायै, योग्यायै, योगिन्यै, भुवनेश्वर्यै, तुरीयायै, तमस्पारायै, व्रीडायै, भर्ग्यै, भयानकायै, कालरात्र्यै, महारात्र्यै, महाविद्यायै, शिवा-

लयायै, शिवसङ्गायै, शिवस्थायै, समाध्यै, अग्निवाहनायै, अग्नीश्वर्यै, सदाव्याप्त्यै, बलाकायै, बालरूपिण्यै, वटुकेश्यै, वामरूपायै, सते, असते, पुरभैरव्यै, विघ्नहायै, तेजोसि ॐ खलहायै स्वाहा ॥ ध्यानम् ॥ गाथायै, कथायै, कन्थायै, शुभाम्बरायै, ऋतुजायै, क्रतुहायै, क्रान्तायै, माधवेशायै, अमरावत्यै, अरुणाक्ष्यै, विशालाक्ष्यै, पुण्यशीलायै, विलासिन्यै, स्वमात्रे, स्कन्दमात्रे, कृत्तिकायै, भरण्यै, बलये, जिनेश्वर्यै, सुकुशलायै, गोप्यै, गोपतिपूजितायै, गुप्तायै, गोप्यतरायै, ख्यातायै, प्रकटायै, गोपितात्मिकायै, कुलाम्नायवत्यै, कीलायै, पूर्णायै, स्वर्णाङ्गदायै, उत्सुकायै, उत्कण्ठायै, कालकण्ठायै, रक्तपायै, पानपायै, अमलायै, सम्पूर्णचन्द्रवदनायै, यशोदायै, यशस्विन्यै, आनन्दायै, सुन्दर्यै, सर्वानन्दायै, नन्दात्मजायै, आलयायै, विद्युते, खद्योतरूपायै, सादरायै, जविकायै, जन्यै मन्त्रदायै, मानदायै, मान्यायै, सर्वपूज्यायै, सुरेश्वर्यै, जनिकर्त्र्यै, जगद्रूपायै, जगद्वन्द्यायै, प्रियङ्कर्यै, मुग्धास्यायै, मुग्धनेत्रायै, लोकेश्यै, मनोरमायै, वरदायै, शौर्यदायै, मुग्धायै, प्रेतस्थायै, वह्निलोचनायै, अग्निमुख्यै, महादीप्त्यै, रौद्रायै, संहारकारिण्यै, बृहन्नेत्रायै, कृशाङ्ग्यै, घोरायै, घोरतरायै, शिवायै, देवेन्द्रसेवितायै, नित्यायै, भाग्यदायै, सर्वमङ्गलायै, सौख्यदायै, शुभकर्त्र्यै, भक्तानांहितकारिण्यै, जनन्यै जनिहर्त्र्यै, जम्भारिवरदायै, जनवे, जीर्णायै, जीमूतलक्ष्यायै, जयिन्यै, जयवर्धिन्यै, जलस्थायै, जयन्त्यै, जम्भारिप्रियकारिण्यै, सहस्रनामसम्पूर्णायै ज्वालामुखीश्वरीदेव्यै, महादेव्यै, महेशान्यै, तेजोसि ॐ महात्रिपुरसुन्दर्यैस्वाहा ॥ इति

नाम्नां सहस्रं तु ज्वालामुख्याः शिवोदितम् । चतुर्वर्गप्रदं नित्यं बीजत्रयप्रकाशितम् । मुक्त्यैकहेतुममलं भुक्तिमुक्तिप्रदं नृणाम् ॥ स्तुत्यं च साधनीयं च सर्वस्वं सारमुत्तमम् । महामन्त्रमयं विद्यामयं विद्याप्रदं परम् । परब्रह्मस्वरूपं च साक्षादमृतरूपिणम् । अद्वैतरूपिणं नाम्नां सहस्रं भैरवोदितम् । यः पठेत्पाठयेद्वापि शृणोति श्रावयेदपि । भक्त्या भक्तो महादेवि स भवेद्भैरवोपमः । शिवरात्र्यां च सङ्क्रान्तौ ग्रहणे जन्मवासरे । भैरवस्य बलिं दत्त्वा मूलमन्त्रेण मान्त्रिकः । पठेत्सहस्रनामेदं ज्वालामुख्याः सुदुर्लभम् । अनन्तफलदं गोप्यं त्रिसन्ध्यं यः पठेत्सुधीः । अणिमादिविभूतीनामीश्वरो मान्त्रिको भवेत् । अर्धरात्रे समुत्थाय शून्ये गेहे पठेदिदम् । नाम्नां सहस्रकं देवि त्रिवारं साधकोत्तमः । कर्मणा मनसा वाचा ज्वालामुख्याः सुतो भवेत् । मध्याह्ने प्रत्यहं गत्वा प्रेतभूमिं विधानवित् । नरमांसं बलिं दत्त्वा पठेन्नामसहस्रकम् । दिव्यदेहधरो भूत्वा विचरेद्भुवनत्रयम् । शनिवारे कुजेऽष्टम्यां पठेन्नामसहस्रकम् । दत्त्वा क्षीरबलिं तस्य करस्थाः सर्वसिद्धयः । विना नैवेद्यमात्रेण न रक्ष्यं साधकोत्तमैः । कुजवारे सदा देवि दत्त्वा बलिविधिं नरः । पठेत्साधक एवाशु लभेद्दर्शनमुत्तमम् । शनिवारे सदा विद्यां जप्त्वा दद्याद्बलिं प्रिये । कपोतस्य महेशानि पठेन्नामसहस्रकम् । तद्गृहे वर्धते लक्ष्मीर्गोकर्णमिव नित्यदा । शतावर्तं पठेद्रात्रौ साधको दर्शनं लभेत् । वन्ध्या वा काकवन्ध्या वा कुङ्कुमेन लिखेदिदम् । मस्तकेन च शुक्रेण भूर्जे नामसहस्रकम् । गले वा वामबाहौ वा धारयेत्प्रत्यहं प्रिये । वन्ध्या च लभते पुत्राञ्छु-

रान्विद्याधरोपमान् । इदं बध्वा सव्यबाहौ गत्वा रणधरां प्रति । निर्जित्य शत्रुसङ्घांस्तान्प्रत्यायाति सुखी गृहम् । वारत्रयं पठेन्नित्यं शत्रुनाशाय पार्वति । वारद्वयं पठेल्लक्ष्म्यै मुक्त्यै च शतधा पठेत् । वश्यार्थी दशधा नित्यं मारणार्थे च विंशति । स्तम्भनार्थे पठेन्मन्त्री सप्तधा मान्त्रिकोत्तमः । भूम्यर्थे त्रिंशधा देवि पठेन्नामसहस्रकम् । प्रत्यहमेकवारं तु मृतो मोक्षमवाप्नुयात् । अप्रकाश्यमदातव्यमवक्तव्यमभक्तिषु । असक्तायाऽकुलीनाय कुपुत्राय दुरात्मने । गुरुभक्तिविहीनाय दीक्षाहीनाय पार्वति । दत्त्वा कुष्ठी भवेल्लोके परत्र नरकं व्रजेत् । श्रद्धायुक्ताय भक्ताय साधकाय महात्मने । साचाराय सुशीलाय दत्त्वा मोक्षमवाप्नुयात् । यो धारयति पुण्यात्मा सोपि पुण्यवतां वरः ॥ इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये ज्वालामुखीसहस्रनामस्तोत्रं समाप्तम् ॥

---

## ॐ श्रीशारिकासहस्रनामस्तोत्रम् नामावली च ॥

श्रीभैरवी । या सा देवी पुरा ख्याता शारिकारूपधारिणी । जालन्धरराक्षसघ्नी प्रद्युम्नशिखरे स्थिता । तस्या नामसहस्रं मे मन्त्रगर्भं जयावहम् । कथयस्व महादेव यद्यस्ति मयि ते दया । श्रीभैरवः । या देवदेवी भद्राख्या त्रिकोटिदेवसंयुता । महासुरविनाशाय शारिकारूपधारिणी । कूटं सुमेरोः चञ्चग्रे समादायागताम्बिका । त्रयस्त्रिंशतिकोट्यश्च देवानां वै समागताः । तस्या नामसहस्रं ते मन्त्रगर्भं जयावहम् । कथयामि परां विद्यां सहस्राख्याभिधां शिवे । शिलायाः शारिकाख्यायाः परां

सर्वस्वरूपिणीम् । विना नित्यक्रियां देवि विना न्यासं विनार्चनम् । विना पुरस्क्रियां देवि होमार्चादि विना परम् । विना श्मशानगमनं विना समयपूजनम् । यया लभेत्फलं सर्वं तां विद्यां शृणु पार्वति । या देवी चेतना लोके शिलारूपास्ति शारिका । सृजत्यवति सा विश्वं संहरिष्यति तामसी । रजोगुणेन सृजति सत्त्वेनावति संसृतिम् । तमसा संहरेत्सैव त्रिब्रह्मरूपधारिणी । सैव संसारिणां देवी परमैश्वर्यदायिनी । परं पदं प्रदास्यन्ती महाविद्यात्मिका शिला । तस्या नामसहस्रं ते वर्णयामि सहस्रकम् । रहस्यं मम सर्वस्वं सकलाचारवल्लभम् । यो जपेत्परमां विद्यां पठेन्नामसहस्रकम् । धारयेत्कवचं दिव्यं पठेत्स्तोत्रेश्वरं परम् । किं तस्य दुर्लभं लोके नाप्नुयाद्यदीश्वरि ॥

॥ अस्य श्रीशारिकाभगवतीनामसहस्रस्य, महादेव ऋषिः, त्रिष्टुप्छन्दः, श्रीशारिकाभगवतीदेवता, शांबीजं, श्रींशक्तिः, फ्रां कीलकं, आत्मनो वाङ्मनः०—श्रीशारिकादेवीप्रसादसिद्ध्यर्थं पाठे होमे वा विनियोगः ॥ श्रां श्रीं श्रूं श्रैं श्रौं श्रः इतिन्यासः प्राणायामः ॥ ध्यानं ॥ बालार्ककोटिद्युतिमिन्दुचूडां वरासिचक्राभयबाहुमाद्याम् । सिंहाधिरूढां शिववामदेहलीनां भजे चेतसि शारिकेशीम् ॥ मूलं । ॐह्रींश्रींहूंफ्रांआंशांशारिकायैनमः ॥ शारिकायै विद्महे, पञ्चदशाक्षर्यै धीमहि, तन्नः शारी प्रचोदयात् ३ ॥ ॐह्रींश्रीं हूंफ्रांआंशांश्रीशारिका श्यामसुन्दरी । शिला शारी शुकी शान्ता शान्तमानसगोचरा । शान्तिस्था शान्तिदा शान्तिः श्यामा श्यामपयोधरा । देवी शशाङ्कबिम्बाढ्या शशाङ्ककृतशेखरा । शशाङ्कशोभिलावण्या शशाङ्कमध्यवासिनी । शार्दूलवाहा देवेशी शार्दूलचर्मवासिनी । गौरी पद्मावती पीना

पीनवक्षोजकुट्मला । पीताम्बरा रक्तदन्ता दाडिमीकुसुमप्रभा । स्फुरद्रत्नांशुखचिता रत्नमण्डलविग्रहा । रक्ताम्बरधरा क्षीबा रत्नमालाविभूषणा । रत्नसंमूर्च्छिताभाऽद्या दीप्ता दीप्तशिखा दया । दयावती कल्पलता कल्पान्तदहनोपमा । भैरवी भीमनादा च भयानकमुखी भगा । कारा कारुण्यरूपा च भगमालाविभूषणा । भगेश्वरी भगस्था च कुरुकुल्या कृशोदरी । कादम्बरी कचोत्कृष्टा परमा परमेश्वरी । सती सरस्वती सत्याऽसत्या सत्यस्वरूपिणी । परम्परा पटाकारा पाटला पाटलप्रभा । पद्मिनी पद्मवदना पद्मा पद्मकरा शिवा । शिवाश्रया शरच्छान्ता शची रम्भा विभावरी । द्युमणिः प्रस्तरा पाठा पीठेशी पीवराकृतिः । अचिन्त्या मुसलाधारा मातङ्गी मधुरस्वना । वीणा गीतप्रिया गाथा गारुडी गरुडध्वजा । अतीवसुन्दराकारा सुन्दरी सुन्दरालका । अलका नाकमध्यस्था नाकिनी नाकपूजिता । पातालेश्वरसंपूज्या पातालतलचारिणी । अनन्ताऽनन्तरूपा च स्वज्ञाता ज्ञानवर्धिनी । अमेया चाप्रमेया च ह्यनन्तादित्यरूपिणी । द्वादशादित्यसंपूज्या शमी श्यामाकबीजिनी । विभासा भास्वराऽवर्णा समस्तासुरघातिनी । सुधामयी सुधामूर्तिः सुधा सर्वप्रियङ्करी । सुखदा च सुरेशानी कृशानुवल्लभा हविः । स्वाहा स्वाहेशनेत्रा च वह्निवक्त्राग्नितर्पिता । सूर्याग्निसोमनेत्रा च भूर्भुवःस्वःस्वरूपिणी । भूमिर्भूदेवसंपूज्या स्वयम्भूः स्वात्मपूजका । स्वयम्भूपुष्पमालाढ्या स्वयम्भूपुष्पवल्लभा । आनन्दकन्दली कन्दा स्कन्दमाता शिवालया । शिलारूपा शिलेशानी शिला-

पूजनहर्षिता । चेतना चिद्भवाकारा भवपत्नी भयापहा । विघ्नेश्वरी गणेशानी गणमाता गणप्रसूः । गणेशमुख्यसम्पूज्या विघ्नविध्वंसिनी निशा । वश्या वश्यजनस्तुत्या स्तुतिः श्रुतिधरा श्रुतिः । श्रुतिशास्त्रविधानज्ञा शास्त्रार्थकोविदा रमा । वेद्या विद्यामयी विद्या विधातृवरदा वधूः । वधूरूपा वधूपूज्या वधूपानप्रतर्पिता । वधूपूजनसन्तुष्टा वधूमालाविभूषणा । वामा वामेश्वरी वाम्या वामाचारप्रियङ्करी । वामाचारा वामदेवपूज्या वामस्थिताऽर्थदा । वामदेवेश्वरी देवी कुलाकुलविचारिणी । वितर्कतर्कनिलया प्रलयानलसन्निभा । यज्ञेश्वरी यज्ञमुखा यज्ञाङ्गी यज्ञवर्धिनी । याजकाऽयाजकाऽराध्या यजना यानपात्रका । यक्षेश्वरी यक्षदात्री यक्षनायकपूजिता । पर्वतस्था पर्वतजा पार्वती पर्वताश्रया । पिलम्पिला पदस्थाना पददा नरकान्तका । नारी नर्मप्रिया श्रीदा श्रीदश्रीदा शतायुधा । कामेश्वरी रतिर्हूतिराहुतिर्हव्यवाहना । हरेश्वरी हरवधूर्हाटकाङ्गदमण्डिता । पुरुष्या स्वर्गतिर्वैद्या सुमुखा च महौषधिः । सर्वरोगहरा माध्वी मधुपानपरायणा । मधुस्थिता मधुमयी मददानविशारदा । मधुतृप्ता मधुरूपा मधूककुसुमप्रभा । माधवी माधवीवल्ली मधुमत्ता मदालसा । मारप्रिया मारपूज्या मारदेवप्रियङ्करी । मारेशी च मृत्युहरा हरकान्ता मनोन्मना । महावैद्यप्रिया वैद्या वैद्याचारा सुरार्चिता । सुरेशी सुरसंपूज्या सुरमान्या सुरेश्वरी । सुरापानरता साध्वी पात्रसिद्धिप्रदायिनी । सामन्ता पीनवपुषी गुटी गुर्वी गरीयसी । कालान्तका कालमुखी कठोरा करुणामयी । नीला नाडी च वागीशी दूर्वा-

ख्याता सरस्वती। अपारपारगा गम्या गतिः प्रीतिः पयोधरा।
पयोदसदृशच्छाया पारदाऽ[८०]कृतिरालसा। सरोजनिलया नीतिः
कीर्तिः कीर्तिकरी कथा। काशी काम्या कपर्दाऽर्शा काश-
पुष्पोपमा रमा। रामा रामप्रिया रामभद्रा देवसमर्चिता।
रामसम्पूजिता रामसिद्धिदा रामकार्यदा। [९०]रामभद्रार्चिता रेवा
देवकी देववत्सला। देवपूज्या देववन्द्या देवदानवचर्चिता।
द्युतिर्द्रुतगतिर्दम्भा [३००]दामिनी विजया जया। अशेषसुरसम्पूज्या
निःशेषासुरसूदिनी। वटिनी वटमूलस्था लास्यहास्यैकवल्लभा।
अरूपा निर्गुणा [१०]सत्या सदासन्तोषवर्धिनी। सौम्या यजुर्वहा
याम्या यमुना यामिनी यमी। क्षमा दक्षा [२०]वराम्बोधिर्दालभ्य-
सेव्या दरी पुरी। पौरन्दरी पुलोमेशी पौलोमी पुलकाङ्कुरा।
पुरस्था वनभूर्व[३०]न्या वानरी वनचारिणी। समस्तवर्णनिलया
समस्तवर्णपूजिता। समस्तवर्णवर्णाढ्या समस्तगुरुवत्सला।
समस्तमुण्डमालाढ्या मालिनी मधुपस्वना। कोश[४०]प्रदा कोशवासा
चमत्कृतिरलम्बुसा। हास्यदा सदसद्रूपा सर्ववर्णमयी स्मृतिः।
सर्वाक्षरमयीविद्या मूलविद्याविदी[५०]श्वरी। अकारा षोडशाकारा का-
रावन्धविमोचिनी। ककारव्यञ्जनाक्रान्ता सर्वमन्त्राऽक्षरालया।
अमाऽणुरूपा विमला त्रैगु[६०]ण्या चापराजिता। अम्बिकाऽम्बा-
लिकाचाऽम्बाप्यनन्तगुणमेखला। अपर्णा पर्णशाला च सा-
ट्टहासा हसन्तिका। ह[७०]सन्ती च हस्तिमुखा हस्तिपादा मनो-
रमा। अद्रिकन्याऽट्टहासा च त्वजरास्याप्यरुन्धती। अब्जाक्षी
त्वब्जिनीदेवी चाम्बुजा[८०]सनसंस्थिता। अब्जहस्ताऽब्जपादा च
त्वब्जपूजनतोषिता। अकारमातृकादेवी सर्वानन्दकरी कला।

आनन्दसुन्दरी चार्या चाघूर्णारुणलोचना। आँदिदेवाऽन्तकक्रूरा चादित्यकुलभूषणा। आंबीजमण्डलादेवी त्वाकारमातृकावलिः। इन्द्रस्तुतेन्दुबिम्बास्या त्विनकोटिसमप्रभा। इन्दिरा मन्दिरा ईंला चेतिहासकथा मतिः। इलेक्षुरसदाऽस्वादा त्विकाराक्षरभूषिता। इन्द्रस्तुतेन्द्रसंपूज्या त्विनभद्रा त्विनेश्वंरी। इभस्थितिरिभांगीना चेकाराक्षरमातृका। ईश्वरी वैभवख्याता चेशानीश्वरवल्लभा। ईशा कामकला चैन्द्री त्वीकाराक्षरमातृका। उग्रप्रभोग्रचिन्तोग्रवामाङ्गवासिनी त्वुषा। उग्रा वैष्णवसंपूज्या चोग्रतारोल्मुकानना। उँमेश्वरी गुणश्रेष्ठोस्रोदेश्वर्युदकप्रिया। उदकाच्छोदकदात्री चोकारोद्भवमातृका। ऊष्मोषा चोर्षंणा सीता दितिराऽदित्यसुप्रभा। ऋणहर्त्री ह्यृणर्णेशी ऋलवर्णा लवर्णभाक्। ऌकारा भ्रूंकुटिर्बाला बालादित्यसमप्रभा। एनाङ्कमुकुटेहात्मा चैकाराक्षरबीजिता। एनप्रियैनाङ्कमध्यस्थितैनमध्यवासिनी। एनेद्रवत्सला चैनी चैकारोद्भासमातृका। ओकारशेखराभासा त्वौचित्या मदमण्डिता। अम्भोजनिलया स्वस्था अःस्वरूपा चिदात्मिका। षोडशस्वररूपा च षोडशस्वरगाँयनी। षोडशी षोडशाकारा कमला कमलोद्भवा। कामेश्वरी कलाभिज्ञा कुमारी कुटिलालका। कुटिला कुटिलांकारा कुटुम्बिनी कृतिः शिवा। कुलाकुलोपदेशानी कुलेशी कुब्जिका कला। कामा कामप्रिया कीरां कमनीया कपालिनी। कालिका भद्रकाली च काला कामान्तकारिणी। कपर्दिनी कपालेशी कर्पूरचयचर्चिता। कादम्बरी कोमलाङ्गी काश्मीरी कुङ्कुमद्युतिः। कुन्ता कूर्चाऽद्यबी-

जाड्या कमनीया कुलाकुला । करालास्या करांलाक्षी कामिनी कामपालिनी । कन्थाधरा कृपाकर्त्री ककाराक्षरमातृका । खड्गहस्ता खर्परेशी खेचरी खगगामिनी । खेचरीमुंद्रयायुक्ता खेचरत्वप्रदायिनी । खगासना खलोलाक्षी खेटेशी खलनाशिनी । खेटकायुधहस्ता च खरांशुद्युतिसन्निभा । खाता खबीजनिलया खकारोल्लासंमातृका । वैखरी बीजनिलया खस्था खेचरवल्लभा । गुण्या गजास्यजननी गणेशवरदा गया । गोदावरी गंदाहस्ता गदाधरप्रिया गतिः । गीता गोवाहनेशानी गरलाशनविग्रहा । गाम्भीर्यभूषणा गङ्गा गायत्री गजवाहना । घोनां घोनाकरस्तुत्या घुर्घुरा घोरनादिनी । घटस्था घटजसेव्या घटपूजनलोलुपा । घटामयरसप्रीता घनरूपा घनेश्वरी । घनवाहनसेव्यां च घकाराक्षरमातृका । ङान्ता ङवर्णनिलया ङानुरूपा ङनालया । ङेज्ञानिनी ङनाजाप्या ङवर्णाक्षरमातृका । चामीकररुचिश्चांन्द्री चन्द्रिका चन्द्ररागिणी । चला चेला चञ्चला च चञ्चरीकालकप्रभा । चञ्चरीकस्वरालापा चमत्कारस्वरूपिणी । चटुला चाटुंकी चार्वी चम्पा चम्पकसन्निभा । चीनांशुकधरा चित्रा चकाराक्षरमातृका । छत्री छत्रधराच्छन्ना छिन्नमस्ता च्छुरच्छंविः । छायासुतप्रिया छाया छवर्णामलमातृका । जगदम्बा जगज्ज्योतिर्ज्योतीरूपा जटाधरा । जयदा जयकर्त्री च जंयस्था जयहासिनी । जयेशी जयधर्त्री च जगत्कर्त्री जगत्प्रिया । जगत्पूज्या जगद्वासा जगद्रक्षा जरातुरा । ज्वरंघ्नी जम्भदमनी जगत्प्राणा जयावहा । जैत्रा जम्भारिवरदा जीवना जीववाक्प्रदा । जागृतिश्च जगन्निद्रा जगंद्योनिर्जल-

न्धरा । जालन्धरजया जाया जकाराक्षरमातृका । झम्पा झि-
ञ्झेश्वरी झान्ता झकाराक्षरमातृका । ञानुरूपा ञिनावाँसा
ञकारेशी ञणायुधा । ञवर्णबीजभूषाढ्या ञकाराक्षरमातृका ।
टङ्कायुधा टकाराढ्या टोटाक्षी टसुकुन्तला । टङ्काश्रया टली-
रूपा टकाराक्षरमातृका । ठकुरा ठकुरेशानी ठकारत्रितयेश्वरी ।
ठस्वरूपा ठवर्णाढ्या ठकाराक्षरमातृका । डक्का डक्केश्वरी डिम्बाँ
डवर्णाक्षरमातृका । ढिणी ढेया ढिल्लहस्ता ढकाराक्षरमातृका ।
णेशा णान्ता णवर्णात्मा णकाराक्षरभूषणा । तुंरी तुर्या तुला-
रूपा त्रिपुरा तामसप्रिया । तोतुला तारिणी तारासप्तविंशति-
रूपिणी । त्रिस्वरा त्रिगुणिध्येया त्र्यम्बकेशी त्रिलोकधृत् । त्रि-
वर्गेशा त्रयी त्र्यक्षा त्रिपदा त्रेतरूपिणी । त्रिलोकजननी त्रेता
त्रिपुरेश्वरपूजिता । त्रिकोणस्थाँ त्रिकोणेशी त्रिकोणान्तर्निवा-
सिनी । त्रिकोणपूजनतुष्टा त्रिकोणपूजनप्रिया । वसुकोणस्थिता
वश्या वसुकोणार्थवादिनी । वसुकोणासनेसंस्था षट्चक्रक्रम-
पूजिता । नागपत्रस्थिता शारी त्रिवृत्तपूजनार्थदा । चतुर्द्वारा-
ग्रगा चक्रबाह्यान्तरनिवासिनी । तामसी तुम्बुरुस्तुत्या तोम-
रायुधमण्डिता । तुलाकोटिस्वना तापी तपसःफलदायिनी ।
तरिस्तरणिरूपा च तारकासुरघातिनी । तरलाक्षी तमोहन्त्री
तकाराक्षरमातृका । स्थली स्थविररूपा च स्थूला स्थाली स्थ-
लाब्जिनी । स्थविरेशी स्थूलमुखी थकाराक्षरमातृका । दूतिका
शिवदूती च दण्डायुधधरा द्युतिः । दीपा दीनानुकम्पा च
दम्भोलिधरवल्लभा । देशानुचारिणी द्रेक्का द्राविडेशी दवीयसी ।
दाक्षायणी द्रुमलता देवमाताऽदिदेवता । दधिजा दुर्लभादेवी

देवता परमाक्षरा । दामोदरसुपूज्या च दामोदरवरप्रदा । दण्डहस्ता दण्डिपूज्या दकारा‍क्षरमातृका । धर्म्या च धर्ममूर्धन्या धनदा धनवर्धिनी । धृतिर्धूर्ता धन्यवधूर्धकाराक्षरमातृका । नलिनी नलिनहस्ता नाराचायुधधारिणी । नीपोपवनमध्यस्था नगरेशी नरोत्तमा । नरेश्वरी नृपाराध्या नृपपूज्या नृपार्थदा । नृपसेव्या नृपवन्द्या नरनारायणप्रसूः । [६०]नर्तकी नीरजाक्षी च नवर्णाक्षरभूषणा । पद्मेश्वरी पद्ममुखी पद्मयाना परापरा । पारावतसुता पेया परवर्गविमर्दिनी । त्रिपुरारिवधूः पम्पा पत्री पत्रीशवाहना । पीवरांसा पतिप्राणा पीतलाक्षी पतिप्रिया । पाठा पीठस्थिता पीतवस्त्रालङ्कारभूषणा । पुरूरवस्तुता पात्री पुत्रिका पुत्रदा प्रजा । पुष्पोत्तमा पुष्पवती पुष्पमालाविभूषिता । पुष्पमालाधिशोभाढ्या पकाराक्षरमातृका[७०] । फलदा स्फीतवस्त्रा च फेरुरावविभूषणा । फल्गुनी फल्गुतीर्थस्था फवर्गाकृतमण्डना । बलदा बालखिल्या च बाला [८०]बलरिपुप्रिया । बाल्यावस्था बन्धरेशी बकाराकृतिमातृका । भद्रिका भीमपत्नी च भीमा भर्गशिखाऽभया । भयघ्नी भीमनादा[१०] च भयानकमुखेक्षणा । भिल्लेश्वरी भीतिहरा भद्रदा भाग्यवर्धिनी । भगमाला भगावासा भवानी भवतारिणी । भर्ग[२०]योनिर्भगाकारा भगस्था भगरूपिणी । भगलिङ्गामृतप्रीता भकाराक्षरमातृका । मान्या मानप्रदा मीना मीनकेतनलालसा । मदोद्धता[३०] मनोतीता मेना मैनाकवत्सला । मांसाहारा मांसप्रीता मत्स्यघाता महत्तरा । मेरुशृङ्गाग्रतुङ्गस्था मोदकाहारपूजिता । [४०]मातङ्गिनी मदोन्मत्ता मधुमत्ता मठेश्वरी । मज्जा मुग्धानना मुग्धा मकाराक्षरभूषणा ।

यशस्विनी यतीशानी यत्नकर्त्री यजुःप्रिया । यज्ञदात्री यज्ञफला यजुर्वेदफला यतिः । यशोदा यतिसेव्या च यात्रा यात्रिकवत्सला ! योगीश्वरी योगगम्या योगीन्द्रजनवत्सला । यदुपुत्री यमघ्नी च यकाराक्षरमातृका । रत्नेश्वरी रमानाथसेव्या रथ्या रजस्वला । राज्यदा राजराजेशी रोगहर्त्री रजोवती । रत्नाकरसुता रम्या रात्री रात्रीपतिप्रभा । रक्षोघ्नी राक्षसेशानी रक्षोनाथसमर्चिता । रतिप्रिया रतिसुखा रकारकृतशेखरा । लम्बोदरी ललजिह्वा लास्यतत्परमानसा । लूतातन्तुवितानास्था लक्ष्मीर्लज्जालयाऽलिनी । लोकेश्वरी लोकदात्री लाटस्था लक्ष्मणाकृतिः । लम्बा लम्बकचोल्लासा लकाराक्षरवर्धिनी । लिङ्गप्रीता कलिङ्गेशी लिङ्गस्था लिङ्गलिङ्गिनी । लक्ष्मीरूपा रसोल्लासा रामा रेवा रजोवती । लयदा लक्ष्मणा लोला लकाराक्षरमातृका । वाराही वरदात्री च वीरसूर्वरदायिनी । वीरेश्वरी वीरजन्या वरचर्वणचर्चिता । वरायुधा वराका च वामना वामनाकृतिः । वधूता वधकावध्या वध्यभूर्वणिजप्रिया । वसन्तलक्ष्मीर्वटुकी वटुका वटुकेश्वरी । वटुप्रिया वामनेत्रा वामाचारैकलालसा । वात्या वाम्या वरारोहा वेदमाता वसुन्धरा । वयोयाना वयस्था च वकाराक्षरमातृका । शम्भुप्रिया शरच्चर्चा शाद्वला शशिवत्सला । शीतद्युतिः शीतरसा शोणोष्ठी शीकरप्रभा । श्रीवत्सलाञ्छना शर्वा शर्ववामाङ्गवासिनी । शशाङ्कामलशोभाढ्या शार्दूलतनुरद्रिजा । शेषहर्त्री शमीमूला शकारकृतशेखरा । षोडशाक्षरमन्त्रेशी षाढा षोढा षडानना । षट्कूटा षड्रसास्वादा षडशीतिमुखाम्बुजा । षडास्यजननी षष्ठा षत्रर्णा-

क्षरमातृका। सरस्वतीप्रसूः सर्वा सर्वगा सर्वतोमुखा। समा सीमा सतीमाता सागराभयदायिनी। समस्तपापशमनी सालभञ्जी सुदक्षिणा। सुषुप्तिः संरसा साध्वी सामगा सामवेदजा। सत्यप्रिया सोममुखी सूत्रस्था सूतवल्लभा। सनकेशी सुनन्दा च सवर्णा स्वास्थ्यदायिनी हाहाहूहूस्वरूपा च हलदात्री हलिप्रिया। हंक्षःस्वरूपानुगता सर्वमातृकपूजिता। हरिशीश्वरपूज्यात्मा हविष्याहुतिवल्लभा। ॐऐंसौःह्रींमहाविद्या आंशांहांहूंस्वरूपिणी १०००॥ इति सहस्रनामस्तुतिः॥ अथ सहस्रनामावली॥

ॐ ह्रींश्रींहूंफ्रांआंशांश्रीशारिकायैस्वाहा, श्यामसुन्दर्यै, शिलायै, शार्यै, शुक्यै, शान्तायै, शान्तमानसगोचरायै, शान्तिस्थायै, शान्तिदायै, शान्त्यै, श्यामायै, श्यामपयोधरायै, देव्यै, शशाङ्कबिम्बाढ्यायै, शशाङ्ककृतशेखरायै, शशाङ्कशोभिलावण्यायै, शशाङ्कमध्यवासिन्यै, शार्दूलवाहायै, देवेश्यै, शार्दूलचर्मवासस्थै, गौर्यै, पद्मावत्यै, पीनायै, पीनवक्षोजकुड्मलायै, पीताम्बरायै, रक्तदन्तायै, दाडिमीकुसुमप्रभायै, स्फुरद्रत्नांशुखचितायै, रत्नमण्डलविग्रहायै, रक्ताम्बरधरायै, क्षीवायै, रत्नमालाविभूषणायै, रत्नसंमूर्छिताभायै, आद्यायै, दीप्तायै, दीप्तशिखायै, दयायै, दयावत्यै, कल्पलतायै, कल्पान्तदहनोपमायै, भैरव्यै, भीमनादायै, भयानकमुख्यै, भगायै, कारायै, कारुण्यरूपायै, भगमालाविभूषणायै, भगेश्वर्यै, भगस्थायै, कुरुकुल्यायै, कृशोदर्यै, कादम्बर्यै, कचोत्कृष्टायै, परमायै, परमेश्वर्यै, सत्यै, सरस्वत्यै, सत्यायै, असत्यायै, सत्यस्वरूपिण्यै, परम्परायै, पटाकारायै, पाटलायै, पाटलप्रभायै, पद्मिन्यै, पद्मवदनायै, पद्मायै, पद्मकरायै, शिवायै,

शिवाश्रयायै, शरच्छान्तायै, शच्यै, रम्भायै, विभावर्यै, द्युमणये, प्रस्तरायै, पाठायै, पीठेश्यै, पीवराकृतये, अचिन्त्यायै, मुसलाधारायै, मातङ्ग्यै, मधुरस्वनायै, वीणायै, गीतप्रियायै, गाथायै, गारुड्यै, गरुडध्वजायै, अतीवसुन्दराकारायै, सुन्दर्यै, सुन्दरालकायै, अलकायै, नाकमध्यस्थायै, नाकिन्यै, नाकपूजितायै, पातालेश्वरसंपूज्यायै, पातालतलचारिण्यै, अनन्तायै, अनन्तरूपायै, तेजोसि स्वज्ञातायै, ध्यानं। ॐज्ञानवर्धिन्यैस्वाहा, अमेयायै, अप्रमेयायै, अनन्तादित्यरूपिण्यै, द्वादशादित्यसंपूज्यायै, शम्यै, शामाकबीजिन्यै, विभासायै, भास्वरायै, अंवर्णायै, समस्तासुरघातिन्यै, सुधामय्यै, सुधामूर्तये, सुधायै, सर्वप्रियङ्कर्यै, सुखदायै, सुरेशान्यै, कृशानुवल्लभायै, हविषे, स्वाहायै, स्वाहेशनेत्रायै, वह्निचक्रायै, अग्नितर्पितायै, सूर्याग्निसोमनेत्रायै, भूर्भुवःस्वःस्वरूपिण्यै, भूम्यै, भूदेवसंपूज्यायै, स्वयम्भुवे, स्वात्मपूजकायै, स्वयम्भूपुष्पमालाढ्यायै, स्वयम्भूपुष्पवल्लभायै, आनन्दकन्दल्यै, कन्दायै, स्कन्दमात्रे, शिवालयायै, शिलारूपायै, शिलेशान्यै, शिलापूजनहर्षितायै, चेतनायै, चिद्भवाकारायै, भवपत्न्यै, भयापहायै, विघ्नेश्वर्यै, गणेशान्यै, गणमात्रे, गणप्रस्वै, गणेशमुख्यसम्पूज्यायै, विघ्नविध्वंसिन्यै, निशायै, वश्यायै, वश्यजनस्तुत्यायै, स्तुतये, श्रुतिधरायै, श्रुतये, श्रुतिशास्त्रविधानज्ञायै, शास्त्रार्थकोविदायै, रमायै, वेद्यायै, विद्यामय्यै, विद्यायै, विधातृवरदायै, वध्वै, वधूरूपायै, वधूपूज्यायै, वधूपानप्रतर्पितायै, वधूपूजनसन्तुष्टायै, वधूमालाविभूषणायै, वामायै, वामेश्वर्यै, वाम्यायै, वामाचारप्रियङ्कर्यै, वामाचारायै, वामदेवपूज्यायै, वामस्थितायै, अर्थदायै, वाम-

देवेश्वरीदेव्यै, कुलाकुलविचारिण्यै, वितर्कतर्कनिलयायै, प्रल-
यानलसन्निभायै, यज्ञेश्वर्यै, यज्ञमुखायै, यज्ञाङ्ग्यै, यज्ञवर्धिन्यै,
याजकायै, अयाजकायै, आराध्यायै, यजनायै, यानपात्रकायै,
यक्षेश्वर्यै, यक्षदात्र्यै, यक्षनायकपूजितायै, पर्वतस्थायै, पर्वत-
जायै, पार्वत्यै, पर्वताश्रयायै, पिलम्पिलायै, पदस्थानायै, पद-
दायै, नरकान्तकायै, तेजोसि ॐनायैस्वाहा[२००] ध्यानं नर्मप्रियायै,
श्रीदायै, श्रीदश्रीदायै, शतायुधायै, कामेश्वर्यै, रत्यै, हूत्यै,
आहुत्यै, हव्यवाहनायै, हरेश्वर्यै[१००], हरवध्वै, हाटकाङ्गदमण्डि-
तायै, पुरुष्यायै, स्वर्गतये, वैद्यायै, सुमुखायै, महौषधये, सर्व-
रोगहरायै, माध्व्यै, मधुपानपरायणायै[२], मधुस्थितायै, मधुमय्यै,
मददानविशारदायै, मधुतृप्तायै, मधुरूपायै, मधूककुसुमप्रभायै,
माधव्यै, माधवीवल्ल्यै, मधुमत्तायै, मदालसायै[३], मारप्रियायै,
मारपूज्यायै, मारदेवप्रियङ्कर्यै, मारेश्यै, मृत्युहरायै, हरकान्तायै,
मनोन्मनायै, महावैद्यप्रियायै, वैद्यायै, वैद्याचारायै[४], सुरार्चितायै,
सुरेश्यै, सुरसंपूज्यायै, सुरमान्यायै, सुरेश्वर्यै, सुरापानरतायै,
साध्व्यै, पात्रसिद्धिप्रदायिन्यै, सामन्तायै, पीनवपुष्यै[५], गुह्यै,
गुर्व्यै, गरीयस्यै, कालान्तकायै, कालमुख्यै, कठोरायै, करुणा-
मय्यै, नीलायै, नाड्यै, वागीश्यै[६], दूर्वाख्यातायै, सरस्वत्यै,
अपारपारगायै, गम्यायै, गतये, प्रीत्यै, पयोधरायै, पयोदस-
दृशच्छायायै, पारदायै, आकृत्यै[७], आलसायै, सरोजनिलयायै,
नीत्यै, कीर्त्यै, कीर्तिकर्यै, कथायै, काश्यै, काम्यायै, कपर्दायै,
आशायै[८], काशपुष्पोपमायै, रमायै, रामायै, रामप्रियायै, राम-
भद्रायै, देवसमर्चितायै, रामसम्पूजितायै, रामसिद्धिदायै, राम-

कार्यदायै, रामभद्रार्चितायै, रेवायै, देवक्यै, देववत्सलायै, देवपूज्यायै, देववन्द्यायै, देवदानवचर्चितायै, द्रुतये, द्रुतगतये, दम्भायै, "तेजोसि" दमन्यै ३०० ॥ ध्यानं ॥ ॐ विजयायैस्वाहा, जयायै, अशेषसुरसम्पूज्यायै, निःशेषासुरसूदिन्यै, वटिन्यै, वटमूलस्थायै, लास्यहास्यैकवल्लभायै, अरूपायै, निर्गुणायै, सत्यायै, सदासन्तोषवर्धिन्यै, सौम्यायै, यजुर्वहायै, याम्यायै, यमुनायै, यामिन्यै, यम्यै, क्षमायै, दक्षायै, वराम्भोधये, दाल्भ्यसेव्यायै, दर्यै, पुर्यै, पौरन्दर्यै, पुलोमेश्यै, पौलोम्यै, पुलकाङ्कुरायै, पुरस्थायै, वनभुवे, वन्यायै, वान्यै, वनचारिण्यै, समस्तवर्णनिलयायै, समस्तवर्णपूजितायै, समस्तवर्णवर्णाढ्यायै, समस्तगुरुवत्सलायै, समस्तमुण्डमालाढ्यायै, मालिन्यै, मधुपस्वनायै, कोशप्रदायै, कोशवासायै, चमत्कृत्यै, अलम्बुसायै, हास्यदायै, सदसद्रूपायै, सर्ववर्णमय्यै, स्मृत्यै, सर्वाक्षरमयीविद्यायै, मूलविद्यायै, विश्वेश्वर्यै, अकारायै, षोडशाकारायै, काराबन्धविमोचिन्यै, ककारव्यञ्जनाक्रान्तायै, सर्वमन्त्रायै, अक्षरालयायै, अमायै, अणुरूपायै, विमलायै, त्रैगुण्यायै, अपराजितायै, अम्बिकायै, अम्बालिकायै, अम्बायै, अनन्तगुणमेखलायै, अपर्णायै, पर्णशालायै, साट्टहासायै, हसन्तिकायै, हंसन्त्यै, हस्तिमुखायै, हस्तिपादायै, मनोरमायै, अद्रिकन्यायै, अट्टहासायै, अजरास्यायै, अरुन्धत्यै, अब्जाक्ष्यै, अब्जिनीदेव्यै, अम्बुजासनसंस्थितायै, अब्जहस्तायै, अब्जपादायै, अब्जपूजनतोषितायै, अकारमातृकादेव्यै, सर्वानन्दकर्यै, कलायै, आनन्दसुन्दर्यै, आर्यायै, आघूर्णारुणलोचनायै, आदिदेवायै, अन्तकक्रूरायै, आदित्यकुलभूषणायै, आंबीज-

मण्डलादेव्यै, आकारमातृकावलयै, इन्द्रस्तुतायै, इन्दुबिम्बा-
स्यायै, इनकोटिसमप्रभायै, इन्दिरायै मन्दिरायै, "तेजोसि"
ॐ शालायैस्वाहा ध्यानं ॥ ॐइतिहासकथायैस्वाहा, मत्यै, इलायै,
इक्षुरसदायै, आस्वादायै, इकाराक्षरभूषितायै, इन्द्रस्तुतायै, इन्द्र-
संपूज्यायै, इनभद्रायै, इनेश्वर्यै, इभस्थितये, इभांगीनायै, इकारा-
क्षरमातृकायै, ईश्वर्यै, वैभवख्यातायै, ईशान्यै, ईश्वरवल्लभायै,
ईशायै, कामकलायै, ऐन्द्यै, ईकाराक्षरमातृकायै, उग्रप्रभायै,
उग्रचिन्तायै, उग्रवामाङ्गवासिन्यै, उषायै, उग्रायै, वैष्णवपूज्यायै,
उग्रतारायै,उल्मुकाननायै, उमेश्वर्यै, गुणश्रेष्ठायै, उस्रायै,उदेश्वर्यै,
उदकप्रियायै, उदकाच्छायै, उदकदात्र्यै, उकारोद्भवमातृकायै,
ऊष्मायै, ऊषायै, ऊषर्णायै, सीतायै, दित्यै, आदित्यसुप्रभायै,
ऋणहर्त्र्यै, ऋणायै, ऋणेश्यै, ऋलवर्णायै, लवर्णभाजे, लकारायै,
भ्रुकुटये, बालायै, बालादित्यसमप्रभायै, एनाङ्गमुकुटायै, ईहा-
त्मने, एकाराक्षरबीजितायै, एनप्रियायै, एनाङ्कमध्यस्थितायै,
एनमध्यवासिन्यै, एनेन्द्रवत्सलायै, ऐन्यै, एकारोद्भासमातृ-
कायै, ओकारशेखराभासायै, औचित्यायै, मदमण्डितायै,
अम्भोजनिलयायै, स्वस्थायै, अःस्वरूपायै, चिदात्मिकायै,
षोडशस्वररूपायै, षोडशस्वरगायन्यै, षोडश्यै, षोडशाकारायै,
कमलायै, कमलोद्भवायै, कामेश्वर्यै, कलाभिज्ञायै, कुमार्यै,
कुटिलालकायै, कुटिलायै, कुटिलाकारायै, कुटुम्बिन्यै, कृत्यै,
शिवायै, कुलाकुलोपदेशान्यै, कुलेश्यै, कुब्जिकायै, कलायै,
कामायै, कामप्रियायै, कीरायै, कमनीयायै, कपालिन्यै, कालि-
कायै, भद्रकाल्यै, कालायै, कामान्तकारिण्यै, कपर्दिन्यै, कृपा-

लेश्यै, कर्पूरचयचर्चितायै, तेजोसि ॐकादम्बर्यैस्वाहा ॥ ध्यानं ॥
कोमलाङ्ग्यै, काश्मीर्यै, कुंकुमद्युतये, कुन्तायै, कूर्चायै, आद्य-
बीजाढ्यायै, कमनीयायै, कुलाकुलायै, करालास्यायै, करा-
लांक्ष्यै, कामिन्यै, कामपालिन्यै, कन्थाधरायै, कृपाकर्त्र्यै,
ककाराक्षरमातृकायै, खड्गहस्तायै, खर्परेश्यै, खेचर्यै, खगगा-
मिन्यै, खेचरीमुद्रयांयुक्तायै, खेचरत्वप्रदायिन्यै, खगासनायै,
खलोलाक्ष्यै, खेटेश्यै, खलनाशिन्यै, खेटकायुधहस्तायै, खरां-
शुद्युतिसन्निभायै, खातायै, खबीजनिलयायै, खकारोल्लासमा-
तृकायै, वैखर्यै, बीजनिलयायै, खस्थायै, खेचरवल्लभायै, गु-
ण्यायै, गजास्यजनन्यै, गणेशवरदायै, गयायै, गोदावर्यै,
गदांहस्तायै, गदाधरप्रियायै, गत्यै, गीतायै, गोवाहनेशान्यै,
गरलाशनविग्रहायै, गाम्भीर्यभूषणायै, गङ्गायै, गायत्र्यै, गज-
वाहनायै, घोनांयै, घोनाकरस्तुत्यायै, घुर्घुरायै, घोरनादिन्यै,
घटस्थायै, घटजसेव्यायै, घटपूजनलोलुपायै, घटामयरसप्री-
तायै, घनरूपायै, घनेश्वर्यै, घनवार्हंनसेव्यायै, घकाराक्षरमातृ-
कायै, ङान्तायै, ङवर्णनिलयायै, ङानुरूपायै, ङनालयायै,
ङेज्ञानिन्यै, ङनाजाप्यायै, ङवर्णाक्षरमातृकायै, चामीकररुचये,
चांन्द्र्यै, चन्द्रकायै, चन्द्ररागिण्यै, चलायै, चेलायै, चञ्चलायै,
चञ्चरीकालकप्रभायै, चञ्चरीकस्वरालापायै, चमत्कारस्वरूपिण्यै,
चटुलायै, चांटुक्यै, चार्व्यै, चम्पायै, चम्पकसन्निभायै, ची-
नांशुकधरायै, चित्रायै, चकाराक्षरमातृकायै, छत्र्यै, छत्रध-
राच्छन्नायै, च्छिन्नमस्तायै, च्छुरच्छवंये, छायासुतप्रियायै, च्छा-
यायै, च्छवर्णामलमातृकायै, जगदम्बायै, जगज्ज्योतिषे, ज्यो-

तीरूपायै, जटाधरायै, जयदायै, जयकर्त्र्यै, तेजोसि ॐजयस्थायैस्वाहां ॥ ध्यानं ॥ जयहासिन्यै, जयेश्यै, जयधर्त्र्यै, जगत्कर्त्र्यै, जगत्प्रियायै, जगत्पूज्यायै, जगद्वासायै, जगद्रक्षायै, जरातुरायै, ज्वरघ्न्यै, जम्भदमन्यै, जगत्प्राणायै, जयावहायै, जैत्रायै, जम्भारिवरदायै, जीवनायै जीववाक्प्रदायै, जाग्रत्यै, जगन्निद्रायै, जंगद्योनये, जलन्धरायै, जालन्धरजयायै, जायायै, जकाराक्षरमातृकायै, झम्पायै, झिञ्झेश्वर्यै, झान्तायै, झकाराक्षरमातृकायै, ञानुरूपायै, ञिंनावासायै, ञकारेश्यै, ञणायुधायै, ञवर्णबीजभूषाढ्यायै, ञकाराक्षरमातृकायै, टङ्कायुधायै, टकाराढ्यायै, टोटाक्ष्यै, टसुकुन्तलायै, टङ्काश्रयायै, टलीरूपायै, टकाराक्षरमातृकायै, ठकुरायै, ठकुरेशान्यै, ठकारत्रितयेश्वर्यै, ठःस्वरूपायै, ठवर्णाढ्यायै, ठकाराक्षरमातृकायै, डक्कायै, डक्केश्वर्यै, डिम्बायै, डवर्णाक्षरमातृकायै, ढिण्यै, ढेयायै, ढिल्लहस्तायै, ढकाराक्षरमातृकायै, णेशायै, णान्तायै, णवर्णात्मने, णवर्णाक्षरभूषणायै, तुर्यै, तुर्यायै, तुलारूपायै, त्रिपुरायै, तामसप्रियायै, तोतुलायै, तारिण्यै, तारासप्तविंशतिरूपिण्यै, त्रिसुरायै, त्रिगुणिध्येयायै, त्र्यम्बकेश्यै, त्रिलोकधृते, त्रिवर्गेशायै, त्रय्यै, त्र्यक्षायै, त्रिपदायै, त्रेतरूपिण्यै, त्रिलोकजनन्यै, त्रेतायै, त्रिपुरेश्वरपूजितायै, त्रिकोणस्थायै, त्रिकोणेश्यै, त्रिकोणान्तर्निवासिन्यै, त्रिकोणपूजनतुष्टायै, त्रिकोणपूजनप्रियायै, वसुकोणस्थितायै, वश्यायै, वसुकोणार्थवादिन्यै, वसुकोणासनेसंस्थायै, षट्चक्रक्रमपूजितायै, नागपत्रस्थिंतायै, शार्यै, त्रिवृत्तपूजनार्थदायै, चतुर्द्वाराग्रगायै, च-

ऋवाह्यान्तरनिवासिन्यै, तामस्यै, तुम्बुरुस्तुत्यायै, तोमरायुध-मण्डितायै, तुलाकोटिस्वनायै, ताप्यै, तेजोसि ॐतपसः फलदा-यिन्यैस्वाहा ध्यानम् ॥ तर्यै, तरणिरूपायै, तारकासुरघातिन्यै, तरलाक्ष्यै, तमोहर्त्र्यै, तकाराक्षरमातृकायै, स्थल्यै, स्थविररू-पायै, स्थूलायै, स्थाल्यै, स्थलाब्जिन्यै, स्थविरेश्यै, स्थूलमुख्यै, थकाराक्षरमातृकायै, दूतिकायै, शिवदूत्यै, दण्डायुधधरायै, द्युतये, दीपायै, दीनानुकम्पायै, दम्भोलिधरवल्लभायै, देशा-नुचारिण्यै, द्रेक्कायै, द्राविडेश्यै, दवीयस्यै, दाक्षायण्यै, द्रुमल-तायै, देवमात्रे, आदिदेवतायै, दधिजायै, दुर्लभादेव्यै, देव-तायै, परमाक्षरायै, दामोदरसुपूज्यायै, दामोदरवरप्रदायै, दण्डहस्तायै, दण्डिपूज्यायै, दकाराक्षरमातृकायै, धर्म्यायै, धर्ममूर्धन्यायै, धनदायै, धनवर्धिन्यै, धृतये, धूर्तायै, धन्यवध्वै, धकाराक्षरमातृकायै, नलिन्यै, नलिनहस्तायै, नाराचायुध-धारिण्यै, नीपोपवनमध्यस्थायै, नगरेश्यै, नरोत्तमायै, नरेश्वर्यै, नृपाराध्यायै, नृपपूज्यायै, नृपार्थदायै, नृपसेव्यायै, नृपवन्द्यायै, नरनारायणप्रस्वै, नर्तक्यै, नीरजाक्ष्यै, नवर्णाक्षरभूषणायै, पद्मेश्वर्यै, पद्ममुख्यै, पत्रियानायै, परापरायै, पारावतसुतायै, पेयायै, परवर्गविमर्दिन्यै, त्रिपुरारिवध्वै, पम्पायै, पत्र्यै, पत्रीश-वाहनायै, पीवरांसायै, पतिप्राणायै, पीतलाक्ष्यै, पतिप्रियायै, पाठायै, पीठस्थितायै, पीतवस्त्रालङ्कारभूषणायै, पुरूरवस्तुतायै, पात्र्यै, पुत्रिकायै, पुत्रदायै, प्रजायै, पुष्पोत्तमायै, पुष्पवत्यै, पुष्पमालाविभूषितायै, पुष्पमालाधिशोभाढ्यायै, पकाराक्षरमा-तृकायै, फलदायै, स्फीतवस्त्रायै, फेरुरावविभूषणायै, फल्गुन्यै,

फल्गुतीर्थस्थायै, फवर्गकृतमण्डनायै, बलदायै, बालखिल्यायै, बालायै, तेजोसि बलरिपुप्रियायै ८०० ॥ ध्यानम् ॥ बाल्यावस्थायै, बन्धरेश्यै, बकाराकृतिमातृकायै, भद्रिकायै, भीमपत्न्यै, भीमायै, भर्गशिखायै, अभयायै, भयघ्न्यै, भीमनादायै, भयानकमुखेक्षणायै, भिल्लीश्वर्यै, भीतिहरायै, भद्रदायै, भाग्यवर्धिन्यै, भगमालायै, भगावासायै, भवान्यै, भवतारिण्यै, भंगयोनये, भगाकारायै, भगस्थायै, भगरूपिण्यै, भगलिङ्गामृतप्रीतायै, भकाराक्षरमातृकायै, मान्यायै, मानप्रदायै, मीनायै, मीनकेतनलालसायै, मदोद्धतायै, मनोतीतायै, मेनायै, मैनाकवत्सलायै, मांसाहारायै, मांसप्रीतायै, मत्स्यघातायै, महत्तरायै, मेरुशृङ्गाग्रतुङ्गस्थायै, मोदकाहारपूजितायै, मातङ्गिन्यै, मदोन्मत्तायै, मदमत्ता मठेश्वर्यै, मज्जायै, मुग्धाननायै, मुग्धायै, मकाराक्षरभूषणायै, यशस्विन्यै, यतीशान्यै, यत्नकर्त्र्यै, यजुःप्रियायै, यज्ञदात्र्यै, यज्ञफलायै, यजुर्वेदफलायै, यतये, यशोदायै, यतिसेव्यायै, यात्रायै, यात्रिकवत्सलायै, योगीश्वर्यै, योगगम्यायै, योगीन्द्रजनवत्सलायै, यदुपुत्र्यै, यमघ्न्यै, यकाराक्षरमातृकायै, रत्नेश्वर्यै, रमानाथसेव्यायै, रथ्यायै, रजस्वलायै, राज्यदायै, राजराजेश्यै, रोगहर्त्र्यै, रजोवत्यै, रत्नाकरसुतायै, रम्यायै, रात्र्यै, रात्रीपतिप्रभायै, रक्षोघ्न्यै, राक्षसेशान्यै, रक्षोनाथसमर्चितायै, रतिप्रियायै, रतिसुखायै, रकारक्तशेखरायै, लम्बोदर्यै, ललज्जिह्वायै, लास्यतत्परमानसायै, लूतातन्तुवितानास्थायै, लक्ष्म्यै, लज्जालयायै, अलिन्यै, लोकेश्वर्यै, लोकदात्र्यै, लाटस्थायै, लक्ष्मणाकृतये, लम्बायै, लम्बकुचोल्लासायै, लकाराक्षरवर्धिन्यै, लिङ्गप्रीतायै, कलिङ्गेश्यै,

तेजोसि ॐलिङ्गस्थायैस्वाँहा ध्यानम् ॥ लिङ्गलिङ्गिन्यै, लक्ष्मी-रूपायै, रसोल्लासायै, रामायै, रेवायै, रजोवत्यै, लयदात्र्यै, लक्ष्मणायै, लोलायै, लकाराक्षरमातृकायै, वाराह्यै, वरदात्र्यै, वीरस्वै, वरदायिन्यै, वीरेश्वर्यै, वीरजन्यायै, वरचर्वणचर्चितायै, वरायुधायै, वराकायै, वामनायै, वामनाकृतये, वधूतायै, वधकावध्यायै, वध्यभुवे, वणिजप्रियायै, वसन्तलक्ष्म्यै, वटुक्यै, वटुकायै, वटुकेश्वर्यै, वटुप्रियायै, वामनेत्रायै, वामाचारैकलालसायै, वात्यायै, वाम्यायै, वरारोहायै, वेदमात्रे, वसुन्धरायै, वयोयानायै, वयस्थायै, वकाराक्षरमातृकायै, शम्भुप्रियायै, शरच्चर्चायै, शाद्वलायै, शशिवत्सलायै, शीतद्युतये, शीतरसायै, शोणोष्ठ्यै, शीकरप्रभायै, श्रीवत्सलाञ्छनायै, शर्वायै, शर्ववामाङ्गवासिन्यै, शशाङ्कामलशोभाढ्यायै, शार्दूलतनवे, अद्रिजायै, शेषहर्त्र्यै, शमीमूलायै, शकारकृतशेखरायै, षोडशाक्षरमन्त्रेश्यै, षाढायै, षोडायै, षडाननायै, षट्कूटायै, षड्रसास्वादायै, षडशीतिमुखाम्बुजायै, षडास्यजनन्यै, षण्ठायै, षवर्णाक्षरमातृकायै, सरस्वतीप्रस्वै, सर्वायै, सर्वगायै, सर्वतोमुखायै, समायै, सीमायै, सतीमात्रे, सागराभयदायिन्यै, समस्तपापशमन्यै, सालभञ्ज्यै, सुदक्षिणायै, सुषुम्न्यै, संरसायै, साध्व्यै, सामगायै, सामवेदजायै, सत्यप्रियायै, सोममुख्यै, सूत्रस्थायै, सूतवल्लभायै, सनकेश्यै, सुनन्दायै, संवर्णायै, स्वास्थ्यदायिन्यै, हाहाहूहूस्वरूपायै, हलदात्र्यै, हलिप्रियायै, हंक्षः-स्वरूपानुगतायै, सर्वमातृकपूजितायै, हरिदीश्वरपूज्यात्मने, हविष्याहुतिवल्लभायै, ॐ ऐंसौःह्रींमहाविद्यायै, तेजोसि आंशां-

ह्रांहूंस्वरूपिण्यैस्वांह्रीं ॥ पुण्यं पुण्यजनस्तुत्यं नुत्यं वैष्णवसंमितम्। इदं यः पठते देवि श्रावयेद्वा शृणोति च। स एव भगवान्देवः सत्यं सत्यं महेश्वरि। एककालं द्विकालं वा त्रिकालं पठते नरः। वामाचारपरो देवि तस्य पुण्यफलं शृणु। मूकत्वं बधिरत्वं च कुष्ठं हन्याच्च श्वित्रिकाम्। वातपित्तकफान् गुल्मात्रक्तस्रावं विषूचिकाम्। सद्यः शमयते देवी श्रद्धया यः पठेन्निशि। अपस्मारं कर्णपीडां शूलं रौद्रभगन्दरम्। मासमात्रं पठेद्यस्तु स रोगैर्मुच्यते ध्रुवम्। भौमे शनिदिने वापि चक्रमध्ये पठेद्यदि। सद्यस्तस्य महेशानी शारिका वरदा भवेत्। चतुष्पथे पठेद्यस्तु त्रिरात्रं रात्रिवृत्तये। दत्त्वा बलिं सुरां क्षौद्रं समत्स्यमांसभक्तकम्। वर्ब्बोलत्वग्रसाकीर्णं शारी प्रादुर्भविष्यति। यः पठेद्देवि लोलायां चितायां शवसन्निधौ। पाठमात्रं त्रिवारं तु तस्य पुण्यफलं शृणु। ब्रह्महत्यां गुरोर्हत्यां सुरापानं तु गोवधम्। महापातकसङ्घातं पातकं चोपपातकम्। स्तेयं च हेमहारित्वोद्भवं पापं हि नाशयेत्। स एव हि रमापुत्रो यशस्वी लोकपूजितः। वरदानक्षमो देवि वीरेशो भूतवत्सलः। चक्रार्चने पठेद्यस्तु साधकः शक्तिसन्निधौ। त्रिकालं श्रद्धया युक्तः स भवेद्भैरवेश्वरः। किं किं न लभते देवि साधको धीरसाधकः। पुत्रवान्धनवांल्लोके सत्याचारपरः शिवः। शक्तिं सम्पूज्य देवेशि पठेत्स्तोत्रवरं शुभम्। इहलोके सुखीभूत्वा परत्र च दिवं व्रजेत्। इति नामसहस्रं तु शारिकाया मनोरमम्। गोप्यं गुह्यतमं लोके गोपनीयं स्वयोनिवत् ॥ इति श्रीशारिकादेव्याः सहस्रनामस्तोत्रम् ॥

---

## ॐ श्रीगणेशसहस्रनामावली ॥

भैरवः ॥ देवः पूर्वं पुरारातिः पुरत्रयजयोद्यमे । अनर्चनाद्गणेशस्य जातो विघ्नगणाकुलः । मनसा स विनिर्माय ततस्तु विघ्नकारकम् । महागणपतिं भक्त्या समभ्यर्च्य यथाविधि । विघ्नप्रशमनोपायं पप्रच्छ च परिश्रमम् । सन्तर्प्य पूजया शम्भोर्महागणपतिः स्वयम् । सर्वविघ्नप्रशमनं सर्वाश्रमफलप्रदम् । नमस्तस्मै स्वनाम्नैव सहस्रमिदमब्रवीत् ॥ अस्य श्रीमहागणपतिसहस्रनामस्तोत्रमन्त्रस्य, महागणपतिर्ऋषिः, गणेशो देवता, नानाविधानि छन्दांसि, हुमितिवीजं, ॐमितिशक्तिः, स्वाहा इति कीलकं, आत्मनो०—श्रीमहागणपतिप्रसादसिद्ध्यर्थे सर्वविघ्ननिवारणार्थे पाठे होमे वा विनियोगः ॥ गां, गीं, गूं, गैं, गौं, गः, इतिन्यासः । प्राणायामः ॥ ध्यानं ॥ जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलेर्बन्धने स्रष्टुं वारिरुहोद्भवेन विधिना शेषेण धर्तुं धराम् । पार्वत्या महिषासुरप्रमथने सिद्धाधिपैर्मुक्तये ध्यातः पञ्चशरेण लोकविजये पायान्स नागाननः ॥ ॐ गं तत्पुरुषायविद्महे, वक्रतुण्डाय धीमहि, तन्नो दन्ती प्रचोदयात् ३ ॥ श्रीगणेशः ॥ ॐ गणेश्वराय स्वाहा, गणक्रीडाय, गणनाथाय, गणाधिपाय, एकदन्ताय, वक्रतुण्डाय, गजवक्त्राय, महोदराय, लम्बोदराय, धूम्रवर्णाय, विकटाय, विघ्ननाशकाय, सुमुखाय, दुर्मुखाय, बुद्धाय, विघ्नेशाय, अघविनाशनाय, भीमाय, प्रमोदाय, आनन्दाय, सुरानन्दाय, मदोत्कटाय, हेरम्बाय, शम्बराय, शम्भवे, लम्बकर्णाय, महाबलाय, नन्दनाय, लुम्पटाय, भीममेघनादाय, धनञ्जयाय, विनायकाय, विरूपाक्षाय, वीराय, शूरवरप्रदाय, महागण-

पतये, बुद्धिप्रियाय, क्षिप्रप्रसादनाय, रुद्रप्रियाय, गणाध्यक्षाय, उमापुत्राय, गजाननाय, कुमारगुरवे, ईशानपुत्राय, मूषकवाहनाय, सिद्धिप्रदाय, सिद्धपतये, सिद्धाय, सिद्धिविनायकाय, अविघ्नतुम्बरवे, सिंहवाहनाय, मोहिनीप्रियाय, कटङ्कटाय, राजपुत्राय, सालङ्कटाय, सिताय, अमिताय, कूष्माण्डाय, सामसम्भूताय, दुर्जयाय, धूर्जयाय, नयाय, भूपतये, भुवनेशानाय, भूतानांपतये, अव्ययाय, विश्वकर्त्रे, विश्वमुखाय, विश्वरूपाय, अतिनिर्गुणाय, कवये, कवीनामृषभाय, ब्राह्मणाय, ब्रह्मवित्पतये, ज्येष्ठराजाय, श्रीनिधये, श्रीपतये, निधिप्रियाय, हिरण्मयपुरान्तःस्थाय, सूर्यमण्डलमध्यगाय, कराहतिध्वस्तसिन्धुसलिलाय, पुष्पदन्तभिदे, उमाङ्ककेलिसम्भूताय, मुक्तिदाय, फलदायकाय, किरीटिने, कुण्डलिने, हारिणे, वनमालिने, मनोमयाय, वैमुख्यहतदैत्यश्रिये, पादगत्याजितक्षितये, सद्योजाताय, स्वर्णकुञ्जमेखलिने, दुर्निमित्तहृते, दुःस्वप्नहृते, प्रहसनाय, गुणिने, नादप्रतिष्ठिताय, तेजोसि ॐ स्वरूपायस्वाहा। ध्यानं॥ ॐ सर्वरत्नाढ्यविलसन्नूपुराय, यूने, पीताम्बराय, खड्गधराय, खण्डवैशाखसंस्थिताय, चित्राङ्गाय, श्यामदशनाय, भालचन्द्राय, हविर्भुजाय, योगाधिपाय, तारकस्थाय, पुरुषाय, गजकर्णकाय, गणाधिराजाय, विजयस्थिराय, गजपतये, ध्वजिने, देवदेवाय, स्मरप्राणदीपकाय, वायुकीलकाय, विपश्चिद्वरदाय, नादाय, नादभिन्नमहारवाय, वराहवदनाय, मृत्युञ्जयाय, व्याघ्राजिनाम्बराय, इच्छाशक्तिभवाय, देवत्रात्रे, दैत्यविमर्दनाय, शम्भुवक्त्रोद्भवाय, शम्भुकोपघ्नाय, शम्भु-

हास्यभुवे, शम्भुतेजसे, शिवाशोकहारिणे, गौरीसुखावहाय, उमाङ्गमलजाय, गौरीतेजोभुवे, स्वर्धुनीभवाय, मर्त्यकायाय, महानादाय, गिरिवर्ष्मणे, शुभाननाय, सर्वात्मने, सर्वदेवात्मने, ब्रह्ममूर्ध्ने, ककुत्पतये, ब्रह्माण्डकुम्भजिते, व्योमभालाय, सत्यशिरोरुहाय, जगज्जन्मलयोन्मेषनिमेषाय, अग्न्यर्कसोमदृशे, गिरीन्द्रवदनाय, धर्माय, धर्मिष्ठाय, सामबृंहिताय, ग्रहर्क्षदशनाय, वाणीजिह्वाय, वासुकिनासिकाय, भ्रूमध्यसंस्थितब्रह्मणे, ब्रह्मविद्यामदोदकाय, कुलाचलांसाय, सोमार्कघण्टाय, रुद्रशिरोधराय, नदीनदभुजाय, सर्पाङ्गुलीकाय, तारकैर्नखाय, निम्ननाभये, श्रीहृदयाय, मेरुपृष्ठाय, अर्णवोदराय, कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषाय, पृथ्वीकटये, सृष्टिलिङ्गाय, शैलोरवे, ह्रस्वजानुकाय, पातालजङ्घाय, मुनिपादे, कालाङ्गुष्ठाय, त्रयीतनवे, ज्योतिर्मण्डलर्लांङ्गूलाय, हृदयालाननिश्चलाय, हृत्पद्मकर्णिकस्थाय, वियत्केलिसरोवराय, सद्भक्तध्याननिगडाय, पूजावारिनिवारिताय, प्रतापिने, कश्यपाय, यत्नाय, गणकाय, मन्दराय, बलिने, यशस्विने, धार्मिकाय, नेत्रे, प्रमथाय, प्रमथेश्वराय, चिन्तामणिस्थलपतये, कल्पद्रुमवनालयाय, रत्नमण्डपमध्यस्थाय, तेजोसि ॐ रत्नसिंहासनाश्रयाय-स्वाहा ॥ ध्यानं ॥ तीव्रशिरोद्धृतपदाय, ज्वालिनीमौलिलालिताय, नादनन्दितपीठश्रिये, भोगदाय, भूषिताननाय, प्रकामदायिनांपीठाय, स्फुरदुग्रासनाश्रयाय, तेजोवतांशिरोरत्नाय, सत्यनित्यावतंसिताय, सर्वविघ्नविनाशाय, सर्वशक्त्यम्बुजालयाय, रक्तपद्मासनाधाराय, वह्निधामत्रयालयाय, उन्नतप्रपदाय, गूढ-

गुल्फाय, संवृत्तपार्ष्णिकाय, पीनजङ्घाय, श्लिष्टजानवे, स्थूलोरवे, प्रोन्नमत्कटये, निम्ननाभये, स्थूलकुक्षये, पीनवक्षसे, बृहद्भुजाय, पीनग्रीवाय, कम्बुकण्ठाय, लम्बोष्ठाय, लम्बनासिकाय, भग्नवामरदाय, तुङ्गसव्यदन्ताय, महाहनवे, ह्रस्वनेत्रत्रयाय, शूर्पकर्णाय, निबिडमस्तकाय, स्तवकाकारपाणये, रत्नमौलये, निरङ्कुशाय, सर्पहारकटिसूत्राय, सर्पयज्ञोपवीतभृते, सर्पकोटीरकटकाय, सर्पग्रैवेयकाङ्गदाय, सर्पकक्ष्योदरबन्धाय, सर्पराजोत्तरच्छदाय, रक्ताय, रक्ताम्बरधराय, रक्तमाल्यविभूषणाय, रक्तेक्षणाय, रक्तकराय, नित्यरक्तोष्ठपल्लवाय, श्वेताय, श्वेताम्बरधराय, श्वेतमाल्यविभूषणाय, श्वेतातपत्ररुचिराय, श्वेतचामरवीजिताय, सर्वावयवसम्पूर्णाय, सर्वलक्षणलक्षिताय, सर्वभूषणभूषाढ्याय, सर्वशोभासमन्विताय, सर्वमङ्गलमङ्गल्याय, सर्वकारणकारणाय, सर्वदेवकराय, शार्ङ्गिणे, बीजपूरिणे, गदाधराय, शुभाङ्गाय, लोकशुभदाय, सुतन्तवे, तन्तुवर्धनाय, इक्षुचापधराय, शूलिने, चक्रपाणये, सरोजभृते, पाशिने, धृतोत्पलभराय, मञ्जरीभृते, सुदन्तभृते, कल्पवल्लीधराय, विश्वाभयदैककराय, वशिने, अक्षमालाधराय, ज्ञानमुद्रावते, मुद्गरायुधाय, पूर्णपात्रिणे, कम्बुधराय, विधृतालसमोदकाय, करस्थाम्रफलाय, चूतकलिकाभृते, कुठारभृते, पुष्करस्थस्वर्णघटाय, पूर्णरत्नाभिवर्षकाय, भारतीसुन्दरीनाथाय, विनायकरतिप्रियाय, महालक्ष्मीप्रियतमाय, सिद्धलक्ष्मीमनोरमाय, रमारमेशपूर्वाङ्गाय, उमोमेश्वरदक्षिणाय, महीवराहवामाङ्गाय, रतिकन्दर्पपश्चिमाय, आमोदमोदजननाय, तेजोसि ॐ स्वप्रमो-

दप्रमोदनाय स्वाहा ॥ ध्यानं ॥ समर्द्धितसमृद्धिश्रिये, ऋद्धिसिद्धिप्रवर्धनाय, दन्तसौमुख्यसुमुखाय, कान्तिकन्दलिताश्रयाय, मदनोपाश्रिताङ्घ्रये, कृतसौमुख्यदुर्मुखाय, विघ्नसोपप्लवोपघ्नाय, सर्वोन्नतमदद्रवाय, विघ्नहते, निम्नचरणाय, द्राविणीशक्तिसत्कृताय, तीव्रप्रसन्नवदनाय, पालिनीपालितैकदशे, मोहिनीमोहिताय, भोगदायिने, कान्तिमण्डिताय, कामिनीकान्तवक्त्रश्रिये, तीक्ष्णदृष्टये, एकदशे, वसुधारामदाय, अनादाय, महाशङ्खनिधिप्रभवे, नमद्वसुमतीमौलिप्रद्वपद्मनिधिप्रभवे, सदासद्गुरुसंसेव्याय, रोचिष्केशहृदाश्रयाय, ईशानमूर्ध्ने, दैत्येन्द्रशिखापवनदंशनाय, प्रत्यग्रनयनाय, दिव्याय, दिव्यास्त्रशतहस्तधृते, ऐरावतादिसर्वाशावारणवारणप्रियाय, वज्राद्यस्त्रपरीवाराय, गणचण्डसमाश्रयाय, जयाजयपरीवाराय, विजयाय, विजयावहाय, विजयार्चितपादाब्जाय, नित्यानित्यावतंसिताय, विलासिनीकृतोल्लासाय, शुण्डिने, सौन्दर्यमण्डिताय, अनन्ताय, अनन्तसुखदाय, सुमङ्गलातिमङ्गलाय, ज्ञानाश्रयाय, क्रियाधाराय, इच्छाशक्तिनिषेविताय, सुभगासंश्रितपदाय, ललितालतिताश्रयाय, कामिनीपालकाय, कामाय, कामिनीकेलिलालिताय, सरस्वत्याश्रिताय, गौरीनन्दनाय, श्रीनिकेतनाय, गुरुगतिप्रदाय, वाचांसिद्धाय, वागीश्वरीपतये, नलिनीकामुकाय, वामारामाय, ज्येष्ठामनोरमाय, रौद्रीमुद्रितपादाब्जाय, हुंबीजोत्तुङ्गशक्तिकाय, विश्वादिबीजस्वप्राणाय, स्वाहाशक्तिसकीलकाय, अमृताब्धिकृतावासाय, मदाघूर्णितलोचनाय, उच्छिष्टोच्छिष्टगणकाय, गणेशाय, गणनायकाय, सार्व-

कालिकसंसिद्धये, नित्यशोतिदिगम्बराय, अनपायाय, अनन्तदृष्टये, अप्रमेयाय, अजराय, अमराय, अनाबिलाय, अप्रतिहताय, अच्युताय, अमर्त्याय, अक्षराय, अप्रतर्क्यजयाय, जाप्याय, अनाधाराय, अनामयाय, अमलाय, अगाधसिद्धये, अद्वैताय, अघोराय, अप्रमिताननाय, अनाकाराय, अधिरूपाय, अग्निबलघ्नाय, अव्यक्तलक्षणाय, आधारपीठाय, आधाराय, आधाराधेयवर्जिताय, आखुकेतनाय, तेजोसि ॐ आशापूरकाय, ॥ ध्यानं ॥ आखुवाह्यवाहनाय, इक्षुसागरमध्यस्थाय, इक्षुभक्षणलालसाय, इन्द्रचापातिरिक्तश्रिये, इक्षुचापनिषेविताय, इन्द्रगोपसमानश्रिये, इन्द्रनीलनिभद्युतये, इन्दीवरदलश्यामाय, इन्दुमण्डलनिर्मलाय, इध्मप्रियाय, इळाधाम्ने, इळावते, इन्दिराप्रदाय, इक्ष्वाकुविघ्नविध्वंसिने, इतिकर्तव्यतारताय, ईशानमौलये, ईशानाय, ईशानप्रियाय, ईतिघ्ने, ईषणात्रयकल्पान्ताय, ईहामात्रविवर्जिताय, उपेन्द्राय, उग्राय, उडुभृन्मौलये, ईरुण्डकप्रियाय, उन्नताननाय, उत्तुङ्गाय, उदाराय, त्रिदशाग्रण्ये, ऊर्जस्वते, उज्वलातमीयाय, ऊहापोहदुरासदाय, ऋग्यजुस्सामनयनाय, ऋद्धिसिद्धिसमर्पकाय, ऋजुस्वान्तैकसुलभाय, ऋणत्रयविमोचकाय, स्वभक्तानांलुप्तविघ्नाय, सुरद्विषां लुप्तशक्तये, विमुखार्चनांलुप्तश्रिये, लूताविस्फोटनाशनाय, एकारपीठमध्यस्थाय, एणपादकृतोदराय, एजिताखिलदैत्यश्रिये, एधिताखिलसंश्रयाय, ऐश्वर्यनिधये, ऐहिकामुस्मिकैश्वर्यप्रदाय, ऐरम्मदसमुन्मेषाय, ऐरावतसमाननाय, ॐकारवाच्याय, ॐकाराय, ओजस्वते, औषधीपतये, औदार्यनिधये,

औद्धत्यधुर्याय, औन्नत्यनिःसमाय, सर्वनागानामङ्कुशाय, अङ्कुशाकारसंस्थिताय, असमस्तविसर्गान्तपदेषुपरिनिष्ठिताय, कमण्डलुधराय, कल्पाँय[६], कपर्दिने, कलभाननाय, कर्मसाक्षिणे, कर्मभोक्त्रे, कर्माकर्मफलप्रदाय, कदम्बगोलकाकाराय, कूष्माण्डगणनायकाय, कारुण्यदेहाय, कपिलाय, कथकाँय[७], कटिसूत्रभृते, खर्वाय, खड्गप्रियाय, खड्गिने, खेयान्तःस्थाय, खनिर्मलाय, खट्वाङ्गशृङ्गनिलयाय, खट्वाङ्गिने, षड्गुणाश्रयाय, गुणाढ्याँय, गहनाय, गेयाय, गद्यपद्यसुधार्णवाय, गद्यगानप्रियाय, गर्जाय, गीतगीर्वाणपूजिताय, गुह्याचाररताय, गुह्याय, गुह्यागमनिरूपिताय, गुह्याशयाँय[९], गुडाब्धिस्थाय, गुरुगम्याय, गुरोर्गुरवे, घण्टाघुर्घुरिकामालिने, घटकुम्भाय, घटोदराय, चण्डाय, चण्डेश्वराध्यक्षाय, चण्डीशाय, तेजोसि ॐचण्डविक्रमायस्वाँहा ॥ ध्यानं ॥ ॐचराचरपित्रेस्वाहा चिन्तामणये, चर्वणलालसाय, छन्दसे, छन्दोभवाय, छन्दोदुर्लक्ष्याय, छन्दविग्रहाय, जगद्योनये, जगत्साक्षिणे, जगदीशाँय[१], जगन्मयाय, जयाजयपराय, अजेय्याय, जितसिंहासनप्रभवे, ज्वलज्वलोल्लसद्दानझाङ्कारिभ्रमराकुलाय, टङ्कारस्फारसंरावाय, टङ्कारमणिनूपुराय, ठद्वयपल्लवान्ताय, सर्वमन्त्रेषुसिद्धिदाय, दिण्डिमुण्डाँय[२], डाकिनीशाय, डामराय, डिण्डिमप्रियाय, ढक्कानिनादमुदिताय, ढङ्काय, ढौण्ढिनायकाय, तत्त्वानांप्रकृतितत्त्वाय, तत्त्वंपदनिरूपिताय, तारकान्तरसंस्थाय, तारकाँय[३], तारकान्तकाय, स्थाणवे, स्थाणुप्रियाङ्गभुवे, स्थावरजङ्गमाधिपाय, दक्षयज्ञप्रमथनाय, दात्रे, दानमदोदयाय, दयावते,

दिव्यविभवाय, दण्डभृते, दण्डनायकाय, दन्तप्रभिन्नाभ्रमालाय, दैत्यवारणदारणाय, दंष्ट्रालग्नद्विपघटाय, देवार्थोत्तगजाकृतये, धनाय, धनपतिबन्धवे, धनदाय, धरणीधराय, ध्यानैकप्रकटाय, ध्येयाय, ध्यानाय, ध्यानपरायणाय, ध्वनिप्रकृतिधित्काराय, ब्रह्माण्डावलिमेखलाय, नन्दिने, नन्दिप्रियाय, नादाय, नादमध्यप्रतिष्ठिताय, निष्कलाय, निर्मलाय, नित्याय, नित्यानित्याय, निरामयाय, परंव्योम्ने, परंधाम्ने, परमात्मने, परंपदाय, परात्पराय, पशुपतये, पशुपाशविमोचनाय, पूर्णानन्दाय, परानन्दाय, पुराणपुरुषोत्तमाय, पद्मप्रसन्ननयनाय, प्रणताज्ञाननाशनाय, प्रमाणप्रत्ययातीताय, प्रणतार्तिनिवारणाय, फणिहस्ताय, फणिपतिफूत्काराय, फाणितप्रियाय, बाणार्चिताङ्घ्रियुगलाय, बालकेलिकुतूहलाय, ब्रह्मणे, ब्रह्मार्चितपदाय, ब्रह्मचारिणे, बृहस्पतये, बृहत्तमाय, ब्रह्मपराय, ब्राह्मण्याय, ब्रह्मवित्प्रियाय, भ्रूक्षेपदत्तलक्ष्मीकाय, गर्भाय, गर्भभयापहाय, भगवते, भक्तिसुलभाय, भूतिदाय, भूतिभूषणाय, भव्याय, तेजोसि ॐ भूतालयायस्वाहा ॥ ध्यानं ॥

ॐ भोगदात्रे, भ्रूमध्यगोचराय, मन्त्राय, मन्त्रपतये, मन्त्रिणे, मदमत्ताय, मदाननाय, मेखलाधीश्वराय, मन्दगतये, दन्तिनिभेक्षणाय, महाबलाय, महावीर्याय, महाप्राणाय, महाननाय, यज्ञाय, यज्ञपतये, यज्ञगोप्त्रे, यज्ञफलप्रदाय, यज्ञेश्वराय, यज्ञगम्याय, यागसवे, याजकप्रियाय, रसाय, रसप्रियाय, रस्यरञ्जकाय, रावणार्चिताय, राधारक्षाकराय, रत्नगर्भाय, राज्यसुखप्रदाय, लक्षालक्षप्रदाय, लक्ष्याय, लक्ष्यस्थाय, लड्डुकप्रियाय,

लाभप्रियाय, लास्यपराय, लाभकृते, लोकविश्रुताय, वरेण्याय, वह्निवदनाय, वन्द्याय, वेदान्तगोचराय, विश्वकर्त्रे, विश्वचक्षुषे, विधात्रे, विश्वतोमुखाय, वामदेवाय, विश्वजेत्रे, वज्रिणे, वज्रनिवारणाय, विवस्वद्बन्धनाय, विश्वाधाराय, विश्वेश्वराय, विभवे, शास्त्रे, शाखाग्रनिलयाय, शरण्याय, शम्बरेश्वराय, शब्दब्रह्ममयाय, प्राणाय, शम्भवे, शक्तिगणेश्वराय, षड्ऋतुकुसुमस्रग्विने, षडाधाराय, षडक्षराय, संसारवैद्याय, सर्वज्ञाय, सर्वभेषजभेषजाय, सृष्टिस्थितिलयक्रीडाय, असुरकुञ्जरभेदनाय, सिन्दूरितमहाकुम्भाय, सदसद्व्यक्तिदायकाय, समुद्रमथनेसाक्षिणे, स्वसंवेद्याय, स्वदक्षिणाय, स्वतन्त्राय, सत्यसङ्कल्पाय, सामगानरताय, सुखिने, हंसाय, हस्तिने, पिशाचेशाय, हवनाय, हव्यकव्यभुजे, हव्याय, हुतप्रियाय, हृष्टाय, हृल्लेखमन्त्रमध्यगाय, क्षेत्राधिपाय, क्षमाभर्त्रे, क्षमापारपरायणाय, क्षिप्रक्षेमकराय, क्षेमानन्दाय, क्षोणीसुरद्रुमाय, धर्मप्रदाय, अर्थदाय, कामदात्रे, सौभाग्यवर्धनाय, विद्याप्रदाय, विभवदाय, तेजोसि ॐ भुक्तिमुक्तिफलप्रदायस्वाहा ॥ ध्यानं ॥ अतिरूपकराय, वीरश्रीप्रदाय, विजयप्रदाय, सर्ववश्यकराय, गर्भदोषघ्ने, पुत्रपौत्रदाय, मेधादाय, कीर्तिदाय, शोकहारिणे, दौर्भाग्यनाशनाय, प्रतिवादिमुखस्तम्भाय, दुष्टचित्तप्रसादनाय, पराभिचारश्रवणाय, दुःखघ्नाय, बन्धमोक्षदाय, लवत्रुटिकलाकाष्ठानिमेषतत्पराय, क्षणाय, घटीमुहूर्तप्रहराय, दिवानक्ताय, अहर्निशाय, पक्षाय, मासाय, अयनाय, वर्षाय, युगाय, कल्पाय, महालयाय, राशितारातिथियोगवाराक्षकरणांशकाय, लग्नहोराकाल-

चक्राय, मेरवे, सप्तर्षिभ्यः, ध्रुवाय, राहवे, मन्दाय, कवये, जीवाय, बुधाय, भौमाय, शशिने, रवये, कालशक्तये, स्थितये, विश्वस्मै, स्थावराय, जङ्गमाय, जगते, भुवे, अद्भ्यः, अग्नये, मरुते, व्योम्ने, अहङ्कृतये, प्रकृतये, पुंसे, ब्रह्मणे, विष्णवे, शिवाय, रुद्राय, ईशाय, शक्तये, सदाशिवाय, त्रिदशेभ्यः, पितृभ्यः, सिद्धेभ्यः, यक्षरक्षोभ्यः, किन्नरेभ्यः, सिद्धविद्याधरेभ्यः, भूतेभ्यः, मनुष्येभ्यः, पशुभ्यः, खगेभ्यः, समुद्रेभ्यः, सरिद्भ्यः, शैलेभ्यः, भूतभव्यभवोद्भवाय, सांख्यपातञ्जलयोगेभ्यः, पुराणश्रुतिस्मृतिभ्यः, वेदाङ्गेभ्यः, समाचाराय, मीमांसान्यायविस्तराय, आयुर्वेदाय, धनुर्वेदाय, गन्धर्वाय, काव्याय, नाटकाय, वैखानसाय, भागवताय, मानुष्याय, पाञ्चरात्रिकाय, शैवाय, पाशुपताय, कालीमुखाय, भैरवशासनाय, शाक्ताय, वैनायकाय, सौरजैनार्हसंहिताय, सते, विराजे, असते, तेजोसि ॐ व्यक्तायस्वाहा ॥ ध्यानं ॥ ॐ अव्यक्तायस्वाहा, सचेतनाय, अचेतनाय, बन्धकाय, मोक्षसुखदाय, भोगाय, योगाय, महते, अणवे, स्वस्तिहुंफट्स्वधास्वाहाश्रौषट्वौषट्वषण्मयाय, ज्ञानाय, विज्ञानाय, आनन्दाय, बोधाय, संविदे, समाय, शमाय, एकाय, एकाक्षराधाराय, एकाक्षरपरायणाय, एकाग्रधिये, एकवीराय, एकानेकस्वरूपधृषे, द्विरूपाय, द्विभुजाय, द्व्यक्षाय, द्विरदाय, द्विपरक्षकाय, द्वैमातुराय, द्विवदनाय, द्वन्द्वहीनाय, द्वयातिगाय, त्रिधामात्राकृतस्नहाय, त्रिवर्गफलदायकाय, त्रिगुणात्मने, त्रिलोकादये, त्रिशक्त्यंशाय, त्रिलोचनाय, चतुर्बाहवे, चतुर्दन्ताय, चतुरात्मने, चतुर्मुखाय, चतुर्वर्गमयोपायाय, चतु-

वर्णाश्रमाश्रयाय, चतुर्वेदवचोवृत्तिपरिवृत्तिप्रवर्तकाय, चतुर्थीपूजनप्रीताय, चतुर्थीतिथिसम्भवाय, पञ्चाक्षराय, पञ्चात्मने, पञ्चास्याय, पञ्चकृत्यकृते, पञ्चधाराय, पञ्चवर्णाय, पञ्चाक्षरपरायणाय, पञ्चतालाय, पञ्चकराय, पञ्चप्रणवभाविताय, पञ्चब्रह्ममयस्फूर्तये, पञ्चावरणवारिताय, पञ्चभक्ष्यप्रियाय, पञ्चबाणाय, पञ्चशिवात्मकाय, षट्कोणपीठाय, षट्चक्रधाम्ने, षड्ग्रन्थिभेदकाय, षडङ्गध्वान्तविध्वंसिने, षडङ्गुलमहाह्रदाय, षण्मुखाय, षण्मुखभ्रात्रे, षड्शक्तिपरिवारिताय, षड्वर्गवैरिविध्वंसिने, षडूर्मिभयभञ्जनाय, षट्कर्मदूराय, षट्कर्मिणे, षाड्गुण्याय, षड्रसाश्रयाय, सप्तपातालचरणाय, सप्तद्वीपोरुमण्डलाय, सप्तस्वर्लोकमुकुटाय, सप्तसप्तिवरप्रदाय, सप्ताङ्गराज्यसुखदाय, सप्तर्षिगणवन्दिताय, सप्तच्छन्दोनिधये, सप्तहोत्रे, सप्तस्वराश्रयाय, सप्ताब्धिकेलिकासाराय, सप्तमातृनिषेविताय, सप्तच्छन्दमहामोदाय, सप्तच्छन्दसुखप्रभवे, अष्टमूर्तये, ध्येयमूर्तये, अष्टप्रकृतिकारणाय, अष्टाङ्गयोगफलभृते, अष्टपत्राम्बुजासनाय, अष्टशक्तिसमानश्रिये, अष्टैश्वर्यप्रदायकाय, अष्टपीठोपपीठश्रिये, अष्टमातृसमावृताय, अष्टभैरवसेव्याय, तेजोसि ॐ अष्टवसुवन्द्यायस्वाहा ॥ ध्यानं ॥ ॐ अष्टमूर्तिमतेस्वाहा, अष्टवक्रस्फुरन्मूर्तये, अष्टद्रव्यहविःप्रियाय, अष्टश्रिये, अष्टसामश्रिये, अष्टहृष्टसगीतकाय, नवनागासनाधेयाय, नवनिविडसेविताय, नवद्वारपुराधाराय, नवाधारनिकेतनाय, नवनारायणस्तुत्याय, नवदुर्गानिषेविताय, नवनाथमहानाथाय, नवनागविभूषणाय, नवरत्नविचित्राङ्गाय, नवशक्तिशरोद्यताय, दशात्मकाय, दशभु-

जाय, दशदिक्पतिवन्दिताय, दशध्येयाय, दशप्राणाय, दशेन्द्रियनियामकाय, दशाक्षरमहामन्त्राय, दशाशाव्यापिविग्रहाय, एकादशरुद्रस्तुत्याय, एकादशाक्षरैर्मनवे, द्वादशोद्दण्डदोर्दण्डाय, द्वादशान्तनिकेतनाय, त्रयोदशविधाभिन्नविश्वेदेवादिदैवताय, चतुर्दशेन्द्रवरदाय, चतुर्दशमनुप्रभवे, चतुर्दशाद्यविद्याढ्याय, चतुर्दशजगत्पतये, पञ्चदशसाम्ने, पञ्चदशशीतांशुनिर्मलाय, षोडशाधारनिलयाय, षोडशाम्बरमातृकाय, षोडशान्तपदावासाय, षोडशेन्दुकलात्मकाय, सप्तदशीकलायै, सप्तदशाक्षराय, अष्टादशद्वीपपतये, अष्टादशपुराकृते, अष्टादशौषधीसृष्टये, अष्टादशविधिप्रभवे, अष्टादशलिपिकृतये, अष्टादशविजातिकृते, एकविंशपुंसे, एकविंशत्यङ्गुलिपल्लवाय, चतुर्विंशतितत्त्वात्मने, पञ्चविंशतिपूरुषाय, सप्तविंशतितारेशाय, सप्तविंशतियोगकृते, द्वात्रिंशद्भैरवाधीशाय, चतुस्त्रिंशन्महाह्रदाय, षड्त्रिंशत्तत्त्वसम्भूतये, अष्टात्रिंशत्कलात्मकाय, नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलाय, पञ्चाशदक्षरश्रेणये, पञ्चाशद्रुद्रविग्रहाय, पञ्चाशद्विष्णुशक्तीशाय, पञ्चाशन्मातृकालयाय, द्विपञ्चाशद्वपुश्रेणये, त्रिषष्ट्यक्षरसंश्रयाय, चतुःषष्टिमहासिद्धयोगिनीवृन्दवन्दिताय, चतुःषष्ट्यर्णनिर्णेताय, चतुःषष्टिकलानिधये, अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनाय, चतुर्णवतिमन्त्रात्मने, षण्णवत्यधिकप्रभवे, शतानन्दाय, शतधृतये, शतपत्रायतेक्षणाय, शतानेकाय, शतमुखाय, शतधारवरायुधाय, सहस्रपत्रनिलयाय, सहस्रफणिभूषणाय, सहस्रशीर्षायपुरुषाय, सहस्राक्षाय, सहस्रपादे, सहस्रनामसंस्तुत्याय, सहस्राक्षबला-

प्रहाय, दशसहस्रफणिभृते, फणिराजकृतासनाय, अष्टाशीति-सहस्रौघमहर्षिस्तोत्रपाठिताय, लक्ष्याधारप्रियाधाराय, लक्ष्याधारमनोलयाय, चतुर्लक्षजगत्प्रीताय, चतुर्लक्षप्रकाशकाय, कोटिसूर्यप्रतीकाशाय, कोटिचन्द्रांशुनिर्मलाय, शिवोद्भवाद्य-ष्टकोटिविनायकधुरन्धराय, सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतये, त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकाय, चतुरशीतिलक्षात्मजीवदेहव्यवस्थितये, अनन्तनाम्ने, अनन्तश्रिये, अनन्ताय, तेजोसि ॐअनन्तसौख्यदायस्वाहा ॥ इति वैनायकस्येदं नाम्नां सहस्रमीरितम् । इदं ब्राह्मे मुहूर्ते यः पठति प्रत्यहं नरः । करस्थं तस्य सकलमैहिकामुष्मिकं सुखम् । आयुरारोग्यमैश्वर्यं धैर्यं शौर्यं बलं यशः । मेधा प्रज्ञा धृतिः कान्तिः सौभाग्यमतिरूपता । सत्यं दया क्षमा शान्तिर्दाक्षिण्यं धर्मशीलता । सभापाण्डित्यमौदार्यं गाम्भीर्यं ब्रह्मवर्चसम् । ओजस्तेजः कुलं शीलं प्रतापं वीर्यमार्यता । ज्ञानं विज्ञानमास्तिक्यं धनं धान्यं भवेद्ध्रुवम् । शाकिनीडाकिनीरक्षोयक्षग्रहापहारकम् । साम्राज्यसुखदं सर्वसपत्नमदमर्दनम् । दुःस्वप्ननाशनं नित्यं स्वामिचित्तप्रसादनम् । सङ्ग्रामरङ्गे सर्वेषामिदमेकं जयप्रदम् । गर्भरक्षाकरं सर्ववन्ध्यादोषनिवारकम् । पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम् । देशे तत्र न दुर्भिक्षमीतयो दुरितानि च ॥ मनोरथप्रदं नित्यं सर्वरोगविनाशकम् । महागणपतेर्नाम्नां सहस्रं पठ्यते तु यः । सायं मध्यन्दिने प्रातस्तस्य सिद्धिर्भवेद्ध्रुवम् ।

इति श्रीगणपतिसहस्रनाम सम्पूर्णम् ॥

---

## श्रीमहाराज्ञीस्तोत्रम् ।

ॐ श्रीभैरव उवाच। अधुना कथयिष्यामि स्तोत्रराजं परात्परम्। मूलमन्त्रमयं दिव्यं तत्त्वभूतं मनोहरम् ॥ राज्ञीप्रियं पापहरं लक्षपूजाफलप्रदम् । जपलक्षसमं स्तोत्रं ध्यानकोटिसमं प्रिये ॥ राज्ञीस्तोत्रस्य देवेशि ब्रह्मा ऋषिरुदाहृतः । गायत्री छन्द इत्युक्तं श्रीराज्ञी देवतेरिता ॥ माया वीजं परा शक्तिः कामः कीलकमीश्वरि । भोगापवर्गसिद्ध्यर्थे विनियोगः प्रकीर्तितः ॥ ॥ अस्य श्रीमहाराज्ञीस्तवराजस्य श्रीब्रह्माऋषिः । गायत्री छन्दः, श्रीमहाराज्ञी भूतेश्वरी देवता, ह्रीं वीजं, सौः शक्तिः, क्लींकीलकं, आत्मनो० श्रीमहाराज्ञीप्रसादद्वारा भोगापवर्गसिद्ध्यर्थे, पाठे विनियोगः ॥ ध्यानम ॥ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरिगतामुरगोपवीताम्। खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ ॥ तारमिन्दुकलिकावतंसितं वेदसागरमणिं मनोहरम् । यो जपेदुषसि रत्नमालया राज्यमाशु लभते स साधकः ॥ १ ॥ भूतिमिन्दुनवबिम्बमण्डितां नादबिन्दुललितां जपेत्तु यः । वारमेकमुरुवारणस्थितो जेष्यति समयमयानऽरीत्रणे ॥ २ ॥ रसां जपेद्यो भुवनेशि मन्त्री त्वन्मन्त्रमध्ये मदनोपतप्तः । रम्भां समालिङ्ग्य विमानचारी लीलां भजेन्नन्दनवाटिकायाम् ॥ ३ ॥ वह्निबीजमणिमाद्यसिद्धिदं बिन्दुबिम्बशशिखण्डमण्डितम् । यो जपेन्निशि धनाभिलाषवान् स क्षणाद्भवति वित्तदोपमः ॥ ४ ॥ कामराजममराभिवन्दितं यो जपेन्निधुवनेऽक्षमालया । तस्य यान्ति वशतां सुराङ्गनाः किं पुनर्जगति भूभृदङ्गनाः ॥ ५ ॥ शक्तिं भक्त्या यो जपेच्छक्तिपूजाकाले कालीपादपद्मार्पितान्तः । नक्तं तस्य स्मेरवक्त्रा

घृताची वश्या वेश्या स्वर्गता वा शची च ॥ ६ ॥ भगवत्यै तथा राज्यै नाममन्त्रमिति स्मरेत् । यो देवि तस्य वश्याः स्युर्भैरवस्याष्टसिद्धयः ॥ ७ ॥ मायां नमोन्ते यदि साधकेन्द्रो जपेन्महेशानि शिवालयस्थः । तत्रैव देवीं परमार्थराज्ञीं पश्येत्स सद्यो वरसिद्धिदात्रीम् ॥ ८ ॥ ठद्वयं यदि जपेन्निशाक्षये क्षीरभुक् स्वतटिनीतटस्थितः । जिष्णुविष्णुकमलासनेश्वरा यान्ति देवि वशतां तदा क्षणात् ॥ ९ ॥ भूगेहवृत्तत्रयनागपत्रषडारयोन्यश्रकबिन्दुबिम्बे । निषेदुषीं राजकुलाधिदेवीं राज्ञीं भजे राजकलावतंसाम् ॥ १० ॥ देवि श्रीभूतधात्रीप्रवरगुणमये निष्कले निर्गुणे मे माये मातः शरण्ये गिरिवरतनये चिन्मये तत्त्वरूपे । दुर्गे चण्डि प्रमाथे त्रिपुरविजयिनि स्मेरवक्त्रे वरेण्ये कारुण्याढ्ये प्रशस्ते सुरदितिजनुते राज्ञि वै त्वं प्रसीद ॥ ११ ॥ इति स्तोत्रं मन्त्रस्फुरणकरुणानन्दनिलयं पठेद्भक्त्या प्रातस्तव गिरिसुते योगनिलयम् । भवेत्सद्यो भूमौ नृपमुकुटनीराजितपदोऽमृतो मुक्तिं वान्ते तव भवनमाप्नोति वरदे ॥ १२ ॥ इति राज्याः परं तत्त्वं पञ्चाङ्गमखिलं शिवे । सर्वस्वं च रहस्यं च सर्वसारस्वनप्रदम् ॥ १३ ॥ आनन्दवर्धनं गुह्यं परमैश्वर्यकारणम् । भोगापवर्गदं पुण्यं दारिद्र्यभयनाशनम् ॥ १४ ॥ राज्यप्रदं भक्तिकरं सर्वशत्रुनिबर्हणम् । पञ्चाङ्गमखिलं देव्या न वक्तव्यं दुरात्मने ॥ तव भक्त्या मया ख्यातं गोपनीयं प्रयत्नतः ॥ १५ ॥ इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये श्रीमहाराज्ञीस्तवराजः ॥

## श्रीराज्ञीस्तुतिः ।

ॐ संसारसागरमहं तरितुं सुनौकां राज्ञीं नमामि शिरसा शिवसुन्दरीं त्वाम् ॥ सर्वेश्वरीं सकललोकसुखप्रदात्रीं त्वामेव

देवि सततं शरणं प्रपद्ये ॥ १ ॥ मातः पयोधरयुगं पिबतु त्वदीयं नागाननर्तुमुखवत्सलपुत्रयुग्मम् ॥ निर्णेजनाम्बुन इह स्पृहयाम्यहं तु त्वत्पादपद्मयुगलस्य भवाग्निशान्त्यै ॥ २ ॥ मातस्त्वदीयपरितोषविशेषलब्धे छत्रे प्रहृष्यतु सदा भगवान्सुरेन्द्रः ॥ पीयूषवर्षणकरात्तव देवि पादच्छत्राद्विना किमपि राज्ञि न नाम याचे ॥ ३ ॥ मोहाटवीविकटसंकटपीडितोऽहं राज्ञी प्रपन्नपरमार्तिहरा त्वमेका ॥ जाज्वल्यतेऽम्ब हृदयार्तिकरो ममान्तः पापाग्निरेशि शमयैनममाम्बरूपे ॥ ४ ॥ आरारटीमि करुणं भवतापतप्तः प्रोल्लालपीमि पतितो भवदुःखसिन्धौ ॥ मोमोर्मि राज्ञि लुठितो भवसर्पदष्टस्त्वामन्तरेण शरणं मम कः शरण्ये ॥ ५ ॥ राज्ञि प्रपन्नवरदे सुकृतादपर्णां त्वामाश्रितोऽस्मि सुचिरात्तु महद्विचित्रम् ॥ किं नास्मि भैरवि ऋणैस्त्रिविधैर्विमुक्तः पाशैरिवोत्कटविषाक्तभुजङ्गमानाम् ॥ ६ ॥ राज्ञि प्रसीद नतसौख्यकरे मृडानि रुद्राणि रोगहरणे चतुरे प्रसीद ॥ शर्वाणि सर्वजनपापहरे प्रसीद गौरि प्रसीद गुणगौरि शिवे प्रसीद ॥ ७ ॥ कल्याणि राज्ञि जगदीश्वरि विश्वमातस्त्वामन्तरेण नहि देवि सुखं जनस्य ॥ पुत्रस्य दुःखहरणे सततोद्यता द्राक् मातेव हि स्नुतकुचा नु भवत्यवश्यम् ॥ ८ ॥ राज्यष्टकमिदं पुण्यं यः पठेद्धर्षपूरितः ॥ सोऽत्र द्राक् प्राप्नुयात्कामान्परलोके च स्वर्गतिम् ॥ ९ ॥ इति श्रीराज्ञीस्तुतिः ॥

## श्रीज्वालामुखीस्तोत्रम् ।

ॐ जाज्वल्यमानवपुषा दशदिग्विभागान्सन्दीपयन्त्यभयपद्मगदावराढ्या ॥ सिंहास्थिता शशिकलाभरणा त्रिनेत्रा ज्वालामुखी हरतु मोहतमः सदा नः ॥ १ ॥ आब्रह्मकीटजननीं

महिषीं शिवस्य मुग्धस्मितां प्रलयकोटिरविप्रकाशाम् ॥ ज्वालामुखीं कनककुण्डलशोभितांसां वन्दे पुनः पुनरपीह सहस्रकृत्वः ॥ २ ॥ देदीप्यमानमुकुटद्युतिभिश्च देवैर्दासैरिव द्विगुणितांघ्रिनखप्रदीप्तिम् ॥ ज्वालामुखीं सकलमङ्गलमङ्गलां तामम्बां नतोऽस्म्यखिलदुःखविपत्तिदग्ध्रीम् ॥ ३ ॥ क्षित्यब्हुताशपवनाम्बरसूर्यचन्द्रयष्ट्राख्यमूर्तिममलानपि पावयन्तीम् ॥ ज्वालामुखीं प्रणतकल्पलतां शिवस्य साम्राज्यशक्तिमतुलां महतीं नमामि ॥ ४ ॥ नौमीश्वरीं त्रिजगतोऽभयदानशौण्डां ज्वालामहार्यभवजालहरां नमामि ॥ मोहान्धकारहरणे विमलेन्दुकान्ति देवीं सदा भगवतीं मनसा स्मरामि ॥ ५ ॥ दुष्कर्मवायुभिरितस्तत एव दीप्तैः पापज्वलज्ज्वलनजातशिखाकलापैः ॥ दग्धं च जीवयतु मां परितो लुठन्तं देवी दयार्द्रहृदयामृतपूर्णदृष्ट्या ॥६॥ ज्वालामुखी ज्वलदनल्पलयाग्निकोटिरोचिष्मती रविशशिप्रतिभानकर्त्री ॥ भक्तस्य भर्गवपुषा भवभञ्जनाय भूयात्सदाभ्युदयदानवदान्यमुख्या ॥ ७ ॥ त्वं चौषधीशमुकुटाऽहमसाध्यरोगस्त्वं चित्प्रदीप्तिरहमत्र भवान्ध्यमग्नः ॥ त्वं चाम्ब ! कल्पतरुरेवमहं च भिक्षुर्ज्वालामुखि प्रकुरु देवि यथोचितं मे ॥८॥ यद्ध्यानकेसरिसमाक्रमणोत्थभीतेर्मर्मव्यथाजनकदुःखशतानि सद्यः ॥ गोमायवन्ति परितो भृशकान्दिशीकानस्मांश्च पालयतु सैव भवाब्धिदुःखात् ॥ ९ ॥ ज्वालामुखि क्षणमपीह विलम्बमम्ब नार्तो ह्यनर्थपतितः सहते विपन्नः ॥ हस्तस्थितामृतकमण्डलुधारिणेव मां मूर्च्छितं झटिति जीवय तापतप्तम् ॥ १० ॥ बाह्यान्ध्यनाशनविधौ रविचन्द्रवह्निज्योतींषि देवि दययाऽजनयः पुरा त्वम् ॥ एतत्तु रूपमखिलान्तरमोहरात्रिध्वान्ता-

न्तकारि तव यत्स्फुरतादतोऽन्तः ॥ ११ ॥ मन्ये त्रिधा-
मनयने नयनत्रयं ते भक्तार्तिनाशननिमित्तविलोकनाय ॥
मातः परं यदपि देवि तथाप्यधन्यस्त्वदृष्टिपातरहितोस्म्यहहा
हतोऽस्मि ॥ १२ ॥ सत्यं ब्रवीमि शृणु चित्त मदान्ध मूर्ख मा
गाः कदापि विषयान्विषमान्विषाक्तान् ॥ ईशीमपारकरुणां
भवभीतिभेत्रीमम्बां भजस्व सततं परसौख्यदात्रीम् ॥ १३ ॥
त्वं मे महेशि जननी परमार्तिहर्त्री त्वं मे पिता हिततमस्त्वमहे-
तुबंधुः ॥ त्वं मे भवाब्धितरणे दृढनौस्त्वमेव दुःखामयाविहरणे
चतुरश्च वैद्यः ॥ १४ ॥ ज्वालां जगज्जननसंहरणस्थितीनां हेतुं
गतिं मुषितलज्जितदुःखितानाम् ॥ उन्मोचनां च भवबंधनदुर्ग-
तीनां त्वां नौमि नौमि शरणं शरणागतानाम् ॥ १५ ॥ ज्वाला-
मुखीस्तवमिमं शृणुयात्पठेद्वा यः श्रद्धया परमया बहुभक्ति-
युक्तः ॥ भूयात्स दग्धबहुजन्मशतार्जिताऽघोऽविज्ञोऽप्यनेकजन-
नाथितराज्यभूमिः ॥ १६ ॥ इति श्रीज्वालामुखीस्तोत्रं समाप्तम् ।

## श्रीशारिकास्तोत्रम् ।

ॐ अष्टादशैरसिगदादियुतैर्भुजैर्या त्रातुं समस्तभुवनानि
विपद्भयेभ्यः ॥ जागर्त्यशेषजनदुःखहरा परा सा श्रीशारिका
दिशतु मङ्गलसन्ततिं नः ॥ १ ॥ उद्यत्सहस्ररविभास्करदीप्ति-
दीप्तां सिंहासनां शशिकलाभरणां त्रिनेत्राम् ॥ यां चिन्तयन्ति
बहुभक्तिरसार्द्रचित्ताः श्रीशारिका० ॥ २ ॥ यत्पादयोः सकृ-
दपीह कृतार्चनो ना भक्त्यान्वितो ह्यनुभवत्यमरप्रभुत्वम् ॥
श्रीराजराजसखिसौख्यनिवासभूमिः श्रीशारिका० ॥ ३ ॥
सौदामनीप्रमदमत्तगजेन्द्रकर्णास्थित्या समापि भजते स्थिरतां
विभूतिः ॥ यत्पादपङ्कजयुगाश्रयणात्सदा सा श्रीशारिका०

॥ ४ ॥ यत्कीर्तनश्रवणसंमननोत्थपुण्यं शक्नोति नो गणयितुं बहुधाप्यनन्तः ॥ साऽशेषरोगदलनाय धृतौषधीशा श्रीशारिका० ॥ ५ ॥ श्रीमातृकाभिरुपसेवितपादधूल्या प्रद्युम्नपीठसमवस्थितया ययेश्या ॥ कश्मीरदेशजनता परिपाल्यते सा श्रीशारिका० ॥ ६ ॥ यस्याः प्रदक्षिणपरिक्रमणात्सुभक्त्या पापोऽप्यलंघ्यभवसागरपारमेति ॥ सा शोकमोहपरितापविपत्तिहर्त्री श्रीशारिका० ॥ ७ ॥ मूलालवालमणिपूरकनाभिपद्महृत्कण्ठशिष्टिमतिवाह्य करन्ध्रमेत्य ॥ या मोदते सह शिवेन सहस्रपत्रे श्रीशारिका० ॥ ८ ॥ यस्या अनाहतनिनादसुधारसेन स्नातः परात्परसुखानुभवात्प्रहृष्टः ॥ जीवंश्च मुक्त इव भाति नरोत्तमः सा श्रीशारिका० ॥ ९ ॥ यद्देहसंगतिरसेन सुधापरार्धधिकारकेण विषधारणशक्तियुक्तः ॥ श्रीनीलकण्ठ इति कीर्तिमवाप शंभुः श्रीशारिका दिशतु मंगलसंततिं नः ॥ १० ॥ अमे सुरेशि योगीन्द्रामृतपायनतत्परे ॥ श्रीशारिके नमस्तेऽस्तु पाहि मां शरणागतम् ॥ ११ ॥ कामे कामितकामानां पूरणे पूर्णताप्रदे ॥ श्रीशारिके० ॥ १२ ॥ चार्वङ्गि कोटिकन्दर्पलावण्ये विश्वमोहिनि ॥ श्रीशारिके० ॥ १३ ॥ टङ्कधारिणि शत्रूणां तिलशो देहखण्डिनि ॥ श्रीशारिके० ॥ १४ ॥ तारे निसर्गगम्भीरभवसागरतारिणि ॥ श्रीशारिके० ॥ १५ ॥ पार्वति त्रिजगन्मातर्हिमवद्वंशपावने ॥ श्रीशारिके० ॥ १६ ॥ यक्षिणीष्टाष्टसिद्धीनां दायिनी देवपूजिते ॥ श्रीशारिके० ॥ १७ ॥ सत्त्वादिशबलेऽनन्तब्रह्माण्डजननीश्वरि ॥ श्रीशारिके० ॥ १८ ॥ कलानिधिकलाकान्तकिरीटकुण्डलोज्ज्वले ॥ श्रीशारिके० ॥

इति श्रीशारिकास्तोत्रं समाप्तम् ।

## सूर्यसहस्रनामावलिः ।

श्रीदेव उवाच । शृणु देवि प्रवक्ष्यामि सूर्यनामसहस्रकम् । यस्य तु पाठमात्रेण सर्वे नश्यन्ति चामयाः ॥ अस्य श्रीसूर्यसहस्रनाममन्त्रस्य, ब्रह्माऋषिः, गायत्रं छन्दः, सूर्यो देवता, ह्रांबीजं, ह्रीं शक्तिः, सः कीलकं आत्मनोवाङ्मनःकायो० होमे विनियोगः ॥ ह्रांहृदयायनमः ॥ ध्यानं ॥ प्रत्यक्षदेवं विशदं सहस्रमरीचिभिः शोभितभूमिदेशम् । सप्ताश्वगं सद्ध्वजहस्तमाद्यं देवं भजेऽहं मिहिरं हृदब्जे ॥ भास्कराय विद्महे सहस्ररश्मये धीमहि । तन्नः सूर्यः प्रचोदयात् ॥ ३ ॥ ॐह्रांह्रींसः सूर्यायस्वाहा ॥ ॐभगवते, सर्वलोकेशाय, भूतेशाय भूतभावनाय, भूतात्मने सृष्टिकर्त्रे सृष्टिहर्त्रे जगत्पतये, आदित्याय वरप्रदायँ, वीराय वीरलाय विश्वदीप्ताय विश्वकृते विश्वहृते भक्ताय भोक्त्रे भीमाय, भयापहाय विश्वात्मँने पुरुषाय साक्षिणे परंब्रह्मणे परमात्मने प्रतापवते विश्वयोनये विश्वेशाय विश्वतोमुखाय कामिने योगिने महाबुद्धये महसे मनवे अव्ययाय प्रजापतये विश्ववन्द्याय वन्दिताय भुवनेश्वराय, भूतभव्यभविष्यात्मने तत्त्वात्मँने ज्ञानवते गुणिने सात्त्विकाय राजसाय तामसाय तपस्विने करुणानिधये सहस्रकिरणाय भास्वते भार्गवायँ भृगवे ईश्वराय निर्गुणाय निर्दयाय नित्याय नित्यानन्दाय, निराश्रयाय, तपस्विने कालकृते कालायँ कामनीयतनवे कृशाय दुर्दर्शाय सुदर्शनाय दाशार्हाय दीनबन्धवे दयाकराय द्विभुजाय अष्टभुजाय धीरायँ दशबाहवे दशातिगाय दशांशफलदाय, विष्णवे जिगीषवे, जयविजयिने जटिलाय निर्मायाय, भानवे पद्महस्तायँ कुशीर-

काय समाहितगतये धात्रे विधात्रे कृतमङ्गलाय मार्तण्डाय लोकभृते त्रात्रे रुद्राय भद्रप्रदायँ प्रभवे अरातिशमनाय शान्ताय शङ्कराय कमलासनाय अचिन्त्यवपुषे श्रेष्ठाय महाचीनक्रमेश्वराय महार्तिदमनाय 'तेजोऽसि ।" ॐदान्ताय स्वाँहाँ ॥ ध्यानं ॥ ॐमहामोहहराय हरये नियतात्मने कालेशाय दिनेशाय भक्तवत्सलाय कल्याणकारिणे कामदाय कर्कशाय कामवल्लभायँ सामगाय पञ्चमाय द्रव्याय ध्रुवाय दीनजनप्रियाय त्रिजटाय रक्तवाससे रक्तवाहनाय रतिप्रियाय कालँयोगिने महानादाय निश्चलाय अदृश्यरूपधृते गम्भीरघोषाय निर्घोषाय घटहस्ताय महामायाय रक्ताम्बरधराय रक्ताय रक्तमाल्यायँ अनुलेपनाय सहस्रहस्ताय विजयाय हरिगामिने हरीश्वराय मुण्डाय कुण्डिने भुजङ्गेशाय रथिने सुरथपूजितायँ न्यग्रोधवासिने न्यग्रोधाय वृक्षकर्णाय ऊरुन्धराय शिखिने दण्डिने जटिने ज्वालिने ज्वालाय तेजोमयायँ विभवे हेमाय हेमकराय हारिणे हरिद्रत्नासनस्थिताय हरिदश्वाय जगद्वासिने जगतांपतये इङ्गलाय विरोचनायँ विलासिने विरूपाक्षाय विकर्तनाय, विनायकाय विभासाय भासाय भासांपतये पतये मतिमते रतिमँते शोभनाक्षाय विशालाक्षाय विशांपतये बालरूपाय गिरिचराय गीर्पतये गोमतीपतये गङ्गाधराय गणाध्यक्षाय गणसेव्यायँ गणेश्वराय गिरीशतनयावासिने सर्ववासिने सतीप्रियाय सत्यात्मकाय सत्यधराय सत्यसन्धाय सहस्रगवे अपारमहिम्ने मुक्तायँ मुक्तिदाय मोक्षदायकाय अमूर्तिमते दुर्दराय मूर्ताय तुटिरूपाय लवात्मकाय

प्राणेशाय "तेजोसि" ॐव्यानाय[२००]स्वाहा ॥ ध्यानं ॥ ॐअपानाय
स्वाहा, समानाय उदानरूपवते पक्षाय मासाय ऋतवे वर्षाय
दिनकालेश्वरेश्वराय अयनाय युगरूपाय[१०] कृतिने त्रेतायुगाय
त्रिपादे द्वापराय कलियुगाय कालाय कालात्मने कलिनाशनाय
मन्वन्तरात्मकाय देवाय[२०] चक्राय त्रिभुवनेश्वराय वासवाय अग्नये
यमाय रक्षसे वरुणाय यादसांपतये वायवे वैश्रवणाय[३०] शैवाय
गिरिशाय जलजासनाय अनंताय अनन्तमहिम्ने परमेष्ठिने
गतज्वराय कल्पान्तकालाग्नये क्रूराय कालाय[४०] दावाग्नये काल-
सूदनाय महाप्रलयकृतिने कृत्याय कृत्याशिने युगवर्तनाय
कालवर्तनाय युगधराय युगादये शर्वरीश्वराय[५०] आकाशनिधि-
रूपाय सर्वकालप्रवर्तकाय अचिन्त्याय सुबलाय बालिकावल्ल-
भाय वराय वरदाय वीर्यदाय वाग्मिने वाक्पतये[६०] वाग्विलास-
काय साङ्ख्येश्वराय वेदरम्याय मन्त्रेशाय तन्त्रनायकाय कुला-
चारपराय नुत्याय स्तुतितुष्टाय नतिप्रियाय आलसाय[७०] तुल-
सीसेव्याय तुष्टाय रोगनिवर्हणाय प्रस्कन्दनाय विभागाय नीर-
गाय दशदिक्पतये वैराग्याय विमानस्थाय रक्तकुम्भधराय[८०]
आयुधाय महापादाय महाहस्ताय महाकायाय महाशयाय ऋ-
ग्यजुषे सामरूपाय त्वष्ट्रे अथर्वधामशाखिलाय सहस्रशाखिने[९०]
सदऽसते व्यक्ताय महाकल्पप्रियाय पुंसे कल्पवृक्षाय मन्दिराय
मन्दराचलशोभनाय मेरवे हिमालयाय "तेजोसि" ॐमालिने[३००]
स्वाहा ॥ ध्यानं ॥ ॐमलयायस्वाहा मालयद्रुमाय सन्तानाय कुसु-
मच्छिन्नाय सन्तानफलदाय विराजे क्षीराम्भोधये घृताम्भोधये
जलधये क्लेशनाशनाय रत्नाकराय महामान्याय वेणवे वीणाधराय

वणिजे वसन्ताय सरसामऽन्ताय ग्रीष्माय कल्मषनाशनाय वर्षा-
कालायँ वर्षपतये शरदम्भोजवल्लभाय हेमन्ताय हेमकेयूराय, शि-
शिराय शिशुवीर्यदाय सुमतये सुगतये साधवे विष्णँवे सस्वराय
अम्बिकासुताय सारग्रीवाय महाराजाय सानन्दाय नन्दिसेवि-
ताय सुमेरुशिखरवासिने सप्तपातालगोचराय आकाशचारिणे
नित्यार्त्मने विभवे विजयप्रदाय कुलकान्ताय कुलाद्रीशाय
विनयाय विजयिने नियताय विश्वम्भराय वियच्चारिणे विय-
द्रूपायँ वियद्रथाय सुरथाय सुगतये स्तुत्याय वेणुवादनतत्प-
राय गोपालाय गोपतये गोप्त्रे प्रतिष्ठायै प्रजापतँये आवेदनी-
याय वेदाक्षाय महादिव्यवपुषे सुराजे निर्जीवाय जीवनाय
मन्त्रिणे महार्णवाय निनादभृते वासनायँ आवर्तनाय नित्याय
सर्वनाम्ने प्रभवे स्वधिये न्यायनिर्वापणाय शूलिने कपालिने
पद्ममध्यगाय त्रिकोणनिलयायँ देवदेवाय बिन्दुमण्डलमध्यगाय
बहुमालाय महामालाय दिव्यमालाधराय अजपाय जपाकुसुम-
सङ्काशाय जपपूजाफलप्रदाय सहस्रमूर्ध्ने देवेन्द्रायँ सहस्रनय-
नाय रवये सर्वतत्त्वाश्रयाय ब्रध्नाय वीरवन्द्याय विभावसवे वि-
श्वावसवे वसुपतये वसुनाथाय "तेजोसि" ॐ विसर्गवतेस्वाहाँ ॥
ध्यानं ॥ ॐ आदयेस्वाहा आदित्यलोकेशाय सर्वगामिने कला-
श्रयाय भोगीन्द्रशय्याय देवदेवेन्द्राय नरेन्द्राय हव्यवाहनाय
विद्याधराय विद्येशायँ यक्षेशाय रक्षणाय गुरवे रक्षायै कुब्जैक-
वरदाय गन्धर्वकुलपूजिताय अप्सरोवन्दिताय जयाय जेत्रे दै-
त्यनिवर्हणायँ गुह्यकेशाय पिशाचाय किन्नरपूजिताय कुलजाय
सिद्धसेव्याय समाम्नायाय साधुसेव्याय सरित्पतये ललाटाक्षाय

विश्वदेवायँ नियमाय नियमेन्द्रियाय अर्काय अर्ककान्ताय रते-
शाय अनन्तबाहवे लेपकाय अलिपात्रधराय अङ्गनाय अम्बरे-
शायँ अम्बरेशयाय अकाराय मातृकानाथाय आदिदेवनाम्ने
देवानामादये आकृतिने आरोग्यकारिणे आनन्दविग्रहाय
ग्रहाय आलोककृँते आदित्याय वीराय अदितिप्राणाधिकाय
आकाशरूपाय स्वाकाराय इन्द्रादिस्वरपूजिताय इन्दिरापूजिताय
इन्दवे इन्द्राय लोकत्रयाश्रयाँय इनाय ईशानाय चन्द्राय ईशाय
ईशानवल्लभाय उन्नतास्याय उन्नतवपुषे उन्नताङ्घ्रिचराय गुरवे
उत्पलाँयँ उच्चलत्केशवते उच्चैर्हयाय गतये सुखिने उकाराय
अकारसुखिताय ऊष्माय निधिभूषणाय अनूरुसारथिने उष्ण-
भाँनवे ऊकारवल्लभाय ऋणहस्ताय ऋलिहस्ताय ऋॠभूषणाय
भूषिताय ऌप्ताङ्गाय ऌआसनस्थाय, ऌॡगण्डयुगोज्वलाय
एणाङ्काय अमृतदार्थं चीनपट्टभृते बहुशश्वराय एकचक्ररथाय
एकाय अनेकचक्षुषे एकदेवाय एकबीजरमणाय एऐओष्ठाय अ-
मृताकराय "तेजोसि" ॐवैकर्तनायस्वाँहां ॥ ध्यानं॥ ॐकारका-
रणायस्वाहा, ब्रह्मणे औकारौचित्यमण्डनाय ओऔदन्तालिर-
ञ्जिताय महते महतांपतये अविद्याभूषणाय भूष्याय लक्ष्मीशाय
बीजरूँपवते अप्स्वरूपाय स्वरमयाय सर्वस्वरपरात्मकाय अंअः-
स्वरूपमन्त्राङ्गाय कलिकालनिवर्तकाय कर्मणे एकवरदाय कर्म-
साक्षिणे कल्मषनाशनाय कँचध्वंसिने कपिलाय कनकाचलचा-
रकाय कान्ताय कामाय कपये क्रूराय कीर्णाय केशिनिषूदनाय
कृष्णाय कँपालिने कपालमोचकाय काशाय कश्मीरघनसारभृते
कूजत्किन्नरगीतेष्टाय कुलराजाय कुलन्धराय कुलवासिने कुल-

कौलेशाय ककाराक्षरमण्डनाय खंवासिने खेटकेशाय खण्ड-मुण्डधराय खगाय खगेश्वराय खेचराय खेचरीगणसेविताय खरांशवे खेटकधराय खलहस्ताय खवर्णायँ गन्त्रे गीतप्रियाय गेयाय गयावासिने गुणाश्रयाय गुणातीताय गोलोकगतये गुच्छलाय गुणसेविताय गदाधरायँ पद्मधराय गाङ्गेयवरप्रदाय प्रयोगिने गिङ्गिलाय गटिलाय गान्ताय गकाराक्षरभास्कराय घृणिमते घुर्घुराराबाय घण्टाहस्तायँ घटाक्षराय घनच्छिन्नाय घनगतये घनवाहनतर्पिताय ङान्ताय ङेशाय ङकाराङ्गाय चन्द्रधराय अच्युताय चम्पकसन्निर्भायँ चामीकररुचये चण्डभानवे चण्डीवल्लभाय चञ्चाय चकोरकोष्टाय चपलाय चपलाश्रयाय चलत्पताकाय चण्डांशवे चीवरैकधरायँ चराय वर्णभृते छत्रभृते हलहृते छच्छाय च्छुरिकाच्छिन्नविग्रहाय जाम्बूनदाङ्गदाय जिनेन्द्राय जिनैकवल्लभाय "तेजोसि" ॐजम्भारयेस्वाँहाँ॥ ध्यानं॥ ॐजङ्घिलाय स्वाहा,जङ्घिने जनोलोकतमोपहाय जयकारिणे जयहर्त्रे जरामृत्युविनाशकाय जगत्त्रात्रे जगद्ध्येयाय जगन्निधये जंगत्साक्षिणे जगच्चक्षुषे जगन्नाथाय जिताय जकाराकारमुचे झञ्झाच्छन्नाकृतये झिल्लेश्वराय झकारेशाय झञाङ्गुलिकराय अम्बुजाय झञाक्षराश्चितायँ झङ्काराय टिटिभासनसंस्थिताय टङ्काराय टङ्कधारिणे ठःस्वरूपाय ठधाधिपाय डामरवे डुमरवे डिङ्गाय डामरीशायँ डाकिनीसेविताय डाढ्याय डढगुल्फाङ्गुलिप्रभाय वेशप्रियाय णवलेशाय णकारपदपङ्कजाय ताराधिपेश्वराय तथ्याय तन्त्रीवादनतत्पराय त्रिपुरीशायँ त्रिनेत्रेशाय त्रयीतनवे अधोक्षजाय तामसाय तामसप्रेष्ठाय तमोहर्त्रे तमःकर्त्रे तन्त्राकर्त्रे तमोरूपाय

तपसःफलदायकायँ तज्ञादिकलनाय कान्ताय तकाराक्षरभूष-
णाय स्थाणवे स्थूलस्थिताय नित्यस्थविराय स्थण्डिलाय स्थूलाय
थकारजानवे अध्यात्मँने देवनायकाय दुर्जयाय दुःखघ्ने दात्रे
दरिद्रच्छेदनाय धामिने दौर्भाग्यहर्त्रे देवेन्द्राय द्वादशमुखाय
अब्जमध्यगायँ द्वादशान्तकवचमते दूराय दुरतिक्रमाय दुर्ज्ञे-
याय दुष्टवंशघ्नाय दयानाथाय दयाकुलाय दामोदराय दीधि-
तिमते दकाराक्षरमातृकायँ धर्मबन्धवे धर्मनिधये धर्मराजाय
धनप्रदाय धनदेष्टाय धनाध्यक्षाय धरादर्शनाय धुरन्धराय
धूर्जटिने क्षणवाँसिने धर्मक्षेत्राय धराधिपाय धराधाराय धुरी-
णाय धर्मात्मजाय धर्मवत्सलाय धराभृद्वल्लभाय धर्मिणे धका-
राक्षरभूषणाय "तेजोसि" ॐनर्मप्रियायस्वाँहा ॥ ध्यानं ॥ ॐन-
न्दिरुद्रायस्वाहा नेत्रे नीतिप्रदाय नलिनाय नलिनीवल्लभाय
नुन्नाय नाट्यकृते नाट्यवर्धनाय नरनाथाय नृपस्तुत्यायँ नभो-
गामिने नभःप्रियाय नभोनन्ताय नमितारातये नरनारायणाय
नारायणाय नीलरुचे नम्राङ्गाय नीललोहिताय नादरूँपिणे ना-
दमयाय नादबिन्दुस्वरूपकाय नाथाय नागपतये नागाय नाग-
राजाश्रिताय नाकस्थिताय अनेकवपुषे नकाराक्षरमातृकाय
पद्माशयायँ परस्मैज्योतिषे पीवरास्याय पटेश्वराय प्रीतिप्रियाय
प्रेमकराय प्रणतार्तिभयापहाय परित्रात्रे परंध्वंसिने परारये
पुरसंस्थितायँ पूर्णानन्दमयाय पूर्णतेजसे पूर्णेश्वरेश्वराय पाटल-
वर्णाय पटिम्ने पाटलेशाय परात्मवते परमेशवपुषे प्रांशवे प्रम-
त्तायँ प्रणतेष्टदाय अपारपारदाय पीनाय पीताम्बरप्रियाय
पावकाय पचनाय पिचुलाय पुष्टाय प्रेमदाय जनसौख्यदायँ

प्रमोदिने प्रतिपक्षघ्नाय पकाराक्षरमातृकाय फलाय भोगापवर्गसुफलिनीशाय फलात्मकाय फुल्लदम्भोजमध्यस्थाय फुल्लदम्भोजधाराय स्फुटद्युतये स्फुटाकाराय स्फुटिकाचलचारकाय स्फूर्जत्किरणमालिने फकाराक्षरपार्श्वकाय बालाय बालप्रियाय वान्ताय बालध्वान्तहराय बलिने बलादये बर्बरध्वंसिने बर्बरामृतपानकाय बुधाय बृहस्पतये बृक्षाय बृहदश्वाय बृहद्गतये बृहत्पृष्ठाय भीमरूपाय भयापहाय भिदुरप्रियाय भर्गाय भृगवे भृगुस्थायिने भार्गवाय कवये शेखराय भाग्यदाय भानवे दीप्ताङ्गाय "तेजोसि" ॐभनाभयेस्वाहा ॥ ध्यानं ॥ ॐ स्वाहाभमातृकाय महाकालाय महाध्यक्षाय महानादाय महामतये महोज्वलाय मनोहारिणे मनोगामिने मनोभवाय मानदाय मल्लघ्ने मल्लाय मेरुमन्दिरमन्दाराय मन्दारमालाभरणाय माननीयाय मनोभयाय मोदिताय सवित्रे मार्तण्डाय मुण्डमण्डिताय महावराहाय मीनेशाय मेषगाय मिथुनेष्टदाय मदालसाय अमरस्तुत्याय सुरारये वरदाय माधवाय मेदिनीशाय मधुकैटभनाशनाय माल्यवते मेधनाय माराय मेधाविने मुसलायुधाय मुकुन्दाय सुरारिघ्ने सराशिफलदाय मदाय मदनाय मोदकाहाराय मकाराक्षरमातृकाय यज्वने यज्ञेश्वराय यन्ताय योगिनांहृदयस्थिताय यात्रिकाय यज्ञफलदाय यज्ञिने यमलनायकाय योगनिद्राप्रियाय योगकारणाय योगवत्सलाय यष्टिधारिणे यन्त्रेशाय व्योममण्डलमध्यगाय युयुत्सवे जयदाय योगाय योगधर्मानुवर्तकाय योगिनीचक्रमध्यगाय योगीश्वरपूजिताय यान्ताय यक्षैकतिलकाय यक्षराक्षसभूषणाय रामाय रमणशीलाय रत्नभानवे रुरु-

प्रियायैं रत्नमौलये रत्नतुङ्गाय रत्नपीठान्तरस्थाय रत्नांशुमाल्याय रत्नाढ्याय रत्नकङ्कणनूपुराढ्याय रत्नाङ्गदलसद्बाहवे रत्नपादुकमण्डिताय रोहिण्याश्रयाय रक्षाकरायैं रात्रिज्वरान्तकाय रकाराक्षररूपाय लज्जाबीजाश्रिताय लवाय लक्ष्मीभानवे लतावासिने लसत्कान्तये लोकभृते लोकातङ्कहराय लासावल्लभायैं लोमशाय अलिगाय लिङ्गेश्वराय लिङ्गनादाय लीलाकारिणे ललम्भसाय लक्ष्मीव्रते लोकविध्वंसिने लकाराक्षरभूषणाय "तेजोऽसि" ॐवामनाय स्वाहाँ ॥ ध्यानं ॥ वीरवीरेन्द्राय वाचालाय वाक्पतिप्रियाय वाचामगोचराय वार्ताय वीणायै वेणुधराय वराय वाग्भवाय वालिशध्वंसिने विद्यानकाय कनकाय वकारमातृकामौलये शाम्भवेष्टप्रदाय शुकाय शशिने शोभकराय शान्ताय शान्तिकृते शमनप्रियायैं शुभङ्कराय शुक्लवस्त्राय श्रीपतये श्रीयुताय श्रुताय श्रुतगम्याय शरद्बीजमण्डिताय शिष्टसेविताय शिष्टाचाराय शुभाचारायैं शेषाय शेवालताडनाय शिपिविष्टाय शिवाय शुक्राय सेव्याय शाक्षरमातृकाय षडाननाय षङ्कारकाय षोडशसुरभूषितायैं षट्पदस्वनतोषिणे षडाम्नायप्रवर्तकाय षड्सास्वादसन्तुष्टाय षकाराक्षरमातृकाय सूर्यविन्दवे सुखाकराय समस्तसाधकेशाय समस्तकुलशेखराय सुरसूर्याय स्वधासूर्यायैं स्वसूर्याय साक्षरेशाय हरित्सूर्याय हरिद्भानवे हव्यैकभुजे हव्यवाहनाय हालासूर्याय सोमसूर्याय हुतसूर्याय हरिसूर्यायैं ह्रांसूर्यबीजाय ह्रींसूर्याय हकाराक्षरमातृकाय लंबीजमण्डिताय सूर्याय क्षोणीसूर्याय क्षमापतये क्षुत्सूर्याय क्षान्तसूर्याय लक्ष्यसूर्यायैं सदाशिवाय अकार-

सूर्याय क्षःसूर्याय सर्वसूर्याय कृपानिधये भूःसूर्याय भुवःसूर्याय स्वःसूर्याय सूर्यनायकाय ग्रहसूर्याय ऋक्षसूर्याय लग्नसूर्याय महेश्वराय राशिसूर्याय योगसूर्याय मन्त्रसूर्याय अनुत्तमाय तत्वसूर्याय परासूर्याय विष्णुसूर्याय प्रतापवते रुद्रसूर्याय ब्रह्मसूर्याय वीरसूर्याय वरोत्तमाय धर्मसूर्याय कर्मसूर्याय विश्वसूर्याय विनायकाय त्रिलोचनाय "तेजोसि" ॐभुक्तिमुक्तिलक्ष्मीसुखदायस्वाहा १००० इति सूर्यसहस्रनामावली समाप्ता ॥

## अथ शिवसहस्रनामावलीः ।

ॐउपमन्युरुवाच ॥ यतो लोकाः सम्भवन्ति न भवन्ति यतः पुनः । सर्वभूतात्मभूतस्य हरस्यामिततेजसः । अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु । यच्छ्रुत्वा मनुजश्रेष्ठः सर्वान्कामानवाप्स्यति ॥ अस्य श्रीशिवसहस्रनामस्तवराजस्य तुण्डिर्ऋषिः, अनुष्टुप्छन्दः, श्रीशिवःपरमात्मादेवता आत्मनो० होमे विनियोगः ॥ ॐहृद,-न·शिर,-मः-शिखा,-शि-कव,-वा-नेत्र, य-अस्त्रायफट् । ॐअङ्गुनतर्ज-,मः मध्य, शिअना,-वाकनि,-यकरत ॥ प्राणायामः । ध्यानं, देवं सदा कलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाभयदं सुशुभ्रम् । शङ्खाभयाब्जवरभूषितया च देव्या वामेङ्कितं शमनभङ्गहरं नमामि ॥ तत्पुरुषाय वि ३ ॥ ॐस्थिरायस्वाहा स्थाणवे प्रभवे भानवे प्रभवाय वरदाय वराय सर्वात्मने सर्वविख्याताय [१०] सर्वस्मै सर्वाकरोद्भवाय जटिने चर्मिणे शिखण्डिने सर्वाङ्गाय सर्वभावनाय हराय हरिणाक्षाय सर्वभूतहराय विभवे प्रवृत्तये [२०] निवृत्तये नियताय शाश्वताय ध्रुवाय श्मशानचारिणे भगवते खचराय गोचरोद्भवाय अभिवाद्याय महांक-

र्मणे तपस्विने भूतभावनाय उन्मत्तवेशप्रच्छन्नाय सर्वलोक-
पितामहाय महारूपाय महाकायाय वृषरूपाय महायशसे महा-
त्मने सर्वभूतात्मने[४०] विश्वरूपाय महाहनवे लोकपालाय अन्त-
र्हितात्मने प्रसादाय हयगर्दभये पवित्राय महते नियमाय
नियमाश्रयाय[५०] सर्वकर्मणे स्वयम्भूताय आदये आदिकराय
निधये सहस्राक्षाय विशालाक्षाय सोमाय नक्षत्रसाधकाय
चन्द्राय[६०] सूर्याय शनये केतवे ग्रहाय ग्रहपतये वराय अत्रये
अत्र्यानमस्कर्त्रे मृगबाणार्पणाय अनघाय[७०] महातपसे घोरतपसे
अदीनाय दीनसाधकाय संवत्सरकराय मन्त्रिणे प्रमाणाय पर-
मंतपसे योगिने याज्याय[८०] महाबीजाय महारेतसे महाबलाय
स्वर्णरेतसे सर्वज्ञाय सुबीजाय बीजवाहनाय दशबाहवे अनि-
मिषाय नीलकण्ठाय[९०] उमापतये विश्वरूपाय स्वयंश्रेष्ठाय बलवी-
राय अबलाय गणाय गणकर्त्रे गणपतये दिग्वाससे "तेजोसि"
ॐकामायस्वाहा[१००] ॥ ध्यानं ॥ ॐमन्त्रविदेस्वाहा परमाय मन्त्राय
सर्वभावकराय हराय कमण्डलुधराय धन्विने बाणहस्ताय क-
पालवते अशनिने शतघ्निने[१०] खड्गिने पट्टिसिने आयुधिने बृहते
स्रुवहस्ताय स्वरूपाय तेजसे तेजस्कराय निधये [२०]उष्णीषिणे
सुवक्त्राय उदग्राय विनताय दीर्घाय हरिनेत्राय सुतीक्ष्णाय
कृष्णाय सृगालरूपाय सिद्धार्थाय मुण्डाय[३०] सर्वशुभङ्कराय
अजाय बहुरूपाय गन्धधारिणे कपर्दिने ऊर्ध्वरेतसे ऊर्ध्वलि-
ङ्गाय ऊर्ध्वशायिने नभस्तलाय त्रिजटिने[४०] चीरवाससे रुद्राय
सेनापतये खगाय अहश्चराय नक्तञ्चराय तिग्ममन्यवे सुवर्चसाय
गजघ्ने दैत्यघ्ने[५०] कालाय लोकधात्रे गुणाकराय सिंहशार्दूलरूपाय

आर्द्रचर्माम्बरावृताय कालयोगिने महानादाय सर्वकामाय चतुष्पथाय निशाचराय६० प्रेतचारिणे भूतचारिणे महेश्वराय बहुरूपाय बहुधराय स्वर्भानवे अमिताय गतये नृत्यप्रियाय नृत्यतृप्ताय७० नर्तकाय सर्वलासकाय घोराय महातपसे पाशाय नित्याय गिरिरुहाय नभसे सहस्रहस्ताय विजयाय८० व्यवसायाय अतन्द्रिताय अमर्षणाय धर्षणात्मने यज्ञघ्ने कामनाशकाय दक्ष-यज्ञापहारिणे स्ववर्णाय मध्यमाय तेजोपहारिणे९० बलिघ्ने मुदिताय अर्थाय अजिताय अवराय गम्भीरघोषाय गम्भीराय गम्भीरबलवाहनाय न्यग्रोधरूपाय "तेजोसि" ॐन्यग्रोधायस्वाहा२०० ॥ ध्यानं ॥ ॐवृक्षकर्णस्थितयेस्वाहा स्वभुवे सुतीक्ष्णदशनाय महाकायाय महाननाय विष्वक्सेनाय हरये यज्ञाय संयुगापीड-वाहनाय तीक्ष्णतपसे१० हर्यश्वाय सहायाय कर्मकालविदे विष्णु-प्रसादिताय यज्वने समुद्राय वडवामुखाय हुताशनसहायाय प्रशान्तात्मने हुताशनाय२० उग्रतेजसे महातेजसे जयाय विजयाय कालविदे ज्योतिषामयनाय सिद्धये सर्वविग्रहाय शिखिने मुण्डिने३० जटिने ज्वालिने मूर्तिजाय दुर्बलाय बलिने वैणविने पणविने तालिने खलिने कालकटंकटाय४० नक्षत्रविग्रहमतये गुणवृद्धिल-याय अगमाय प्रजापतये विश्वबाहवे विभागाय सर्वतोमुखाय विमोचनाय सर्वगणाय हिरण्यकवचोद्भवाय५० मेढ्रजाय बल-चारिणे महीचारिणे स्रुताय सर्वतूर्यनिनादिने सर्वतोद्यपरि-ग्रहाय व्यालरूपाय गुहावासिने हंसमालिने तुरङ्गविदे६० त्रिदशाय त्रिपदीभूमये सर्वबन्धविमोचकाय असुरेन्द्राणांबन्धनाय युधि-शत्रुविनाशनाय सांख्यप्रसादाय दुर्वाससे सर्वसाधुनिषेविताय

प्रस्कन्दनाय विभागज्ञाय अतुल्याय यज्ञभागविदे सर्वावासाय सर्वचारिणे सुवाससे वासवोपमाय हैमाय हेमकराय अज्ञाय सर्वाधारिणे[८०] धरोत्तमाय लोहिताक्षाय महाक्षाय विजयाक्षाय विशारदाय सङ्ग्रहाय निग्रहाय कर्त्रे मृगचर्मनिवासनाय मुख्याय[९०] मुकुन्ददेहाय काहलये सर्वकामदाय सर्वकामप्रसादाय सुबलाय बलरूपधृषे सर्वकामवराय वरदाय सर्वतोमुखाय "तेजोसि" ॐआकाशनिर्विरूपायस्वाहा[३००] ॥ ध्यानं ॥ ॐनिपातिनेस्वाहा अवशाय खभुवे रौद्ररूपाय अंशुभ्यः आदित्याय बहुरश्मये स्ववर्चसिने वसुवेगाय महावेगाय[१०] मनोवेगाय निशाचराय सर्ववासिने श्रियोवासिने उपदेशकराय हरये मुनये आत्मने निरालोकाय सम्भग्नाय[२०] सहस्रदाय पक्षिणे पक्षिरूपाय अतिदीप्ताय विशांपतये उन्मादाय मदनाय कामाय अश्वत्थाय अर्थकराय[३०] यशसे वामदेवाय वामाय प्राग्दक्षिणाय वामनाय सिद्धयोगिने महर्षये सिद्धार्थाय सिद्धसाधकाय भिक्षवे भिक्षुरूपाय विपणाय मृदवे अक्षयाय महासेनाय विशाखाय षष्टिभागाय गवाम्पतये वज्रहस्ताय प्रतिस्तम्भिने[५०] सैन्यस्तम्भनाय गीतनृत्यकराय तालाय मधवे मधुकलोचनाय वाचस्पत्याय वाजसनाय नित्यमाश्रमपूजिताय ब्रह्मचारिणे लोकचारिणे[६०] सर्वचारिणे विचारविदे ईशानाय ईश्वराय कालाय निशाचारिणे पिनाकधृषे-निमित्तस्थाय निमित्ताय शम्भवे[७०] नन्दिकराय हरये नन्दीश्वराय नन्दिने नन्दनाय नन्दिवर्धनाय भगहारिणे निहन्त्रे कालाय ब्रह्मविदांवराय चतुर्मुखाय महालिङ्गाय चारुलिङ्गाय लिङ्गाध्यक्षाय सुराध्यक्षाय लोकाध्यक्षाय युगावहाय

बीजाध्यक्षाय बीजकर्त्रे अँध्यात्मानुगतये बलाय इतिहासकराय कल्पाय गौतमाय निशाकराय दम्भाय अदम्भाय वैदम्भाय वश्याय "तेजोसि" ॐवश्यकरायस्वाँहाँ ॥ ध्यानं ॥ ॐकलयेस्वाहा लोककर्त्रे पशुपतये महाकर्त्रे अनौषधाय परमाक्षरमूर्तये बलवते शक्राय नीत्यै अँनीत्यै शुद्धात्मने शुद्ध्यमानाय मनोगतये बहुप्रसादाय सुस्वप्नाय धर्षणाय अमित्रजिते वेदकाराय मन्त्रकाराय विंदुषे समरमर्दनाय महामेघनिवासिने महाघोराय वशीकराय अग्निज्वालिने महाज्वालिने हुतिधूम्राय हुताय हविषे वृषणाँय शङ्कराय नित्यंवर्चस्विने धूमकेतनाय नीलाय सर्वाङ्गलुब्धाय शोभनाय निरवग्रहाय स्वस्तिदाय स्वस्तिभोगाय भागिने[४०] भागकराय लघवे उत्सङ्गाय महाङ्गाय महागर्भपरायणाय कृष्णवर्णाय सुवर्णाय सर्वदेहिनामिन्द्रियाय महापादाय महाहस्ताँय महाकायाय महायशसे महामूर्ध्ने महामात्राय महानेत्राय महालयाय महादन्ताय महाकर्णाय महामेढ्राय महाहनवे[६०] महासेनाय महाकम्बवे महाग्रीवाय श्मशानधृते महावक्षसे महोरस्काय अन्तरात्मने मृगालयाय महाकोटये महान्तकाँय महौष्ठाय महानासाय लम्बनाय लम्बितौष्ठाय महामायाय पयोनिधये महाङ्गाय महादंष्ट्राय महाजिह्वाय महामुखाँय महानखाय महारोम्णे महाकेशाय महाजटाय असपत्नाय प्रसादाय प्रत्ययाय गिरिसादनाय स्नेहनाय अस्नेहनाँय अजिताय महामुनये वृक्षाकाराय वृक्षहेतवे अनलाय वायुवाहनाय मण्डलिने मेरुधाम्ने वेदवेदाङ्गदर्पघ्ने "तेजोसि" ॐअथर्वशीर्षोस्वाँहाँ ॥ ध्यानं ॥ ॐसामास्यायस्वाहा ऋक्सहस्रामितेक्षणाय

यजुःपादभुजाय गुह्याय प्रकाशाय जङ्गमाय अमोघार्थाय अभिगम्याय स्वदर्शनाय उपहारप्रियायँ सर्वकनकाय काञ्चनच्छवये नन्दिने नन्दिकराय भव्याय पुष्करस्थाय वृषस्थिराय द्वापरत्रासनाय आद्याय यज्ञायँ यज्ञसमाहिताय नक्तञ्चराय कालाय मकराय कालपूजिताय सुगणाय गणकार्याय भूतवाहनसारथये भस्मशायिने भस्मंगोप्त्रे भस्मरूपाय तरवे गणाय लोकपालाय अलोकाय महात्मने सर्वपूजिताय शुक्लाय त्रिशुक्लाय सम्पन्नायँ शुचये भूतनिषेविताय आश्रमस्थाय कपोतस्थाय विश्वकर्मपतये वराय विशालशाखाय ताम्रौष्ठाय अम्बुजाक्षाय सुनिश्चलायँ कपिलाय कपिलकेशाय आयुषे परात्पराय गन्धर्वाय अदितये तार्क्ष्याय सुविज्ञेयाय सुशारदाय परश्वधायुधायँ देवाय अर्थकारिणे स्वबान्धवाय तुम्बवीणाय महाकोपाय ऊर्ध्वरेतसे जलेशयाय उग्रवंशकराय वंशाय वंशनादायँ अनिन्दिताय सर्वाङ्गरूपिणे मायाविने सुहृदाय अनिलाय अनलाय बन्धनाय बन्धकर्त्रे सुबन्धनविमोचनाय सयज्ञारये सकामारये महादंष्ट्रोद्धृतरिपवे बहुधानिन्दिताय सर्वाय शंकराय शम्बराय अधनाय अमरेशाय महादेवाय विश्वरूपायँ सुरारिघ्ने अहिर्बुध्न्याय अनिलाभाय चिकितानाय हविषे अजैकपादे कापालिने त्रिशंकुवे अजिताय "तेजोसि" ॐशिवायस्वाहा ॥ ध्यानं ॥ ॐधान्वन्तरयेस्वाहा धूमकेतवे स्कन्दाय वैश्रवणोपमाय धात्रे शक्राय विष्णवे मित्राय त्वष्ट्रे ध्रुवायँ वसवे प्रभावाय सर्वगाय वायवे अर्यम्णे सवित्रे रवये उषङ्गाय विधात्रे सन्धात्रे[२] भूतभावनाय अतितीक्ष्णाय हराय वाग्मिने

सर्वकामगुणावहाय पद्मवक्त्राय महावक्त्राय चन्द्रवक्त्राय मनोरमाय बलवते ॐ उपशान्ताय पुराणाय पुण्यचञ्चवे कुरुकर्त्रे कुलावासिने कुरुभूताय गुणौषधाय सर्वाशयाय ॐ दर्भशायिने सर्वेषांप्राणिनांपतये देवदेवाय सुखासक्ताय सदसते सर्वरत्नविदे कैलासशिखरावासिने हिमवद्गिरिसंश्रयाय कुलहारिणे कुलकर्त्रे बहुविद्याय ॐ बहुप्रदाय वाणिज्याय वर्धकिने वृक्षाय बकुलाय चन्दनच्छदाय सारग्रीवाय महाजत्रवे अलोलाय महौषधये ॐ सिद्धार्थकारिणे सिद्धार्थाय छन्दोव्याकरणान्तगाय सिंहनादाय सिंहदंष्ट्राय सिंहगाय सिंहवाहनाय प्रभावात्मने जगत्कालाय ॐ तालिने लोकहिताय तरवे सारङ्गाय नवचक्राङ्गाय केतुमालिने सुभावनाय भूतालयाय भूतपतये अहोरात्रमनिन्दिताय, सर्वभूतानांवाहित्रे ॐ, सर्वभूतानांनिलयाय, करभुवे भवाय अमोघाय संयुताय अश्वाय, भोजनाय, प्राणधारणाय, धृतिमते मतिमते ॐ दक्षाय सत्कृताय युगाधिपाय गोपालाय गोपतये ग्रामाय गोचर्मवसनाय हरये हिरण्यबाहवे "तेजोसि" ॐगुहापालायस्वाहा । ध्यानं ॥ ॐप्रवेशिनांत्रात्रेस्वाहा, प्रकृष्टारये, महाहर्षाय, जितकामाय जितेन्द्रियाय गान्धाराय सुवाससे तपसे कर्मरतये नराय ॐ महागीताय महानृत्याय अप्सरोगणसेविताय महाकेतवे धनुषे धातवे नैकसानुचराय चलाय आवेदनीयाय आदेशाय ॐ सर्वगन्धसुखावहाय तोरणाय तारणाय वाताय परिधिपतये खेचराय संयोगवर्धनाय वृद्धाय महावृद्धाय गुणाधिपाय ॐ नित्यंधर्मसहायाय देवासुरपतये रतये युक्ताय युक्तबाहवे त्रिदशाय सुपर्वणाय

आषाढाय सुषाढाय ध्रुवाय[४०] हरिणाय हराय वपुषे आवर्तनाय नित्याय वसुश्रेष्ठाय महारथाय शिरोहारिणे विमर्षिणे सर्वलक्षणलक्षिताय[५०] अक्षराय क्षराय योगिने सर्वयोगिने महाबलाय समाम्नायाय असमाम्नायाय तीर्थदेवाय महाद्युतये निर्जीवाय[६०] जीवनाय मन्त्राय अनिन्दिताय बहुकर्कशाय रत्नप्रभूताय रक्ताङ्गाय महार्णवनिनादभृते मूलाय विशालाय अमृताय[७०] व्यक्ताव्यक्ताय तपोनिधये आरोहणाय अधिरोहाय शीलधारिणे महातपसे सेनाकल्पाय महाकल्पाय योगाय युगकराय[८०] गतये युगरूपाय महारूपाय पवनाय गहनाय अवधाय न्यायनिर्वापणाय पादाय पण्डिताय अचलोपमाय[९०] बहुमालाय महामालाय सुमालाय बहुलोचनाय विस्ताराय लवणाय क्रूराय कुसुमाय सुफलोदयाय "तेजोसि" ॐवृषभायस्वाहा ॥ ध्यानं ॥ ॐवृषभाङ्गायस्वाहा, मणिविद्धाय जटाधराय इन्द्राय विसर्गाय सुमुखाय शराय सर्वायुधाय सहसे निवेदनाय[१०] सुधन्वने सुगन्धाढ्याय महाधनुषे गन्धमालिने भाग्यवते सर्वकर्मणामुत्थानाय मन्थानाय बहुलाय बाहवे सकलाय[२०] सर्वलोचनाय नराय तालाय करस्थालिने ऊर्ध्वसंहननाय वहाय वृत्रपतये सुविख्याताय लोकाय सर्वाश्रयाय[३०] क्रमाय मुण्डाय विरूपाय विकृताय दण्डिने कुण्डिने विकुर्वाणाय हर्यक्षाय ककुभाय वज्रिणे[४०] शतजिह्वाय सहस्रपादे, सहस्रमूर्ध्ने देवेन्द्राय सर्वभूतमयाय गुरवे सहस्रबाहवे सर्वाङ्गाय शरण्याय सर्वलोककृते[५०] विपन्नाशाय मघवे मन्त्राय कनिष्ठाय कृष्णपिङ्गलाय ब्रह्मदण्डविनिर्मात्रे शतघ्नीशतपाशभृते पद्मगर्भाय महागर्भाय ब्रह्मगर्भाय[६०] जलोद्भवाय गभस्तिने ब्रह्मकृते ब्रह्मणे ब्रह्मविदे ब्राह्मणाय गतये अनन्तरूपाय अनेका-

त्मने तिग्मांशवे[७०] आत्मसम्भवाय ऊर्ध्वगात्मने पशुपतये वात-रंहसे मनोजवाय चन्दनाय पद्ममालाग्र्याय अगण्याय अन्तरं-गाय अन्तराय[८०] कर्णिकारमहास्रग्विणे नीलमौलये पिनाकधृगे उमापतये उमाकान्ताय जाह्नवीभृते अनम्बराय वराय वराहाय वरदाय[९०] वरेशाय सुमहास्तनाय महाप्रसादाय दमनाय शत्रुघ्ने श्वेतपिङ्गलाय प्रीतात्मने परमात्मने प्रयतात्मने "तेजोसि" ॐप्र-धानभृतेस्वाहा[१००] ॥ ध्यानं ॥ ॐसर्वपार्श्वसुतायस्वाहा, ताक्षार्य धर्म-साधारणाय अचलाय चराचरात्मने सूक्ष्माय अमृताय गोवृषे-श्वराय साध्यर्षये कृषये[१०] आदित्याय विवस्वते सवित्रे अमृताय व्यासाय सर्वस्यसंक्षेपाय सर्वस्यविस्ताराय पर्यायाय अनराय ऋतुभ्यः[२०] संवत्सराय मासेभ्यः पक्षाभ्यां सांख्यसमापनाय कलाभ्यः काष्ठाभ्यः लवेभ्यः मात्राभ्यः मुहूर्ताय अह्ने[३०] क्षणदायै क्षणेभ्यः विश्वक्षेत्राय प्रजाबीजाय लिङ्गाय आद्याय निर्गमाय सते असते व्यक्ताय[४०] अव्यक्ताय पित्रे मात्रे पितामहाय स्वर्ग-द्वाराय प्रजाद्वाराय मोक्षद्वाराय त्रिविष्टपाय निर्वाणाय ह्लाद-नाय[५०] ब्रह्मलोकाय परागतये देवासुरविनिर्मात्रे देवासुरपराय-णाय देवासुरगुरवे देवाय देवासुरनमस्कृताय देवासुरमहामा-त्राय देवासुरमहाश्रयाय देवासुरमहाध्यक्षाय[६०] देवासुरगणा-ग्रण्ये देवातिदेवाय देवर्षये देवासुरसुपूजिताय देवासुरेश्वराय विश्वस्मै देवासुरमहेश्वराय सर्वदेवमयाय अचिन्त्याय देवा-त्मने[७०] अर्थसाधकाय उद्भिदे त्रिविक्रमाय वैद्याय विरजसे विरजोम्बराय ईड्याय हस्तीश्वराय व्याघ्राय देवसिंहाय[८०] नरर्ष-भाय विबुधाग्रचरश्रेष्ठाय सर्वदेवोत्तमोत्तमाय गुहाकान्ताय अतिनिसर्गाय स्वनाम्नासर्वपावनाय शृङ्गिणे शृङ्गिप्रियाय बभ्रवे

राजराजातिपूजिताय अभिरामाय सुरगणातिरामाय सर्वसाधनाय ललाटाक्षाय विश्वदेवाय सर्वाधिब्रह्मवर्चस्विने स्थावराणांपतये नियतेन्द्रियवर्धनाय सिद्धार्थाय सर्वभूतार्थाय[१००७] नियतव्रतसंस्थिताय व्रतादये परंब्रह्मणे भक्तानांपरमागतये सुशान्तदीप्ततेजस्विने श्रीमते श्रीवर्धनाय ॥"तेजोसि"। ॐजगतेस्वाहा[१००८] ॥ उपमन्युरुवाच। अष्टोत्तर-सहस्रेण जप्यमानस्य शङ्करः। यथाभीष्टं ददात्याशु प्रयतस्य न संशयः ॥ इति महाभारते शान्तिपर्वणि शिवसहस्रनामस्तुतिः ॥

## अथ नरकोत्तारणस्तोत्रम् ॥

ॐ नारायणं नमस्कृत्य नरं चैव नरोत्तमम्। देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ नारायणं जगद्बीजं पुराणं पुरुषोत्तमम्। परिपृच्छति धर्मात्मा पाण्डुपुत्रो युधिष्ठिरः ॥ श्रीयुधिष्ठिर उवाच ॥ किं जपन्पुरुषो मुच्येद्यमलोकैकशासनात्। तन्मे कथय तत्त्वेन भक्तस्य तव केशव ॥ श्रीभगवानुवाच ॥ शृणु राजन्महाबाहो धर्मात्मन्पाण्डुनन्दन। अहं ते कथयिष्यामि नरकोत्तारणं महत् ॥ ॐकारात्मन्नमस्तेऽस्तु ऋग्यजुःसामरूपिणे। यज्ञात्मने नमस्तेस्तु सर्वशास्त्रात्मने नमः ॥ भूतभव्यजगन्नाथ सर्वभूत जगत्पते। नमस्ते सर्वलोकेश महापुरुष पूर्वज। नमोमत्स्याय कूर्माय मूलप्रकृतये नमः। नमो यज्ञवराहाय नरसिंहाय वै नमः। त्रिविक्रमाय रामाय वैकुण्ठाय नराय च। नमस्तेऽश्वमुखायापि कूटस्थायाक्षराय च। अनन्तायाच्युतायापि जामदग्न्याय वै नमः। मधुकैटभनाशाय शङ्कराय नमोनमः। रामाय विश्वरूपाय वासुदेवाय वै नमः। पीताम्बराय देवाय युगवर्णाय वै नमः ॥ स्थित्युत्पत्तिविनाशानां हेतुरूपाय वै

नमः । ब्रह्मणे वायुरूपाय रुद्ररूपाय वै नमः । धनदेशस्वरूपाय मोक्षरूपाय वै नमः । सोमाय सूर्यरूपाय हविर्गन्धाय वै नमः । परमेश्वररूपाय नमः श्रीवत्सधारिणे । बिभ्रत्सरस्वतीं वक्त्रे सर्वज्ञोसि नमोस्तु ते । लक्ष्मीप्रियाय देवाय ह्यतसीश्यामरूपिणे । प्रसीद मम दीनस्य भक्तियुक्तस्य माधव ॥ रौरवान्नरकाद्घोरात्पाहि मां गरुडध्वज । असिपत्रवनात्पाहि शङ्खचक्रगदाधर । कुम्भीपाकान्महादेव पाहि मां शरणागतम् । अवीचेः कालसूत्राच्च पाहि मां दुःखनाशन । सूच्यागारादम्बरीषात्पाहि मां मधुसूदन । असृक्केशास्थिवाहिन्या वैतरण्याश्चतुर्भुज । पाहि मां कर्मसाक्षी त्वं शरणागतवत्सल । इक्षुपीडनकैर्यन्त्रैः पीड्यन्ते यत्र मानवाः । देशात्तस्माज्जगन्नाथ पाहि मां भक्तवत्सल । तप्तवालुकदेशश्च शल्मल्यायामवल्लितः । तद्देशात्पुण्डरीकाक्ष पाहि मां करुणानिधे । क्रकचैर्यत्र पाट्यन्ते मानुषा देवदारुवत् । तेभ्योपि रक्ष मां हंस शरणागतवत्सल । सारमेयैश्च खाद्यन्ते यामे वर्त्मनि मानवाः । महाभयात्प्रभो तस्मात्केशव क्लेशनाशन । अन्ये च नरका घोरा यमलोके प्रतिष्ठिताः । तेभ्योपि रक्ष मां हंस नमस्तेऽस्तु सहस्रशः । तिर्यग्योनिगतस्यापि भक्तिर्मे तव केशव । अचला स्याद्यथा कृष्ण तथा कुरु वरप्रद । बहुबाहूरुपादस्त्वं बहुकर्णाक्षिशीर्षवान् । सर्वतो रक्ष मां हंस सर्वात्मन् सर्वतोमुख । नमस्ते देवदेवेश यथा पास्यऽखिलं जगत् । स्थितौ तथा समस्तेभ्यो दोषेभ्यो मां समुद्धर । कृष्णाच्युतहृषीकेश सर्वभूतेश केशव । महात्मन् पाहि मां भक्तं वासुदेव नमोस्तुते । इति स्तवन्नरो राजन्सदा नारायणं प्रभुम् । यमलोकं न पश्येच्च नरकं च कुतः पुनः । स्मरन्नपि सदा मर्त्यः शृण्वन्नपि

युधिष्ठिर । महापातकजैर्घोरैर्मुच्यते सर्वकिल्बिषैः । आयुरारोग्यमैश्वर्यं श्रियं मेधां तथा बलम् । प्राप्नोति च पठन्नित्यं तद्विष्णोः परमं पदम् । भयकान्तारदुर्गेषु तथा संसारसागरात् । सत्यं संतरते मर्त्यः स्तवस्याप्यनुकीर्तनात् । अन्ते सायुज्यमाप्नोति तद्विष्णोः परमं पदम् ॥ इति श्रीनरकोत्तारणस्तोत्रं सम्पूर्णम् ॥

## अथ नारायणकवचम् ॥

श्रीराजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान् । क्रीडन्निव विनिर्जित्य त्रैलोक्या बुभुजे श्रियम् ॥ १ ॥ भगवंस्तत्समाख्याहि वर्म नारायणात्मकम् । यथाऽऽततायिनः शत्रून्येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुकउवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेन्द्रायाऽनुपृच्छते । नारायणाख्यं वर्माऽह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः । कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारायणमयं वर्म संनह्येद्भय आगते । पादयोर्जानुनोरूर्वोरुदरे हृद्यऽथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोङ्कारादीनि विन्यसेत् ॥ ॐनमोनारायणायेति विपर्ययमऽथापिवा ॥ ६ ॥ करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया । प्रणवादियकारान्तमऽङ्गुल्यङ्गुष्ठपर्वसु ॥ ७ ॥ न्यसेद्धृदय ओङ्कारं विकारमनु मूर्धनि । षकारं तु भ्रुवोर्मध्ये णकारं शिखयाऽदिशेत् ॥ ८ ॥ वेकारं नेत्रयोर्युञ्ज्यान्नकारं सर्वसन्धिषु । मकारमस्त्रमुद्दिश्य मन्त्रमूर्तिर्भवेन्नरः ॥ ९ ॥ सविसर्गं फडन्तं तत्सर्वदिक्षु विनिर्दिशेत् । "ॐविष्णवेनमः" इति ॥ १० ॥ आत्मानं

**परमं ध्यायेद्ध्येयं[1] षड्शक्तिभिर्युतम्[2] । विद्यातेजस्तपोमूर्तिमिमं मन्त्रमुदाहरेत् ॥ ११ ॥** ॐअस्यश्रीनारायणकवचमन्त्रस्य, श्रीविश्वरूपऋषिः, गायत्रं छन्दः, श्रीपरमात्मानारायणो देवता, ॐनमोनारायणायेति बीजं, ॐनमो भगवते वासुदेवायेति शक्तिः, ॐविष्णवेनमः इतिकीलकं, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीविष्णुप्रीत्यर्थे पाठे विनियोगः ॥ ॥ **विश्वरूपऋषयेनमः** शिरसि, **गायत्रंच्छन्दसेनमः** मुखे, **श्रीपरमात्मा नारायणोदेवतायैनमः** हृदि, **ॐनमोनारायणायेतिबीजायनमः** गुह्ये, **ॐनमोभगवतेवासुदेवायेतिशक्तये नमः** नाभौ, **ॐविष्णवेनमइतिकीलकायनमः** पादयोः, **पाठेविनियोगायनमः** सर्वाङ्गेषु ॥ ॐ**ॐनमः** पादयोः, **ॐननमः** जानुनोः, **ॐमोनमः** ऊर्वोः, **ॐनानमः** उदरे, **ॐरानमः** हृदि, **ॐयनमः** उरसि, **ॐणानमः** मुखे, **ॐयनमः** शिरसि ॥ ॐ**ॐनमः** दक्षिणहस्ततर्जन्यैनमः, **ॐननमः** दक्षिणमध्यमायैनमः, **ॐमोनमः** दक्षिणानामिकायैनमः, **ॐभनमः** दक्षिणकनिष्ठिकायैनमः, **ॐगनमः** वामकनिष्ठिकायैनमः, **ॐवनमः** वामानामिकायैनमः, **ॐतेनमः** वाममध्यमायैनमः, **ॐवानमः** वामतर्जन्यैनमः, **ॐसुनमः** वामाङ्गुष्ठाद्यपर्वणेनमः, **ॐदेनमः** वामाङ्गुष्ठान्त्यपर्वणेनमः, **ॐवानमः** दक्षिणाङ्गुष्ठाद्यपर्वणेनमः, **ॐयनमः** दक्षिणाङ्गुष्ठान्त्यपर्वणेनमः ॥ ॥ ॐ**ॐनमः** हृदयायनमः, **ॐविनमः** शिरसेस्वाहा, **ॐषनमः** भ्रुवोर्मध्ये, **ॐणनमः** शिखायैवषट्, **ॐवेनमः** नेत्राभ्यांवौषट्, **ॐननमः** सर्वसन्धिषु, **ॐमःनमः** अस्त्रायफट् दिग्बन्धेविनिर्दिशेत् ॥ **ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्कनककुण्डलवा-**

---

१ ईश्वररूपं २ ऐश्वर्यादिभिर्भगशब्दवाचिभिः ।

न्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ॐनमो नारायणाय
पुरुषाय महात्मने । विशुद्धसत्त्वधिष्ण्याय महाहंसाय धीमहि ॥ ३ ॥
ॐहरिर्विदध्यान्मम सर्वरक्षां न्यस्ताङ्घ्रिपद्मः पतगेन्द्रपृष्ठे ।
दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥ १ ॥
जलेषु मा रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ।
स्थलेषु मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥२॥
दुर्गेष्वटव्याजिमुखादिषु[3] प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ।
विमुञ्चतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥ ३ ॥
रक्षत्वसौ माऽध्वनि यज्ञकल्पः[4] स्वदंष्ट्रयोन्नीत[5]धरो वराहः । राम[6]ो-
ऽद्रिकूटेष्व[7]थ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजोऽस्मान् ॥४॥
मामुग्रधर्मा[8]दखिलात्प्रमादान्नारायणः पातु नरश्च हासात्[9] । दत्त[10]-
स्त्वयोगा[11]दथ योगनाथः पायाद्गुणेशः कपिलः कर्मब-
न्धात् ॥ ५ ॥ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि[12]
देवहेलनात् । देवर्षिवर्यः[13] पुरुषान्तरार्चनात्[14] कूर्मो हरिर्मां
निरयादशेषात् ॥ ६ ॥ धान्वन्तरिर्भगवान्पात्वपथ्याद्द्वन्द्वाद्भ
याद्दृषभो निर्जितात्मा । यज्ञश्च लोकाद[15]वताज्जनान्ता[16]द्बलो
गणा[17]त्क्रोधवशादहीन्द्रः ॥ ७ ॥ द्वैपायनो भगवानप्रबोधाद्बु-

---

३ संग्रामोपक्रमादिषु। ४ यज्ञैरवयवरूपैः कल्प्यन्ते निरूप्यन्ते। ५ उद्धृतभूः। ६ जामदग्न्यः। ७ गिरिशिखरेषु। ८ अभिचारादिलक्षणात्। ९ गर्वात्। १० दत्तात्रेयः। ११ योगभ्रंशात्। १२ पथि यद्देवानां हेलनं नमस्कारादिमकृत्वा गमनं तस्मात्। १३ नारदः। १४ भेदबुद्ध्याऽन्यदेवपूजनात् ॥ पुरुषार्चनान्तरादिति पाठे तु पुरुषार्चनस्यान्तरात् देवपूजाच्छिद्राद्द्वात्रिंशदपराधरूपात्। १५ जनापवादात्। १६ जननिमित्तो योऽन्त उपघातस्तस्मात्। बलभद्रः कृतान्तादिति पाठे तु कालात्। १७ क्रोधवशात्सर्पाणां गणात्। शेषनागः।

धस्तु पाषण्डगणात्प्रमादात् । कल्किः कलेः कालमलात्[18]प्रपातु
[19]धर्मावनायोरुकृतावतारः ॥ ८ ॥ मां केशवो गदया प्रातरव्या-
द्गोविन्द आसङ्गव[20]मात्तवेणुः । नारायणः प्राह्ण उदात्तशक्ति-
र्मध्यन्दिने विष्णुररीन्द्रपाणिः ॥ ९ ॥ देवोऽपराह्णे मधुहोग्र-
धन्वा सायं त्रिधामा[21]ऽवतु माधवो माम् । दोषे[22] हृषीकेश
उतार्धरात्रे[23] निशान्त एकोऽवतु पद्मनाभः ॥ १० ॥ श्रीवत्स-
धामाऽपररात्र ईशः प्रत्यूषकालेऽसिधरो जनार्दनः । दामोदरो-
ऽव्यादऽनुसन्ध्यं प्रभाते विश्वेश्वरो भगवान् कालमूर्तिः ॥११॥
चक्रं युगान्तानलतिग्मनेमि[24] भ्रमत्समन्ताद्भगवत्प्रयुक्तम् ।
दन्दग्धि[25] दन्दग्ध्यऽरिसैन्यमाऽशु कक्षं यथा वातसखो हुताशः
॥ १२ ॥ गदेऽशनि[26]स्पर्शनविस्फुलिङ्गे ! निष्पिण्ढि निष्पिण्ढ्य-
ऽजितप्रियाऽसि । कूष्माण्डवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्ण-
याऽरीन् ॥ १३ ॥ त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रह[27]घो-
रदृष्टीन् । दरेन्द्र[28] विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि
कम्पय ॥ १४ ॥ त्वं तिग्मधारा[29]ऽसिवराऽरिसैन्यमीशप्रयुक्तो

---

१८ कालमलभूतात् । १९ धर्मरक्षणाय महान्कृतोऽवतारो येन । २० अहोरात्र-क्षणानऽभिव्याप्य । २१ ब्रह्मादित्रिमूर्तिः । २२ प्रदोषे । २३ अर्धरात्रपर्यन्ते निशान्ते चैक एव पद्मनाभः । २४ युगान्तानलवत्तिग्मा तीक्ष्णा नेमिर्यस्य तच्चक्रं भगवता प्रयुक्तं सदऽरिसैन्यं । २५ अतिशयेन दहति । तस्यायं स्वभाव एव, नतु प्रार्थनीयमित्यर्थः । २६ अशनिवत्स्पर्शो येषां ते विस्फुलिङ्गा यस्यास्तस्याः सम्बोधनं । हे गदे ! त्वमजितस्य प्रियाऽसि अहमऽच्युतस्य दासः, अतः कूष्माण्डा-दीन्निष्पिण्ढि २ संचूर्णय २ । सर्वत्र वीप्साऽतिशीघ्रत्वाय । २७ विप्रग्रहा ब्रह्मराक्षसा चान्ये घोरदृष्टयस्तान् । २८ हे पाञ्चजन्य । २९ तिग्मा धारा यस्य । हे तिग्मधार ! खड्गश्रेष्ठ ।

मम छिन्दि छिन्धि । चक्षूंषि चर्मन्! शतचन्द्र[30] छादय द्विषा-
मघोनां[31] हर पापचक्षुषाम्[32] ॥ १५ ॥ यन्नो[33] भयं ग्रहेभ्योऽभूत्के-
तुभ्यो नृभ्य एवच । सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य[34]
एव वा ॥ १६ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयान्तु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः[35] ॥ १७ ॥ गरुडो
भगवान् स्तोत्रस्तोभ[36]श्छन्दोमयः[37] प्रभुः । रक्षत्वऽशेषकृच्छ्रेभ्यो
विष्वक्सेनः स्वनामभिः ॥१८॥ सर्वापद्भ्यो हरेर्नामरूपयाना-
युधानि नः[38] । बुद्धीन्द्रियमनःप्राणान्पान्तु पार्षदभूषणाः[39]
॥ १९ ॥ यथाहि भगवानेव वस्तुतः सदसच्च यत् । सत्येना-
नेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ २० ॥ यथैकात्म्यानु-
भावानां विकल्परहितः स्वयम् । भूषणायुधलिङ्गाख्या धत्ते
शक्तीः स्वमायया ॥ २१ ॥ तेनैव सत्यमानेन[40] सर्वज्ञो भग-
वान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ २२ ॥
विदिक्षु दिक्षूर्ध्वमधः समन्तादऽन्तर्बहिर्भगवान्नारसिंहः ।
प्रहापयंल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः[41] ॥ २३ ॥
मघवन्निदमाख्यातं वर्म नारायणात्मकम् । विजेष्यस्यऽञ्जसा
येन दंशितोऽसुरयूथपान् ॥ १ ॥ एतद्धारयमाणस्तु यंयं
पश्यति चक्षुषा । पदा वा संस्पृशेत्सद्यः साध्वसात्स विमु-
च्यते ॥ २ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् । राज-

---

३० शतचन्द्राकाराणि मण्डलानि यस्मिन् हे शतचन्द्रचर्मन् । ३१ अघवतां द्विषां । ३२ उग्रदृष्टीनां चक्षूंषि हर । ३३ येभ्यो भयं । ३४ पापेभ्यः । ३५ इष्टविघातकाः । ३६ स्तोत्राणि बृहद्रथन्तरादि सामानि तैः स्तोभ्यते संस्तूयते इतिस्तोत्रस्तोभः ॥ ३७ वेदमूर्तिः । ३८ यथार्थं चेत् । ३९ पार्षदान्भूषयतीति । ४० सत्यभूतेन प्रमाणेन । ४१ ग्रस्तानि समस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्यादीनां तेजांसि प्रभावा येन सः ।

दस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३ ॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन् द्विजः । योगधारणया स्वाङ्गं जहौ स मरुधन्वनि ॥ ४ ॥ तस्योपरि विमानेन गन्धर्वपतिरेकधा । ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ५ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः । स वालखिल्यवचनादस्थीन्याधाय विस्मितः ॥ ६ ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ श्रीशुकः ॥ य इदं शृणुयात्काले यो धारयति चादृतः । तं नमस्यन्ति भूतानि मुच्यते सर्वतोभयात् ॥ ७ ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः । त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ८ ॥ इतिश्रीभागवते षष्ठस्कन्धे नारायणवर्मनामाऽष्टमोऽध्यायः ॥ ॥

## अथ पञ्चमुखहनुमत्कवचम्

अथ श्रीपञ्चवदनायाञ्जनेयायनमः । ॐअस्य श्रीपञ्चमुखहनुमत्कवचमन्त्रस्य, ब्रह्माऋषिः, गायत्रं च्छन्दः, पञ्चमुखविराट्हनुमान् देवता, ह्रींबीजं, श्रींशक्तिः क्रौंकीलकं क्रूंकवचं, क्रैं अस्त्रायफट् पाठे विनियोगः ॥ इति दिग्बन्धः ॥ श्रीगरुड उवाच ॥ अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि । यत्कृतं देवदेवेन ध्यानं हनुमतः प्रियम् ॥ पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् । बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् । २ । पूर्वं तु वारुणं वक्त्रं कोटिसूर्यसमप्रभम् । दंष्ट्राकरालवदनं भृकुटीकुटिलेक्षणम् । ३ । अस्यैव दक्षिणं वक्त्रं नारसिंहं महाद्भुतम् । अत्युग्रतेजोवपुषं भीषणं भयनाशनम् । ४ । पश्चिमं गारुडं वक्त्रं वक्रतुण्डं महाबलम् । सर्वनागप्रशमनं विषभूतादिकृन्तनम् । ५ । उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं नभोपमम् । पातालसिंहवेतालज्वररोगादिकृन्त-

नम् । ६ । ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् । येन वक्रेण विप्रेन्द्र तारकाख्यं महासुरम् । ७ । जघान शरणं तत्स्यात्सर्वशत्रुहरं परम् । ध्यात्वा पञ्चमुखं रुद्रं हनुमन्तं दयानिधिम् । ८ । खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम् । मुष्टिं कौमोदकीं वृक्षं धारयन्तं कमण्डलुम् । ९ । भिन्दिपालं ज्ञानमुद्रां दशभिर्हरिपुङ्गवम् । एतान्यायुधजालानि धारयन्तं भजाम्यहम् । १० । प्रेतासनोपविष्टं तं सर्वाभरणभूषितम् । दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् । ११ । सर्वाश्चर्यमयं देवं हनुमद्विश्वतोमुखम् । पञ्चास्यमच्युतमनेकविचित्रवर्णं वक्रे शशाङ्कशिखरं कपिराजवर्यम् ॥ पीताम्बरादिमुकुटैरुपशोभिताङ्गं पिङ्गाक्षमाद्यमनिशं मनसा स्मरामि । १२ । मर्कटेशं महोत्साहं सर्वशत्रुहरं परम् । शत्रुं संहर मां रक्ष श्रीमन्नापदमुद्धर । १३ । ॐ हरिमर्कट मर्कट मंत्रमिदं परिलिख्यति लिख्यति वामतले । यदि नश्यति नश्यति शत्रुकुलं यदि मुञ्चति मुञ्चति वामलता । १४ । ॐ हरिमर्कटाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय पूर्वकपिमुखाय सकलशत्रुसंहरणाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नरसिंहाय सकलभूतप्रमथनाय स्वाहा । ॐ नमो भगवते पञ्चवदनाय पश्चिममुखाय गरुडाननाय सकलविषहराय स्वाहा । ॐ नमो भगवते पञ्चवदनायोत्तरमुखायादिवराहाय सकलसम्पत्कराय स्वाहा । ॐ नमो भगवते पंचवदनायोर्ध्वमुखाय हयग्रीवाय सकलजीववशंकराय स्वाहा ॥ ॐ अस्य श्रीपञ्चमुखहनुमन्मन्त्रस्य श्रीरामचन्द्र ऋषिः, अनुष्टुप्छन्दः पञ्चमुख वीरहनुमान् देवता, हनुमानितिबीजं, वायुपुत्र इति शक्तिः, अञ्जनीसुत इति

कीलकं, श्रीरामदूतहनुमत्प्रसादसिद्ध्यर्थे जपे विनियोगः ॥ "इति ऋष्यादिकं विन्यस्य"। ॐअञ्जनीसुताय अङ्गुष्ठाभ्यांनमः। ॐरुद्रमूर्तये तर्जनीभ्यांनमः। ॐवायुपुत्राय मध्यमाभ्यांनमः। ॐअग्निगर्भाय अनामिकाभ्यांनमः। ॐरामदूताय कनिष्ठिकाभ्यांनमः। ॐपञ्चमुखहनुमते करतलकरपृष्ठाभ्यांनमः। (इतिकरन्यासः)। ॐअञ्जनीसुताय हृदयायनमः। ॐरुद्रमूर्तये शिरसेस्वाहा। ॐवायुपुत्राय शिखायै वषट्। ॐअग्निगर्भाय कवचाय हुं। ॐरामदूताय नेत्रत्रयायवौषट्। ॐपञ्चमुखहनुमते अस्त्रायफट्॥ "पञ्चमुखहनुमते स्वाहा" इतिदिग्बन्धः॥ अथ ध्यानं॥ वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं दिव्यालङ्करणं त्रिपञ्चनयनं दैदीप्यमानं रुचा। हस्ताब्जैरसिखेटपुस्तकसुधाकुम्भाङ्कुशाद्रिं हलं खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिवीरापहम्। १॥ अथ मन्त्रः॥ श्रीरामदूतायाञ्जनेयाय वायुपुत्राय महाबलपराक्रमाय सीतादुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय फाल्गुनसखाय कोलाहलसकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिर्लङ्घनाय पिङ्गलनयनायामितविक्रमाय सूर्यबिम्बफलसेवनाय दुष्टनिवारणाय दृष्टिनिरालंकृताय सञ्जीवनीसञ्जीविताङ्गदलक्ष्मणमहाकपिसैन्यप्राणदाय दशकण्ठविध्वंसनाय रामेष्टाय महाफाल्गुनसखाय सीतासहितरामवरप्रदाय षट् प्रयोगागमपञ्चमुखवीरहनुमन्मन्त्रजपे विनियोगः॥ ॐहरिमर्कटमर्कटाय बंबंबंबंबं वौषट्स्वाहा। ॐहरिमर्कटमर्कटाय फंफंफंफंफंफट् स्वाहा। ॐहरिमर्कटमर्कटाय खेंखेंखेंखेंखें मारणायस्वाहा। ॐहरिमर्कटमर्कटाय लुंलुंलुंलुंलुं आकर्षितसकलसम्पत्कराय स्वाहा। ॐहरिमर्कटमर्कटाय धंधंधंधंधं शत्रुस्तम्भनायस्वाहा। ॐहरिमर्कट-

मर्कटाय ॐटंटंटंटंटं कूर्ममूर्तये पञ्चमुखवीरहनुमते परयन्त्रपरतन्त्रो-
च्चाटनायस्वाहा। ॐकंखंगंघंङंचंछंजंझंञंटंठंडंढंणंतंथंदंधंनंपंफं-
बंभंमंयंरंलंवंशंषंसंहंळंक्षंस्वाहा। इति दिग्बन्धः॥ ॐपूर्वकपिमुखाय
पञ्चमुखहनुमते टंटंटंटंटं सकलशत्रुसंहरणायस्वाहा। ॐदक्षिण-
मुखाय पञ्चमुखहनुमते करालवदनाय नरसिंहाय ॐह्रांह्रींह्रूंह्रैं-
ह्रौंह्रः सकलभूतप्रेतदमनायस्वाहा। ॐपश्चिममुखाय गरुडान-
नाय पञ्चमुखहनुमते मंमंमंमंमं सकलविषहरायस्वाहा। ॐउत्त-
रमुखायादिवराहायादिवराहाय लंलंलंलंलं नृसिंहाय नीलकण्ठ-
मूर्तये पञ्चमुखहनुमतेस्वाहा। ॐऊर्ध्वमुखाय हयग्रीवाय रुंरुंरुं-
रुंरुं रुद्रमूर्तये सकलप्रयोजननिर्वाहकायस्वाहा। ॐअञ्जनीसुताय
वायुपुत्राय महाबलाय सीताशोकनिवारणाय श्रीरामचन्द्र-
कृपापादुकाय महावीर्यप्रमथनाय ब्रह्माण्डनाथाय कामदाय
पञ्चमुखवीरहनुमतेस्वाहा। भूतप्रेतपिशाचब्रह्मराक्षसशाकिनी-
डाकिन्यन्तरिक्षग्रहपरयंत्रपरतन्त्रोच्चाटनायस्वाहा। सकल-
प्रयोजननिर्वाहकाय पञ्चमुखवीरहनुमते श्रीरामचन्द्रवरप्रसादाय
जंजंजंजंजंस्वाहा॥ इदं कवचं पठित्वातु महाकवचं पठेन्नरः।
एकवारं जपेत्स्तोत्रं सर्वशत्रुनिवारणम्। १५। द्विवारं तु पठे-
न्नित्यं पुत्रपौत्रप्रवर्धनम्। त्रिवारं तु पठेन्नित्यं सर्वसम्पत्करं
शुभम्। १६। चतुर्वारं पठेन्नित्यं सर्वलोकवशंकरम्। षड्वारं
पठेन्नित्यं सर्वदेववशङ्करम्। १७। सप्तवारं पठेन्नित्यं सर्वसौभा-
ग्यदायकम्। १८। अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम्। च
नववारं पठेन्नित्यं राजभोगमवाप्नुयात्। १९। दशवारं पठे-
न्नित्यं त्रैलोक्यज्ञानदर्शनम्। रुद्रावृत्तिं पठेन्नित्यं सर्वसिद्धिर्भवे-
द्ध्रुवम्॥ २०॥ कवचस्मरणेनैव महाबलमवाप्नुयात्। २१। इति
श्रीसुदर्शनसंहितायां श्रीरामचन्द्रसीताप्रोक्तं श्रीपञ्चमुखहनुमत्कवचं॥

## अथ वज्रपञ्जराख्यसूर्यकवचम् ॥

भैरवः ॥ यो देवदेवो भगवान्भास्करो महसां निधिः ।
गायत्रीनायको भास्वान् सवितेति प्रगीयते[1] ॥ तस्याहं कवचं
दिव्यं वज्रपञ्जरकाभिधम् । सर्वमन्त्रमयं गुह्यं मूलविद्यारहस्य-
कम्[2] ॥ सर्वपापहरं देवि दुःखदारिद्र्यनाशनम् । महाकुष्ठहरं पुण्यं
सर्वरोगनिवर्हणम्[3] । सर्वशत्रुसमूहघ्नं सङ्ग्रामे विजयप्रदम् । सर्व-
तेजोमयं दिव्यं देवदानवपूजितम्[4] ॥ रणे राजभये घोरे सर्वोपद्र-
वनाशनम् । मातृकावेष्टितं वर्म भैरवानननिर्गतम्[5] ॥ ग्रहपीडाहरं
देवि सर्वसङ्कटनाशनम् । धारणादऽस्य देवेशि ब्रह्मा लोकपि-
तामहः[6] ॥ विष्णुर्नारायणो देवि रणे दैत्याञ्जयत्यपि । शङ्करः
सर्वलोकेशो वासवोपि दिवस्पतिः[7] । ओषधीशः शशी देवि
शिवोऽहं भैरवेश्वरः । मन्त्रात्मकं परं वर्म सवितुः सारमुत्तमम्[8] ॥
यो धारयेद्भुजे मूर्ध्नि रविवारे महेश्वरि । स राजवल्लभो लोके
तेजस्वी वैरिमर्दनः[9] ॥ बहुनोक्तेन किं देवि कवचस्याऽस्य धार-
णात् । इह लक्ष्मीधनारोग्यवृद्धिर्भवति नान्यथा[10] ॥ परत्र परमा
मुक्तिर्देवानामपि दुर्लभा । कवचस्यास्य देवेशि मूलविद्यामयस्य
च[11] ॥ वज्रपञ्जरकाख्यस्य मुनिर्ब्रह्मा समीरितः । गायत्री छन्द
इत्युक्तं देवता सविता स्मृता[12] ॥ मायाबीजं शरच्छक्तिर्नमः कील-
कमीश्वरि । सर्वार्थसाधने देवि विनियोगः प्रकीर्तितः[13] ॥ अस्य
श्रीवज्रपञ्जराख्यसूर्यकवचस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, सविता देवता,
ह्रीं बीजं, सः शक्तिः, नमः कीलकं, आत्मनो वाङ्मनःकायोपार्जितपाप-
निवारणार्थं, अमुककामनासिद्ध्यर्थे पाठे विनियोगः ॥ ध्यानं ॥ प्रत्यक्ष-
देवं० ॥ अंआंइंईं शिरः पातु आंसूर्यो मन्त्रविग्रहः । उंऊंऋंॠं
ललाटं मे ह्रांरविः पातु चिन्मयः ॥ ऌंॡंएंऐं पातु नेत्रे ह्रींम-

माऽरुणसारथिः। ओंऔंअंअः श्रुती पातु सः सर्वजगदीश्वरः[२] ॥ कंखंगंघं पातु गण्डौ सं सूरः सुरपूजितः। चंछंजंझं च मे नासां पातु मामऽर्यमा प्रभुः[३] ॥ टंठंडंढं मुखं पायाद्यं योगीश्वरपूजितः। तंथंदंधं गलं पातु नंनारायणवल्लभः[४] ॥ पंफंबंभं ममस्कन्दौ पातु मां महसां निधिः ॥ यंरंलंवं भुजं पातु मूलं सकलनायकः। शंषंसंहं पातु वक्षो मूलमन्त्रमयो ध्रुवः ॥ लक्षः कुक्षिं सदापातु ग्रहनाथो दिनेश्वरः ॥ ङंञंणंनंमं मे पातु पृष्ठं दिवसनायकः[६] ॥ अंआंइंईं उंऊंऋंॠं नाभिं पातु तमोपहः। लृंॡंएंऐंओंऔंअंअः लिङ्गं मेऽव्याद्ग्रहेश्वरः[७] ॥ कंखंगंघंचंछंजंझं कटिं भानुर्ममाऽवतु। टंठंडंढंतंथंदंधं जानू भास्वान्ममावतु ॥ पंफंबंभंयंरंलंवं जङ्घे मेऽव्याद्दिवाकरः। शंषंसंहंलंक्षं पातु मूलं पादौस्त्रयीतनुः[९] ॥ ङंञंणंनंमं मे पातु सविता सकलं वपुः। सोमः पूर्वे च मां पातु भौमोऽग्नौ मां सदाऽवतु[१०] ॥ बुधो मां दक्षिणे पातु नैरृत्यां गुरुरेव माम्। पश्चिमे मां सितः पातु वायव्यां मां शनैश्चरः[११] ॥ उत्तरे मां तमः पायादैशान्यां मां शिखी तथा। ऊर्ध्वं मां पातु मिहिरो मामऽधस्ताज्जगत्पतिः[१२] । प्रभाते भास्करः पातु मध्याह्ने मां दिनेश्वरः। सायं वेदप्रियः पातु निशीथे निष्कलापतिः[१३] ॥ सर्वत्र सर्वदा पातु सूर्यो मां चक्रनायकः। रणे राजकले द्यूते विवादे शत्रुसङ्कटे[१४] ॥ सङ्ग्रामे च ज्वरे घोरे पातु मां सविता प्रभुः ॥ ॐॐॐउउऊंउऊंहसमयः सूर्योऽवतान्मां भयाद्ध्रांह्रीं-ह्रींहहहाहसौंहसहसौ हंसोऽवतात्सर्वतः। सःसःसःससस‌ः नृपाद्वनचराच्चौराद्रणात्सङ्कटात्पायान्मां कुलनायकोऽपि सविता ॐह्रींहसौ सर्वदा ॥ द्रांद्रींद्रूं दधतं तथा च तरणिभां भैर्भया-द्भास्करो रांरींरूंरुरुरूंर विज्वरभयात्कुष्ठाच्च शूलामयात्।

अंअंआंविविर्वीं महामहमयं मां पातु मार्तण्डको मूर्ध्न्यास्त-तनुः सदाऽवतु परंहंसः सहस्रांशुमान् ॥ इति श्रीकवचं दिव्यं वज्रपञ्जरकाभिधम् । सर्वदेवरहस्यं च मातृकामन्त्रवेष्टितम् ॥ महारोगभयघ्नं च पापघ्नं मन्मुखोदितम् । गुह्यं यशस्करं पुण्यं सर्वश्रेयस्करं शिवे ॥ लिखित्वा रविवारे तु तिष्ये वा जन्मभे प्रिये । अष्टगन्धेन दिव्येन सुधाक्षीरेण पार्वति ॥ अर्कक्षीरेण पुण्येन भूर्जपत्रे महेश्वरि । कनके काष्ठलेखन्या कवचं भास्करोदये ॥ श्वेतपत्रेण रक्तेन श्यामेन वीष्टयेत्कुटिम् । सौवर्णेनाथ संवीष्ट्य धारयेन्मूर्ध्नि वा भुजे ॥ रणे रिपूञ्जयेद्देवि वादीन्सदसि जेष्यति । राजमान्यो भवेन्नित्यं सर्वतेजोमयो भवेत् ॥ कण्ठस्था गुटिका देवि कुक्षिस्था रोगनाशिनी । शिरःस्था गुटिका देवि राजलोकवशङ्करी ॥ भुजस्था धनदा देवि तेजोबुद्धिविवर्धिनी । वन्ध्या वा काकवन्ध्या वा मृतवत्सा च याऽङ्गना ॥ कण्ठे सा धारयेन्नित्यं बहुपुत्रान्प्रजायते । यस्य देहे भवेन्नित्यं गुटिकैका महेश्वरि ॥ महास्त्राणीन्द्रमुख्यानि ब्रह्मास्त्रादीनि पार्वति । तद्देहं प्राप्य व्यर्थानि भविष्यन्ति न संशयः ॥ त्रिकालं यः पठेन्नित्यं कवचं वज्रपञ्जरम् । तस्य सद्यो महादेवि सविता वरदो भवेत् ॥ अज्ञानात्कवचो देवि पूजयेद्यस्त्रयीतनुम् । तस्य पूजान्वितं पुण्यं जन्मकोटिषु निष्फलम् ॥ दशावर्तं पठेद्धर्म सप्तम्यां रविवासरे । महाकुष्ठार्दितो देवि मुच्यते नात्र संशयः ॥ नीरोगो यः पठेद्धर्म दरिद्रो वज्रपञ्जरम् । लक्ष्मीवाञ्जायते देवि सद्यः सूर्यप्रसादतः ॥ भक्त्या यः प्रपठेद्देवि कवचं प्रत्यहं प्रिये । इह लोके सुखं भुक्त्वा देहान्ते मुक्तिमाप्नुयात् ॥ इतिश्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये वज्रपञ्जराख्यं सूर्यकवचम् ॥ श्रीकृष्णार्पणमस्तु ॥

## अथ गणेशस्तोत्रम् ॥

श्रीगणेशाय विश्वेशवैभवाद्भुतकेतवे ।
नमो निर्विघ्नमारब्धकार्यनिर्वाहहेतवे ॥

बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ताक्षसूत्रे शुभे वामे मोदकपूर्णपात्रपरशू नागोपवीती त्रिदृक् । श्रीमान्सिंहयुगासनः श्रुतियुगे शङ्खौ वहन्मौलिमान्दिश्यादीश्वरपुत्र एष भगवांल्लम्बोदरः शर्म नः ॥ वन्दे वराभयपिनाककपालशूलखट्वाङ्गहस्तमसुरान्तकरं त्रिनेत्रम् । भीमं जटामुकुटिनं कमलासनस्थं काश्मीरवासमरुणं गजराजवक्त्रम् ॥ सिन्दूरकुङ्कुमहुताशनविद्रुमार्करक्ताब्जदाडिमनिभाय चतुर्भुजाय । हेरम्बभैरवगणेश्वरनायकाय सर्वार्थसिद्धिफलदाय नमः शिवाय ॥ ॥ मुख्यं द्वादशनामानि गणेशस्य महात्मनः । यः पठेत्तु शिवोक्तानि स लभेत्सिद्धिमुत्तमाम् ॥ प्रथमं वक्रतुण्डं तु चैकदन्तं द्वितीयकम् । तृतीयं कृष्णपिङ्गं तु चतुर्थं तु कपर्दिनम् ॥ लम्बोदरं पञ्चमं तु षष्ठं विकटमेव च । सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ॥ नवमं भालचन्द्रं तु दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं मन्त्रनायकम् ॥ पठते शृणुते यस्तु गणेशस्तवमुत्तमम् । भार्यार्थी लभते भार्यां धनार्थी विपुलं धनम् । पुत्रार्थी लभते पुत्रं मोक्षार्थी परमं पदम् ॥ इच्छाकामं तु कामार्थी धर्मार्थी धर्ममक्षयम् ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि गणेशस्य महात्मनः । यः पठेच्छृणुयाद्वापि स लभेत्सिद्धिमुत्त-

माम् । विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ चिदचित्पदगम्भीरं गमागमपदोज्झितम् । गहनाकाशसंकाशं वन्दे देवं गणेश्वरम् ॥ श्रीसनत्कुमार उवाच ॥ शङ्कराद्ब्रह्मणा प्राप्तं पद्मयोनेर्मया प्रभो । तदहं कीर्तयिष्यामि स्तोत्रं परमदुर्लभम् ॥ चतुर्थ्यां षष्ठ्यां चाष्टम्यां चतुर्दश्यां विशेषतः । पूजयेत्तु गणाध्यक्षं श्रद्धाभक्तिसमन्वितः ॥ अर्घैः पुष्पैस्तथा धूपैर्दीपैर्माल्यैश्च चामरैः ॥ वस्त्रैः कुण्डलकेयूरैर्मौलिभिश्च वितानकैः । भक्ष्यैर्भोज्यैरपूपैश्च मत्स्यैर्मांसैश्च मोदकैः । पानकैः फलमूलैश्च होमैर्मन्त्रादिभिस्तथा ॥ गङ्गाहदे तु गाङ्गेयं[1] श्रीशैले तु गणेश्वरम्[2] । वाराणस्यां गजमुखं[3] गयायां टङ्कधारिणम्[4] ॥ प्रयागे तु गणाध्यक्षं[5] केदारे विकटाननम्[6] । लम्बोदरं[7] कुरुक्षेत्रे नैमिषे च मदोत्कटम्[8] ॥ जम्बुकं[9] दण्डकारण्ये लोकेशं[10] हिमवद्गिरौ । विष्वक्सेनं[11] तु विन्ध्याद्रौ मलये हेमकुम्भकम्[12] ॥ नायकं[13] पुष्करद्वीपे विघ्नेशं[14] शाल्मलौ स्थितम् । इलावृते विश्वरूपं[15] हरिवर्षे घटोदरम्[16] ॥ त्रिनेत्रं[17] सिंहलद्वीपे श्वेतद्वीपे च वामनम्[18] । उज्जयिन्यां च लम्बोष्ठं[19] मागधे शूर्पकर्णकम्[20] ॥ सौराष्ट्रे वरदं[21] नित्यं काश्मीरे भीमरूपिणम्[22] । सिन्धुसागरयोर्मध्ये स्थितं मन्त्रविनायकम्[23] ॥ हर्यक्षं[24] यक्षभवने कैलासे परमेश्वरम्[25] । सुमेरुं[26] नागभवने मैनाके पद्मपाणिकम्[27] । महायोगं[28] महेन्द्रे च सह्ये वाराहरूपिणम्[29] । महोदरं[30] च लुम्पायां चम्पायां शिखिवाहनम्[31] ॥

पाशहस्तं[३२] त्रिकूटे च मलये सर्वसिद्धिदम्[३३] ॥ बलं[३४]मग्निगुहायां च पाटले सिंहवाहनम्[३५] । पौण्ड्रे रौद्रमुखं[३६] चापि कलापिग्रामके जयम्[३७] ॥ मेरुपृष्ठे कामरूपं[३८] नन्दनं[३९] नन्दने वने । विजयं[४०] वै गन्धवने देवदारुवने गणम्[४१] ॥ आर्तानां विघ्नहरणं[४२] गङ्गासागरसङ्गमे । महापथे विरूपाक्षं[४३] चित्रकूटे महाननम्[४४] ॥ दुर्जयं[४५] यमुनातीरे स्तम्भनं[४६] गन्धमादने । अम्बरीशं[४७] भद्रवटे मोहनं[४८] हस्तिनापुरे ॥ किष्कन्दायामुग्रकेतुं[४९] लङ्कायां तु विभीषणम्[५०] । कलिङ्गे वरुणं[५१] चैव गान्धारे भुजगोत्कटम्[५२] ॥ अमरेशं[५३] तु खारेषु चीनेषु त्रिशिखायुधम्[५४] । वज्रहस्तं[५५] कौसलेषु दाक्षिणात्येषु लोहितम्[५६] ॥ शूलोद्यतकरं[५७] चैव मध्यदेशे च संस्थितम् । उत्तरे चारुवक्रं[५८] च पूर्वदेशेऽपराजितम्[५९] ॥ एकदंष्ट्रं[६०] पश्चिमाब्धौ वरिष्ठं[६१] कुरुदेशगम् । सुवर्णगर्भं[६२] विघ्नेशं नदीनां सङ्गमे स्थितम् ॥ गिरिसन्धिषु विज्ञेयं हिरण्यकवचाभिधम्[६३] । सुमुखं[६४] नागरन्ध्रेषु नर्मदायां च षड्भुजम्[६५] ॥ महापुर्यां महामायं[६६] भद्रकर्णह्रदे शिवम्[६७] । गोकर्णे गजकर्णं[६८] च कान्यकुब्जे वराननम्[६९] ॥ पद्मासनं[७०] कामरूपे श्रीमुखं[७१] सर्वतः स्थितम् । वेदवेदाङ्गशास्त्रेषु पूजयेद्ब्रह्मणस्पतिम्[७२] । द्वासप्ततिस्तु स्थानानि नाम्नामद्भुतकर्मणाम् । नित्यं प्रभातकाले तु चिन्तयेद्गणनायकम् । एतत्स्तोत्रं पवित्रं च मङ्गल्यं पापनाशनम् । शस्त्रखर्वोटवेतालयक्षरक्षोभयापहम् । चौरारण्यभयव्याघ्रव्याधिदुर्भिक्षनाशनम् । कृत्यादिमायाशमनं सर्वशत्रुविमर्दनम् । त्रिसन्ध्यं यः पठेन्नित्यं स सर्वसिद्धिभाग्भवेत् । गणेश्वरप्रसादेन लभते शाङ्करं पदम् ॥ इति श्रीगणेशस्तोत्रं सम्पूर्णम् ॥

## अथ सरस्वतीस्तुतिः ॥

ॐङ्कार आरिप्सितकार्यसिद्धेर्बुद्धेः प्रचाराय परः प्रकारः । निर्धूततत्तद्विषयप्रमादः श्रीशारदाया जयति प्रसादः १ ह्रीतेव यां वीक्ष्य मुखे मुरारेरुरःस्थिता श्रीर्भ्रमते जगत्सु । सरस्वती सा स्वत एव तुष्ट्या विचारहेतोश्चिरमाविरास्ताम् २ ऐश्वर्यबीजं परमेश्वरस्य विश्वैककर्तुस्तमसां विघाति । वाग्दैवतं वाङ्मनसातिगं तत् परं महो मे स्फुरतां पुरस्तात् ३ ह्रीते इवाऽस्तां विभवेन यस्या इच्छाक्रिये नित्यमनुप्रवृत्ते । तत्तत्स्वरूपप्रतिपत्तिहेतुः सा ज्ञानशक्तिर्मयि सन्निधत्ताम् ४ ॐकार एवाभित आत्तशक्तिर्यद्बीजमन्तर्धृतिवद्विभाति । उद्भिद्य चित्ते स्वरसेन सिक्ता सा वाग्लता मे फलतादऽभीष्टम् ५ सर्वः प्रपञ्चस्त्रिजगद्विधातुर्विना यदाभासमऽसन्निवाऽस्ते । सारस्वतं तत्परमं महो मे हृद्व्योमगं सन्तमसं हिनस्तु ६ रक्षातिरूक्षा भ्रमराक्षसेभ्यः शिक्षाधिगन्तुं परमार्थतत्त्वम् । भिक्षापरानन्दमयीह साक्षात्सा ख्यातिमायातु सरस्वती मे ७ स्वच्छीकृते यच्चरणाब्जरेणुविमर्शनैर्हृन्मुकुरे विभाति । सत्सम्मुखीनं खलु सर्वतत्त्वं सरस्वती शाश्वतमाविरास्ताम् ८ तैस्तैरनेकैः कविता सखेलमऽनेलमूकैरपि यत्प्रपद्ये । तद्वैभवं यत्सुरसस्य सैषा वाग्देवता दर्शयताद्विमर्शान् ९ नश्यन्ति यद्ध्यानवशादविद्या विद्याऽनवद्या प्रतिभाति सद्यः । उद्द्योतयन्ती हृदयं मदीयं सरस्वती शाश्वतमाविरास्ताम् १० मस्तूपमा वस्तुस्वधा किमस्तु सचेतसां चर्वितयद्रसानाम् । सरस्वती सा स्वरसार्पणेन स्वतश्चिरं तर्पयतां गिरं मे ११ ॐकारयुग्मं वृतिवद्धहस्त-

१ मण्डं दधिभवं मस्त्वित्यमरः ।

यस्या हि मायाद्वितयं तथान्तः । वाग्देवता सा फलतादभीष्टं
संसेविता कल्पलता बुधानाम् १२ सन्मानसाब्जस्थितिरऽक्ष-
मालाविद्यासुधाकुम्भविपञ्चिपाणिः । चन्द्रावतंसाऽवतु हंस-
याना मूर्ताप्यमूर्ता च सरस्वती नः १३ वाच्यानि साक्षादिह
वाचकेषु संकेतयन्तीमभिधानवृत्तिम् । बिभर्ति या पुस्तकसत्स्व-
रूपां पुनातु सा वाङ्मयदेवताऽस्मान् १४ प्रयोजनाद्रूढिवशाच्च
लोके द्विस्तत्त्वताराः परिवर्तयन्ती । या लक्षणां धारयतेऽक्षमा-
लामिषादहं नौमि सरस्वतीं ताम् १५ पदैरसङ्केतमऽलक्ष्य
मेवं संव्यञ्जयन्तीं किमपि स्वरेण । या व्यञ्जनामेव विपञ्चिरूपां
बिभर्ति तां नौमि गिरामधीशीम् १६ शतैः श्रुतीनां पथिभि-
र्ध्वनन्तीं गीतार्थसारोपनिषद्रहस्यम् । अध्यात्मविद्यामिव वाद-
यन्तीं वीणां भवेन्मे शरणाय वाणी १७ या सच्चिदानन्दरसै-
कसारं करे सुधाकुम्भनिभाद्वहन्ती । विश्वेश्वरं सिञ्चति सप्रपञ्चं
सरस्वती साऽव्वतु मे हृदब्जम् १८ हंसः सदाऽनाहतनाद-
रूपादुद्गत्वरो यां वहति स्वपक्षैः । वाग्वादिनी सा निजपाद-
पद्मधूलीभरैर्भूषयतां मनो मे १९ ब्रह्मोदयस्थानमनादिसिद्धं
पद्मं लसत्केसरसौरभाढ्यम् । यस्या निवासोस्ति सरस्वती सा
स्वतःस्रुतैः सिञ्चतु चिद्रसैर्माम् २० मेधादयो यत्परिवारभूता
ब्रह्मादिसेव्या निजकार्यसिद्ध्यै । विश्वेश्वरी सा स्वरसप्रवाहैः सर-
स्वती सिञ्चतु हृत्सरोजम् २१ सञ्जीवनार्थं जगतां सुधांशुकलां
किरीटे कलया बिभर्ति । हृतान्धकारा करुणाकटाक्षैः प्रत्यक्षल-
क्ष्याऽस्तु सरस्वती सा २२ इति श्रीमदाराध्यतमराजानकाऽऽनन्द-
कृतं सरस्वतीस्तोत्रम् ॥

---

१ दऽसौ पातु सरस्वती नः इत्यपि पाठः ।

## अथ राज्ञीकवचम् ॥

ॐश्रीभैरव उवाच ॥ शृणु देवि प्रवक्ष्यामि राज्ञीकवचमुत्तमम् । त्रैलोक्यविजयं नाम दिव्यं भोगापवर्गदम् ॥ मूलमन्त्रमयं साध्यमष्टसिद्धिप्रदायकम् । सर्वैश्वर्यप्रदं लोके सर्वागमविनिश्चितम् ॥ पठनाद्धारणाद्देवि महापातकनाशनम् । महोत्पातप्रशमनं मूलविद्यामनोहरम् ॥ विरूपाक्षः शिवो देवि विष्णुर्नारायणो बली । ब्रह्मा पितामहो लोके जिष्णुर्गीर्वाणनायकः ॥ महोनिधिस्तथा सूर्यस्तारकाधिपतिः शशी । रत्नाकरश्च जलधिः शेषश्चानन्ततां गतः ॥ श्रीराज्ञ्याः कवचस्यास्य पठनाद्धारणात्सदा। बहुनोक्तेन किं देवि कवचस्यास्य धारणात् ॥ मर्त्योऽप्यमर्त्यतां याति राज्ञीपदमवाप्नुयात् ॥ ऋषिरस्य महादेवि ब्रह्मा छन्द उदाहृतम् । गायत्रं देवता राज्ञी माया बीजमुदाहृतम् ॥ शरच्छक्तिः कीलकं च कामराजो महेश्वरि । भोगापवर्गसिद्ध्यर्थे विनियोगः प्रकीर्तितः ॥ अस्य श्रीमहाराज्ञीकवचमंत्रस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, श्रीमहाराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः क्लीं कीलकं, आत्मनो० महाराज्ञीप्रीत्यर्थं पाठे विनियोगः॥ ध्यानम् ॥ ॐलक्ष्मीर्मे शिरः पातु ह्रीं ललाटं सरस्वती । श्रीं बाला पातु मे नेत्रे त्र्यश्रं पातु श्रुती मम ॥ रां दुर्गा पातु मे नासां क्लीं मुखं पातु शारिका। सौः कण्ठं वैखरी पातु भं भुजौ पातु मे शिवा ॥ गं हस्तौ पातु मे काली वं वक्षस्त्रिपुराऽवतु । षडश्रं पातु मे मध्यं वृत्तं पार्श्वौ ममावतु ॥ त्यै पृष्ठं पातु मे ब्राह्मी रां नाभिं पातु वैष्णवी । ज्यै गुदं पातु रुद्राणी ह्रीं कटिं मे पराजिता ॥ स्वां कौमारी पातु जानू हां जङ्घेऽवतु चण्डिका ।

स्वाहा गुल्फौ च वाराही ओं पादौ नारसिंहिका ॥ विसारितं च यत्स्थानं यत्स्थानं नामवर्जितम् । तत्सर्वं पातु मे राज्ञी मूलविद्यामयी परा ॥ वासुकिः पूर्वतः पातु नीलनागोऽनलेऽवतु । तक्षको दक्षिणे पातु नैर्ऋते पद्मनायकः ॥ कार्कोटकः पश्चिमेऽव्याद्वायव्यां शंखपालकः । कुलिकश्चोत्तरे पातु शेष ईशानमण्डले । ब्राह्मी ब्राह्मे मुहूर्तेऽव्यादिनादौ वैष्णवी मम । रुद्राणी पातु मध्याह्ने सायं पात्वपराजिता ॥ निशादौ पातु कौमारी निशीथे चण्डिकावतु । निशान्ते पातु वाराही सर्वदा नारसिंहिका ॥ असिताङ्गः क्षितेः पातु पयसो रुरुभैरवः । चण्डो मां पवनात्पातु क्रोधेशः पातु माऽनलात् ॥ उन्मत्तः सोमतः पातु भीषणः सूर्यतोऽवतु । याजकाच्च कपालेशो व्योम्नः संहारकोऽवतु ॥ सदा समन्ततः पातु वपुर्वसुदलं मम । गुरवः पांतु सर्वत्र दिगीशः पातु सर्वतः ॥ वृत्तत्रयं पातु नित्यं धरा गेहं सदाऽवतु । श्रीचक्रं पातु भीतिभ्यो योगिन्यः पान्तु सर्वदा ॥ ऊर्ध्वं चाधः सदा पातु दिग्भ्यो राज्ञीश्वरः शिवः ॥ सर्वत्र सर्वदा सर्वं वपुर्भूतेश्वरोऽवतात् ॥ पादादिमूर्धपर्यन्तं वपुः सर्वत्र मेऽवतु । शिरसः पादपर्यन्तं राज्ञी पञ्चदशाक्षरी । इत्येवं कवचं राज्ञ्या मन्त्रगर्भं जयावहम् । त्रैलोक्यविजयं नाम दारिद्र्यभयनाशनम् ॥ सर्वरोगहरं साक्षात्सिद्धिदं पापनाशनम् । महाभयहरं देवि मूलविद्यामयं परम् ॥ परमार्थप्रदं नित्यं भोगमोक्षैककारणम् । यः पठेत्कवचं देवि रणे राजभये क्षणात् ॥ सङ्ग्रामेषु रिपुञ्जित्वा विजयी गृहमेष्यति । पठनात्कवचस्यास्य राजकोपः प्रशाम्यति ॥ द्यूते

धनं लभेदच्युती श्मशाने सिद्धिमाप्नुयात् । त्रिवारं यः पठेद्रात्रौ रेतःस्रावे महेश्वरि ॥ तस्य राज्ञी महाविद्या स्वप्नेऽभीष्टप्रदा भवेत् । स्वयम्भूकुसुमैः शुद्धै रेतःस्तन्योभयाङ्कितैः ॥ रसैर्भूर्जे लिखेद्वर्म रवौ प्रातर्महेश्वरि । चीरतन्तुभिरव्यक्तं लाक्षया वेष्टितं तथा ॥ सुवर्णगुटिकान्तःस्थं पूजयेद्यन्त्रराजवत् । गुटिकैषा महाविद्या राज्ञीमूर्तिरिवापरा ॥ मूलविद्यामयी देवि कुक्षिस्था भोगदायिनी । पृष्ठस्था बलदा देवि कुक्षिस्था रोगनाशिनी ॥ सर्वार्थसाधनी लोके यथाभीष्टफलप्रदा । गुटिकेयं शुभा राज्या न देया यस्य कस्यचित् ॥ इदं कवचमीशानि मूलविद्यामयं परम् । सारस्वतप्रदं लक्ष्मीपुत्रपौत्रविवर्धनम् ॥ आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् । चतुःषष्ट्यादितन्त्राणां सारमादाय वर्णितम् ॥ श्मशाने यः पठेत्सायं महाचीनक्रमेश्वरः । स साधको महादेवि राज्ञीपुत्रो भविष्यति ॥ इदं ते मम सर्वस्वं त्रैलोक्यविजयाभिधम् । कवचं मन्त्रगर्भं च गोपनीयं स्वयोनिवत् ॥ इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये श्रीराज्ञीकवचं ॥

---

## अथादित्यहृदयम् ॥

शतानीक उवाच । कथमादित्यमुद्यन्तमुपतिष्ठेद्द्विजोत्तम । एतन्मे ब्रूहि विप्रेन्द्र प्रपद्ये शरणं तव ॥ सुमन्तुरुवाच ॥ इदमेव पुरा पृष्टः शङ्खचक्रगदाधरः । प्रणम्य शिरसा देवमर्जुनेन महात्मना । कुरुक्षेत्रे पुरा घोरे प्रवृत्ते भारते रणे । देवदेवमुपस्थास्यन्नादित्यं लोकपूजितम् । कृताञ्जलिपुटो भूत्वा पार्थः प्रोवाच केशवम् ॥ अर्जुन उवाच ॥ ज्ञानं तु सर्वशास्त्राणां गुह्याद्गुह्यतरं परम् । मया कृष्ण परिज्ञातं वाङ्मयं सचराच-

रम् ॥ सूर्यस्तुतिमयं ज्ञानं वक्तुमर्हसि मेऽच्युत । भक्त्या पृच्छामि देवेश कथयस्व प्रसादतः । सूर्यभक्तिं कथं कुर्यात्कथं सूर्यस्य पूजनम् । तदहं श्रोतुमिच्छामि त्वत्तः कमललोचन ॥ श्रीभगवानुवाच । इन्द्राद्यैः सकलैर्देवैर्ब्रह्माद्यैः सचराचरैः । सर्वैः प्रणम्यते देव आदित्यो न्यासपूर्वकम् ॥ यदादित्यगतं तेजस्तत्तेजो विद्धि मामकम् ॥ त्रिसन्ध्यं जपमानस्तु पूजयेद्दीप्तदीधितिम् । दारिद्र्यं नेक्षते सूर्यभक्तो जन्मनि जन्मनि ॥ अर्जुन उवाच ॥ सूर्यभक्तिं करिष्यामि कथं सूर्यस्य पूजनम् । तदहं श्रोतुमिच्छामि त्वत्प्रसादेन माधव ॥ श्रीभगवानुवाच ॥ असक्तो यत्त्वया पृष्टमेकचित्तो भवार्जुन । तदहं संप्रवक्ष्यामि ह्यादिमध्यावसानकम् ॥ श्रीअर्जुन उवाच ॥ नारायण सुरश्रेष्ठ पृच्छामि त्वां महाशयम् । कथमादित्यमुद्यन्तमुपतिष्ठेत्सनातनम् ॥ श्रीभगवानुवाच ॥ साधु साधु महाबाहो बुद्धिमानसि पाण्डव । यन्मां पृच्छस्युपस्थानं तत्पवित्रं विभावय । सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् । सर्वरोगप्रशमनमायुरारोग्यवर्धनम् । अमित्रदमनं पार्थ संग्रामे जयवर्धनम् । वर्धनं धनपुत्राणामादित्यहृदयं शृणु ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः । त्रिषु लोकेषु विख्यातं निःश्रेयसकरं परम् ॥ देवदेवं नमस्कृत्य प्रातरुत्थाय चार्जुन । विघ्नान्यनेकरूपाणि नश्यन्ति स्मरणादपि । तस्मात्सर्वप्रयत्नेन सूर्यमाराधयेत्सदा । आदित्यहृदयं नित्यं जप्यं तच्छृणु पाण्डव । यच्छ्रुत्वा मुच्यते जन्तुर्दारिद्र्यादाशु दुस्तरात् । लभते च महासिद्धिं कुष्ठव्याधिविनाशिनीम् ॥ अस्मिन्मन्त्रे ऋषिच्छन्दो देवता शक्तिरेव च ।

सर्वमेव महाबाहो कथयामि तवाग्रतः ॥ मया ते गोपितं न्यासं सर्वशास्त्रप्रबोधितम् । तथा ते कथयिष्यामि मन्त्रमुत्तममेव च ॥ अस्य श्रीआदित्यहृदयस्तोत्रमन्त्रस्य, श्रीकृष्ण ऋषिः, अनुष्टुप् छन्दः, श्रीसूर्यरूपो नारायणो देवता, हरितहयरथं दिवाकरमितिबीजं, ॐनमो-भगवते जितवैश्वानरजातवेदस इति शक्तिः, ॐनमो भगवते आदित्याये-तिकीलकं, "घृणिः सूर्यमादित्यमर्चयन्ति तद्ब्रह्म तप आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरों" इति मूलमंत्रः, आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं, अमुककामनासिद्ध्यर्थे सूर्यात्मनारायणप्रीत्यर्थे पाठे वा जपे विनियोगः ॥ ॥ ॐह्रां अंगुष्ठाभ्यां नमः, ॐह्रीं तर्जनीभ्यां नमः, ॐह्रुं मध्यमाभ्यां नमः, ॐह्रैं अनामिकाभ्यां नमः, ॐह्रौं कनिष्ठिकाभ्यांनमः, ॐह्रः करतलकरपृष्ठाभ्यांनमः ॥ ॥ ॐह्रां हृदयायनमः, ॐह्रीं शिरसे स्वाहा, ॐह्रूं शिखायै वषट्, ॐह्रैं कवचाय हुं, ॐह्रौं नेत्राभ्यां वौषट्, ॐह्रः अस्त्राय फट् ॥ ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति दिग्बंधः । प्राणायामः ॥ ध्यानं ॥ धवलाम्भोरुहारूढं दाडिमीकुसुमप्रभम् । स्फुरद्रत्नमहातेजोवृत्तमण्डलमध्यगम् । अंसासक्तस्फुरच्छ्वेतसनालाब्जकरद्वयम् ! एकास्यं चिन्तयेद्भानुं द्विभुजं रक्तवाससम् ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ॥ भास्वद्रत्नाढ्यमौलिः स्फुरदधररुचा रञ्जितश्चारुकेशो भास्वान्यो दिव्यतेजाः करकमलयुतः स्वर्णवर्णः प्रभाभिः । विश्वाकाशावकाशाधरपतिशिखरे भाति यश्चोदयाद्रौ सर्वानन्दप्रदाता हरिहरनमितः पातु मां विश्वचक्षुः ॥ श्रीभगवानुवाच ॥ पूर्वमष्टदलं पद्मं प्रण-

वादिप्रतिष्ठितम् । मायाबीजं दलाष्टाग्रे यन्त्रमुद्धारयेदिति ॥ आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम् । मार्तण्डं तपनं चेति दलेष्वष्टेषु योजयेत् ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा । अमोघा विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥ सर्वतः सर्वगश्चैव सर्वकारणदेवता । सर्वेशं सर्वहृदयं नमामि सर्वसाक्षिणम् ॥ सर्वात्मा सर्वकर्ता च सृष्टिजीवनपालकः । हितः स्वर्गापवर्गश्च भास्करेश नमोस्तु ते ॥ प्रार्थना ॥ नमो नमस्तेऽस्तु सदा विभावसो सर्वात्मने सप्तहयाय भानवे । अनन्तशक्तिर्मणिभूषणेन ददस्व भुक्तिं मम मुक्तिमव्ययाम् ॥ ॥ अर्कं तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत् । विन्यसेन्नेत्रयोः सूर्यं कर्णयोश्च दिवाकरम् । नासिकायां न्यसेद्भानुं वदने भास्करं न्यसेत् । पर्जन्यमोष्ठयुगले रसनायां विरोचनम् । सुवर्णरेतसं कण्ठे स्कन्दयोस्तिग्मतेजसम् । बाह्वोश्च पूषणं चैव मित्रं च पृष्ठतो न्यसेत् । अरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे । हस्तावुष्णकरः पातु हृदयं पातु भानुमान् । उदरे तु यमं विन्द्यादादित्यं नाभिमण्डले । कट्यां तु विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् । जान्वोस्तु गोपतिं न्यस्येत्सवितारं तु जङ्घयोः । पादयोश्च विवस्वन्तं गुल्फयोश्च दिवाकरम् । बाह्यतश्च तमोध्वंसं भगमभ्यन्तरे न्यसेत् । सर्वाङ्गेषु सहस्रांशुं दिग्विदिक्ष्वभयं न्यसेत् ॥ एष आदित्यविन्यासो देवानामपि दुर्लभः । इमं भक्त्या न्यसेद्यस्तु स याति परमां गतिम् । कामक्रोधकृतात्पापान्मुच्यते नात्र संशयः । सर्पादिभ्यो भयं नास्ति संग्रामेषु पथिष्वपि । रिपुसङ्कटकालेषु तथा चोरसमा-

गमे । त्रिसन्ध्यं यो जपेन्नित्यं महापातकनाशनम् । विस्फो-
टकसमुत्पन्नं तीव्रज्वरसमुद्भवम् । शिरोरुङ्नेत्ररोगोत्थं सर्वव्या-
धिविनाशनम् । कुष्ठरोगं तथा दद्रूरोगं च विविधामयाः ।
जप्यमानस्य नश्यन्ति भक्त्या शृणु त्वमर्जुन । आदित्यहृदयं
पुण्यमादित्यं भुवनेश्वरम् । आदित्यान्नापरो देवो ह्यादित्यो भुव-
नेश्वरः । आदित्यमर्चते ब्रह्मा शिवोप्यादित्यमर्चयेत् । यदादि-
त्यगतं तेजो मम तेजस्तदर्जुन । आदित्यं ये प्रपश्यन्ति ते
मां पश्यन्त्यसंशयम् । त्रिसन्ध्यमर्चयेत्सूर्यं स्मरन्भक्त्या तु यो
नरः । न स पश्यति दारिद्र्यं पार्थ जन्मनि जन्मनि । इत्येत-
त्कथितं पुण्यमादित्यहृदयं मया । यच्छ्रुत्वा मुच्यते पापात्सू-
र्यलोकं स गच्छति । नमो भगवते तुभ्यमादित्याय विवस्वते ।
आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् । सुवर्णः
स्फटिको भानुः स्फुरितो विश्वतापनः । रविर्विश्वो महातेजाः
सुपर्णः सुप्रबोधकः । हिरण्यगर्भस्त्रिशिरास्तपनो भास्करो
रविः । मार्तण्डो गोपतिः श्रीमान् कृतज्ञश्च प्रतापवान् । तमि-
स्रहा भगो हंसो नासत्यश्च तमोनुदः । शुद्धो विरोचनः केशी
सहस्रांशुर्महाप्रभुः । विवस्वान्पूषणो मृत्युर्मिहिरो जामदग्न्य-
जित् । घर्मरश्मिः पतङ्गश्च शरण्यो मित्रतापहः । दुर्विज्ञेयगतिः
शूरस्तेजोराशिर्महाशयः । शम्भुश्चित्राङ्गदो धौम्यो हव्यकव्य-
फलप्रदः । अंशुमानुत्तमो देव ऋग्यजुः साम एव च । हरि-
दश्वस्तमस्पारः सप्तसप्तिर्मरीचिमान् । अग्निगर्भोऽदितेः पुत्रः
शम्भुस्तिमिरनाशनः । पूषा विश्वम्भरो मित्रः सुपर्णः सुप्र-
तापवान् । आतपी मण्डली भास्वांस्तपनः सर्वतापनः । कृत-

विश्वो महातेजाः सर्वरत्नमयोऽद्भुतः । अक्षरश्च क्षरश्चैव प्रभाकरविभाकरौ । चन्द्रश्चन्द्राङ्गदः सौम्यो हव्यकव्यफलार्पकः । अङ्गारकोऽङ्गदोऽगस्त्यो रक्ताङ्गश्चाङ्गवर्धनः । बुद्धो बुद्धासनो बुद्धिर्बुद्धात्मा बुद्धिवर्धनः । बृहद्भानुर्बृहद्भासो बृहद्धामा बृहस्पतिः । शुक्लाश्वः शुक्लरेताश्च शुक्लाङ्गः शुक्लभूषणः । शनिमान् शनिरूपश्च शनैर्गमनतत्परः । अनादिरादिरादित्यस्तेजोराशिर्महातपः । अनादिरादिरूपस्त्वमादित्यो दिक्पतिर्यमः । भानुमान्भानुरूपस्त्वं स्वर्भानुर्भानुदीप्तिमान् । धूमकेतुर्महाकेतुः सर्वकेतुरनुत्तमः । तिमिराङ्गधरः शम्भुः स्रष्टा मार्तण्ड एवच । नमः पूर्वाय गिरये दक्षिणाय नमो नमः । उदीचे तु नमस्तुभ्यं पश्चिमायै नमो नमः । नमः सहस्रांशुमते ह्यादित्याय नमो नमः । नमः पद्मप्रबोधाय नमस्ते द्वादशात्मने । नमो विश्वप्रबोधाय नमो भ्राजिष्णुजिष्णवे । ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो नमः । प्रदीप्ताय प्रगल्भाय युगान्ताय नमोनमः । नमस्ते होतृपतये पृथिवीपतये नमः । नमोङ्कारवषट्कारसर्वयज्ञात्मने नमः । ऋग्वेदाय यजुर्वेदसामवेदात्मने नमः । नमो हाटकवर्णाय भास्कराय नमोनमः । जयाय जयभद्राय हरिदश्वाय ते नमः । दिव्याय दिव्यरूपाय ग्रहाणां पतये नमः । नमः सन्मूर्तये तुभ्यं नमः कुरुकुलात्मने । नमस्त्रैलोक्यनाथाय भूतानां पतये नमः ॥ नमः कैवल्यनाथाय नमस्ते दिव्यचक्षुषे । नमः कल्मषनाशाय नमस्ते शुचिहेतवे । त्वं ज्योतिस्त्वं द्युतिर्ब्रह्मा त्वं विष्णुस्त्वं प्रजापतिः । त्वमेव रुद्रो रुद्रात्मा वायुरग्निस्त्वमेव च । योजनानां सहस्रे द्वे द्वे शते द्वे

च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते । नवतिर्योजनानां च सहस्राणि च सप्ततिः । यावच्च घटिकामात्रं तावच्चलति भास्करः । त्र्यर्बुदं च द्विकोटिं च द्विलक्षं द्विसहस्रकम् । द्विशतं योजनानां च भानुर्याति दिनेदिने । अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः । पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा । नमः सुरारिहन्त्रे च सोमसूर्याग्निचक्षुषे । नमो दिव्याय व्योम्ने च सर्वतन्त्रमयाय च । नमो वेदान्तवेद्याय सर्वकर्मादिसाक्षिणे । नमो हरितवर्णाय सर्वमन्त्रमयाय च । अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा । चैत्रमासे तु वेदाङ्गो वैशाखे तपनो रविः । ज्येष्ठमासे तपेदिन्द्र आषाढे तपते रविः । गभस्तिः श्रावणे मासे यमो भाद्रपदे तथा । आश्विने स्वर्णरेतास्तु कार्तिके च दिवाकरः । मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः । पुरुषस्त्वधिके मासे मासाधिक्ये तु कल्पयेत् । इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्तिताः । उग्ररूपा महात्मानस्तपन्ते विश्वरूपिणः । धर्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप । सर्वपापहरं चैवमादित्यं संप्रपूजयेत् । एकधा दशधा चैव शतधा च सहस्रधा । तपन्ते विश्वरूपेण सृजन्ति संहरन्ति च । एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः । महेन्द्रश्चैव कालश्च यमो वरुण एव च । नक्षत्रग्रहताराणामधिपो विश्वतापनः । वायुरग्निर्धनाध्यक्षो भूतकर्ता स्वयंप्रभुः । एष देवो हि देवानां सर्वमाप्ययते जगत् । एष कर्ता हि देवानां संहर्ता रक्षकस्तथा । एष लोकोऽनुलोकश्च सप्तद्वीपाः ससागराः । एष पातालसप्तस्थदैत्यदा-

नवराक्षसाः । एष धाता विधाता च बीजं क्षेत्रं परागतिः ।
एष एव प्रजा नित्यं संवर्धयति रश्मिभिः । एष यज्ञः स्वधा
स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः । एष सर्वात्मको देवः सूक्ष्मो
व्यक्तः सनातनः । ईश्वरः सर्वभूतानां परमेष्ठी प्रजापतिः ।
कालात्मा सर्वभूतात्मा विश्वात्मा विश्वतोमुखः । जन्ममृत्युज-
राव्याधिसंसारभयनाशनः । दारिद्र्यव्यसनध्वंसी श्रीमान्देवो
दिवाकरः । गभस्तिहस्तो ब्रह्मण्यः सर्वदेवनमस्कृतः । आयुरा-
रोग्यमैश्वर्यं नरा नार्यश्च मन्दिरे । यस्य प्रसादाद्वर्धन्ते तमा-
दित्यं सदा जपेत् । लोकसाक्षी त्रिलोकेशः कर्ता हर्ता त्वमी-
श्वरः । तपनः पावनश्चैव शुचिः सप्ताश्ववाहनः । विकर्तनो
विवस्वांश्च मार्तण्डो भास्करो रविः । लोकप्रकाशकश्चैव
लोकचक्षुर्ग्रहेश्वरः ॥ इत्येतैर्नामभिः प्राज्ञ आदित्यं स्तौति यः
सदा । प्रातरुत्थाय कौन्तेय तस्य रोगभयं कुतः । पातकान्मु-
च्यते पार्थ व्याधिभ्यश्च न संशयः । एकसन्ध्यं द्विसन्ध्यं वा
सर्वपापैः प्रमुच्यते । त्रिसन्ध्यं जपमानस्तु गच्छेच्च परमं पदम् ।
यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते । यद्रात्र्या कुरुते पापं
तद्रात्र्या प्रतिमुच्यते । दद्रूपिटककुष्ठानि मण्डलानि विषू-
चिका । दुष्टव्याधिमहारोगभूतबाधास्तथैवच । डाकिनी शा-
किनी चैव वेताला राक्षसादिजाः । ये चान्ये दुष्टरोगाश्च ज्व-
रातीसारकादयः । जपमानस्य नश्यन्ति जीवेच्च शरदां शतम् ।
संवत्सरेण मरणं यदा तस्य ध्रुवं भवेत् । अशीर्षां पश्यति
छायामहोरात्रं धनञ्जय । यस्त्विदं पठते भक्त्या भानोर्वारे
महात्मनः । प्रातः स्नाने कृते पार्थ चैकाग्रीकृतमानसः । सु-

पर्णचक्षुर्भवति नचान्धस्तु प्रजायते । पुत्रवान्धनसम्पन्नो जायते चारुजः सुखी । सर्वसिद्धिमवाप्नोति सर्वत्र विजयी भवेत् । आदित्यहृदयं पुण्यं सूर्यनामविभूषितम् । श्रुत्वा तु निखिलं पार्थ सर्वपापैः प्रमुच्यते । अतःपरतरं नास्ति सिद्धिकामस्य पाण्डव । एतज्जप त्वं कौन्तेय यतः श्रेयो ह्यवाप्स्यसि। आदित्यहृदयं नित्यं यः पठेत्सुसमाहितः । भ्रूणहा मुच्यते पापात्कृतघ्नो ब्रह्मघातकः । गोघ्नः सुरापी दुर्भोजी दुष्प्रतिग्रहकारकः । पातकानि च सर्वाणि दहत्येव न संशयः । य इदं शृणुयान्नित्यं जपेद्वापि समाहितः । सर्वपापविशुद्धात्मा सूर्यलोके महीयते । अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् । कुरोगी मुच्यते रोगाद्भक्त्या यः पठते सदा । यस्त्वादित्यदिने पार्थ नाभिमात्रजले स्थितः । उदयाचलमारूढं भास्करं प्रणतः स्थितः । जपते मानवो भक्त्या शृणुयाद्वापि भक्तितः । स याति परमं स्थानं यत्र देवो दिवाकरः । अमित्रदमनीं कृत्यां यदा कर्तुं समारभेत् । तदा प्रतिकृतिं कृत्वा शत्रोश्चरणपांसुभिः । आक्रम्य वामपादेन ह्यादित्यहृदयं जपेत् । एतन्मन्त्रं समाहूय सर्वसिद्धिकरं परम् । "ॐ ह्रींहिमालीढायस्वाहा, ॐ ह्रीमालीढायस्वाहा, ॐ ह्रींविलीनालीढायस्वाहा" इतिमन्त्रः ॥ त्रिभिश्च रोगी भवति ज्वरी भवति पञ्चभिः । जपैश्च सप्तभिः पार्थ राक्षसीं तनुमाविशेत् । राक्षसेनाभिभूतस्य विकारान् शृणु पाण्डव । गीयते नृत्यते नग्न आस्फोटयति धावति । शिवारुतं च कुरुते हसते क्रन्दते पुनः । एवं सम्पीड्यते पार्थ यद्यपि स्यान्महेश्वरः । किं पुनर्मानुषः कश्चिच्छौचाचारविव-

र्जितः । पीडितस्य न सन्देहो ज्वरो भवति दारुणः । यदा चानुग्रहं तस्य कर्तुमिच्छेच्छुभङ्करम् । तदा सलिलमाधाय जपेन्मन्त्रमिमं बुधः । ॐनमो भगवते तुभ्यमादित्याय नमो-नमः । जयाय जयभद्राय हरिदश्वाय ते नमः ।" किंपुनः साधको नित्यं जपते विधिपूर्वकम् । स्नापयेत्तेन मन्त्रेण शुभं भवति नान्यथा । अन्यथा च भवेद्दोषो नश्यते नात्र संशयः । स्तवस्ते निखिलः प्रोक्तः पूजां चैव निबोध मे । उपलिप्ते शुचौ देशे नियतो वाग्यतः शुचिः । वृत्तं वा चतुरस्रं वा लिप्तभूमौ लिखेच्छुचिः । अष्टपत्रं लिखेत्पद्मं शिलाचूर्णैः सकर्णिकम् । पूर्वपत्रे लिखेत्सूर्यमाग्नेय्यां तु रविं न्यसेत् । याम्यां दिशि विवस्वन्तं नैर्ऋत्यां तु भगं न्यसेत् । प्रतीच्यां वरुणं विन्द्याद्वायव्यां मित्रमेव च । आदित्यमुत्तरे पत्रे चैशान्यां विष्णुमेव च । मध्ये तु भास्करं विद्यात्क्रमेणैवं समर्चयेत् । अनुष्ठानं भवत्येवं क्रमेणेत्थं प्रपूजयेत् । अतःपरतरं नान्यत्सिद्धिकामस्य किंचन । महातेजः समुद्यन्तं प्रपद्येच्च कृताञ्जलिः । सकेसराणि पद्मानि करवीराणि चार्जुन । तिलतण्डुलयुक्तानि कुशगन्धोदकानि च । रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने । धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं स्पृशेत् । मन्त्रपूतं गुडाकेश ह्यर्घ्यं दद्याद्गभस्तये । सायुधं सरथं ध्यात्वा सूर्यमावाहयेद्धिया ॥ "स्वागतो भव, सुप्रतिष्ठितो भव, सन्निधो भव, सन्निहितो भव, संमुखो भव," इतिपञ्चमुद्राः । स्फुटयित्वाऽर्हयन्सूर्यं भुक्तिं मुक्तिं लभेन्नरः । "ॐश्रींअर्घविद्याकिलिकिलि कटकेष्टसर्वार्थसाधनीयाय स्वाहा, ॐह्रांह्रींह्रुँ सः सूर्यायस्वाहा, ॐह्रींश्रींखंखः

लोकायसूर्यमूर्तयेस्वाहा, ॐह्रांह्रींसः सूर्यायस्वाहा, ॐह्रांह्रींसः सर्वमूर्तये सूर्यायनमः स्वाहा, ॐह्रांह्रींहुंह्रैंह्रौंह्रः सूर्यमूर्तयेस्वाहा, ॐह्रांह्रींहूंसः स्वर्लोकाय सूर्यमूर्तयेस्वाहा, ॐहूंमार्तण्डायस्वाहा॥" नमोऽस्तु सूर्याय सहस्रभानवे नमोस्तु वैश्वानर जातवेदसे । त्वमेव चार्घ्यं परिगृह्ण गृह्ण देवाधिदेवेश नमो नमोस्तु ते ॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे । दत्तमर्घ्यं मया भानो त्वं गृहाण नमोस्तु ते ॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥ नमो भगवते तुभ्यं नमस्ते विश्वतेजसे । ममेदमर्घ्यं गृह्ण त्वं देवदेव नमोस्तु ते ॥ सर्वदेवाधिदेवाय त्वाधिव्याधिविनाशिने ! इदं गृहाण मे चार्घ्यं स्वामिन् ! व्याधिर्विनश्यतु ॥ नमस्तुर्याय शान्ताय सर्वरोगविनाशिने । ममेप्सितं फलं देहि प्रसीद परमेश्वर ॥ ॐनमो भगवते सूर्याय स्वाहा, ॐशिवायस्वाहा, ॐसर्वात्मने सूर्यायनमः स्वाहा, ॐअक्षयतेजसेनमः स्वाहा ॥ सर्वसङ्कटदारिद्र्यं शत्रुं नाशय नाशय । सर्वलोकेषु विश्वात्मन्सर्वात्मन्सर्वदर्शक॥ नमस्ते भगवन् सूर्य कुष्ठरोगान्विखण्डय। आयुरारोग्यमैश्वर्यं देहि देव नमोस्तुते॥ नमो भगवते तुभ्यमादित्याय नमो नमः ॐअक्षय्यतेजसे नमः, ॐसूर्यायनमः, ॐविश्वमूर्तयेनमः॥ आदित्यं च शिवं विंद्याच्छिवमादित्यरूपिणम् । उभयोरन्तरं नास्ति त्वादित्यस्य शिवस्य च । अतो वच्मि सदैकत्वं पुरुषे च दिवाकरे । उदये ब्रह्मरूपोयं मध्याह्ने च महेश्वरः । सायाह्ने तु स्वयं विष्णुस्त्रिमूर्तिश्च दिवाकरः । "ॐह्रांह्रींहूंह्रैंह्रौंह्रः दिवाकराय नमः ॐह्रींह्रींहूंक्लींक्रींघृणिसूर्याय आदित्यायनमः, ॐनमो

भगवते तुभ्यं विष्णवे जातवेदसे । ममार्घ्यं प्रतिगृहाण देवदेव नमोस्तु ते । श्रीसूर्यनारायणाय साङ्गाय सपरिवारायेदमर्घ्यं ददामि नमः " ॥ हिमघ्नाय तमोघ्नाय रक्षोघ्नाय च ते नमः । कृतघ्नघ्नाय सत्याय तस्मै सूर्यात्मने नमः । "ॐऐंश्रींह्रींक्लींहरितहयरथदिवाकरं सप्तसप्तिहरये नमो नमः" । हरितहयरथं दिवाकरं कनकमयाम्बुजरेणुपिञ्जरम् । प्रतिदिनमुदितं नवंनवं शरणमुपैमि हिरण्यरेतसम् ॥ जयोजयश्च विजयो जितप्राणो जिताश्रमः । मनोजवो जितक्रोधो वाजिनः सप्त कीर्तिताः । न शत्रुभ्यो भयं जातु न व्याधिभ्यो भयं भवेत् । न नागेभ्यो भयं चैव नच भूतभयं क्वचित् । अग्नेर्दुष्टाद्भयं नास्ति पार्थिवेभ्यस्तथैव च । दुर्गतिं तरते घोरां पुत्रांश्च लभते पशून् । सिद्धिकामो लभेत्सिद्धिं कन्याकामस्तु कन्यकाम् । एतत्पठ त्वं कौन्तेय भक्तियुक्तेन चेतसा । अश्वमेधसहस्रस्य वाजिपेयशतस्य च । कन्यादानसहस्रस्य यत्फलं तत्समाप्नुयात् । इदमादित्यहृदयं योऽधीते सततं नरः । सर्वपापविशुद्धात्मा सूर्यलोके महीयते । नास्त्यादित्यसमो देवो नास्त्यादित्यसमा गतिः । प्रत्यक्षो भगवान्विष्णुर्येन विश्वं प्रबुध्यते । गवां लक्षसहस्रेण सम्यग्दत्तेन यत्फलम् । तत्फलं लभते नूनं शान्तात्मा स्तौति यो रविम् । योऽधीते सूर्यहृदयं सकलं सफलं भवेत् । अष्टानां ब्राह्मणानां तु लेखयित्वा समर्पयेत् । ब्रह्मलोके ऋषीणां च जायते मानुषोऽपि सः । जातिस्मरत्वमाप्नोति शुद्धात्मा नात्र संशयः । अजाय लोकत्रयपावनाय भूतात्मने गोपतये वृषाय । सूर्याय सर्गप्रलयात्मकाय नमोस्तु ते कारुणिकोत्तमाय ॥ विवस्वते

ज्ञानभृदन्तरात्मने जगत्प्रदीपाय जगद्धितैषिणे । स्वयंभुवे दीप्तसहस्रचक्षुषे सुरोत्तमायामिततेजसे नमः ॥ सुरैरनेकैः परिसेविताय हिरण्यगर्भाय हिरण्मयाय । महात्मने मोक्षपदप्रदाय नमोस्तु ते वासरकारणाय ॥ आदित्यः स्तूयते देवैरादित्यः परमं पदम् । आदित्यो मातृकाभूता आदित्यो ह्यक्षरात्मकः । आदित्यं पश्यते भक्त्या ध्रुवं पश्यति मां नरः । नच पश्यति यो भक्त्या स याति विपदां पदम् ॥ त्रैगुण्यं च त्रिमात्रं च त्रयो लोकास्त्रयोग्नयः । त्रयाणां च त्रिमूर्तिस्त्वं तुरीयाय नमोस्तु ते ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशङ्करात्मने ॥ नमो नमस्ते जगदेकसाक्षिणे भूतादिमन्त्रैर्विनियोगहेतवे । सरोजसम्भूतसरोजशङ्खभृत्पिनाकभृत्पूजितपत्कजाय ते ॥ यस्योदयेनेह जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये । ब्रह्मेन्द्रनारायणरुद्रवन्दितः स नः सदा यच्छतु मङ्गलं रविः ॥ नमोस्तु सूर्याय सहस्ररश्मये सहस्रशाखान्वितसम्भवात्मने । सहस्रयोगोद्भवभूतिभागिने सहस्रसंख्यायुगधारिणे नमः ॥ यन्मण्डलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् । दारिद्र्यदुःखक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ यन्मण्डलं देवगणैः सुपूजितं ब्रह्मर्षिदेवर्षिनृपर्षिभावितम् । तं देवदेवं प्रणमामि सूर्यं पुनातु मां० ॥ यन्मण्डलं ज्ञानघनं त्वगम्यं त्रैलोक्यपूज्यं त्रिगुणात्मरूपम् । समस्ततेजोमयदिव्यरूपं पुनातु मां० ॥ यन्मण्डलं गूढमतिप्रबोधं धर्मस्य वृद्धिं कुरुते जनानाम् । यत्सर्वपापक्षयकारणं च पुनातु० ॥ यन्मण्डलं व्याधिविनाशदक्षं यदृग्यजुःसामसु

संप्रगीतम् । प्रकाशितं येन च भूर्भुवःस्वः पुनातु० ।। यन्मण्डलं वेदविदो वदन्ति गायन्ति यच्चारणसिद्धसंघाः । यद्योगिनो व्योमरथस्थसिद्धाः पुनातु० ।। यन्मण्डलं सर्वजनेषु पूजितं ज्योतिश्च कुर्यादिह मर्त्यलोके । यत्कालकालाद्यमनादिरूपं पुनातु० ।। यन्मण्डलं विष्णुचतुर्मुखाख्यं यदक्षरं पापहरं जनानाम् । यत्कालकल्पक्षयकारणं च पुनातु० ।। यन्मण्डलं विश्वसृजां प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम् । यस्मिञ्जगत्संहरते समग्रं पुनातु० ।। यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम् । सूक्ष्मान्तरैर्योगपथानुगम्यं पुनातु० ।। यन्मण्डलं वेदविदो वदन्ति गायन्ति यत्सिद्धगणा गुहासु । सन्ध्याविधौ ब्रह्मविदः स्मरन्ति पुनातु० ।। यन्मण्डलं वेदविदोपगीतं यद्योगिभिर्योगपथानुगम्यम् । तं सर्वदेवं प्रणमामि भानुं पुनातु मां तत्सवितुर्वरेण्यम् ।। ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ।। सशङ्खचक्रं रविमण्डलेस्थितं कुशेशयाक्रान्तमनन्तमव्ययम् । भजामि बुद्ध्या तपनीयमूर्तिं सुरोत्तमं चित्रविभूषणोज्ज्वलम् ।। एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तयन्ति सुरश्रेष्ठं देवं नारायणं विभुम् ।। वेदवेदाङ्गशरीरं दिव्यदीप्तिकरं परम् । रक्षोघ्नं रक्तवर्णं च तं नमामि जगद्गुरुम् ।। लोकप्रभाकरश्चैव लोकचक्षुर्महेश्वरः । तपनः पावनश्चैव शुचिः सप्ताश्ववाहनः ।। एकचक्रो रथो यस्य दिव्यः कनकभूषितः । स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः ।। आदित्यः प्रथमं नाम द्वितीयं तु दिवाकरः । तृतीयं भास्करः प्रोक्तं चतुर्थं तु

प्रभाकरः ॥ पञ्चमं तु सहस्रांशुः षष्ठं चैव त्रिलोचनः । सप्तमं हरिदश्वश्च विभावसुस्तथाष्टमम् । नवमं दिनकृत् प्रोक्तं दशमं द्वादशात्मकः । एकादशं त्रयीमूर्तिर्द्वादशं सूर्यएवच ॥ द्वादशादित्यनामानि प्रातरुत्थाय यः पठेत् । दुःस्वप्नं नश्यते तस्य सर्वदुःखं च नश्यति ॥ दद्रूकुष्ठहरं चैव दारिद्र्यध्वंसकारकम् । सर्वतीर्थकरं चैव सर्वकामफलप्रदम् ॥ यः पठेत्प्रातरुत्थाय भक्त्या स्तोत्रमिदं नरः । सौख्यमायुस्तथारोग्यं लभते मोक्षमेवच ॥ अग्निमीळे नमस्तुभ्यमिषेत्वोर्जेस्वरूपिणे । अग्न आयाहि वीतस्त्वं नमस्ते ज्योतिषां पते ॥ शन्नो देवी नमस्तुभ्यं जगच्चक्षुर्नमोस्तुते । पञ्चमायोपवेदाय नमस्ते जगदात्मने ॥ पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः । सप्ताश्वरथमारूढो द्विभुजः स्यात्सदा रविः ॥ आदित्यस्य नमस्कारं ये कुर्वन्ति दिनेदिने । जन्मान्तरसहस्रेषु दारिद्र्यं नोपजायते ॥ नमो धर्मनिधानाय नमः सुकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमोनमः ॥ उदयगिरिमुपेतं भास्करं पद्महस्तं सकलभुवननेत्रं रत्नरज्जूपमेयम् । तिमिरकरिमृगेन्द्रं बोधकं पद्मिनीनां सुरवरमभिवन्दे सुन्दरं विश्वदीपम् ॥ अपरः शरणं नास्ति त्वमेव शरणं मम । तस्मात्कारुण्यभावेन रक्ष रक्ष दिवाकर ॥ पौरोहित्यं रजनिचरणं ग्रामणीत्वं नियोगो माठापत्यं वितथवचनं साक्षिवादः परान्नम् । ब्रह्मद्वेषं खलजनरतिः प्राणिषु निर्दयत्वं माभूदेतन्मम दिनपते जन्मजन्मान्तरेऽपि ॥ उदयंस्तु महाभानुस्तेजसा चाभयङ्करः । सहस्ररश्मिदीप्तश्चत्वादित्यः प्रीयतां मम ॥ अनेन मन्त्रपा० ह्रांह्रींसः सूर्यः० प्रीयतां प्रीतोस्तु ॥ इति श्रीभविष्योत्तरपुराणे श्रीकृष्णार्जुनसंवादे आदित्यहृदयं समाप्तम् ॥

## श्रीमातृभक्तिस्तुतिः ।

ॐ भूमौ धर्मविनाशमीक्ष्य दिविजैः सिद्धैश्चतुर्भिर्मुदा, विज्ञप्ता सनकादिभिर्भगवती दुःखार्तिहन्त्री सताम् । पुत्रीभूय स्वयं च तैरनुदिनं संसेविता या परा, ख्याता साऽवतु नोऽत्र जोनंदिदितः[1] श्रीराजराजेश्वरी ॥ १ ॥ दोषैर्दुष्टमऽनेकधा क्षितितलं संवीक्ष्य धर्मध्वजव्याजा[2]त्कश्यपधर्मदग्धविमलं[3] तीर्थैश्च संस्कारितम् । श्रीकश्मीरतले सुमेरुसविधे देशं गता या स्वयं, ख्याता सा० ॥ २ ॥ बाल्ये नर्मसु कृष्णगीःषु[4] च यदे[5]तीत्थं भुवि ख्यापने, प्रोद्युक्ता विविधात्तपुण्यसरणिः पाषाणमूर्त्यादिषु । या व्यक्तं शिवं[6]विष्णवित्यऽविरतं नामार्चनादिस्तुतेः ख्याता सा० ॥ ३ ॥ पातिव्रत्य[7]विधेरऽतीव च सती लोकेषु ख्यातौ रता, पाठे होमविधावऽतिथियजने श्राद्धे बलौ यक्षसाम् । पत्युश्चाशयतोऽन्वहं विदधती भक्त्या सुवाचाऽपि या, ख्याता० ॥ ४ ॥ गार्हस्थ्यं सफलीविधाय तनुजीभूतैः पुरा[8]सिद्धकैः, स्तद्द्वारा च स्वयं वनस्थ[9]वृषतः स्वायाससाध्यैर्धनैः । सक्ता स्वीयं[10]कुटीगतातिथिजने तीर्थाटने[11] या व्रते[12] ख्याता०

---

१ "ज्योनदिदि" इति नाम्ना ख्याता । २ पाखाण्डमिषेण । ३ कश्यपमुनितपसा भस्मीभूतविविधपापम् । ४ भगवद्गीतासु । ५ यदा यदाहि धर्मस्येति वाक्यार्थख्यापने । ६ हे शिव, हे विष्णो इत्थं नित्यमेव नामभिः । पूजादिनवविधभक्तिमार्गाच्च व्यक्तीकृतविविधधर्ममार्गा । ७ पतिव्रतस्त्रीनियमानां ख्यापनाय । पत्युर्वृत्त्यनुरोधात्पञ्चयज्ञतत्पराऽसीदित्यर्थः । ८ पुरोक्तैः सनकादिभिः पुत्रीभूतैर्गार्हस्थ्यफलं पितृऋणमुक्तिं विधाय । ९ वानप्रस्थधर्मतः । १० कुटीचकसंन्यासक्रमेण गृहागतसज्जनसेवायां सक्ता । ११ तीर्थयात्रासु । १२ चातुर्मासादिव्रतानुष्ठानक्रमेषु च सक्ताऽभूदित्यर्थः ॥

॥ ५ ॥ येन्दोः कीर्तिं[1]मधोकरी यतिजनेष्वाऽगुप्तदानार्पणैः संमानैर्महतां सुपेशलवचोयोगैर्मुदा मानिनाम् । सद्वाक्यैश्च शमादिधर्मविषयैर्युक्तैर्विरक्तात्मनां ख्याता० ॥ ६ ॥ या सूर्यस्य च शक्तिं[2]माप्य हसती कामाद्यरेस्तापनैर्लिङ्गा[3]ऽवृत्तिसुशासनैश्च शमितैः स्वीयैर्मनोधर्मभिः । मोहाद्यौऽन्ध्यसुवृत्तमानसवतां ज्ञानप्रकाशप्रदा, ख्याता० ॥ ८ ॥ ऐश्वर्यं स्वजनेषु तापमरिषु स्वान्ते शमं नैर्ऋतिं[5] दुष्टेष्वेव समृद्धिमिष्टनिर्वहे[6] देहात्मबुद्धिं चितौ[7] । सन्त्यस्याऽऽत्मधियां विविक्तमहिमा याऽगाच्च स्वे धामनि[8], ख्याता साऽवतु नोऽत्र जोनदिदितः श्रीराजराजेश्वरी ॥ ८ ॥ धर्मे दाक्ष्यकृतिं मनोमलहृतिं स्वास्थ्यस्थितिं देहके[10], निर्माधुर्य[11]स्रुतिं गिरोऽतिशयतो भक्तिस्रुतिं स्वेश्वरे[12] । मात्राकारतयोल्लसत्परचितेर्दद्यात्कृतेयं स्तुतिर्मातुर्भक्तिहृताशयैश्च पडरूश्रीगोविन्दकौलैर्नृणाम् ॥ ९ ॥ मात्रष्टकं पठेद्यस्तु मातृभक्तो जितेन्द्रियः । आयुरारोग्यमैश्वर्यमिह[13]ाऽन्ते सोऽप्नुयात्पराम् ॥ १० ॥ इति श्रीमच्छ्रीदत्तात्रेयकुलोत्पन्नपडरू इत्युपहित गोविंदकौलानुज्ञया दैवज्ञकेशवभट्टविरचिता मातृभक्तिस्तुतिः ॥

---

१ तिरस्कुर्वती सर्वथा प्रह्लादकत्वात् । वियोगिनां दाहकत्वाच्चेन्दोः । २ प्रतापनयुतप्रकाशनशक्तिं अस्यास्तु तापत्रयप्रशमनयुतप्रकाशशक्तिवत्त्वात् इति भावः । ३ धर्मिष्ठानां चिह्नैर्नत्वनुष्ठानैरावृत्तिः स्वधर्मावरणं नतु स्वोद्धारकरणं येषां तेषां धर्मव्याख्यानात्मप्रशासनैश्च । ४ कामादिभिरावृत्तान्तःकरणानां प्रकाशदा । ५ अलक्ष्मीं । ६ मित्रवर्गे । ७ स्वरूपे । ८ आत्माऽपरोक्षेण प्राप्ताऽद्वैतस्वरूपवृत्तिः । ९ कैवल्यात्मनि । १० सूक्ष्मे देहे अन्तःकरणदोषनाशं स्थूले स्वास्थ्यं च । ११ निरतिशयतो माधुर्यप्रसृतिं । १२ स्वेष्टदेवे भक्तिमार्गं च । इयं स्तुतिः पाठकानां मनुष्याणाम् । १३ इह लोके भुक्तिं, परलोके च मुक्तिमाप्नुयात् ॥

ॐ राज्ञीस्तोत्रम् ॥

ॐकाररूपेऽखिलवेदसारे वेदान्तविज्ञानचणैः प्रगीते ॥
मूर्ध्ना महाराज्ञि महार्हपीठे वन्दे त्वदीयं चरणारविन्दम् ॥ १ ॥
भूरादिलोके कृतलक्षणेऽजे राज्ञि प्रपन्नार्तिहरे नमस्ते ॥ आक्र-
न्दमाकर्णय मे शरण्ये भक्तार्तिनाशे ह्यपरः प्रभुः कः ॥ २ ॥
भुवोऽवकाशे रविचन्द्रदीप्तिर्देदीप्यते त्वामनु चित्प्रदीप्तिम् ॥
तमःप्रपञ्चं प्रविलाप्य हार्दं पद्मं ममाबोधय राज्ञि मातः ॥ ३ ॥
स्वःशाखिदर्पं हरतीष्टदानादाशाधिकाद्यत्स्मृतमात्रमेव ॥ मातर्म-
हाराज्ञि तदाननं ते वन्दे शरत्सुन्दरचन्द्ररम्यम् ॥ ४ ॥ तद्वा-
ङ्मनोदूरमचिन्तनीयं रूपं स्वकीयं भवदुःखहारि ॥ पीयूषपी-
यूषमयूखतुल्यं राज्ञि प्रकाशयाम्ब कदा दयेथाः ॥ ५ ॥ सवितुः
शक्तिभूता त्वं सूयसेऽदश्चराचरम् ॥ नमोऽस्तु ते महाराज्ञि पाहि
मां शरणागतम् ॥ ६ ॥ वरेण्यं त्वत्पदाभ्यर्चामृतचर्वणमस्तु
मे ॥ नमो० ॥ ७ ॥ भर्गो भर्गेऽपि संसारभर्जको यस्तवैव सः ॥
नमो० ॥ ८ ॥ देवस्य त्रिपुराराातेराहोपुरुषिके शिवे ॥
नमो० ॥ ९ ॥ धीमहिम्नापि केनापि यां स्तोतुं न प्रभूयते ॥
नमो० ॥ १० ॥ धियो मे घोरसंसारलंघने सन्तु सज्जिताः ॥
नमो ॥ ११ ॥ योऽर्चति त्वां स देवेशि मघवादिभिरर्च्यते ॥
नमो० ॥ १२ ॥ नस्तितोष्ट्रवदम्बाहं कर्मपाशैः प्रपीडितः ॥
नमो० ॥ १३ ॥ प्रचोदयात्तवेच्छा मां तवैवाङ्घ्रिनिषेवणे ॥
नमो० ॥ १४ ॥ मातुः स्नेहः सर्वपुत्रेषु तुल्यः श्लाघ्याश्लाघ्ये-
ष्वम्ब चेत्सत्यमेतत् ॥ दुर्वृत्तस्याप्यात्मजस्यास्ति किं मे त्यागो
युक्तोऽयुक्तदोषौघहर्त्रि ॥ १५ ॥ राज्ञीस्तोत्रमिदं पुण्यं यः पठे-
द्भक्तिसंयुतः ॥ तस्य सिध्यति सर्वेष्टमचिराद्देव दुर्लभम् ॥ १६ ॥

इति श्रीराज्ञीस्तोत्रं समाप्तमनाथक्षेमाय भवतु ।

## मातृदेवीलीलास्तुतिः ॥

ॐ सदा व्रतैः सतां गतैः सुशास्त्रमार्गवेदितैश्चराचरेषु
सत्त्वकेषु वासरं[1] गवेषयन् । [2]स्वचिद्घनं स्वमातृतोऽद्य लब्ध-
वांस्तु यद्यऽहं सुजोनदीदिनामकं नमामि तत्सुभक्तितः ॥ १ ॥
स्वदक्षदोर्गतं रदाऽक्षसूत्रकं सुमूषकासनं च वामदोर्गतं कुठार-
मोदकं त्रिदृक् । सुदीर्घ[3]कुक्षिशुण्डकं भुजङ्गहारि रक्तभं सुजो-
नदीदि० ॥ २ ॥ यदेव मुक्तविद्रुमाऽसिता[4]ऽच्छपीतपञ्चकं[5],
त्रिलोचनं किरीटचन्द्रशोभितं द्विजैः[6] [7]श्रितम् । श्रुतिर्क्षिति-
[8]र्भवार्तिहृत् सुहंसवाहनं श्रुतौ[9] सुजोनदीदिनामकं० ॥ ३ ॥
[10]सुमेरुशृङ्गपीठगं सुरक्तवर्णभं सदा मृगेन्द्रवाहनं भुजङ्गहारि
दुष्टदैत्यहृत् । हर्यं[11]धिदिग्भुजैश्च भीरु[12]सप्तकेन यद्वृतं, सुजोन-
दीदि० ॥ ४ ॥ सुकीलपर्वत[13]स्थितं सुकीलै[14]वृन्दमालितं, चतु-
र्भुजं किरीटचन्द्रशोभि दुष्टभक्षकम् । त्रिदृक्क यत्सुपूजितं सदाऽ-
न्नपानदैर्जनैः सुजोनदीदि० ॥ ५ ॥ सरोऽन्तरे[15] [16]सुनागगं
वि[17]वर्णभृज्जलान्तरे, भुजङ्गहारि पायसप्रियं जयप्रदं नृणाम् ॥
सुरागिणां दुरात्मनां भयप्रदं जटेन्दु यत् सुजोनदीदि० ॥६॥

---

१ प्रत्यहं नित्यादिकर्ममार्गैः स्वस्वरूपानन्दमन्वेषयन् । २ सर्वात्मतां प्रकटयति ।
३ लम्बोदरं दीर्घनासं च गणेशाकृति यत् । ४ सितं । ५ मुक्ताविद्रुमहेमनीलधवल-
छायात्मकपञ्चशिरस्कम् । ६ वेदाभिप्रायज्ञैः । ७ महागायत्रीस्वरूपेण स्वीकृतम् ।
८ वेदभूः । ९ वेदे च प्रथितं यत् । १० काश्मीरे प्रसिद्धश्रीचक्रेश्वराख्यपर्वत-
स्थितं । ११ अष्टाधिकदशभुजैः । १२ अमादिदेवीसप्तकेन वृतं शारिकात्म यत्
१३ काश्मीरे प्रसिद्धज्वालापर्वतगं । १४ ज्वालादेवीनामकं यत् । १५ सरसां
मध्ये कश्मीरे तु "तुलमुल" इति संज्ञके ग्रामेऽनेकनागानां मध्ये प्रसिद्धं ।
१६ श्रीमहाराज्ञीनागस्थितम् । १७ जलान्तर्विविधरूपप्रकाशकं राज्ञीसंज्ञकं यत् ।

निलिम्पपञ्चमञ्चगं[1] सुनीलभं त्रिलोचनं, त्रिपूर्षु सुन्दरं सुरारि-घातकं भयापहम् । कदम्बवाटिकागतं सुभक्तभीतिहारि यत् सुजोनदीदि० ॥ ७ ॥ यदेव वैष्णवैश्चतुर्भुजं च नीलसु-न्दरं गदाऽरि[2]शङ्खपद्मकौस्तुभोज्वलं हृदा धृतम् । सुपीतवस्त्र-माभृतं[3] खगासनं स्वचिह्नं सुजोनदीदि० ॥ ८ ॥ नृमुण्डस्रग्युतं भुजङ्गभूषितं शिवायुतं सुपञ्चकं[4] त्रिलोचनं श्मशानभूमिशायि यत् । जटेन्दु भुक्तिमुक्तिदं सप्रेतकं वृषासनं सुजोनदीदि० ॥ ९ ॥ अरोगता[5]ऽच्छताप्रतापधी[6]स्वधीसुखाऽभयाऽसुबन्धंता[7]-धृतिप्रसन्नताजयात्मशक्तिभिः । ई[8]नेन्दुभौमसौम्यजीवभार्गवा-दिरूपि यत् सुजोनदीदि० ॥ १० ॥ कृपाणखेटशङ्खशूलबाण-चापतर्जनीरथाङ्गशोभिदो[9]र्वनं सुदूर्वयाऽनुगं रुचा । हर्यारि[10]-मूर्ध्नि संस्थितं सुरारिरक्तपं च यंत्[11] सुजोनदीदि० ॥११॥ सिताऽ-सिताऽर्कभं[12] रमाशिवाश्रुतिप्रसूपति प्रदाकुशत्रुं[13]गोसिताङ्गवाहि चैकशीर्षकम् । शरास्यकं चतुर्मुखं यदेव मागुणै[14]क्रमात् सुजोन-दीदि० ॥ १२ ॥ अनेकशीर्षपाददोःश्रवाक्षिवक्षसास्यकं सह-स्रवस्त्रवर्णभूषणायुधाकृतिश्रितम् । अनेकपत्र[15]शस्त्रनागसत्त्वकर्म-भृच्च यत् सुजोनदीदिनामकं नमामि तत्सुभक्तितः ॥ १३ ॥

---

१ ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्यपञ्चदेवात्मपर्यङ्कस्थितं त्रिपुरसुन्दरीस्वरूपं यत् । २ सुदर्शनचक्रम् । ३ लक्ष्मीयुतं विष्णुरूपं यत् । १ सुपञ्चशिरस्कं शिवात्मकं यत् । ५ नवग्रहाणां तु । "आरोग्यं तरणिः शशी विमलतां भौमः प्रतापोदयं बुद्धिं शीतकरा-त्मजः सुरगुरुर्ज्ञानं सुखं भार्गवः । धैर्यं सूर्यसुतश्च राहुरभयं केतुः प्रसादं ध्रुवः शौर्यं कुम्भसमुद्भवोप्यथ जयं दिश्यन्तु सर्वे ग्रहाः" इत्यात्मकाः चिच्छक्तय एवेत्यर्थः । ६ ज्ञानं । ७ शौर्यं । ८ एकादशग्रहात्म । ९ भुजाष्टकं । १० महिषोत्तमाङ्गस्थितं । ११ श्रीदुर्गाख्यं । १२ रक्तवर्णम् । १३ गरुडवृषहंसाधिरूढं । १४ मायायाः सत्वतमोरजसामुपाधितः विष्णुशिवब्रह्मात्मकं यत् । १५ वाहनं विराडात्मकं यत् ।

पद्गरगोन्दकौलजं हि जोनदीदिभावनं पठेत् हृदीद्धभावनो विधाय तत्पदद्वयम् । मतिं श्रुतौ रमां गृहे यशो जनेषु दीयतेऽन्विहं त्वऽमुत्र तस्य निर्भयं चिदीश्वरी पदम् ॥ १४ ॥ इति श्रीमद्दत्तात्रेयवंशीय पडरू इत्युपहितगोविन्दकौलानुज्ञया दैवज्ञकेशवभट्टविरचिता मातृदेवीलीलास्तुतिः ॥

## ॐ अपराजिताविद्या ॥

अस्याः श्रीअपराजिताया महाविद्यायाः, वामदेवबृहस्पतिमार्काण्डेया ऋषयः, गायत्र्युष्णिगनुष्टुब्बृहत्यश्छन्दांसि, लक्ष्मीनृसिंहो देवता, ॐक्लींश्रींह्रींबीजं, हूं शक्तिः, आत्मनो॰ अमुककामनाप्राप्त्यर्थं पाठे विनियोगः ॥ ध्यानं ॥ ध्येयः सदासवितृ॰ ॐ नमोनारायणाय ॐ नमोभगवतेवासुदेवाय नमोऽनन्ताय सहस्रशीर्षाय क्षीरोदार्णवशायिने शेषभोगपर्यङ्काय गरुडवाहनाय, अमोघाय अजाय अजिताय पीतवाससे, वासुदेव-सङ्कर्षण-प्रद्युम्नाऽनिरुद्ध-हयग्रीव-वराह-नारसिंह-वामन-त्रिविक्रम-राम-श्रीराम-वरप्रद-वरप्रद नमोस्तुते २ ॥ असुर-दैत्यदानव-यक्ष-राक्षस-भूत-प्रेत-पिशाच-कुम्भाण्ड-सिद्धयोगिनी डाकिनी शाकिनी स्कन्दपुरोगान्ग्रहान् नक्षत्रग्रहान् चान्यान् हनहन पच २ मथ २ विध्वंसय २ विद्रावय २ शङ्खेन चक्रेण वज्रेण गदया मुसलेन हलेन भस्मीकुरु । सहस्रबाहो महाबाहो सहस्रप्रहरणायुध जय २ विजय २ अपराजित अप्रतिहत सहस्रनेत्र ज्वल २ प्रज्वल २ विश्वरूप-बहुरूप-मधुसूदन-महा-वराह-महापुरुष-वैकुण्ठ-नारायण-पद्मनाभ-गोविन्द-दामोदरहृषीकेश-केशव-सर्वासुरोत्सादन-सर्वभूतवशङ्कर-सर्वदुःस्वप्नप्रभेदन-

---

१ भक्तिः सर्वात्मकाद्यशक्त्यनुभवविस्फुरणात्मिका, 'बहूनां जन्मनामन्ते' इति गीतासु । २ तीव्रभक्तिमान् । ३ भक्तियुक्तपाठादनन्तरमेव । ४ कैवल्यम् ।

सर्वयन्त्रप्रभञ्जन-सर्वनागमर्दन-सर्वदेवमहेश्वर-सर्वबन्धविमोक्षण-सर्वाहितप्रमर्दन-सर्वज्वरप्रणाशन-सर्वग्रहनिवारण-सर्वपापप्रशमन-जनार्दन नमोऽस्तुते स्वाहा ॥ विष्णोरियमनुप्रोक्ता सर्वकामफलप्रदा । सर्वसौभाग्यजननी सर्वभीतिविनाशिनी ॥ सर्वेषां पाठतस्सिद्धा विष्णोः परमवल्लभा । नानया सदृशं किञ्चिद्दुष्टानां नाशनं परम् ॥ विद्या रहस्या कथिता वैष्णव्येषाऽपराजिता । पाठनीया प्रशस्ता या साक्षात्सत्त्वगुणाश्रया ॥ ॥ ॐ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अथातः सम्प्रवक्ष्यामि ह्यभयामपराजिताम् । या शक्तिर्मामकी वत्स रजोगुणमयी यतः । सर्वसत्त्वमयी साक्षात्सर्वमन्त्रमयी च या ॥ या स्मृता पूजिता जप्ता न्यस्ता कर्मणि योजिता । सर्वकामदुघा वत्स शृणुष्वैतां ब्रवीमि ते ॥ य इमामपराजितविद्यां परमवैष्णवीमप्रतिहतां पठति सिद्धां स्मृतिसिद्धां महाविद्यां जपति-पठति शृणोति स्मरति धारयति कीर्तयति वा, न तस्य वायुवज्रोपलाशनिभयं न वर्षभयं न समुद्रभयं न ग्रहभयं न चौरभयं न शस्त्रभयं न श्वापदभयं वा भवेत् । क्वचिद्रात्र्यन्धकारस्त्रीराजकुलविद्वेषिविषधरगदवशीकरणविद्वेषणोच्चाटनवधबन्धनभयं वा न भवेत् । एतैर्मन्त्रैरुदाहृतैः सिद्धैः संसिद्धपूजितैः । ॐ नमोऽस्तुते अभये अनघे अजिते अमिते अमृते अपरे अपराजिते पठतिसिद्धे एकोनाशीतितमे एकाकिनि निश्चेतसि सुद्रुमे सुगन्धे एकानाशीतितमे ध्रुवे अरुन्धति सावित्रि गायत्रि जातवेदसि मानस्तोके सरस्वति धरणि धारणि सौदामिनि अदिति दिति वितते गौरि गान्धारि मातङ्गि कृष्णे यशोदे सत्यवादिनि ब्रह्मवादिनि कालि कापालि नित्ये निद्रे भद्रे सत्योपचयनकारि स्थलगतं

जलगतं अन्तरिक्षगतं वा नित्योपायप्रकाशनि रक्ष रक्ष सर्वोपद्रवेभ्यः स्वाहा ॥ यस्याः प्रणश्यते पुष्पं गर्भो वा पतते यदि । म्रियन्ते बालका यस्याः काकवन्ध्या च या भवेत् ॥ गर्भिणी जीववत्सा स्यात्पुत्रिणी स्यान्न संशयः । भूर्जपत्रे त्विमां विद्यां लिखित्वा गन्धचन्दने । धारयेद्या च दैवात् स्त्री चेतैर्दोषैर्न लिप्यते ॥ धारयेद्य इमां विद्यां नरो भक्तिसमन्वितः । रणे राजकुले द्यूते नित्यं तस्य जयो भवेत् । शस्त्रं धारयते ह्येषा समरे काण्डधारिणी । गुल्मशूलाक्षिरोगानां क्षिप्रं नाशयते व्यथाम् । शिरोरोगज्वराणां च नाशनी सर्वदेहिनाम् । इत्येषा कथिता विद्या ह्यभयाख्यापराजिता । एतस्याः स्मृतिमात्रेण भयं क्वापि न जायते । नोपसर्गा न रोगाश्च न योधा नापि तस्कराः । न राजानो न सर्पाश्च न द्वेष्टारो न शत्रवः ॥ यक्षराक्षसवेताला न शाकिन्यो नवग्रहाः । अग्नेर्भयं न वाताच्च न समुद्रान्न वै विषात् । कार्मणं वा शत्रुकृतं वशीकरणमेव च । उच्चाटनं स्तम्भनं च विद्वेषणमथापि वा । न किञ्चित्प्रभवेत्तत्र यत्रैषा वर्तते भयात् । पटे वा यदि वा चित्रे पुस्तके वा मुखेऽथवा । हृदि वा द्वारदेशे वा वर्तते ह्यभयः पुमान् । हृदये विन्यसेदेतां ध्यायन्देवीं चतुर्भुजाम् । रक्तमाल्याम्बरधरां पद्मरागसमप्रभाम् । पाशाङ्कुशाभयवरैरलङ्कृतसुविग्रहाम् । साधकेभ्यः प्रयच्छन्तीमन्नवर्णामृतान्यपि । नातः परतरं किञ्चिद्वशीकरणमुत्तमम् । रक्षणं पावनं चापि नात्र कार्या विचारणा । प्रातः कुमारिकाः पूज्याः खाद्यैराभरणैरपि । तदियं वाऽर्चनीया स्यात्तत्प्रीत्या प्रीयते तु सा । अथ तां सम्प्रवक्ष्यामि विद्यामपि महाबलाम् । सर्वदुष्टप्रशमनीं सर्वशत्रुक्षयङ्करीम् । दारिद्र्यदुःखशमनीं दौर्भाग्यव्याधिनाशिनीम् । भूतप्रेतपिशाचानां यक्षगन्धर्वरक्षसाम् । डा-

किनीशाकिनीस्कन्दकूष्माण्डानां च नाशिनीम् । महारौद्रीं महाशक्तिं सद्यःप्रत्ययकारिणीम् । गोपनीयां प्रयत्नेन सर्वस्वं पार्वतीपतेः । तामहं ते प्रवक्ष्यामि सावधानमनः शृणु । एकाह्निकं द्व्यह्निकं त्र्यह्निकं च चतुर्थिकं मासिकं द्विमासिकं त्रिमासिकं त्रिदोषकं च ज्वरं मुहूर्तिकं पैत्तिकं सान्निपातिकं शीतज्वरं विषमज्वरं । द्व्यह्निकं त्र्यह्निकं चैव ज्वरमेकाह्निकं तथा। क्षिप्रं नाशयते नित्यं स्मरणादपराजिता। ॐ ह्रींहनहन कालं सरसर गौरि धमधम विद्ये आले ताले माले गन्धे बन्धे पच पच विद्ये नाशय संहर दुःस्वप्नविनाशकनाशनि रजने सन्ध्ये दुन्दुभिनादे मानसवेगे शङ्खिनि चक्रिणि नंदिनि वज्रिणि शूलिनि अपमृत्युविनाशिनि विश्वेश्वरि द्रविणि द्राविणि केशव-दयिते पशुपतिसहिते दुन्दुभिदमने दुर्मददमनि शर्वरि किराति मातङ्गि ॐ ॐ द्रुंद्रुंज्रुंज्रुंक्रुंक्रुं तुरुतुरु ये मां द्विषंति प्रत्यक्षं परोक्षं वा सर्वान्दमदम मर्दय २ तापय २ शोषय २ उत्सादय २ ब्रह्माणि वैष्णवि माहेश्वरि कौमारि वाराहि नारसिंहि ऐन्द्रि चामुण्डे महालक्ष्मीः वैनायकि औपेन्द्रे आग्नेयि चण्डि नैर्ऋति वारुणि वायव्ये सौम्ये ऐशानि ऊर्ध्वमधोरक्ष प्रचण्डविद्ये इन्द्रोपेन्द्रभगिनि ॐ नमो देवि जये विजये शान्ति स्वस्ति पुष्टिविवर्धिनि कामाङ्कुशे कामदुघे सर्वकामवरप्रदे सर्वभूतेषु मां प्रियं कुरुकुरु आकर्षणि आवेशनि ज्वालामालिनि रमणि रामणि धरणि धारणि तपनि तापनि मदनि मादनि शोषणि संमोहनि रक्तपताकी नीलपताकी महानीले महागौरि महाश्रिये महाचन्द्रि महागौरि महामायूरि आदित्यरश्मिजाह्नवि यमघण्टे किणिकिणि चिन्तामणि सुरभे सुरासुरोत्पन्ने सर्वकामदुघे

यद्यथामनीषितं कार्यं तन्मम सिद्ध्यतु स्वाहा ॥ ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवःस्वः स्वाहा यत एवागतं पापं तत्रैव तत्प्रतिगच्छतु स्वाहेत्योम् ॥ अमोघैषा महाविद्या वैष्णवी चापराजिता । मार्कण्डेयप्रणीता च सिद्धेयं पठतां सदा ॥ एषा महाबलानाम कथिता तेऽपराजिता । नानया सदृशी रक्षा त्रिषु लोकेषु विद्यते । तमोगुणमयी साक्षाद्रौद्री शक्तिरियं मता । कृतान्तोपि यतो भीतः पादमूलं व्यवस्थितः ॥ मूलाधारे न्यसेदेतां रात्रावेनां च संस्मरेत् ॥ नीलजीमूतसङ्काशां तडित्कपिलकौपिकीम् । तद्यथादित्यबिम्बाभां नेत्रत्रयविराजिताम् । शक्तिं त्रिशूलं शङ्खं च पानपात्रं च बिभ्रतीम् । व्याघ्रचर्मपरीधानां किङ्किणीजालमण्डिताम् । धावन्तीं गगनस्यान्तः पादुकाहितपद्धयाम् । दंष्ट्राकरालवदनां व्यालकुण्डलमण्डिताम् । व्यात्तवक्त्रां ललज्जिह्वां भ्रुकुटीकुटिलालकाम् । सुभक्तद्वेषिणां रक्तं पिबन्तीं पानपात्रतः । सप्तधातूञ्छोषयन्तीं कुरु दृष्ट्यावलोकनात् । त्रिशूलेन च तज्जिह्वां कीलयन्तीं मुहुर्मुहुः । पाशेन बद्ध्वा तत्साध्यमानयन्तीं तदन्तिकम् । अर्धरात्रस्य समये देवीं ध्यायेन्महाबलाम् । यस्य यस्य तथावस्थां कुरुते सापि योगिनी ।' ॐ बले महाबले असिद्धसादनि स्वाहेत्योम् ॥ अमोघां पठति सिद्धां स्मरति सिद्धां श्रीवैष्णवीं श्रीमदपराजितविद्यां ध्यायेत् । दुःस्वप्ने च दुरिष्टे च दुःस्थितेऽपि तथैव च । व्यवहारे भवेत्सिद्धिः पठेद्विघ्नोपशान्तये । रक्षाविधाने भूर्जे च ह्यष्टगन्धयुतेन च । लाक्षारसेन रम्येण लिखेच्च शुभपर्वणि । ततः साध्यस्य नामाऽपि गर्भितं नरसिंहयोः ॥ इति श्रीविष्णोः अपराजिताविद्या समाप्ता ॥

---

## रुद्रपञ्चके चमकानुवाक्यम् ।

ॐनमः शिवाय । प्रणतोऽस्मि महादेव प्रपन्नोऽस्मि सदाशिव । निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते ॥ देवं सुधाकलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाऽभयदं सुशुभ्रम् । शङ्खाऽभयाब्जवरभूषितया च देव्या वामेऽङ्कितं शमनभङ्गहरं नमामि ॥ शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ १ ॥ नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥ २ ॥ कमण्डल्वक्षसूत्राभ्यामन्वितं शूलपाणिकम् । ज्वलन्तं पिङ्गलजटाशिखमुद्योतकारिणम् ॥ ३ ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥ ४ ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमऽव्ययम् ॥ ५ ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजः सम्यक्ततो यजनमारभेत् ॥६॥ मृत्युञ्जय महादेव पाहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्धनात् ॥ ७ ॥ आराधितो मनुष्यैस्त्वं सिद्धैर्देवैर्महर्षिभिः । आवाहयामि भक्त्या त्वां गृहाणार्चां महेश्वर ॥८॥ हर शम्भो महादेव विश्वेशामरवल्लभ । शिव शङ्कर सर्वात्मन् नीलकण्ठ नमोस्तु ते ॥ ९ ॥ इति विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बकम् ॥ १० ॥ ॐत्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ ॥ ॐआत्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैरिह केतुमद्भिर्वाता-

जवेन बलमद्भिर्मनोजवा यांतु शीघ्रं मम रुद्राय हव्यन्देवानां च ऋषीणां चासुराणां च पूर्वजं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिवमावाहयाम्यहम् ॥ ॥ आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम् । वृषभासनमारूढं नागाभरणभूषितम् ॥ प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लवर्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोऽयं प्रतिगृह्यताम् ॥ ॥ ॐतत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥ ॥ ॐशतरुद्रियन्देवानां रुद्रशमनं भवाय शर्वीयश्च प्रत्युत्क्रान्तानुवाकौ देवर्षी रुद्रदैवत्यास्त्रिष्टुप्छन्दश्चयने विनियोगः, नमस्ते देवा रौद्रमानुष्टुभमाद्या गायत्री पञ्चमषष्ठ्यौ पांक्त्यन्ता महापंक्तिर्मा भैरेकपदा जगत्यनुष्टुप् त्रिष्टुप् महाबृहती यवमध्या रुद्रो देवता चरुमेष्टिका, अस्य रुद्रस्य प्रश्नस्य अनुष्टुप्छन्दः अघोर ऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परःपुरुषः सएव देवता, अग्निः क्रतुचरुमायामिष्टिकायां शतरुद्रे विनियोगः, सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दस्तिस्रोऽनुष्टुभस्तिस्रः पङ्क्तयः सप्ताऽनुष्टुभौ द्वे जगत्यौ परमेष्ठी ऋषिः । आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थममुककामनासिद्ध्यर्थे चमानुवाकसहितरुद्रमन्त्रपाठे होमे स्नाने पुष्पार्चने वा विनियोगः ॥ ॥ ॐकर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ ॥ गात्रं भस्मसितं सितं च हसितं हस्ते कपालं सितं खट्वाङ्गं च सितं सितं च वृषभं कर्णे सिते कुण्डले । गङ्गाफेनसितो जटाजल-

सितश्चन्द्रः सितो मूर्धनि सोऽयं सर्वसितो दधातु विभवं पापक्षयं शङ्करः ॥ ॥

"आशुः शिशान इति शुक्रज्योतिष्मानंशुः प्रजननं सर्वाः प्रजाः कश्यपस्य वाजस्य प्रसवोऽग्नेः" ॥ ॥ ॐआशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ सङ्क्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा । स इषुहस्तैः स निषिङ्गिभिर्वशी संस्रष्टा सयुध इन्द्रो गणेन । संसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परिधीया रथेन रक्षोहा मित्राँ अपबाधमानः । प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नऽस्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिषत्वा सहोजिज्जैत्रायनो रथमाऽतिष्ठ गोवित् ॥ गोत्रभिदङ्गोविदं वज्रबाहुं जयन्तमऽज्म प्रमृणन्तमोजसा । इमं स जाता अनुवीरयध्वमिन्द्रसखायमऽनुसंरभध्वम् ॥ अभिगोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडऽयुध्योऽस्माकं सेना अवन्तु प्रयत्सु ॥ इन्द्र एषां नेता बृहस्पतिर्दक्षिणो यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मारुतो यन्तु मध्ये ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वऽस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे

भवन्त्वऽस्मान्तु देवा अवता भरेष्वा ॥ "होम पर खडा होके यह आहुति देना" ॥ ॐशुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्चर्तपाश्चात्यँहा ईदृङ् चान्यादृङ्च सदृङ्च प्रतिसदृङ्च मितश्च संमितश्च सभारा ऋतश्च सत्यश्च ध्रुवश्च धरणश्च धर्ता च विधर्ता च विधारय ऋतजिच्च सत्यजिच्च सेनाजिच्च सुषेणश्चान्तिमित्रश्च दूरे अमित्रश्च गण ईदृक्षास एतादृक्षास ऊषुणः सदृक्षासः प्रतिसदृक्षास एतानभितासश्च संमितासो नो अद्य सभारसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनु वर्त्मानो यथेन्द्रन्दैवीर्विशो मरुतोऽनु वर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानु वर्त्मानो भवन्तु ॥ ॥ ॐनमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नम उत त इषवे नमः। या ते रुद्र शिवा तनूरऽघोराऽपापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ताऽभिचाकशीहि । यामिषुङ्गिरिशन्त! हस्ते बिभर्ष्यऽस्तवे । शिवां गिरित्र ताङ्कुरु माहिंसीः पुरुषं जगत् । शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदऽयक्ष्मं सुमना असत् । अध्यवोचदधिवक्ता प्रथमो दैव्योभिषक् । अहींश्च सर्वाञ्जम्भय सर्वाश्च यातुधान्योऽधराचीः परासुवः । असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमे रुद्रा अभितो दिक्षु श्रिताः सहस्राक्षो वैषां हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्यन्नुतैनमुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः । नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो य अस्य सत्त्वानोऽहन्तेभ्योऽकरं नमः । प्रमुञ्च धन्वनस्त्वमुभयो-

रात्र्योर्ज्याम् । याश्च ते हस्त इषवः परस्ता भगवो वप । विज्यं धनुः कपर्दिनो विशल्यो बाणवानुत । १ । अनेशन्नस्येषव आभूरस्य निषङ्गथिः । या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽ स्मान्विश्वतस्त्वमयक्ष्मेण परिभुज । परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधीहितम् । नमांसि त आयुधायाऽनातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने । अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखं शिवो नः सुमना भव । यात इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो मृड जीवसे ॥ २ ॥ मानो महन्त-मुत मानो अर्भकं मान उक्षन्तमुत मान उक्षितम् । मानो वधीः पितरं मोत मातरं मानः प्रियास्तन्वो रुद्र रीरिषः ॥ १ ॥ मानस्तोके तनये मान आयौ मानो गोषु मानो अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तः सदसि त्वा हवामहे ॥ २ ॥ नमस्ते अस्तु भगवः परमेश्वर विश्वेश्वर महा-देव शिव सशिव सदाशिव त्रिकालकाल कालाग्निरुद्र नील-कण्ठ अमृतेश्वर बहुरूप अघोर तत्पुरुष महामृत्युञ्जय भट्टारक ते नमो नमः ॥ ॥ अग्नाविष्णू सजोषसे इमा वर्धन्तुवां गिरः, द्युम्नैर्वाजेभिरावृतम् ॥ ॥ वाजश्चमे प्रसवश्चमे प्रयतिश्चमे प्रसृतिश्चमे धीतिश्चमे क्रतुश्चमे स्वरश्च मे श्लोकश्चमे श्रावश्चमे श्रुतिश्च मे ज्योतिश्चमे स्वश्चमे प्राणाश्चमे व्यानश्चमे अपानश्चमे असुश्चमे चित्तं चम आधीतंचमे वाक्चमे मनश्चमे चक्षुश्चमे श्रोत्रं चमे दक्षश्चमे बलंचम ओजश्चमे सहश्चम आत्माचमे तनू-

श्चमे शर्म चमे वर्म चमे अङ्गानि चमे अस्थीनि चमे परुंषि चमे शरीराणिचम आयुश्चमे जराचमे ॥ यज्ञेन कल्पताम् ॥ ॥ ॐनमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो, नमः शिष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो, नमो बभ्लुशाय व्याधिनेऽन्नानाम्पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमो भवस्य हेत्यै जगतस्पतये नमो, नमो रुद्रायाऽततायिने क्षेत्राणाम्पतये नमो, नमः सूतायाऽहन्त्याय वनानांपतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो, नमो मन्त्रिणे वाणिज्याय कक्ष्याणां पतये नमो, नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः ॥ नम आक्रन्दाय त उच्चैर्घोषाय सत्वानां पतये नमो, नमः कृत्संवीताय धावते पत्तीनां पतये नमः ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥ ॥ ॐज्यैष्ठ्यंचम आधिपत्यं चमे, मन्युश्चमे भामश्चमे अमश्चमे अम्भश्चमे जेमाचमे महिमाचमे वरिमाचमे, प्रथिमाचमे, वर्ष्मा चमे, द्राघ्वाचमे, वृद्धंचमे, वृद्धिश्चमे, सत्यंचमे, श्रद्धाचमे, जगच्चमे, धनंचमे, क्रीडाचमे, मोदश्चमे, वशश्चमे, त्विषिश्चमे, सूक्तंचमे, सुकृतंचमे, जातंचमे, जनिष्यमाणं चमे, वित्तंचमे, वेद्यंचमे, भूतंचमे, भविष्यं चमे, सुगंचमे, सुपथं चमे, ऋद्धंचम, ऋद्धिश्चमे, क्लृप्तं चमे क्लृप्तिश्चमे, मतिश्चमे सुमतिश्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो, नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो, नमो वञ्चते परिवञ्चते स्तायूनां

पतये नमो, नमो निचराय परिचरायाऽरण्यानां पतये नमो, नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो, नमः सृका-यिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो, नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो, नम उष्णीषिणे गिरि-चराय कुलुञ्चानां पतये नमो ॥ नम इषुकृद्भ्यो धन्वकृ-द्भ्यश्चवो नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो, नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो, नम आयच्छ-द्भ्योऽस्यद्भ्यश्च वो नमो, नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो, नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो, नमः शयनेभ्य आसीनेभ्यश्च वो नमो, नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो, नमः सभाभ्यः सभापतिभ्यश्च वो नमो, नमोऽश्वेभ्योऽश्वपति-भ्यश्च वो नमो ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरागतम् ॥ ॥ ॐशञ्चमे, मयश्चमे, प्रियश्चमे, अनुकामश्चमे, कामश्चमे, सौमनसश्चमे, भगश्चमे, द्रविणं चमे, भद्रंचमे, श्रेयश्चमे, वस्यश्चमे, यशश्चमे, यन्ताचमे, धर्ताचमे, क्षेमचमे, धृतिश्चमे, संविच्चमे, ज्ञातंचमे, विश्वश्चमे, महश्चमे, सूश्चमे, प्रसूश्चमे, सीरंचमे, लयश्चम, ऋतञ्चमे, अमृतंचमे, अयक्ष्मंचमे, अनामयंचमे, जीवातुश्चमे, दीर्घायुत्वंचमे, अन-मित्रं च मे, अभयञ्चमे, सुगंचमे, शयनंचमे, सूषाचमे, सुदिनं चमे ॥ यज्ञेन कल्पताम् ॥ ॥ नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमो, नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो, नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो, नमो गणेभ्यो गणप-तिभ्यश्च वो नमो, नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो,

नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो, नमः सेनाभ्यः सेनानीभ्यश्च वो नमो, नमो रथेभ्यो वरूथिभ्यश्च वो नमो, नमो महद्भ्योऽर्भकेभ्यश्च नमो, नमो युवभ्य आशिनेभ्यश्च वो नमो, नमः क्षुत्तृद्भ्यः संगृहीतृभ्यश्च वो नमो, नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो, नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो, नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो, नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो, नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरागतम् ॥ ॥ उर्क्चमे, सूनृताचमे, पयश्चमे, रसश्चमे, घृतं च मे, मधुचमे, सग्धिश्चमे, सपीतिश्चमे, कृषिश्चमे, वृष्टिश्चमे, जैत्रंचमे, औद्भिदंचमे, रयिश्चमे, रायश्चमे, पुष्टंचमे, पुष्टिश्चमे, विभुश्चमे, प्रभुश्चमे, पूर्णंचमे, पूर्णतरंचमे, कुयवंचमे, क्षितिश्चमे, अन्नंचमे, इक्षुश्चमे, व्रीहयश्चमे, यवाश्चमे, माषाश्चमे, तिलाश्चमे, नीवाराश्चमे, श्यामकाश्चमे, अणवश्चमे, प्रियङ्गवश्चमे, गोधूमाश्चमे, मसूराश्चमे, मुद्गाश्चमे, खल्वाश्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ नमो भवाय च रुद्राय च, नमः शर्वाय च पशुपतये च, नमो नीलग्रीवाय च शितिकण्ठाय च, नमो व्युप्तकेशाय च कपर्दिने च, नमः सहस्राक्षाय च शतधन्वने च ॥ नमो गिरिशाय च शिपिविष्टाय च, नमो मीढुष्टमाय चेषुमते च, नमो ह्रस्वाय च वामनाय च, नमो बृहते च वर्षीयसे च, नमो वृद्धाय च संवृध्वने च, नमोऽग्र्याय च प्रथमाय च, नम आशवे चाऽजिराय च, नमः शीघ्र्याय च शीभ्याय च, नम ऊर्म्याय चाऽवस्वन्याय च, नमो नाद्याय च द्वीप्याय च ॥

॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरावृतम् ॥ ॥ अश्मा च मे, मृत्तिका च मे, गिरयश्चमे, पर्वताश्चमे, सिकताश्चमे, वनस्पतयश्चमे, हिरण्यञ्चमे, अयश्चमे, सीसञ्चमे, त्रपुश्चमे, श्यामंचमे, लोहितायसंचमे, अग्निश्चम, आपश्चमे, वीरुधश्चम, ओषधयश्चमे, कृष्टपच्यञ्चमे, अकृष्टपच्यञ्चमे, ग्राम्याश्चमे, पशव आरण्याश्चमे, वित्तंचमे, वित्तिश्चमे भूतंचमे, भूतिश्चमे, वसुचमे, वसतिश्चमे, कर्मचमे, शक्तिश्चमे, अर्थश्चम, एमश्चम, इत्याचमे, गतिश्चमे, ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ नमो ज्येष्ठाय च कनिष्ठाय च, नमः पूर्वजाय चापरजाय च, नमो मध्यमाय चाऽप्रगल्भाय च, नमो बुध्न्याय च जघन्याय च, नमः सोभ्याय च प्रतिसर्याय च, नम आशुषेणाय चाशुरथाय च ॥ नमो बिल्मिने च कवचिने च, नमो वर्मिणे च वरूथिने च, नमः शूराय चावभेदिने च, नमः श्रुताय च श्रुतसेनाय च, नमो याम्याय च क्षेम्याय च, नम उर्वर्याय च खल्याय च, नमः श्लोक्याय चावसान्याय च, नमः श्रवाय च प्रतिश्रवाय च, नमो वन्याय च कक्ष्याय च ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरावृतम् ॥ ॥ अग्निश्चम इन्द्रश्चमे, सोमश्चम इन्द्रश्चमे, सविताचम इन्द्रश्चमे, सरस्वती चम इन्द्रश्चमे, पूषा चम इन्द्रश्चमे, बृहस्पतिश्चम, इन्द्रश्चमे, मित्रश्चम इन्द्रश्चमे, वरुणश्चम इन्द्रश्चमे, धाताचम इन्द्रश्चमे, त्वष्टा चम इन्द्रश्चमे, मरुतश्चम इन्द्रश्चमे, विश्वेदेवाश्चम इन्द्रश्चमे पृथिवीश्चम इन्द्रश्चमे, अन्तरिक्षं चम इन्द्रश्चमे, द्यौश्चम इन्द्रश्चमे, समाश्चम इन्द्रश्चमे, नक्षत्राणि चम इन्द्रश्चमे,

दिशश्चम इन्द्रश्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ नमो दुन्दुभ्या-यचाऽहनन्याय च, नमो धृष्णवे च प्रमृशाय च, नमो निषिङ्गिणे चेषुधिमते च, नमस्तीक्ष्णेषवे चायुधिने च, नमः सायुधायच सुधन्वनेच ॥ नमः स्रुत्याय च पथ्याय च, नमः काट्याय च नीप्याय च, नमो नाद्याय च वैशन्ताय च, नमः कुल्याय च सरस्याय च, नमः कूप्याय चावट्याय च, नमो वर्ष्याय चाऽवर्ष्याय च, नमो मेघ्याय च विद्युत्याय च, नमो वीध्याय चातप्याय च, नमो वात्याय च रेष्म्याय च, नमो वास्तव्याय च वास्तुपाय च ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरागतम् ॥ ॥ अंशुश्चमे, रश्मिश्चमे, दाभ्यश्चमे, अधिपतिश्चम, उपांशुश्चमे, अन्तर्यामश्चम, ऐन्द्रावायवश्चमे, मैत्रावरुणश्चम, आश्विनश्चमे, प्रतिप्रस्थानश्चमे, शुक्रश्चमे, मन्थीचम, आग्रायणश्चमे, क्षुल्लकवैश्वदेवश्चमे, ध्रुवश्चमे, वैश्वानरश्चम, ऐन्द्राग्नश्चमे, वैश्वदेवश्चमे, मरुत्वतीयश्चमे, महेन्द्रीयश्चमे, सावित्रश्चमे, सारस्वतश्चमे, पत्नीवतश्चमे, हारियोजनश्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च, नमः शङ्गवे च पशुपतये च, नम उग्राय च भीमाय च, नमो हन्त्रे च हनीयसे च, नमोऽग्रेवधाय च दूरेवधाय च, नमो वृक्षेभ्यो हरिकेशेभ्यो, नमस्ताराय, नमः शम्भवे च मयोभवे च, नमः शङ्कराय च मयस्कराय च ॥ नमः शिवायच शिवतराय च, नमः किंशल्याय च क्षयणाय च ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरागतम् ॥ ॥ इध्मा च मे, स्रुचश्चमे, चमसश्चमे,

वायव्यानि च मे, द्रोणकलशश्चमे, पूतभृच्चमे, अपूतभृच्चमे, ग्रावाणश्चमे, अधिषवणश्चमे, अवभृथश्चमे, स्वगाकारश्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ नम इरिण्याय च प्रपथ्याय च, नमः पुलस्तिने च कपर्दिने च, नमो गोष्ठ्याय च गृह्याय च, नमस्तल्प्याय च गेह्याय च, नमः पर्यायचावर्याय च, नमः प्रतरणाय चोत्तरणाय च, नमस्तीर्थ्याय च कुल्याय च, नमः फेन्याय च शष्प्याय च, नमः सिकत्याय च प्रवाह्याय च, नमो हृदय्याय च निवेष्प्याय च, नमः काट्याय च गह्वरेष्ठ्याय च, नमः शुष्क्याय च हरित्याय च, नमो लोप्याय चोलप्याय च, नमः पांसव्याय च रजस्याय च नमः सूर्म्याय चोर्म्याय च, नमः पर्ण्याय च पर्णशादाय च, नम आखिदते च प्रखिदते च, नमोऽभिघ्नते चापगुरमानाय च, नम आखिदाय च विखिदाय च नमो वः किरिकेभ्यो देवानां हृदयेभ्यो, नमो विचिनुत्केभ्यो, नमो विक्षीणकेभ्यो नम आनिर्हतेभ्यः ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिराघृतम् ॥ अग्निश्चमे, घर्मश्चमे, अर्कश्चमे सूर्यश्चमे, प्राणश्चमे, अश्वमेधश्चमे, पृथिवीचमे, दितिश्चमे, अदितिश्चमे, द्यौश्चमे, शक्करीरङ्गुलयो दिशश्चमे, यज्ञेन कल्पतां, व्रतं चर्तुश्च संवत्सरश्च तपश्चाहोरात्र, ऊर्वष्ठीवे बृहद्रथन्तरश्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ द्रापे अन्धसस्पते दरिद्र नीललोहित, आसां प्रजानामेषां पुरुषाणामेषां पशूनां माभैर्मा रुङ्मा नः किञ्चनाऽममत्, इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नः शमऽसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे असिन्ननातुरम् । या ते रुद्र

शिवा तनूः शिवा विश्वाहभेषजीः, शिवारुद्रस्य भेषजी तया नो मृड जीवसे । परि णो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतेरघायोः, अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड । मीढुष्टम शिवतम शिवो नः सुमना भव, परमेवृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकम् । बिभ्रदुच्चर विकिरिळ विलोहित नमस्ते अस्तु भगवः, यास्ते सहस्रं हेतयोऽन्येऽस्मन्निव पान्तु ताः ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरावृतम् ॥ ॥ गर्भाचमे, वत्साचमे, त्र्यविश्चमे, त्र्यवी चमे, दित्यवाट् चमे, दित्यौहीचमे, पञ्चाविश्चमे, पञ्चावीचमे, त्रिवत्साश्चमे, त्रिवत्सश्चमे, तुर्यवाट्चमे, तुर्यौहीचमे, पष्ठवाट्चमे, पष्ठौहीचम, उक्षाचमे, वशाचमे, अनड्वांश्चमे, धेनुश्चम, ऋषभश्चमे, वेहच्चमे ॥ ॥ यज्ञेन कल्पताम् ॥ ॥ सहस्रधा सहस्राणि हेतयस्तव बाह्वोः, तासामीशानो भगवः पराचीना मुखाकुरु ॥ असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम्, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ १ ॥ येऽस्मिन्महत्यऽर्णवेऽन्तरिक्षे भवा अधि, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ३ ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधःक्षमाचराः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४ ॥ ये वनेषु शिष्पिञ्जरा नीलग्रीवा विलोहिताः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥५॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६ ॥ ये भूतानामधिपतयो विशि-

खास: कपर्दिनः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥७॥ ये पथीनां पथि रक्षय ऐड मृदाय व्युधः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ८ ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषिङ्गिणः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ९ ॥ य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितिष्ठिरे, तेषां सहस्र-योजनेऽव धन्वानि तन्मसि ॥ १० ॥ ॐनमो अस्तु रुद्रेभ्यो ये दिवि, येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु, ते नो मृडयन्तु, ते यं द्विष्मो यश्चनो द्वेष्टि तमेषां जम्भे दध्मः ॥ १ ॥ ॐनमो अस्तु रुद्रेभ्यो ये अन्तरिक्षे, येषां वातमिषवस्तेभ्यो दश प्राची-र्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु, ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥२॥ ॐनमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामऽन्नमिषवस्तेभ्यो, दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ३ ॥ ॥ अग्नाविष्णू सजोषसा इमा वर्धन्तु वां गिरः, द्युम्नैर्वाजेभिरावृतम् ॥ ॥ एकाचमे, तिस्रश्चमे, तिसृश्चमे, त्रयस्त्रिंशच्चमे, चतस्रश्चमे, अष्टौचमे, अष्टचमे, अष्टाचत्वारिंश-च्चमे, वाजश्च, प्रसवश्चाऽपिजश्च क्रतुश्च वाक्पतिश्च वसुश्च स्वर्मौर्धो मूर्ध्वा वैयशनो व्यश्नान आन्त्योऽन्त्यो भौवनो भुवनस्य पतिः प्रजापतिरधिपतिरियन्ते राण्मित्रो यन्तासि यमन ऊर्जेत्वा वृष्ट्यै त्वा प्रजानां त्वाऽधिपत्याय, आयुर्यज्ञेन कल्पतां, मनो यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां, श्रोत्रं

यज्ञेन कल्पतां, वाग्यज्ञेन कल्पतामाऽऽत्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां, पृष्ठं यज्ञेन कल्पतां, यज्ञो यज्ञेन कल्पताम् ॥ ऋक्च सामश्च स्तोमश्च यजुश्च बृहद्रथन्तरश्च स्वर्देवा अगन्म प्रजापतेः प्रजा अभूवन्नऽमृता अभूम वेट्स्वाहा ॥ ॥ "वाजस्य नु प्रसवा इति पट्" ॥ ॥ ॐ विश्वे अद्य मरुतो विश्व ऊतीर्विश्वे भवन्त्वऽग्नयः समिद्धाः । विश्वे मादेवा अवसा गमन्निह विश्वमस्तु द्रविणं वाजे अस्मिन् । ॐ मा वाजस्य वाजेस्यनु वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः। वाजो मा विश्वैर्देवैर्धनसाता इहावतु, वाजो मे अद्य प्रसुवातिदानं वाजो देवा न्हविषा वर्धयाति, वाजस्य हि प्रसवेनान्नमिति विश्वा आशा वाजपतिर्जयेयम्, वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति, वाजस्य हि प्रसवेनान्नमेति सर्वा आशा वाजपतिर्भवेयम् ॥ सं मा सृजामि पयसः पृथिव्याः सं मा सृजाम्यद्भिरौषधीभिः सोहं वाजस्य नौम्यग्नेः ॥ ॥ "तेजोसि ॥" पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ तर्पणम् ॥ मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्याता भस्मना कर्मबन्धी । हद्रं दृष्ट्वा देवमी-

---

१ आधुनिकैः कतिभिरन्विष्टः पाठोयम् ॥ ॥ आ मा वाजस्य प्रसवो जगम्यादाऽमा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ २ ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्मसाविषत्.

शानमुग्रं याति स्थानं तेन साकं तदीयम् ॥ अनेन मन्त्रपाठेनात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थममुककामनासिद्ध्यर्थं, भगवान्, भवो देवः ८ शतरुद्रेश्वरः, मृत्युञ्जयभट्टारकः पार्वतीसहितः परमेश्वरः प्रीयतां प्रीतोऽस्तु ॥

( विस्तीर्णतर्पणम् ) नमस्ते रुद्र इत्येतत्सर्वोपद्रवनाशनम् । सर्वशान्तिकरं प्रोक्तं महापातकनाशनम् ॥ रक्षोघ्नं च यशस्यं च लक्ष्म्यायुःपुष्टिवर्धनम् । अध्यवोचदित्यनेन रक्षा स्याद्व्याधितस्य च ॥ सिद्धार्थकानां क्षेपेण पथि चैतत्सदा पठेत् । क्षेमेण स्वगृहानेति सर्वबाधाविवर्जितः ॥ असौ यस्ताम्र इत्येतत्पठेन्नित्यं दिवाकरम् । उपतिष्ठेत धर्मज्ञः सायं प्रातरतन्द्रितः ॥ अन्नमक्षयमाप्नोति दीर्घमायुश्च विन्दति । प्रमुञ्च धनुरित्येतत्षडङ्गिरायुधमन्त्रणम् ॥ रिपूणां भङ्गदं युद्धे नात्र कार्या विचारणा । मा नो महन्त इत्येतद्बालानां शान्तिकारणम् ॥ नमो हिरण्यबाहवेऽनुवाकैः षड्भिरेव च । राजिकांस्तिलतैलाक्ताञ्जुहुयाच्छत्रुनाशनम् ॥ नमो वः किरिकेभ्यश्च हुत्वा पद्मलक्षं नरः । राज्यलक्ष्मीमवाप्नोति नात्र कार्याविचारणा ॥ बिल्वानां लक्षहोमेन कनकं बहु विन्दति । इमा रुद्रायेति तिलैः कृत्वा होमं विचक्षणः ॥ शीघ्रमेव महाभाग धनमाप्नोत्यचिन्तितम् । अनेनैव च मन्त्रेण दूर्वाहोमेन मानवः ॥ सर्वव्याधिविनिर्मुक्तो भयान्सर्वान्व्यपोहति । जटारोहेण चेध्मानां या ते रुद्र शिवा तनूः ॥ हुत्वाऽयुतं च धर्मज्ञः पुत्रं प्राप्नोत्यभीप्सितम् । असङ्ख्याताः सहस्राणि मन्त्रैः स्यादाभिचारिकम् ॥ नमोस्तु रुद्रेभ्य इति प्रोक्ता प्रत्यङ्गिरा परा । पाठमात्रं पठेन्नित्यं रुद्रा-

ध्यायस्य मानवः ॥ सर्वदुःखविनिर्मुक्तः सर्वसम्पत्समन्वितः । यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् ॥ इह लोके तथा चान्ते रुद्रलोकं स गच्छति ॥ अनेन मन्त्रपाठेनात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थममुककामनासिद्ध्यर्थं भगवान्भवो देवः ८ अघोरः तत्पुरुषः सद्योजातः वामदेवः असुरबलहा ईशानः बहुरूपः विश्वरूपः त्र्यम्बकः त्रिनेत्रः त्रिशूलहस्तः महामृत्युञ्जयभट्टारकः शतरुद्रेश्वरः वृषभवाहनः सानुचरः सपरिवारः पार्वतीसहितः परमेश्वरः प्रीयतां प्रीतोऽस्तु ॥ इति चमकानुवाकम् ॥



## शिक्षा लौगाक्षिमुनिप्रकृता ॥

॥ अथ संक्षेपतस्त्रैवर्ण्यानामाह्निकं कर्म लिख्यते ॥

ब्राह्मे मुहूर्ते शयनतलादुत्थाय यथासम्भवं शुद्धिं विधायासने चोपविश्य सहस्रारे यथामूर्तिं शशिवर्णं स्वं गुरुं ध्यात्वा स्तुत्वा च, तदुक्तरीत्या स्वेष्टदेवीं ध्यात्वा स्तुत्वा च, ब्राह्मं तेजो विधायिनीं गायत्रीं च ध्यात्वा स्तुत्वा, तत उत्थाय बहिराह्निकम् ॥ ॥

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः । आचारमग्निकार्यं च सन्ध्योपासनमेवच ॥ प्रतिश्रयाद्दक्षिणपश्चिमेन क्षिप्रं गत्वा क्षेपमात्रं शरस्य । कृत्वा पुरीषं च शिरोवगुण्ठ्य नतु स्पृशेज्जातु शिरः करेण ॥ शुष्कैस्तृणैर्वा काष्ठैर्वा पर्णैः पत्रदलेन वा । सुसंवृते प्रदेशे वा ह्यऽन्तर्धाय वसुन्धराम् ॥ ३ ॥ मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः । दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥ ४ ॥ एकां लिङ्गे मृदं दद्याद्वामहस्ते तु मृत्त्रयम् । उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रचक्षते ॥ ५ ॥ एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश । उभयोः सप्त दातव्या मृदः शुद्धिमभीप्सिता ॥ ६ ॥ विप्रे गौरमृदः शौचे क्षत्रे रक्तास्तथैव च । हरिद्रवर्णा वैश्ये तु कृष्णाः स्त्रीशूद्रयोः स्मृताः ॥ ७ ॥ नाहरेन्मृत्तिकां वप्रान्न कूलात्सैकतात्तथा । नाखुकृष्टान्न वल्मीकात्पांसुलान्न च कर्दमात् ॥ ८ ॥ न मार्गादूषराच्चैव शौचशिष्टां परस्य च । एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥ ९ ॥ कृत्वा मूत्रपुरीषे च खान्याचान्त उपस्पृशेत् । दिवा-

शौचस्य रात्र्यर्धं पथि पादो विधीयते । आर्त्तः कुर्याद्यथाशक्ति स्वस्थः कुर्याद्यथोदितम् ॥ १० ॥ इति शौचशिक्षा ॥

उपनयनप्रभृति ब्रह्मचारी स्याः, मार्गवासाः स्याः, संहतकेशः स्याः, भैक्षाचर्यवृत्तिः स्याः, सशल्कदण्डः स्याः, सप्तमुञ्जां मेखलां धारयेः, न मधुमांसे अश्नीथाः, क्षारलवणवर्जी स्याः, आचार्यस्याऽप्रतिकूलः स्याः, सर्वकार्याऽस्वतन्त्रः स्याः, पूर्वोत्थायी स्याः, जघन्यसंवेशी स्याः, यत्त्वामुपेयात्तदस्मै दद्याः, बहूनां येन संयुक्तस्तदस्मै दद्याः, न प्रविभजेः, नास्य शय्यामाविशेः, न रथमारुहेः, न संवस्त्रयेथाः, सर्वाणि संस्पर्शकानि स्त्रीभिः सह वर्जयेः, न मुषितां प्रेक्षेः, न विहारार्थं जल्पेः, न रुच्यर्थं किञ्चन धारयेथाः, न स्नायाः, उदकं वाभ्युपेयाः, यदि स्नायाः, दण्ड इवाप्सु परिप्लवेथाः, मुण्डो भव, जटिलो भव, एकशिखी वा भव, सायंप्रातः सन्ध्यामुपासीथाः, तिष्ठेः पूर्वामासीथा उत्तराम्, "ॐभूर्भुवः स्वः" इत्युक्त्वा "ॐतत्सवितु" रिति सावित्रीमनुब्रूयाः, प्रागस्तमयान्निष्क्रम्य समिध आहरेः "हरिणीर्ब्रह्मवर्चसकाम" इतिश्रुतिः सायं प्रातः सन्ध्यानिःसरणं कर्तव्यं, भैक्षाचरणं कर्तव्यं, अग्नीन्धनं कर्तव्यं, सायमेवाग्निमिन्धीथा इत्येके । भैक्षस्याचरणे दोषः पावकस्यासमिन्धने । सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत् ॥ सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन् । तेभ्यो लब्धेन भैक्षेण वर्तयेदेककालिकम् ॥ उपस्पर्शस्त्रिषवणमब्देन स विशुद्ध्यति ॥ कामावकीर्णोऽसि अवकीर्णोऽसि कामकामाय स्वाहा, कामाभिद्रुग्धोस्म्यऽभिद्रुग्धोसि कामकामाय स्वाहा ॥ इति ॥

ब्रह्मचार्यसि, अपोऽशान, कर्म कुरु, दिवा मा स्वाप्सीः, वाचं यच्छ, मा मलवद्वाससोऽद्राक्षीः, मा सम्भाषयेथाः, मलवद्वाससो भवन्ति, उदक्यासूतिकाश्वपाकाऽशुचयोऽन्त्यावसायिन इति, न श्मशानं गच्छेः, न शवशरीरं पश्येः, अनातृणं शवशरीरं दृष्ट्वा त्रिरात्रमुपावसेः, न मधुमांसे प्राश्यालभ्य वा शरीरं पुनर्व्रतमालभेथाः, यानि हविर्दूषणानि तानि भोजनदूषणानि, नोच्छिष्टं भुञ्जीथाः, नोच्छिष्टमन्यस्मै दद्याः, मा गुरु भुञ्जीथाः, व्याधितविषयमेतत्, येनेच्छेत्तेन चिकित्सेत्, "कामं गुरूच्छिष्टं भुञ्जीयादिति" ह्याचार्याः । न नक्तं भुञ्जीथाः, उपज्वल्य वा भुञ्जीथाः, न मृन्मये भुञ्जीथाः, "न प्रतिसन्दद्या" इत्येके । स्थानासनं पर्वान्तेषूपवासः वाग्यमनं च, कंचिदप्रयतं दृष्ट्वा प्राणायामैः स शुद्ध्यति, सन्दर्शने त्रयः कार्याः, संव्याहृत्य तु सप्त, समासाद्य तु द्वादश, सर्वत्र ज्योतिर्दर्शनमुदकोपस्पर्शनम्, "सूर्याचन्द्रमसौ गौरग्निर्ब्राह्मणः" इत्येतानि पञ्च ज्योतींषि, एतेषामेकेनापि शुद्ध्यति, अबद्धं मनो, दरिद्रं चक्षुः, सूर्यो ज्योतिषां श्रेष्ठो "दीक्षे! मा मा हिंसीः" इति सूर्यं दिवाऽग्निं रात्रौ, रेतसि स्कन्ने, पुनर्मां मैत्विन्द्रियमिति जपेत् ॥ ॐपुनर्मां मैत्विन्द्रियं पुनरायुः पुनर्भगः, पुनर्ब्राह्मणमैतु मां पुनर्द्रविणमैतु माम् । यन्मेऽद्य रेतः पृथिवीमस्कन्यदोषधीरप्यसरद्यदपस्तदहं पुनरादधे । यन्मे रेतः प्रसिच्यते यन्म आजायते पुनः, यद्वा मे प्रतितिष्ठति, तेन माममृतं कुरु, तेन सुप्रजसं कुरु ॥ "ॐनमो ब्रह्मणे नमो अस्त्वग्नये०" इति त्रिः पठेत् । इति व्रतशिक्षा ॥

मदनुग्रहात् । भवाय दे० यज्ञोपवीतं परिकल्पयामि नमः ॥ "गन्ध चडाना" ॥ सर्वेश्वर जगद्वन्द्य दिव्यासनसुसंस्थित । गन्धं गृहाण देवेश दिव्यगन्धोपशोभितम् । भवाय० समालभनं गन्धो नमः । "अक्षत और फूल चडाना" ॥ सदाशिव शिवानन्द प्रधानकरणेश्वर । पुष्पाणि बिल्वपत्राणि विचित्राणि गृहाण मे ॥ भवाय दे० । अनन्ताय नमः । सूक्ष्माय शिवोत्तमाय एकनेत्राय एकरुद्राय त्रिमूर्तये श्रीकण्ठाय शिखण्डिने नन्दिने महाकालाय नमः ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ गणपतये नमः वृषभाय कुमाराय अम्बिकायै चण्डेश्वराय नमः । अभीष्ट० द्वितीयावर० ॥ इन्द्राय वज्रहस्ताय अग्नये शक्तिहस्ताय यमाय दण्डहस्ताय नैर्ऋतये खड्गहस्ताय वरुणाय पाशहस्ताय वायवे ध्वजहस्ताय कुबेराय गदाहस्ताय ईशानाय त्रिशूलहस्ताय ब्रह्मणे पद्महस्ताय विष्णवे चक्रहस्ताय नमः ॥ अभीष्ट० तृतीयाव० ॥ जयायै नमः विजयायै सुभगायै दुर्भगायै जयन्त्यै कुहिन्यै अपराजितायै कराल्यै नमः ॥ अभीष्टसि० चतुर्था० ॥ सूर्याय नमः चन्द्रमसे भौमाय बुधाय बृहस्पतये शुक्राय शनैश्चराय राहवे केतवे ॥ अभीष्ट० पञ्चमा० ॥ अनन्तनागराजाय नमः वासुकिनाग० तक्षकना० पद्म० महापद्म० कार्कोट० शङ्खपाल० कुलिक० । अभीष्ट० षष्ठमाव० । वज्राय फट् नमः शक्तये फ० दण्डाय० खड्गाय० पाशाय० ध्वजाय० गदायै० त्रिशूलाय० पद्माय० चक्राय फट्नमः । अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥ शिवाय

पार्थिवेश्वरचिन्तामणये सपरिवाराय सानुचराय अर्घो नमः पुष्पं नमः ॥ "धूप चडाना" ॥ महादेव मृडानीश जगदीश निरञ्जन । धूपं गृहाण देवेश साज्यं गुग्गुलकल्पितम् ॥ भवाय० धूपं परिकल्पयामि नमः ॥ "रत्नदीप चडाना" ॥ हिरण्यबाहो सेनानीरोषधीनां पते शिव । दीपं गृहाण कर्पूर-कपिलाज्यत्रिवर्तिकम् । भवाय० रत्नदीपं परिकल्पयामि नमः ॥ मयूरपुच्छैर्देवेश शुभ्रैश्चामरकैस्तथा । ध्वजं छत्रं वीजनं च गृहाण परमेश्वर ॥ "जय सर्वेति चामरस्तोत्रों को पडके" । भवाय० चामरं परिकल्पयामि नमः ॥ "आईना दिखाना" ॥ यस्य दर्शनमात्रेण विश्वं दर्पणबिम्बवत् । तस्मै ते परमेशाय मकुरं कल्पयाम्याहम् ॥ भवाय० आदर्शं परिकल्पयामि नमः ॥ एताभ्यो देवताभ्यः दीपो नमः धूपो नमः ॥ शिवस्य सानुचरस्याऽर्घ्यदानाद्यऽर्चनविधिः सर्वः परिपूर्णोस्तु ॥ "मधु-पर्क देना" ॥ क्षीराज्यमधुसंमिश्रं शुभ्रदध्नासमन्वितम् । षड्रसैश्च समायुक्तं गृहाणान्नं निवेदये । भवाय० चरुं परिकल्पयामि नमः ॥ "फूलोंकी अञ्जलि चडावना" ॥ हर विश्वाखिलाधार निराधार निराश्रय । पुष्पाञ्जलिमिमं शम्भो गृहाण वरदो भव ॥ भवाय० पुष्पाञ्जलिं समर्पयामि नमः ॥ "फल चडाना" ॥ राजराजाधिदेवेश निराधार निरास्पद । फलं गृहाण मद्दत्तं नारिकेलादिकं शुभम् । भवाय० फलं समर्पयामि नमः ॥ "ताम्बूल चडाना" ॥ शाश्वतात्मन्महानन्द मदनान्तक धूर्जटे । गृहाण पूगताम्बूलदलपत्रादिसंयुतम् । भवाय० ताम्बूलं परि० ॥ "आध प्रक्रम देना" ॥ यानि कानि च पापानि

ब्रह्महत्यादिकानिच । तानि सर्वाणि नश्यन्ति शिवस्यार्धप्रदक्षिणात् "षडक्षरपञ्चाक्षर स्तोत्र पडके अष्टाङ्ग प्रणाम देना" ॥ मृडानीशाद्य मे सर्वानऽपराधानऽनेकशः । क्षम स्वामिन्प्रणामं मे गृहाणाष्टाङ्गसंयुतम् ॥ उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा उरसा मनसा वचसा च नमस्कारं करोमि नमः ॥ अन्नं नमः २ आज्यं २ अद्यदिनेऽद्य यथासङ्कल्पात्सिद्धिरस्तु अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्वमऽच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ शन्नो देवी० ॥ भवाय० अपोशानं नमः ॥ पुनः शन्नो देवी० ॥ भवाय० दक्षिणायै तिलहिरण्यरजतनिष्कर्णं ददानि ॥ एता देवताः सदक्षिणाऽनेन प्रीयन्तां प्रीताः सन्तु ॥ "नैवेद्य देना" ॥ अमृतेशमुद्रयाऽमृतीकृत्याऽमृतमस्तु अमृतायतां नैवेद्यं सावित्राणि सावित्रस्य देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद्धे । भवाय० नमो नैवेद्यं निवेदयामि नमः ॥ आकाशमातृभ्यो बलिं नमः समालभनं गन्धो नमः ॥ अर्घो नमः ॥ पुष्पं नमः ॥ कर्पूरगौरं० भवाय० फलादि समर्पयामि नमः ॥ क्षां क्षेत्राधिपतयेऽन्नं नमः रां राष्ट्राधिपतयेऽन्नं नमः सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्दधातु ॥ "नित्यकर्म करके पृच्छा करना" ॥ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नः शिवः प्रचोदयात् ३ । ॐतत्सद्ब्रह्माऽद्य तावत्० भवस्य देवस्य० अच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्यो देवताभ्यो यवोदकं नम उदकतर्पणं नमः ॥ आपन्नोसि शरण्योसि सर्वाऽवस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोस्मि रक्ष मां शरणागतम् । क्षमापणनिर्वाण-

स्तोत्रादि पठित्वा। आह्वानं नैव जानामि नैव जानामि पूजनम्। पूजाभागं न जानामि क्षम्यतां परमेश्वर। उभाभ्यामिति अष्टाङ्ग-प्रणामं करोमि नमः॥ "तर्पण करना" नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधिभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि। इत्येतासामेव देवतानां सलोकतां सायुज्यं सार्ष्टिं सामीप्यमाप्नोति य एवं विद्वान् स्वाध्याय-मधीते॥ पूजितोसि मया भक्त्या भगवन्गिरिजापते। सगौरीको मम स्वान्तं विश विश्रान्तिहेतवे॥ मनस्यान्तर्गतं मन्त्रं मन्त्र-स्यान्तर्गतं नमः। मनोमन्त्रमयं दिव्यमेकपुष्पं शिवार्चनम्॥ इति शिवपूजा सम्पूर्णा॥

---

## अथ गणेशस्तवराजः॥

ॐविघ्नेशो नः स पायाद्विहृतिषु जलधिं पुष्कराग्रेण पीत्वा यस्मिन्नुद्धृत्य हस्तं वमति तदऽखिलं दृश्यते व्योम्नि देवैः। क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यऽनन्तः क्व च श्रीः क्वाप्यौर्वः क्वापि शैलः क्वचन मणिगणः क्वापि नक्रादिसत्वाः॥ निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम्। मन्ये स वत्रे धातापि तस्मै विघ्नजिते नमः॥ सर्गारम्भेऽप्यजाताय बीजरूपेण तिष्ठते। धात्रा कृतप्रणामाय गणाधिपतये नमः॥ गणेशाय नमः प्रह्ववाञ्छिताम्बुजभानवे। सितदंष्ट्रांकुरस्फीतविघ्नौघतिमिरेन्दवे॥ प्रणमाम्यजमीशानं योगशास्त्रविशारदम्। निःशेषगणवृन्दस्य नायकं सुविनायकम्॥ "श्रीब्रह्मोवाच" ॥ भगवञ्छ्रोतुमिच्छामि विस्तरेण यथायथम्। स्तवराजस्य माहात्म्यं स्वरूपं

च विशेषतः ॥ "श्रीनन्दिकेश्वर उवाच" ॥ स्तवराजस्य माहात्म्यं प्रवक्ष्यामि समासतः ॥ शृणुष्वावहितो भूत्वा सर्वसिद्धिकरं परम् । कर्मणा मनसा वाचा ये प्रपन्ना विनायकम् ॥ ते तरन्ति महाघोरं संसारं कामवर्जिताः ॥ सकृच्च जप्त्वा स्तवराजमुत्तमं तरत्यशेषं भवपाशपञ्जरम् । विमुच्यते संसृतिसागरान्नरो विभूतिमाप्नोति सुरैः सुदुर्लभाम् ॥ यत्फलं लभते जप्त्वा स्वरूपं चापि यादृशम् । यः प्रातरुत्थितो विद्वान्ब्राह्मे वापि मुहूर्तके । विषुवायनकालेषु पुण्ये वा समयान्तरे ॥ सर्वदा वा जपञ्जन्तुः स्तवराजं स्तवोत्तमम् । यत्फलं लभते मर्त्यः तच्छृणुष्व चतुर्मुख ॥ गङ्गाप्रवाहवत्तस्य वाग्विभूतिर्विजृम्भते ॥ बृहस्पतिसमो बुद्ध्या पुरन्दरसमः श्रिया । तेजसादित्यसङ्काशो भार्गवेण समो नये ॥ धनदेन समो दाने तथा वित्तपरिग्रहे । धर्मराजसमो न्याये शिवभक्तो मया समः ॥ प्रतापे वह्निसंकाशः प्रसादे शशिना समः । बलेन महता तुल्यो भवता ब्रह्मवर्चसे ॥ सर्वतत्वार्थविज्ञाने मयापि समतां व्रजेत् । एवमेतत्त्रिसन्ध्यं वै जपन्स्तवमनुत्तमम् ॥ सर्वान्कामान्नरः प्राप्य भुक्त्वा भोगान्यथेप्सितान् । सशरीरः सुरेन्द्रस्य पदं न्यस्यति मूर्धनि ॥ प्राप्याष्टगुणमैश्वर्यं भुक्त्वा भोगान्सुपुष्कलान् । अक्षयो वीतशोकश्च निरातङ्को निरामयः ॥ जरामरणनिर्मुक्तो वेदशास्त्रार्थकोविदः । सिद्धचारणगन्धर्वदेवविद्याधरादिभिः ॥ संस्तूयमानो मुनिभिः शंस्यमानो दिनेदिने । विचरत्यऽखिलांल्लोकान्बन्धुवर्गैः समं नरः ॥ एवं चिराय निर्वाह्य देवस्यानुचरो भवेत् । स्तवराजं सकृज्जप्त्वा मुच्यते सर्वकिल्बिषैः ॥ सर्वसिद्धि-

मवाप्नोति पुनात्यासप्तमं कुलम् । नाशयेद्विघ्नसंघातांस्तेन वैनायकं स्मृतम् ॥ स्तवराजमनुस्मरञ्जपन्हृदयाग्रे विलिखन्पठन्नपि । स सुरासुरसिद्धचारणैर्मुनिभिः प्रत्यहमेव पूज्यते ॥ तरति च भवचक्रं सर्वमोहं निहन्ति क्षिपति च परवादं मान्यते बन्धुवर्गैः । अखिलमपि च लोकं क्षेमतामाशु नीत्वा व्रजति यतिभिरीड्यं शाश्वतं धाम मर्त्यः ॥ यो जपति स्तवराजमशोकः क्षेमतमं पदमेति मनुष्यः । चारणसिद्धसुरैरभिवन्द्यो याति पदं परमं स विमुक्तः ॥ जपेद्यः स्तवराजाख्यमिमं प्रातः स्तवोत्तमम् । तस्यापचारं क्षमते सर्वदैव विनायकः ॥ सर्वान्निहन्ति वै विघ्नान्विपदश्च समन्ततः । अशेषाभिर्गणाध्यक्षः सम्पद्भिरभिषिञ्चति ॥ अस्य च प्रणता लक्ष्मीः कटाक्षानुविधायिनी । किं करोमीति वै भीत्या पुरस्तादेव तिष्ठति ॥ तस्मान्निःश्रेयसं गन्तुमतिभक्त्या विचक्षणः । स्तवराजं जपेज्जन्तुर्धर्मकामार्थसिद्धये ॥ आधिव्याध्यस्त्रशस्त्राग्नितपःपङ्कार्णवादिषु । भयेष्वन्येषु चाप्येतत्स्मरन्मुक्तो भवेन्नरः ॥ स्तवराजं सकृज्जप्त्वा मार्गं गच्छति मानवः । न जातु जायते तस्य चौरव्याघ्रादिभिर्भयम् ॥ यथा वरिष्ठो देवानामशेषाणां विनायकः । तथा स्तवो वरिष्ठोयं स्तवानां शम्भुनिर्मितः ॥ अवतीर्णो यदा देवो विघ्नराजो विनायकः । तदा लोकोपकारार्थं प्रोक्तोयं शम्भुना स्वयम् ॥ जप्यः स्तवोयं यत्नेन विनायकप्रियकरो देवस्य हृदयङ्गमः । जप्यः स्तवोयं यत्नेन धर्मकामार्थसिद्धये ॥ "अस्य श्रीमहागणपतिस्तवराजमन्त्रस्य ईश्वर ऋषिः, नानावृत्तानि छन्दांसि विनायको देवता तत्पुरुष इति बीजं एकदन्त इति शक्तिः आ-

त्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं धर्मार्थकामसिद्ध्यर्थे पाठे विनियोगः" ॥ ध्यानं ॥ जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलेर्बन्धने स्रष्टुं वारिरुहोद्भवेन विधिना शेषेण धर्तुं धराम् । पार्वत्या महिषासुरप्रमथने सिद्धाधिपैर्मुक्तये ध्यातः पञ्चशरेण लोकविजये पायात्स नागाननः ॥ ॥ "ईश्वर उवाच" ॥ ॐकारममृतं ब्रह्म शिवमक्षरमव्ययम् । यमामनन्ति वेदेषु तं प्रपद्ये विनायकम् ॥ यतः प्रवृत्तिर्जगतां यः साक्षी हृदयस्थितः । आधारभूतो विश्वस्य तं प्रपद्ये विनायकम् ॥ यस्य प्रसादाच्छक्राद्याः प्राणन्ति निमिषन्ति च । प्रवर्तकं तं लोकानां प्रणमामि विनायकम् ॥ शिखाग्रे द्वादशाङ्गुल्ये स्थितं सूक्ष्मतनुं विभुम् । युञ्जन्ति यं मरीच्याद्यास्तं नमामि गणाधिपम् ॥ लीलया लोकरक्षार्थं द्विधाभूतो महेश्वरः । यः स्वयं जगतः साक्षी तं वन्दे द्विरदाननम् ॥ विघ्नेश्वरं विधातारं धातारं जगतामपि । प्रणमामि गणाध्यक्षं प्रणतार्तिविनाशनम् ॥ उत्सङ्गतल्पे यो देव्या भवान्याः क्रीडते विभुः । बालो हरन्मनस्तस्यास्तं प्रपद्ये विनायकम् ॥ विधाय भूषणैश्चित्रैर्वेशकर्म मनोरमम् । यं दृष्ट्वा पश्यतीशानी तं प्रपद्ये विनायकम् ॥ लीलया यः सृजंल्लोकान्भिन्दन्नपि मुहुर्मुहुः । संक्रीडते महासत्वस्तं नतोस्मि गणाधिपम् ॥ सिन्दूरितमहाकुम्भस्तुङ्गदन्तः सुभैरवः । भिनत्ति दैत्यकरिणस्तं वन्दे द्विरदाननम् ॥ यस्य मूर्तिं व्रजन्त्याशु मदामोदानुषङ्गिणः । भ्रमरास्तीव्रसंरावास्तं नमामि विनायकम् ॥ गम्भीरभीमनिनदं श्रुत्वा यद्बृंहितं क्षणात् । पतन्त्यसुरनागेन्द्रास्तं वन्दे द्विरदाननम् ॥ यो भि-

नत्ति गिरीन्सर्वान्घोरनिर्घातभैरवैः । रवैः सन्त्रासजननैस्तं वन्दे द्विरदाननम् ॥ लीलया प्रहता येन पादाभ्यां धरणी क्षणात् । संशीर्यते सशैलौघा तं वन्दे चण्डविक्रमम् ॥ यत्करताडनैर्भिन्नमम्भः शतसहस्रधा । विशीर्यते समुद्राणां तं नतोस्मि गणाधिपम् ॥ विमुखा यत्र दृश्यंते भ्रष्टवीर्याः पदच्युताः । निष्प्रभा विबुधाः सद्यस्तं प्रपद्ये विनायकम् ॥ यद्भ्रूप्रणिहितां लक्ष्मीं लभन्ते वासवादयः । स्वतन्त्रमेकं नेतारं विघ्नराजं नमाम्यहम् ॥ यत्पादपांसुनिचयं बिभ्राणा मणिमौलिषु । अमरा बहु मन्यन्ते तं नतोस्मि गणाधिपम् ॥ वेदान्तगीतं पुरुषं वरेण्यमऽभयप्रदम् । हिरण्मयपुरान्तःस्थं तमस्मि शरणं गतः ॥ चित्सुधानन्दसन्मात्रं परानन्दस्वरूपिणम् । निष्कलं निर्मलं साक्षाद्विनायकमुपैमि तम् ॥ अनपायं च सद्भूतं भूतिदं भूतिवर्धनम् । नमामि सत्यविज्ञानमनन्तं ब्रह्मरूपिणम् ॥ अनाद्यन्तं महादेवप्रियपुत्रं मनोरमम् । द्विपाननं विभुं साक्षादात्मानं तं नमाम्यहम् ॥ विश्वामरेश्वरैर्वन्द्यमाधारं जगतामपि । प्रणमामि गणाध्यक्षं प्रणताज्ञानमोचनम् ॥ शिखाग्रे द्वादशाङ्गुल्ये स्थितं स्फटिकसन्निभम् । गोक्षीरधवलाकारं प्रणमामि गजाननम् ॥ अनाधारं नवाधारमनन्ताधारसंस्थितम् । धातारं च विधातारं तमस्मि शरणं गतः ॥ अनन्तदृष्टिं लोकादिमनन्तं विद्रुमप्रभम् । अप्रतर्क्यमनिर्देश्यं निरालम्बं नमाम्यहम् ॥ भूतालयं जगद्योनिमणीयांसमणोरपि । स्वसंवेद्यमसंवेद्यं वेद्यावेद्यं नमाम्यहम् ॥ प्रमाणप्रत्ययातीतं हंसमव्यक्तलक्षणम् । अनाविलमनाकारं तमस्मि शरणं गतः ॥ विश्वाकारमनाकारं विश्वावासमनामयम् । सकलं निष्कलं

नित्यं नित्यानित्यं नमाम्यहम् ॥ संसारवैद्यं सर्वज्ञं सर्वभेषज-
भेषजम् । आत्मानं सदसद्व्यक्तं धातारं प्रणमाम्यहम् ॥ भ्रूमध्ये
संस्थितं देवं नाभिमध्ये प्रतिष्ठितम् । हृन्मध्ये दीपवत्संस्थं वन्दे
सर्वस्य मध्यगम् ॥ हृत्पुण्डरीकनिलयं सूर्यमण्डलनिष्ठितम् । तार-
कान्तरसंस्थानं तारकं तं नमाम्यहम् ॥ तेजस्विनं विकर्तारं सर्व-
कारणकारणम् । भक्तिगम्यमहं वन्दे प्रणवप्रतिपादितम् ॥
अन्तर्योगरतैर्युक्तैः कल्पितैः स्वस्तिकासनैः । बद्धं हृत्कर्णिका-
मध्ये ध्यानगम्यं नमाम्यहम् ॥ ध्येयं दुर्ज्ञेयमद्वैतं त्रयीसारं
त्रिलोचनम् । आत्मानं त्रिपुरारातेः प्रियसूनुं नमाम्यहम् ॥
स्कन्दप्रियं स्कन्दगुरुं स्कन्दस्याग्रजमेव च । स्कन्देन सहितं
शश्वन्नमामि स्कन्दवत्सलम् ॥ नमस्ते विघ्नराजाय भक्तविघ्नविना-
शिने । विघ्नाध्यक्षाय विघ्नानां निहन्त्रे विश्वचक्षुषे ॥ विघ्नदात्रेऽ-
प्यभक्तानां भक्तानां विघ्नहारिणे । विघ्नेश्वराय वीराय विघ्नेशाय
नमोनमः ॥ कुलाद्रिमेरुकैलासशिखराणां प्रभेदिने । दन्तभि-
न्नाभ्रमालाय करिराजाय ते नमः ॥ किरीटिने कुण्डलिने
मालिने हारिणे तथा । नमो मौञ्जीसनाथाय जटिने ब्रह्मचा-
रिणे ॥ डिण्डिमुण्डाय चण्डाय कमण्डलुधराय च । दण्डिने चैव
मुण्डाय नमोऽध्ययनशीलिने ॥ वेदाध्ययनयुक्ताय सामगान-
पराय च । त्र्यक्षाय च वरिष्ठाय नमश्चन्द्रशिखण्डिने ॥ कपर्दिने
करालाय शंकरप्रियसूनवे । सुताय हैमवत्याश्च हर्त्रे च सुरविद्वि-
षाम् ॥ ऐरावणादिभिर्दिव्यैर्दिग्गजैः संस्तुताय च । स्वबृंहित-
परित्रस्तैर्नमस्ते मुक्तिहेतवे ॥ कूष्माण्डगणनाथाय गणानां
पतये नमः । वज्रिणाराधितायैव वज्रिवज्रनिवारिणे ॥ पूष्णो

दन्तभिदे साक्षान्महतां भीषणाय च । ब्रह्मणश्च शिरोहर्त्रे विव-
स्वद्धन्धनाय च ॥ अग्नेश्चैव सरस्वत्या इन्द्रस्य च बलच्छिदे ।
भैरवाय सुभीमाय भयानकरवाय च ॥ विभीषणाय भीष्माय
नागाभरणधारिणे । प्रमत्ताय प्रचण्डाय वक्रतुण्डाय ते नमः ॥
हेरम्बाय नमस्तुभ्यं प्रलम्बजठराय च । आखुवाहाय देवाय चैक-
दन्ताय ते नमः ॥ शूर्पकर्णाय शूराय परश्वधधराय च ।
सृणिहस्ताय धीराय नमः पाशासिपाणये ॥ धारणाय नम-
स्तुभ्यं धारणाभिरताय च । धारणाभ्यासयुक्तानां पुरस्तात्सं-
स्तुताय च ॥ प्रत्याहाराय वै तुभ्यं प्रत्याहाररताय च । प्रत्या-
हाररतानां च प्रत्याहारस्थितात्मने ॥ विघ्नाध्यक्षाय दक्षाय
लोकाध्यक्षाय धीमते । भूताध्यक्षाय भव्याय गणाध्यक्षाय ते
नमः ॥ योगपीठान्तरस्थाय योगिने योगधारिणे । योगिनां
हृदिसंस्थाय योगगम्याय ते नमः ॥ ध्यानाय ध्यानगम्याय
शिवध्यानपराय च । ध्येयानामपि ध्येयाय नमो ध्येयतमाय
च ॥ सप्तपातालपादाय सप्तद्वीपोरुजंघिने । नमो दिग्बाहवे
तुभ्यं व्योमदेहाय ते नमः ॥ सोमसूर्याग्निनेत्राय ब्रह्मविद्याम-
दाम्भसे । ब्रह्माण्डकुण्डपीठाय सामघोषस्वनाय च ॥ ज्योति-
र्मण्डलपुच्छाय हृदयालानकाय च । ध्यानार्द्रबद्धपादाय
पूजाधोरणधारिणे ॥ सोमार्कबिम्बघण्टाय दिक्करीन्द्रवियोगिने ।
आकाशसरसो मध्ये क्रीडागहनशालिने ॥ सुमेरुदन्तकोशाय
पृथिवीस्थलगाय च । सुघोषाय सुभीमाय सुरकुञ्जरभेदिने ॥
हेमाद्रिकूटभेत्त्रे च दैत्यदानवमर्दिने । गजाकाराय देवाय गज-
राजाय ते नमः ॥ ब्रह्मणे ब्रह्मरूपाय ब्रह्मगोत्रेऽव्ययाय च । ब्रह्मघ्ने

ब्राह्मणायैव ब्रह्मणः प्रियबन्धवे ॥ यज्ञाय यज्ञगोत्रे च यज्ञानां फलदायिने । यज्ञहर्त्रे यज्ञकर्त्रे सर्वयज्ञमयाय च ॥ सर्वनेत्राधिवासाय सर्वैश्वर्यप्रदायिने । गुहाशयाय गुह्याय योगिने ब्रह्मवादिने ॥ १०० ॥ "ॐ गंतत्पुरुषाय विद्महे, वक्रतुण्डाय धीमहि, तन्नो दन्ती प्रचोदयात्" । ३ । एकाक्षरपरायैव मायिने ब्रह्मचारिणे । भूतानां भुवनेशानां पतये पापहारिणे ॥ सर्वारम्भनिहर्त्रे च विमुखानां निजार्चने । नमो नमो गणेशाय विघ्नेशाय नमो नमः ॥ विनायकाय वै तुभ्यं विकृताय नमोनमः । नमस्तुभ्यं जगद्धात्रे नमस्तुभ्यं वियोगिने ॥ नमस्तुभ्यं त्रिनेत्राय त्रिनेत्रप्रियसूनवे । सप्तकोटिमहामन्त्रैर्मन्त्रितावयवाय ते ॥ मन्त्राय मन्त्रिणां नित्यं मन्त्राणां फलदायिने । लीलया लोकरक्षार्थं विभक्तनिजमूर्तये ॥ स्वयं शिवाय देवाय लोकक्षेमानुपालिने । नमोनमः क्षमाभर्त्रे नमः क्षेमतमाय च ॥ दयामयाय देवाय सर्वभूतदयालवे । दयाकर दयारूप दयामूर्ते दयापर ॥ दयाप्राप्य दयासार दयाकृतिरतात्मक । जगतां तु दयाकर्त्रे सर्वकर्त्रे नमो नमः ॥ नमः कारुण्यदेहाय वीराय शुभदन्तिने । भक्तिगम्याय भक्तानां दुःखहर्त्रे नमोस्तु ते ॥ त्रिपुरं दग्धुकामेन पूजिताय त्रिशूलिना । दयाशील दयाहार दयापर नमोस्तु ते ॥ नमः समस्तगीर्वाणवन्दिताङ्घ्रियुगाय ते । जगतां तस्थुषां भर्त्रे विघ्नहर्त्रे नमोस्तु ते ॥ नमो नमस्ते गणनायकाय सुनायकायाखिलनायकाय । विनायकायाभयदायकाय नमः शुभानामुपनायकाय ॥ गणाधिराजाय गणानुशास्त्रे गजाधिराजाय गजाननाय । शतानानायामितमाननाय नमो नमो दैत्यविना-

शनाय ॥ अनामयायामलधीमयाय स्वमायया‍विष्टजगन्मयाय । अमेयमायाविकसन्मयाय नमो नमस्तेस्तु मनोमयाय ॥ नमस्ते समस्ताधिनाथाय कर्त्रे नमस्ते समस्तोरुविस्तारभाजे । नमस्ते समस्ताधिकायातिभूम्ने नमस्ते पुनर्व्यस्तविन्यस्तधाम्ने ॥ पात्रे सुराणां प्रमथेश्वराणां शास्त्रेऽनुशास्त्रे सचराचरस्य । नेत्रे प्रनेत्रे च शरीरभाजां धात्रे वराणां भवते नमोऽस्तु ॥ नमोस्तु ते विघ्नविनाशकाय नमोस्तु ते भक्तभयापहाय । नमोस्तु ते मुक्तमनस्थिताय नमश्च भूयो गणनायकाय ॥ अखिलभुवनभर्त्रे सम्पदामेकदात्रे निखिलतिमिरभेत्रे निष्कलायाव्ययाय । प्रणतमनुजगोप्त्रे प्राणिनां त्राणकर्त्रे सकलविबुधशास्त्रे विश्वनेत्रे नमोऽस्तु ॥ दशनकुलिशभिन्नैर्निर्गतैर्दिग्गजानां विलसितशुभदन्तं मौक्तिकैश्चन्द्रगौरैः । भवनमुपसरन्तं प्रेक्ष्य गौरी भवन्तं सुदृढमथ कराभ्यां श्लिष्यते प्रेमनुन्ना ॥ मृदुनि ललितशीते तल्परङ्गे भवान्याः शुभविलसितभावां नृत्यलीलां विधाय । अचलदुहितुरङ्कादऽङ्कमन्यं विसर्पन्पितुरुपहरसि त्वं नृत्यहर्षोपहारम् ॥ भुजगवलयितेनोपस्पृशन्पाणिना त्वां सरभसमथ बाह्वोरन्तराले निवेश्य । कलमधुरसुगीतं नृत्तमालोकयंस्ते कलमऽविकलतालं चुम्बते हस्तपद्मे ॥ कुवलयशतशीतैर्भूरिकल्हारहृद्यैस्तव मुहुरपि गात्रस्पर्शनैः संप्रहृष्यन् । क्षिपति च सुविशाले स्वाङ्कमध्ये भवन्तं तव मुहुरनुरागान्मूर्ध्नि जिघ्रन्महेशः ॥ बालो बालपराक्रमः सुरगणैः संप्रार्थ्यसेऽहर्निशं गायन्किंपुरुषाङ्गनाविरचितैः स्तोत्रैरभिष्टूयसे । हाहाहूहुकतुम्बुरुप्रभृतिभिस्त्वं गीयसे नारदस्तोत्रैरद्भुतचेष्टितैः प्रतिदिनं प्रोद्घोषते सामभिः ॥ त्वां नमन्ति सुरसिद्धचारणास्त्वां यजन्ति निखिला द्विजातयः । त्वां पठन्ति

मुनयः पुराविदस्त्वां स्मरन्ति यतयः सनातनाः ॥ परं पुराणं गुणिनं महान्तं हिरण्मयं पुरुषं योगगम्यम् । यमामनन्त्यात्मभुवं मनीषिणो विपश्चितं कविमप्यक्षयं च ॥ गणानान्त्वा गणनाथं सुरेन्द्रं कविं कवीनामतिमेध्यविग्रहम् । ज्येष्ठराजमृषभं केतुमेकमा नः शृण्वन्नूतिभिः सीद शश्वत् ॥ नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूतये । नमो नमोनन्तसुखैकदायिने नमो नमोनन्तसुखैकसिन्धवे ॥ नमो नमः शाश्वतशान्तिहेतवे क्षमादयापूरितचारुचेतसे । गजेन्द्ररूपाय गणेश्वराय ते परस्य पुंसः प्रथमाय सूनवे ॥ नमो नमः कारणकारणाय ते नमो नमो मङ्गलमङ्गलात्मने । नमो नमो वेदविदां मनीषिणामुपासनीयाय नमो नमो नमः ॥ १३० ॥ "श्रीईश्वर उवाच" ॥ वैनायकं स्तवं पुण्यं सर्वपापप्रणाशनम् । चिन्ताशोकप्रशमनमायुरारोग्यवर्धनम् ॥ नृपाणां सततं रक्षा द्विजानां च विशेषतः । स्तवराज इति ख्यातं सर्वसिद्धिकरं परम् ॥ यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते। रूपं वीर्यं बलं प्रज्ञां यशश्चायुः समन्वितम् ॥ मनीषां सिद्धिमारोग्यं श्रियमप्यक्षयिष्णुताम् । सर्वलोकाधिपत्यं च सर्वदेवाधिराजताम् ॥ प्राप्याष्टगुणमैश्वर्यं प्राप्य भूतिं च शाश्वतीम् । उद्धृत्या सप्तमं वंशं दुस्तराद्भवसागरात् ॥ काञ्चनेन विमानेन शतनागायुतेन च। विचरत्यखिलांल्लोकान्सशरीरो गणाधिपः॥ मत्प्रियश्च भवेन्मर्त्यः सर्वदेवप्रियः सदा । प्रियो विनायकस्यापि प्रियोस्माकं विशेषतः ॥ सङ्कल्पसिद्धः सर्वज्ञः सर्वभूतहिते रतः । स्तवराजं जपन्मर्त्यः सुहृद्भिः सह मोदते ॥ स्तवराजजपासक्तभावयुक्तस्य धीमतः। अस्मिञ्जगत्त्रयेप्यस्ति नासाध्यं न च दुष्करम् ॥ तस्मात्सर्वप्रयत्नेन स्तवराजं

न्तधराय च । नम ईश्वरपुत्राय गणेशाय नमो नमः ॥ माता यस्य उमादेवी पिता यस्य महेश्वरः । मूषको वाहनं यस्य स नः पायाद्गणाधिपः ॥ वन्दे वराभयपिनाककपालखड्गखट्वाङ्गदन्तमुसलाब्जकरं त्रिनेत्रम् । भीमं जटामुकुटिनं कमलासनस्थं कश्मीरवासममलं गणराजमाद्यम् ॥ रक्ताङ्गरागं परश्वक्षमालासुदन्तपाणिं सितलड्डुपात्रम् । गजाननं सिंहरथाधिरूढं गणेश्वरं विघ्नहरं नमामि ॥ संसिद्ध्यर्थनमत्सुरासुरमिलन्मौलिस्थितप्रोल्लसत्सद्रत्नप्रभवप्रकृष्टविभवप्रेङ्खन्मयूखोज्ज्वलत् । श्रेयो विघ्नमहाभयप्रशमने दिव्यं यदेकौषधं भूयान्नो द्विरदाननाङ्घ्रिकमलद्वन्द्वं तदिष्टाप्तये ॥ बिभ्रत्पञ्चमुखानि योयमुदितः स्वातन्त्र्यमात्रात्मना शक्तेर्वैभवतः परप्रतिहतद्वैताख्यविघ्नव्ययः । एकीभूतमुखः सकारणगणानुकारिणा तेजसा देवः संप्रति भासतां मयि यथा तत्वं गणाधीश्वरः ॥ हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसादाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया सन्ततम् । बीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पलव्रीह्यग्रस्थविषाणरत्नकलशान् हस्तैर्वहन्तं भजे ॥ देवं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं विघ्नेशं मदगन्धलोलमधुपव्यालोलगण्डस्थलम् । दन्ताघातविदारिताहितजनं सिन्दूरशोभाकरं वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम् ॥ द्विचतुर्दशवर्णभूषिताङ्गं मुसलाम्भोजधरं महोपवीतम् । द्विमृगाधिपगामिनं त्रिनेत्रं हरपुत्रं द्विरदाननं भजेऽहम् ॥ जटामुकुटमण्डितं त्रिनयनं भजे षड्भुजं सतीसरनिवासिनमसुरनाशनं लोहितम् । वराभयपिनाकिनं त्वसिकपालभृच्छूलिनं गणैर्वृतगणेश्वरं कमलगं च भीमाकृतिम् ॥

गजाननं भूतगणाधिसेवितं कपित्थजाम्बूफलसारभक्षणम् ।
उमापतेः शोकविनाशकारणं नमामि विश्वेश्वरमाशु सिद्धिदम् ॥
लम्बोदरैकवदनः कमलासनस्थश्चन्द्रार्धमौलिरमलो भुजगेन्द्र-
हारः । भीमोऽष्टबाहुरुदितार्कमरीचिरष्टसिद्धिप्रदो भवतु वा-
ञ्छितसिद्धिदो नः ॥ योऽभ्यर्चितः सुरगणैर्वरसिद्धिहेतोश्छेत्तुं
भयानि च करे परशुं दधानः । देवः स शम्भुदयितापरि-
वर्धितश्रीर्विघ्नान्निवारयतु वारणराजवक्त्रः ॥ श्रीगणेशाय
नमः ॥ बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ताक्षसूत्रे शुभे वामे
मोदकपूर्णपात्रपरशू नागोपवीती त्रिदृक् । श्रीमान्सिंहयुगासनः
श्रुतियुगे शङ्खौ वहन्मौलिमान्दिश्यादीश्वरपुत्र एष भगवांल्लु-
म्बोदरः शर्म नः ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभिप्रेतार्थसिद्ध्यर्थं
पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥
गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः । प्रसन्नो भवतान्नित्यं
वरदाता विनायकः ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्नराजो विनायकः ॥ धूम्रकेतुर्गणा-
ध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि गणेशस्य
समाहितः ॥ यः पठेत्तु शिवोक्तानि स लभेत्सिद्धिमुत्तमाम् ।
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे संकटे चैव
विघ्नस्तस्य न जायते ॥ ओं ॥ चिदचित्पदगम्भीरं गमागमपदो-
ज्झितम् । गहनाकाशसंकाशं वन्दे देवं गणेश्वरम् ॥ श्रीसन-
त्कुमार उवाच ॥ शङ्कराद्ब्रह्मणा प्राप्तं पद्मयोनेर्मया प्रभोः ।
त्वदहं कीर्तयिष्यामि स्तोत्रं परमदुर्लभम् ॥ षष्ठ्यां चतुर्थ्याम-

ष्टम्यां चतुर्दश्यां च भक्तितः । पूजयेच्च गणाध्यक्षं श्रद्धाभक्ति-
समन्वितः ॥ अर्घैः पुष्पैस्तथा धूपैर्दीपैर्माल्यैश्च चामरैः । वस्त्रैः
कुण्डलकेयूरैर्मौलिभिश्च वितानकैः ॥ भक्ष्यैर्भोज्यैरपूपैश्च मत्स्यै-
र्मांसैश्च मोदकैः । पानकैः फलमूलैश्च होमैर्मन्त्रादिभिस्तथा ॥
गङ्गाह्रदे तु गाङ्गेयं श्रीशैले तु गणेश्वरम् । वाराणस्यां गज-
मुखं गयायां टङ्कधारिणम् ॥ प्रयागे तु गणाध्यक्षं केदारे
विकटाननम् । लम्बोदरं कुरुक्षेत्रे नैमिषे च मदोत्कटम् ॥
जम्बकं दण्डकारण्ये लोकेशं हिमवद्गिरौ । विष्वक्सेनं च वि-
न्ध्याद्रौ मलये हेमकुम्भकम् ॥ नायकं पुष्करद्वीपे विघ्नेशं
शल्मलौ स्थितम् । इलावृते विश्वरूपं हरिवर्षे घटोदरम् ॥ त्रिनेत्रं
सिंहलद्वीपे श्वेतद्वीपे तु वामनम् । उज्जयिन्यां तु लम्बोष्ठं
मालवे शूर्पकर्णकम् ॥ सौराष्ट्रे वरदं नित्यं काश्मीरे भीम-
रूपिणम् । सिन्धुसागरयोर्मध्ये विज्ञेयं मन्त्रनायकम् ॥ हर्यक्षं
यक्षभवने कैलासे परमेश्वरम् । महोदरं तु लुम्पायां चम्पायां
शिखिवाहनम् ॥ पाशहस्तं त्रिकूटेषु पूजयेत्सर्वसिद्धिदम् । बल-
मग्निगुहायां तु पाटले सिंहवाहनम् ॥ पौण्ड्रे रौद्रमुखं चापि
कलापिग्रामके जयम् । मेरुपृष्ठे कामरूपं नन्दनं नन्दने वने ॥
विजयं वै गन्धवने देवदारुवने गणम् । आर्तानां विघ्नहरणं
गङ्गासागरसङ्गमे ॥ महापथे विरूपाक्षं चित्रसेनं तु पुष्करे । दुर्जयं
यमुनातीरे स्तम्भनं गन्धमादने ॥ अम्बरीषं भद्रवटे मोहनं
हस्तिनःपुरे । किष्किन्धायामुग्रकेतुं लङ्कायां तु विभीषणम् ॥
कलिङ्गे वरुणं चैव विन्ध्यपादे मदोत्कटम् । अश्वत्थं च तुरु-
ष्केषु चीनेषु त्रिशिखायुधम् ॥ वज्रहस्तं कोसलेषु दाक्षिणात्येषु

लोहितम् । शूलोद्धतकरं चैव मध्यदेशे प्रकीर्तितम् ॥ एकदंष्ट्रं पश्चिमाद्रौ पूर्वदेशेऽपराजितम् । उत्तरे चारुवक्त्रं च वरिष्ठं त्रिपुरेषु च ॥ हिरण्यकवचं चैव गिरिसन्धिषु संस्थितम् । सुमुखं नागरन्ध्रेषु नर्मदायां च पङ्कजम् ॥ मायापुर्यांम हामायं भद्रकर्णह्रदे शिवम् । गोकर्णे गजकर्णं च कान्यकुब्जे वराननम्॥ पद्मासनं कामरूपे श्रीमुखं सर्वतः स्थितम् । वेदवेदाङ्गशास्त्रेषु चिन्तयेद्गणनायकम् ॥ अष्टाषष्टिस्तु नामानि स्तुतान्यद्भुतकर्मणः। नित्यं प्रभातकाले तु चिन्तयेत्सर्वसिद्धिदम् ॥ एतत्स्तोत्रं पवित्रं तु मङ्गलं पापनाशनम् । शस्त्रखर्वोदवेतालयक्षरक्षोभयापहम् ॥ चौरारण्यभयव्याघ्रव्याधिदुर्भिक्षनाशनम् । कृत्यादिमायाशमनं सर्वशत्रुविमर्दनम् ॥ त्रिसन्ध्यं यः पठेदेतत्स भवेत्सर्वसिद्धिभाक् । गणेश्वरप्रसादेन लभते शाङ्करं पदम् ॥ इत्यादिपुराणे श्री-गणेशस्तोत्रम् ॥

---

## अथ गणेशलीलास्तुतिः ॥

अद्रिराजज्येष्ठपुत्र हे गणेश विघ्नहन् पद्मयुग्मदन्तलड्डुपात्रमाल्यहस्तक । सिंहयुग्मवाहनस्थ भालनेत्रशोभित कल्पवृक्षदानदक्ष भक्तरक्ष रक्ष माम् । १ । एकदन्त वक्रतुण्ड नागयज्ञसूत्रक सोमसूर्यवह्निमेयमानमातृनेत्रक । रत्नजालचित्रमालभालचन्द्रशोभित कल्पवृक्ष दानदक्ष० । २ । वह्निसूर्यसोमकोटिलक्षतेजसाधिकद्योतमानविश्वहेतिवेचिवर्गभासक । विश्वकर्तृविश्वभर्तृविश्वहर्तृवन्दित कल्पवृक्ष० । ३ । स्वप्रभावभूतभव्यभाविभावभासक कालजालबद्धवृद्धबाललोकपालक । ऋद्धि-

सिद्धिबुद्धिवृद्धिभुक्तिमुक्तिदायक कल्पवृक्ष० । ४ । मूषकस्थ विघ्नभक्ष्य रक्तवर्णमाल्यधृन्मोदकादिमोदितास्यदेववृन्दवन्दित । स्वर्णदीसुपुत्र रौद्ररूप दैत्यमर्दन कल्पवृक्ष० । ५ । ब्रह्मशम्भुविष्णुजिष्णुसूर्यसोमचारणदेवदैत्यनागयक्षलोकपालसंस्तुत । ध्यानदानकर्मधर्मयुक्त शर्मदायक कल्पवृक्ष० । ६ । आदिशक्तिपुत्र विघ्नराज भक्तशङ्कर दीनानाथ दीनलोकदैन्यदुःखनाशक । अष्टसिद्धिदानदक्ष भक्तवृद्धिदायक कल्पवृक्ष० ।८। शैवशक्तिसांख्ययोगशुद्धवादिकीर्तित बौद्धजैनसौरकार्मपाञ्चरात्रतर्कित । वल्लभादिशक्तियुक्त देव भक्तवत्सल कल्पवृक्ष० । ८ । देवदेव विघ्ननाश देवदेवसंस्तुत देवशत्रुदैत्यनाश जिष्णुविघ्नकीर्तित । भक्तवर्गपापनाश बुद्धबुद्धिचिन्तित कल्पवृक्ष० । ९ । हे गणेश लोकपालपूजिताङ्घ्रियुग्मक धन्यलोकदैन्यनाश पाशराशिभेदक । रम्यरक्त धर्मसक्तभक्तचित्तपापहन् कल्पवृक्ष० । १० । ये पठन्ति विघ्नराजभक्तिरक्तचेतसः स्तोत्रराजमेनसोपमुक्तशुद्धचेतसः । ईप्सितार्थमृद्धिसिद्धिमंत्रसिद्धभाषिताः प्राप्नुवन्ति ते गणेशपादपद्मभाविताः ॥ इति गणेशलीला ॥ ॥

एकदन्तमीशपुत्रमाखुवाहमीश्वरं विघ्नसंघध्वान्तसूर्यमन्तरायनायकम् । अच्युताद्यशेषदेवपूजितांघ्रिपङ्कजं विघ्नशैलवज्रिणं विनायकं नमाम्यहम् ॥ १ ॥ कामरूपधारिणं नागयज्ञसूत्रिणं कुङ्कुमोत्थकायकान्तिशोभितं वराननम् । काञ्चनाभिभास्वरं च वासवादिवन्दितं विघ्नशैल० ॥ २ ॥ नन्दिवाहनन्दने सुरेन्द्रनाथवन्दितं नन्दिभृङ्गिनन्दनाथनारदादिनृत्यकम् । नन्दगोपनागराजपूर्वकैर्नमस्कृतं विघ्नशैल० ॥ ३ ॥ सर्पवेष्टितोदरं च

सर्पमालधारिणं शङ्करादिपूजितं शिवात्मजं सुखात्मकम् । सावधानताकरं सरस्वतीप्रदायकं विघ्नशैल० ॥ ४ ॥ विघ्नमत्तनागसिंहमुग्रनेत्रनासिकं विघ्नमेघजालनाशकारिचण्डमारुतम् । विघ्नदाववह्निवारिवारिवारिवाहकं विघ्न० ॥५॥ विघ्नसिन्धुवाडवाग्निमिन्दुखण्डमण्डितं विघ्नगोपमष्टसिद्धियुक्तभक्तसेवितम् । शूर्पकर्णवक्रतुण्डकुम्भगण्डशोभितं विघ्नशैल० ॥ ६ ॥ दक्षयक्षपक्षिमुख्यरक्षिताङ्घ्रियुग्मकं भुक्तिमुक्तियुक्तिशान्तियुक्तपूजितं विभुम् । देवदेववंशवृद्धिसिद्धिसाधकं मुदा विघ्नशैल० ॥ ८ ॥ देवदैत्ययोगिसिद्धचारणाभिसेवितं सर्पखेटभूजभूतसङ्घसाधुवेष्टितम् । ईप्सितार्थदायकं विशेषकर्मकारकं विघ्न० ॥ ९ ॥ श्रीविनायकाष्टकं हि शङ्करेण निर्मितं शङ्करस्य सौख्यदं भक्तविघ्ननाशकम् । ये पठन्ति सादरं समस्तसिद्धिदं स्तवं ते त्वभीष्टसिद्धिपात्रभावमाप्नुवन्ति शम् ॥ इति विनायकाष्टकम् ॥

---

## अथ गणपतिविद्या ॥

ॐ गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः । प्रसन्नो भवतान्नित्यं वरदाता विनायकः ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ अतःपरं प्रवक्ष्यामि देवरक्षां तथैव च । सर्वोपकरणार्थं च चतुर्वर्णस्य मण्डले ॥ गजवक्त्राय तेजसे सिन्दूरवर्णाय शम्भवे । गजवक्त्राय देवाय विघ्नाधिपतये नमः ॥ पञ्चयोजनविस्तीर्णे रुद्रो रक्षतु मण्डले । अत्र मंत्रं प्रवक्ष्यामि सिद्धिर्भवतु मे सदा ॥ अतःपरं

प्रवक्ष्यामि सर्वदुष्टं निवारय २ स्वाहा ॐ नमो भगवते अपरिमितबलवीर्यपराक्रमाय सर्वदुष्टविघ्नान्विनाशय २ निर्नाशय २ गजवक्त्राय तेजोरूपाय ते नमः मणिकनकवज्रवैडूर्यालङ्कृतशरीराय अनन्तकुलिकवासुकये तक्षकाय महापद्मकार्कोटकाय विघ्नान्विनाशय २ निर्नाशय २लम्बोदराय महोदराय त्रिनेत्राय त्रिशूलहस्ताय एकदंष्ट्राय चतुर्भुजाय सर्वभूतप्रेतपिशाचासुरयक्षराक्षसडाकिनीयोगिनीखेचरीणां सन्त्रासय २ सर्वकिल्बिषाणां हन २ सर्वदुष्टानां प्रमथय २ सर्वरोगरुजां दह २ सर्वव्याधीनां दह २ सर्वदुष्टान्प्रमथय २ सिंहकानां नाशय २ ॐ नमो विघ्नहर्त्रे सर्वविघ्नविनाशिने सर्वदोषनित्यमयोपद्रवेभ्यः स्वाहा ॥ इति प्रथमः खण्डः ॥ ॐनमो भगवते नरसिंहाय वासुदेवाय पुरुषोत्तमाय सहस्रशीर्षाय पुरुषोत्तमाय ॥ ममाग्रतो जितो विष्णुः पृष्ठतश्चैव केशवः । गोविन्दो दक्षिणे पार्श्वे वामे तु मधुसूदनः । उपरिष्टात्तु वैकुण्ठो वराहः पृथिवीतले । दिशश्च विदिशश्चैव सर्वं रक्षतु माधवः । गच्छतस्तिष्ठतोवापि जाग्रतः स्वपतोपि वा । नरसिंहकृते गुप्ते वासुदेवो ममाह्वयम् ॥ एवं हुंकारभीमोद्भृतमुखकुहरं तीक्ष्णदंष्ट्राकरालं, विद्युद्भ्राजिष्णुनेत्रं हुतवहवपुषं विस्फुलिङ्गाग्रकेशम् । क्रुद्धं संरुद्धतेजं कृतभ्रुकुटिमुखं कुञ्चितभ्रूललाटं तद्विष्णोः पातु रूपं सकलभयहरं नारसिंहं नमामि ॥ नमोभगवते नरसिंहाय प्रदीप्तसूर्यकोटिसहस्रतेजसे वज्रनखदंष्ट्रायुधाय स्फुटविकटविस्तीर्णसुरसटाय क्षोभितमोहान्धकाराय भस्ममोहात्मने द्वन्द्वभिनिर्घोषाय सर्वमन्त्रेण सहृदयाय भगवन्नरसिंहाय पुरुषाय ॐ भगवति नरसिंहे कपिलवर्णे मुक्तकेशे दंष्ट्रोत्कटे

करालिने विकटपादाय विकरालहस्तनखाग्रप्रहरणाय प्रचण्ड-तेजे अग्नितेजे ज्वालामुखे अतिकटविकटरौद्रयोगनरसिंहे इति नरसिंहशब्दोच्चारणेन सर्वदोषकिल्बिषाणां छिन्धि २ भिन्धि २ हन २ दह २ पच २ मथ २ प्रमथ २ सर २ गिरिंगच्छ २ दिशं गच्छ २ विदिशं गच्छ २ पातालं गच्छ २ आकाशं गच्छ २ अन्तरिक्षं गच्छ २ यत आगतोसि तत्रैव गच्छ २ आकर्षय २ निर्नाशय २ सर्वविघ्नान्नाशय २ सर्वव्याधीन्विध्वंसय २ सर्व-दोषं दुष्टं विद्रावय २ सर्वदुष्टान्निवारय २ सर्वदोषान्नाशय २ सर्वरोगान्नाशय ॐ नमोविघ्नहर्त्रे ॐ नमो भगवते सर्वविघ्न-विनाशिने सर्वदोषोपद्रवेभ्यः स्वाहा ॥ द्वितीयः खंडः ॥ ॐ नमो भगवते उच्छुष्मरुद्राय सप्तद्वीपेश्वराय हारकटकशरी-राय शरणकृतशरीराय मनुष्यशरीरमावेशय २ प्रवेशय खट्वाङ्गं द्रावय २ स्वरूपं दर्शय २ माहेश्वरीं मुद्रां गृह्ण २ कापालीं मुद्रां भञ्जय २ वैष्णवीं मुद्रां धारय २ शिवदूतीरूपं दर्शय २ जय २ ज्वल २ प्रज्वल २ कड्ड २ स्फोट २ प्रहरण २ यक्षो वा राक्षसो वा भूतो वा प्रेतो वा पिशाचो वा कूष्माण्डो वा अपस्मारो वा प्रेतयामिनी वा मथ २ मोचय २ कम्पय २ विध्वंसय २ प्रमाणरूपिकां दर्शय २ ब्राह्मणी वा क्षत्रियी वा वैश्यी वा शूद्री वा चण्डाली वा चर्मकारी वा मालाकारी वा मातङ्गी वा पुक्कसी वा चामुण्डी वा योगिनी वा महायोगिनी वा आकाशगामिनी वा भुवनवासिनी वा पातालवासिनी वा वौषट् फट् २ स्वाहा ॥ ॐ नमः शीघ्रगमनाय अक्षराय त्रिनेत्राय त्रिशूलहस्ताय हृद्गताय म-न्त्राय मन्त्रन्ताय सुहृदयाय सुहृद्गताय आगच्छ २ उच्छुष्मरुद्रेभ्यः

स्वाहा ॥ तृतीयः खण्डः ॥३॥ ओंनमो भगवति सिद्धेश्वरि सिद्ध-चामुण्डे प्रवाति घोरे पूतनातिघोरे प्रलम्बस्तम्भने विकसवज्रघोषे सहस्रघोरे वज्रपरे महोदरे सहस्रोदरे सहस्रमुखे सहस्रभीममुखे सहस्रभैरवमुखे उल्कामुखे ज्वालामुखे ज्वालापदे ज्वालाजिह्वे विकृतवदने ज्वालापिङ्गलजिह्वे अट्टाट्टहासे भैरवमुखे सहस्रभैर-वरूपे अनिलमुखे अनिलमध्ये आनय २ शीघ्रं सर्वं प्रवेशय २ आवेशय २जल्पय २खट्वाङ्गघोर आज्ञापयतुस्वाहा श्मशानवेताल-कृतकर्मविनाशिने अतः कर्मसहस्राणां प्रयुक्तानां च नाशिने चतुःषष्टिसहस्राणां चतुःषष्टिसमुद्राणां स्फोटने अष्टानां नाग-राजानां नाशने अष्टाविंशतिकीलकानां विस्फोटने चतुष्षष्टि-साधारणयोगिनीनां द्वात्रिंशन्मूलकर्मणां द्वात्रिंशद्भावितानां पङ्क्तिभावितानां मूलाहिकानां मालीहिकानां पण्डितताडिता-नामेकाङ्गुल्या तर्जितानामम्बिकानां पात्रकीटकानां पात्रकीह-कानां देवी सर्वकर्मविनाशिनी महाचामुण्डी आज्ञापयतु स्वाहा ब्रह्माऽज्ञापयतु स्वाहा विष्णुराज्ञापयतु स्वाहा रुद्र आज्ञापयतु स्वाहा कुमार आज्ञापयतु स्वाहा पूर्वस्यां दिशि ऐरावतमारूढो वज्रहस्तो देवराज इन्द्र आज्ञापयतु स्वाहा दक्षिणस्यां दिशि माहि-षस्कन्धमारूढः प्रेतराजो दण्डहस्तो यम आज्ञापयतु स्वाहा पश्चि-मायां दिशि भास्वद्विमानमारूढः पाशहस्तो वरुणो राजा आज्ञाप-यतु स्वाहा उत्तरस्यां दिशि पुष्पकविमानमारूढः खड्गहस्तो यक्ष-राजः कुबेर आज्ञापयतु स्वाहा ॐनमो विघ्नहर्त्रे सर्वविघ्नविनाशिने सर्वदोषभयोपद्रवेभ्यः स्वाहा । चतुर्थः खण्डः । ४ । एकाह्निकं ज्वरं छिन्द्धि २ स्वाहा द्वितीयाह्निकं ज्व० तृतीयाह्निकं० चतु-

र्थाह्निकं० पञ्चमाह्नि० षष्ठाह्नि० सप्तमा० अष्टमाह्निकं० नवमा० दशाह्निकं० एकादशा० द्वादशा० त्रयोदशज्वरं चतुर्दशज्वरं दिनज्वरं खण्डकदिनज्वरं रात्रिज्वरं अर्धरात्रिज्वरं मध्याह्नज्वरं सन्ध्याज्वरं वैष्णवज्वरं ब्रह्म० रुद्र० ग्रहरोग० याम्प्र० अदिति० सावित्री० वात० पित्त० श्लेष्म० सन्निपात० महार्ति० शीत० उष्ण० सम० विषम० कामला० सतत० अशेष० दुष्टच्छाया० भूत० प्रेत० पिशाच० असुर० यक्ष० राक्षस० डाकिनी० योगिनी० महायोगिनी० अपस्मार० मास० अर्ध-मास० षाण्मासिक० सांवत्सरिक० सर्वज्वरं छिन्द्धि २ स्वाहा रुद्रग्रहरोग याम्य अदिति सवितृज्वरं छिन्द्धि २ स्वाहा सन्ध्या-वातपित्तश्लेष्मसन्निपातमुहूर्तिकतापसज्वरं० सतताशेषदुष्टच्छा-याभूतप्रेतमहामायूरिज्वरं पिशाचासुरयक्षराक्षसडाकिनीयोगि-नीमहायोगिनी० अपस्मारमासार्धमासषाण्मासिकसांवत्सरिक० एतेषामष्टचत्वारिंशज्ज्वराणां छिन्दय २ स्वाहा भिन्दय २ मुञ्चय २ भञ्जय २ सर्वव्याधीन्विनाशय २ निवारय २ उच्छादय २ उन्मादय २ चूर्णय २ कड्डय २ कण्डूय २ विषं कड्डय २ एवं स्थावरविषं कड्डय २ जङ्गमवि० कृत्रि-मवि० शीघ्र० गर्जनोपमशङ्का हालाहल अन्धकार पिङ्गला० हरिद्रा कुम्भलाचल गोनासा आम रक्तपित्त श्लेष्म सन्नि-पात कुलिका० कामला० काहलार० सर्वविषं कड्डय २ नाशय २ शोषय २ मारय २ स्तम्भय २ स्वाहा। पञ्चमः खण्डः ।५।

ॐनमो रुद्ररूपेभ्यो ज्योतीरूपेभ्यो नमो नमः । अघोरेभ्योऽथ घोरेभ्यो घोरतरेभ्यश्च सर्वतः सर्वतरेभ्यः । ॐ नमः सूर्याय

सिद्धचामुण्डेन मूलमंत्रेण एतेषां देवतानां मन्त्राणामावाहनं कुरुते सर्वदोषकिल्बिषाणां छिन्दय २ भिन्दय २ परममुद्रां भञ्जय २ विनायककौमारिकानां भञ्जय २ वैनायकं भञ्जय २ कौमारिकमुद्रां० स्थानेश्वरक्षेत्रपालमुद्रां० डाकिनीयोगिनीखेचराणां० सर्वभूतपिशाचान् सर्वान्प्रेतान्सर्वानसुरान् सर्वान्राक्षसान् हर २ शाकिनीनां० डाकिनीनां० योगिनीनां० महायोगिनीनां० खेचरीणां० नरसिंहमुद्रां कूष्माण्डं० अपस्मारं० छायाग्रहं० दुष्टं ग्रहं स्कन्दग्रहं ग्रहदेवतानां० बालग्रहाणां रतिग्रहाणां० परमुद्रां भञ्जय २ तत्सर्वं छिन्द्धि २ हन २ दह २ पच २ मथ २ प्रमथ २ सर २ गिरिं गच्छ २ दिशं गच्छ २ विदिशं गच्छ २ आकाशं गच्छ २ पातालं गच्छ २ अन्तरिक्षं गच्छ २ यत आगतोसि तत्रैव गच्छ २ आकर्षय २ निर्नाशय २ सर्वविघ्नं विनाशय २ सर्वव्याधिं विध्वंसय २ सर्वदोषदुष्टं विद्रावय २ सर्वरोगान्नाशय २ ॐ नमोविघ्नहर्त्रे सर्वविघ्नविनाशिने सर्वदोषभूतभयोपद्रवेभ्यः स्वाहा षष्ठः खण्डः ॥ ६ ॥ राजभयं नाशय २ चौरभयं० शत्रुभयं० भूतगणभयं० सिंहभुजङ्ग दुःस्वभयं० अपमृत्यु० दारिद्र्य० प्रेत० यक्षः०राक्षस० अग्नि० मूषक० श्वानक० जम्बूक० स्खलितपन्थाने० संग्रामे० कलहभयं नाशय २ जलपिपासा० अनावृष्टि० यत्किञ्चिद्भयमाप्नोति तन्नाशय २ कान्तारभयं नाशय २ छायापस्मारभयं शूलातीसार० अन्येषां सर्वदुःखान्निवारय २ सर्वोपद्रवान्० व्याधिभयं नाशय २ विध्वंसय २ सर्वदुष्टान्निवारय २ विद्रावय २ सर्वगणान्नाशय २ घातय २ पातय २ निपातय २ आस्फोटय २ त्रोटय २

कम्पय २ त्रासय २ मोहय २ मोचय २ चाटय २ धूनय २ चामय २ डामय २ जापय २ बन्धय २ सन्नय २ वारय २ पाटय २ त्रोटय २ मर्दय २ दामय २ स्फुटय २ लुठय २ खादय २ त्रुटय २ विश्लेषय २ इमां प्रतिमां प्रवेशय २ पालय २ रूपिकाणां दर्शय २ स्थूलरूपं दर्शय २ ॐह्रींश्रींक्लींत्रींश्रीं-श्रींक्रींक्षींफट् स्वाहा । सप्तमः खण्डः ॥ ७ ॥ महाचामुण्डेन चण्डमुण्डेन मातृचक्रेण ब्रह्मदण्डेन विष्णुचक्रेण रुद्रत्रिशूलेन इन्द्रवज्रेण यमदण्डेन वरुणपाशेन कुबेरगदया गरुडपक्षवातेन आदित्यरश्मिभिरघोरमन्त्रेण एतेषां देवतानां मन्त्रेण सर्वदोष-किल्बिषं छिन्धि २ भिन्द्धि २ हन २ दह २ पच २ मथ २ प्रमथ २ सर २ गिरिं गच्छ २ आकाशं गच्छ २ पातालं गच्छ २ अन्तरिक्षं दिशं विदिशं यत आगतोसि तत्रैव गच्छ २ आक-र्षय २ निर्नाशय २ सर्वविघ्नान्विनाशय २ सर्वव्याधिं वि-ध्वंसय २ सर्वदुष्टं विद्रावय २ सर्वरोगान्नाशय २ ॐनमो विघ्नहर्त्रे सर्वविघ्नविनाशिने सर्वरोगविनाशिने सर्वदोषभयोप-द्रवेभ्यो रक्षय २ स्वाहा । अष्टमः खण्डः ॥ ८ ॥ अतोङ्गषट्के वौषट् २ फट् २ स्वाहा अन्तःस्वरूपेण हृदयं प्रवेशय २ फट् २ स्वाहा ॐहूँ ३ भूततन्त्राणि शिखायै वौषट् फट् २ स्वाहा ॐवाँ ३ विद्युज्ज्वलितनेत्रायै वौषट् फट् २ स्वाहा ॐ भूं ३ भूचरी वौषट् फट् २ स्वाहा ॐ गूं ३ भूतपिशाच वौ-षट् फट् २ स्वाहा ॐ खं ३ खेचरीवौषट् फट् २ स्वाहा ॐ डां ३ डाकिनीवौषट् फट् २ स्वाहा ॐज्वं ३ योगिनीवौषट् फट् २ स्वाहा ॐ यं ३ महायोगिनी० ॐचं ३ चर्मकारी० ॐचं ३

चण्डाली० ॐ अं ३ अस्त्राय० ॐ नां ३ नारसिंही० ॐ रुं ३ रुद्राय० ॐ वैं ३ वैष्णवी० ॐ प्रां ३ प्रजापतये० ॐ गां ३ गायत्री० ॐ सां ३ सावित्री० ॐ सं ३ सरस्वती० ॐ सं ३ सर्वमंत्राणां० ॐ सं ३ सर्वयोगिनीनां० ॐ सं ३ सर्वविघ्नहर्त्रिणी० ॐ सं ३ सिद्धगन्धर्वौ० ॐ गां ३ गणपतये० अघोरमंत्रेण वौषट् फट् २स्वाहा ॐ नमः सूर्याय सिद्धचामुण्डे मूलमन्त्रेण वौषट् फट् २ स्वाहा । ॐ गंगांगिंगींगुंगूंगेंगैंगोंगौंगंगः वौषट् फट् २ स्वाहा । नवमः खण्डः ॥ ९ ॥ अनेन मन्त्रेण प्रसेचयेत् । छिद्यते वेतालो वा यक्षो वा राक्षसो वा ब्रह्मराक्षसो वा चण्डो वा प्रचण्डो वा महामातङ्गो वा इमां विद्यामात्मरक्षणार्थं येन न शत्रुर्नापमृत्युर्नाकालमृत्युर्बाधते सर्वशत्रूणां हृदयमर्मभ्यः स्वाहा ॐ नमोभगवते सिद्धे वरसिद्धे सिद्धचामुण्डेन बलरूपतेजोधारिणि रुद्रत्रिशूलेन बलरूपतेजोधारिणि इन्द्रवज्रेण बल० यमदण्डेन ब० वरुणपाशेन बलरूप० कुवेरगदया ब० गरुडपक्षवातेन ब० आदित्यरश्मिभिर्बल० अघोरमन्त्रेण ब० ॐ नमः सूर्याय सिद्धचामुण्डेन बलरूपतेजोधारिणि मम रक्ष २ सर्वदोषभयोपद्रवेभ्यः स्वाहा अपस्मारग्रहा दुष्टाः सर्वे चापि ग्रहज्वराः । गर्भबालग्रहा येच नानारोगग्रहाश्च ये । अन्तरिक्षगता ये च स्वर्गे ये च ग्रहोत्तमाः । भूपातालग्रहा ये च ये ग्रहाः सर्वतः स्थिताः । कण्ठे यस्य महाकालो भूषणा यस्य पन्नगाः । तेजसा तस्य देवस्य शान्तिं कुर्वन्तु सर्वदा । भैरवाः साधकानां च ये दोषा बाधयन्ति हि । तेषां मन्त्रं प्रवक्ष्यामि येन बाधां न कुर्वते । एषा भगवती विद्या ग्रहाणां नाशिनी तथा । सर्वेषां पाठनात्सिद्धा महागणपतेः प्रिया । दशमः खण्डः ॥ १० ॥ इति श्रीमहागणपतिविद्या समाप्ता ॥

## अथ देवीध्यानरत्नमाला स्तुतिः ॥

ॐनमो भवान्यै ॥ भक्तानुग्रहकारिणी भगवती देवाधिदेवेश्वरी दीनानाथकृपावती स्वजननी भक्तानुरक्ता सती। ॐकाराक्षरवासिनी सुरनुता सर्वेश्वरी सर्वदा भूयान्नो वरदा सदा ह्यभयदा कामेश्वरी कामदा ॥ वराङ्कुशौ पाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम्। बालार्ककोटिप्रतिमां त्रिनेत्रां भजेहमाद्यां भुवनेश्वरीं ताम् ॥ शङ्खत्रिशूलशरचापकरां त्रिनेत्रां तिग्मेतरांशुकलया विकसत्किरीटाम्। सिंहस्थितामसुरसिद्धनुतां च दुर्गां दूर्वानिभां दुरितदुःखहरां नमामि ॥ माता भवानी च पिता भवानी बन्धुर्भवानी च गुरुर्भवानी। विद्या भवानी द्रविणं भवानी यतो यतो यामि ततो भवानी ॥ श्रीशङ्खचक्रमुसलाम्बुजयुग्महस्तां नागेन्द्रहारवलयाङ्कितकण्ठमालाम्। सिन्दूरकुङ्कुमसहस्रमरीचिदीप्तां श्रीशारिकां त्रिनयनां हृदये स्मरामि ॥ बालार्ककोटिद्युतिमिन्दुचूडां वरासिचक्राभयबाह्यमाद्याम्। सिंहाधिरूढां शिववामदेहलीनां भजे चेतसि शारिकेशीम् ॥ या कुन्देन्दुतुषारहारधवला या श्वेतपद्मासना या वीणावरदण्डमण्डितकरा या शुभ्रवस्त्रान्विता ॥ या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ या श्रीर्वेदमुखी तपःफलमुखी नित्यं च निद्रामुखी नानारूपधरी सदा जयकरी विद्याधरी शंकरी। गौरी पीनपयोधरी रिपुहरी मालास्थिमालाधरी सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ या देवी शिवकेशवादिजननी यावै

जगद्रूपिणी या ब्रह्मादिपिपीलिकान्तजनतानन्दैकसंदायिनी । या पञ्चप्रणमन्निलिम्पनयनी या चित्कलामालिनी सा पायात्परदेवता भगवती श्रीराजराजेश्वरी ॥ या माया मधुकैटभप्रमथिनी या माहिषोन्मूलिनी या धूम्रेक्षणचण्डमुण्डमथिनी या रक्तबीजाशनी । शक्तिः शुम्भनिशुम्भदैत्यदलिनी या सिद्धलक्ष्मीः परा सा देवी नवकोटिमूर्त्तिसहिता मां पातु माहेश्वरी ॥ १० ॥ या खड्गं डमरुं त्रिशूलपरशू खट्वाङ्गपाशौ गदां चक्रं मुद्गरचापबाणवरदाभीतीः कपालाङ्कुशौ । धत्ते तोमरपुस्तके च मुसुलं दोर्भिर्दशात्ताष्टभिर्देवीभिः परिवारिता शशिधरा सा शारिका पातु नः ॥ बीजैः सप्तभिरुज्ज्वलाकृतिरसौ या सप्तसप्तिद्युतिः सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत् । कश्मीरप्रवरेशमध्यनगरीप्रद्युम्नपीठे स्थिता देवीसप्तकसंयुता भगवती श्रीशारिका पातु नः ॥ ब्रह्माणं च पुरन्दरं शिवहरी देवान्समस्तान्मुनीन् या दृष्ट्वा दयया विलोकयति सा देव्यम्बिका पार्वती । चक्रस्था निजबोधभासितजगच्छान्तात्मिका सर्वगा सान्द्रानन्दप्रदा परा भगवती पायात्सदा शारिका ॥ भक्तानां सिद्धिदात्री नलिनयुगकरा श्वेतपद्मासनस्था लक्ष्मीरूपा त्रिनेत्रा हिमकरवदना सर्वदैत्येन्द्रहर्त्री । वागीशी सिद्धिकर्त्री सकलमुनिजनैः सेविता या भवानी नौम्यहं नौम्यहं त्वां हरिहरप्रणतां शारिकां नौमि नौमि ॥ किं किं दुःखं दनुजदलिनि क्षीयते न स्मृतायां का का कीर्तिः कुलकमलिनि ख्याप्यते न स्तुतायाम् । का का सिद्धिः सुरवरनुते प्राप्यते नार्चितायां कं कं योगं त्वयि न विनुते चित्तमाल-

म्बितायाम् ॥ आरक्ताभां त्रिनेत्रां मणिमुकुटवतीं रत्नताटङ्क-
रम्यां हस्ताम्भोजैः सपाशाङ्कुशमदनधनुःसायकैर्विस्फुरन्तीम्।
आपीनोत्तुङ्गवक्षोरुहतटविलुठत्तारहारोज्ज्वलाङ्गीं ध्यायाम्यम्भो-
रुहस्थामरुणविवसनामीश्वरीमीश्वराणाम् ॥ ज्वालापर्वतसंस्थितां
त्रिनयनां पीठत्रयाधिष्ठितां ज्वालाडम्बरभूषितां सुवदनां
नित्यामदृश्यां जनैः। षट्चक्राम्बुजमध्यगां वरगदाम्भोजाभया-
न्बिभ्रतीं चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥
संसारार्णवतारिणीं रविशशिकोटिप्रभां सुप्रभां पापातङ्कनिवा-
रिणीं हरिहरब्रह्मादिभिः संस्तुताम्। दारिद्र्यस्य विनाशिनीं
सुकृतिनां जाड्यं हरन्तीं भृशमज्ञानान्धमतेः कवित्वजननीं
ज्वालामुखीं नौम्यहम् ॥ सैन्यानां महिषासुरस्य मृतिदां सिंहा-
धिरूढामुमां नानाकारविशेषसौख्यजननीं देहान्तरैः संस्थिताम्।
बालामध्यमवृद्धरूपरमणीं श्रीसुन्दरीं वैष्णवीं स्त्रीरूपेण जगद्वि-
मोहनकरीं ज्वालामुखीं नौम्यहम् ॥ ज्वालामुखि महाज्वाले
ज्वालापिङ्गललोचने। ज्वालातेजे महातेजे ज्वालामुखि नमोस्तु
ते ॥२०॥ नमो भगवति ज्वाले कालि त्रिपुरसुन्दरि। सर्वबी-
जपालयत्रि ज्वालामुखि नमोस्तु ते ॥ आकाशे चण्डिका देवी
पाताले भुवनेश्वरी। मर्त्यलोके जयादेवी पायात्त्रिपुरसुन्दरी ॥
किं वोर्ध्वतः किं परितोन्वऽधस्ताज्ज्ञातेति निर्णेतुमशक्यरूपा।
जाज्वल्यमानाऽविरतं दधातु ज्वालामुखी मुख्यतमां विभूतिम् ॥
अघोरव्याधिनाशी च घोररोगविनाशिनी। अष्टादशभुजा
पायाच्छारिका श्यामसुन्दरी ॥ श्रीशारिके शरण्ये त्वं मयि दासे
कृपां कुरु। ऋणं रोगं भयं शोकं रिपून्नाशय सत्वरम् ॥ प्रद्यु-
म्नशिखरासीनां मातृचक्रोपशोभिताम्। पीठेश्वरीं शिलारूपां

शारिकां प्रणमाम्यहम् ॥ अमा चैवतु कामा च चार्वङ्गी टङ्क-
धारिणी । तारा च पार्वती पायाद्यक्षिणी शारिकाष्टमी ॥ शान्तिं
नयस्याशु जनस्य पापं रिक्तत्वमर्थेन निराकरोषि । कार्यं निषि-
श्चस्यपि भाग्यपूरैः प्रगीयसेऽतः खलु शारिकात्वम् ॥ या देवी
सर्वभूतेषु दयारूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै
नमोनमः ॥ या देवी सर्वभूतेषु मोक्षदात्री सरस्वती । नमस्तस्यै
नमस्तस्यै नमस्तस्यै नमोनमः ॥ ३० ॥ तां भवानीं भवा-
ऽनीतक्लेशनाशविशारदाम् । शारदां शरदम्भोजसितपद्मासनां
नुमः ॥ श्री श्रीशैले स्थिता या प्रहसितवदना पार्वती शूल-
हस्ता वह्निसूर्येन्दुनेत्रा त्रिभुवनजननी षड्भुजा सर्वशक्तिः ।
शाण्डिल्येनोपनीता जयति भगवती भक्तिगम्यानुयाता सा नः
सिंहासनस्था ह्यभिमतफलदा शारदा शं करोतु ॥ मूलाधारा-
द्धुतवहकलामिश्रितं भूर्भुवःस्वर्ब्रह्मस्थानात्परमगहनात्तत्सवितु-
र्वरेण्यम् । भर्गोदेवः शशिकलमयी धीमहीत्येकरूपं धियो योनः
परमममृतं चोदयान्नः परं तत् ॥ प्रातःकाले कुमारी कुमुदक-
लिकया जप्यमालां जपन्ती मध्याह्ने प्रौढरूपा विकसितवदना
चारुनेत्रा विशाला । सन्ध्यायां वृद्धरूपा गलितकुचयुगे मुण्ड-
मालां वहन्ती सा देवी दिव्यदेहा हरिहरनमिता पातु नो ह्या-
दिमुद्रा ॥ पूर्वाह्णे भाति रक्ता हुतवहवदना हंसयानैकसंस्था
मध्याह्ने चापि शुक्ला वृषवरवहना नागयज्ञोपवीता । कृष्णा
चैवापराह्णे गरुडरथधरा शङ्खचक्रादिहस्ता सा सन्ध्या पातु
नित्यं वरशुकवहना ब्रह्मरूपा त्रिकाला ॥ मुक्ताविद्रुमहेमनील-
धवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णा-
त्मिकाम् । गायत्रीं वरदाभयांकुशकरां शूलं कपालं गुणं शङ्खं

चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ चतुर्भुजामर्कसहस्र-
कोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखाङ्कोपगतां
महोज्ज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ॥ ३८ ॥ पद्मास-
नस्थां करपङ्कजाभ्यां रक्तोत्पले सन्दधतीं त्रिनेत्राम् । सम्बि-
भ्रतीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं नमामि ॥ ३८ ॥
पद्मेशपद्मोद्भवपद्मबन्धुमुखाः सुराः पादरजोपि यस्याः । चिन्वन्त
आप्ता न गताश्च पारं पद्मावती सा मम सद्मगास्तात् ॥ ३९ ॥
मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि
विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं
नमतां शरण्ये ॥४०॥ या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः । श्रद्धा सतां कुलजनप्रभ-
वस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ४१ ॥
अक्षस्रक्परशूगदेषुकुलिशान्पद्मं धनुष्कुण्डिकां दण्डं शक्तिमसिं
च चर्म जलजं घण्टां सुराभाजनम् । शूलं पाशसुदर्शनौ च
दधतीं हस्तैः प्रवालप्रभैः सेवे सैरिभमर्दिनीमिह महालक्ष्मीं
सरोजस्थिताम् ॥ ४२ ॥ नागाधीश्वरविष्टरां फणिफणोत्तंसोरु-
रत्नावलीभास्वद्देहलतां विभाकरनिभां नेत्रत्रयोद्भासिताम् ।
मालाकुम्भकपालनीरजकरां चन्द्रार्धमौलिं परां सर्वेशेश्वरभैरवा-
ङ्कनिलयां पद्मावतीं चिन्तयेत् ॥ ४३ ॥ रे मूढाः किमयं वृथैव
तपसा कायः परिक्लिश्यते यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्ती-
क्रियन्ते गृहाः । भक्तिश्चेदविनाशिनी भगवती पादद्वयी सेव्य-
तामुन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ तडिद्वल्लीं
नित्याममृतसरितं पाररहितां मलोत्तीर्णां ज्योत्स्नां प्रकृतिम-
गुणग्रन्थिगहनाम् । गिरां दूरां विद्यामविनतकुचां विश्वजन-

नीमपर्यन्तां लक्ष्मीमभिदधाति सन्तो भगवतीम् ॥ आसीना सर-
सीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती दानं पद्मयुगाभयौ च वपुषा
सौदामिनीसन्निभा । मुक्ताहारविराजमानविपुलस्तुङ्गस्तनोद्भा-
सिनी पायान्नः कमला कटाक्षविभवैरानन्दयन्ती हरिम् ॥ देवीं
शुद्धस्फटिकधवलां पञ्चवक्त्रां त्रिनेत्रां दोर्भिर्युक्तां दशभिरभितः
शोभितां रत्नहारैः । काद्यं मुण्डं सृणिममसृणं शूलमच्छाच्छधारं
सारात्सारं वरमनवरं दक्षहस्तैर्वहन्तीम् ॥ उत्खट्वाङ्गं कठिन-
विकटं टङ्कमूर्जस्वदंकं पाशं ज्ञानामृतरसमयं पुस्तकं चाभयं च ।
कामं वामैः शुभकरतलैर्बिभ्रतीं विश्ववन्द्यां पद्मां प्रेतोपरि-
कृतपदां सिद्धलक्ष्मीं नमामि ॥ इच्छाशक्तिप्रथमलहरीमम्ब-
रान्तःप्रवाहगर्भीभूतां त्रिविधमुदितां पञ्चधा प्रस्फुरन्तीम् ।
सम्यग्देवीं स्फटिकधवलां शुद्धकुन्देन्दुवर्णां रुद्रारूढां दश-
भुजयुतां क्षामगात्रीं नमामि ॥ उद्यद्भास्वत्समाभाविहितरवि-
जयां मुण्डखण्डावनद्धां ज्योतिर्मौलिं त्रिनेत्रां विविधमणिलस-
त्कुण्डलामण्डिताङ्गीम् । हारग्रैवेयकाञ्चीगुणमणिनिलयामेकचि-
त्राम्बराढ्यामम्बां पाशाङ्कुशाढ्याभयवरदकरां सिद्धिदात्रीं न-
मामि ॥ ५० ॥ अक्षसूत्राम्बुजकरामादर्शकलशान्विताम् । मी-
नपद्मासनासीनां वितस्तां शरणां श्रये ॥ संसारसागरसमुद्धरणै-
कसारां धर्मध्वजां शुभफलां व्रतसिद्धिहेतुम् । वैडूर्यशुभ्रमणि-
काञ्चनगर्भगौरीं त्वां नौमि पापशमनीं वरदां वितस्ताम् ॥
तीर्थैश्च कोटिगुणितैश्च सहस्रसङ्ख्यैर्गङ्गाप्रयागगयनैमिषपुष्क-
राद्यैः । नित्यं प्रयाति परमामृततोयरूपा या तां नमाम्यघहरीं
वरदां वितस्ताम् ॥ ये त्वां प्रभातसमये सततं स्मरन्ति भावप्र-
हृष्टमनसो भवमोक्षलक्ष्मीम् । तेषां सदा भवति निर्मलदेहका-

न्तिस्त्वां नौमि पापशमनीं वरदां वितस्ताम् ।। सन्तः शंसन्त्यमुत्र त्रिजगति जगतीमण्डलं सारभूतं तत्रापि क्ष्माधरं तं त्रिभुवनजननी जन्मने यं प्रपेदे । तत्राप्याहुः शुभानां विघटितविपदां वेश्म कश्मीरदेशं त्वं तत्रानुग्रहार्थं प्रवहसि भविनामों नमस्ते वितस्ते ।। गङ्गे त्रैलोक्यसारे सकलसुरवधूधौतविस्तीर्णतोये पुण्ये ब्रह्मस्वरूपे हरिचरणरजोहारिणि स्वर्गमार्गे । प्रायश्चित्तं परं नस्तव जलकणिका ब्रह्महत्याद्यघानां कस्त्वां स्तोतुं समर्थस्त्रिजगदघहरे देवि गङ्गे प्रसीद ।। गङ्गैव मोक्षदा क्षेत्रं गङ्गा किल्बिषनाशिनी । त्रैलोक्यवरदे गङ्गे हरिगङ्गे नमोऽस्तु ते ।। दृष्टा जन्मशताधर्मं स्पृष्टा जन्मशतत्रयम् । स्नाता जन्मशतोत्थाघं हन्ति गङ्गा कलौ युगे ।। हरतीयं महापापं गङ्गेश्वरसमुद्भवा । मातृपितृहिते गङ्गे हरिगङ्गे नमोस्तु ते ।। अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि नमोस्तु ते ।।६०।। नमः कल्याणदे देवि नमः शङ्करवल्लभे । नमो भक्तिप्रदे देवि अन्नपूर्णे नमोऽस्तु ते ।। नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।। योगानन्दकरी रिपुक्षयकरी धर्मैकनिष्ठाकरी चन्द्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यकरी तपःफलकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।। उर्वी सर्वजनेश्वरी हिमवतः पुत्री कृपासागरी नारी नीलसमानकुन्तलधरी नित्यान्नदानेश्वरी । सर्वत्राणकरी सदा सुखकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।। दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः

स्मृता मतिमतीव शुभां ददासि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय दयार्द्रचित्ता ॥ या द्वादशार्क-परिमण्डितमूर्तिरेका सिंहासनस्थितिमतीमुरगैर्वृतां च । देवीमनक्षगतिमीश्वरतां प्रपन्नां तां नौमि भर्गवपुषीं परमार्थराज्ञीम् ॥ उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां सिंहासनोपरि गतामुरगोपवीताम् । खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ यत्पादपङ्कजतलेऽमरमूर्धमौलिन्यस्तेन्द्रनीलमणिसन्ततयः पतन्ति । किञ्जल्कपानरतमुग्धमधुव्रतत्वं राज्ञी सदा भगवती जननीव नोऽव्यात् ॥ शीतांशुबालार्ककृशानुनेत्रां चतुर्भुजामेनत्वदासनस्थाम् । शङ्खाब्जशूलासिधरां महेशीं राज्ञीं भजेहं तुहिनाद्रिरूपाम् ॥ स्मृतैवान्तर्गतं पुंसां हरन्ती सकलं मलम् । जयत्येषा महाराज्ञी भक्तानां कामदायिनी ॥ ८० ॥ त्रिजगन्मोहिनि ईड्ये मिहिरीभूतसद्गुणे । नमोस्तु ते महाराज्ञि पाहि मां शरणागतम् ॥ शेषाशेषमुखागण्यगुणे गुणगणप्रिये । नमोस्तु ते महाराज्ञि० ॥ सुरासुरनरसिद्धवन्दनीयपदाम्बुजे । नमोस्तु ते० ॥ चराचरजगत्सृष्टिस्थितिसंहारकारिणि । नमोस्तु ते० ॥ भक्तकल्पलतेऽनल्पवाङ्माधुर्यजितामृते । नमोस्तु ते० ॥ ब्रह्मविष्णुमहेशानवन्दिते गिरिनन्दिनि । नमोस्तु ते० ॥ भक्तानां भीमसंसारपारावारप्रतारिणि । नमोस्तु ते० ॥ निर्गुणे निष्क्रिये नित्ये सच्चिदानन्दरूपिणि । नमोस्तु ते० ॥ राज्ञीस्तोत्रमिदं पुण्यं त्रिसन्ध्यं प्रयतः पठेत् । असंशयमशेषेण वशयेदखिलं जगत् ॥ दुर्गां त्वां च सरस्वतीं भगवतीं ज्वालामुखीं शारदां राज्ञीं शारिकया युतामघहरीं त्वां भद्रकालीं शिवाम् । वागीशीं त्रिपुरां भजामि

समयां पीठेश्वरीं सिद्धिदां गायत्रीं कमलासनस्य वनितां श्री-कुब्जिकां कालिकाम् ॥ ८० ॥ उद्यच्चन्द्रकलावतंसितशिखां क्रींकारवर्णोज्ज्वलां श्यामां श्याममुखीं रवीन्दुनयनां क्रींवर्णरक्ताम्बराम् । भैंबीजाङ्कितमानसां शवगतां नीलाम्बरोद्भासितां स्वाहालङ्कृतसर्वगात्रलतिकां भैंभद्रकालीं भजे ॥ श्यामां श्याममुखीं विलोलवपुषं सत्कोटराक्षीं शिवां विंशत्युत्तररूपिणीं मधुमदोन्मत्तां च रक्ताम्बराम् । ब्रह्ममुण्डशिवादिविष्णुरशनाहस्तामनङ्गोज्ज्वलां प्रेतस्थां हृदयाम्बुजे भगवतीं भैंभद्रकालीं भजे ॥ गौराङ्गीं धृतपङ्कजां त्रिनयनां श्वेताम्बरां सिंहगां चन्द्रोद्भासितशेखरां स्मितमुखीं धुर्यां वहन्तीं धुरम् । विष्ण्वन्द्रप्रणताकृतिं च त्रिदशैः सम्पूजितांघ्रिद्वयीं गौरीं मानसपङ्कजे भगवतीं भक्तेष्टदां तां भजे ॥ ऐन्दव्या कलयाऽवतंसितशिरोविस्तारिनादात्मकं तद्रूपं जननि स्मरामि परमं सन्मात्रमेकं तव । यत्रोदेति पराभिधा भगवती भासां च तासां पदं पश्यन्तीमनु मध्यमां विहरति स्वैरं च सा वैखरी ॥ कस्मादम्ब विलम्बसे कुरु कृपां केनापि रूपेण मे जिह्वाग्रे वस सन्निधेहि हृदये वाग्देवि तुभ्यं नमः । तन्निर्यान्तु ममास्यकुञ्जकुहराद्धारादिभूषातिरस्कारिण्यो रसपूरबन्धुरतया चेतो हरन्त्यो गिरः ॥ बालार्कायुतभास्वरां त्रिनयनां मन्दस्मितोद्यन्मुखीं राजच्चन्द्रकलाधरां सुकबरीपुष्पालिवृन्दाकुलाम् । कस्तूरीतिलकां घनस्तनभरां पाशाङ्कुशावैक्षवं कोदण्डं कुसुमेषुमेव दधतीं हस्ताम्बुजैस्तां भजे ॥ सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसन्निभां शंखं चक्रवराभयानि दधतीमिन्दोः कलां बिभ्रतीम् । ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां ध्यायेद्विन्ध्यनिवासिनीं शशि-

मुखीं पार्श्वस्थपश्चाननाम् ॥ श्यामाङ्गीं शशिशेखरां निजकरैर्दानं च रक्तोत्पलं रत्नाढ्यं चषकं परं भयहरं सम्बिभ्रतीं शाश्वतीम् । मुक्ताहारलसत्पयोधरघटीं नेत्रत्रयोल्लासिनीं वन्देहं हरिपूजितां हरवधूं रक्तारविन्दस्थिताम् ॥ चक्रेकेन विराजितां त्रिनयनां युग्मादिषट्त्रिंशता बाहूद्भासिमहायुधोद्यतकराम्भोजैश्च सिंहासनाम् । विश्वद्रुह्महिषासुरस्य हृदयं शूलेन निर्भेदिनीं दुर्गाख्यां प्रणमामि लोकजननीं त्वां रक्तगौरद्युतिम् ॥ मातर्मे मधुकैटभोग्रमहिषप्राणापहारोद्यते हेलानिर्मितधूम्रलोचनवधे हे चण्डमुण्डार्दिनि । निःशेषीकृतरक्तबीजदलिनि नित्यं निसुम्भापहे सुम्भध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥ ९० ॥ आदिक्षान्तमहर्निशं तु नदती या शब्दराशिस्तथा पश्यंतीत्युत मध्यमा खलु परा तस्याः परा वैखरी । सर्वप्राणिमयाऽखिलार्थजननी त्वेका चतुर्धा स्थिता मातः सा त्वमचिन्त्यरूपमहिमा वागीश्वरीत्युच्यसे ॥ चापं पञ्चशरान्सृणिं विषधरं दोर्भिश्चतुर्भिः सदा विभ्रत्यद्भुतरूपरक्तविभवैरेकानना सर्वदा । देयान्नोऽद्य सदाशिवस्थविलसद्रक्ताब्जसंस्था सदा देवी श्रीत्रिपुरा पुरारिनिरता सम्यग्वरं भूतये ॥ बालामिन्दुकलावतंससितशिखां सूर्येन्दुवह्नीक्षणां मालापुस्तकचापपाशयुगलं दोर्भिर्वहन्तीं सदा । उद्यत्सूर्यसहस्रदीप्तिसदृशीं स्मेराननाम्भोरुहां ध्यायेहं त्रिपुरां परां भगवतीं त्रैलोक्यरक्षापराम् ॥ मातः श्रीत्रिपुरे परात्परतरे देवि त्रिलोकीमहासौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् । उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम् ॥ रक्ताब्धौ रत्नपोते रविदलकमलाभ्यन्तरे

सन्निषण्णां रक्ताङ्गीं रत्नमौलिं स्फुरितशशिकलां सेरवक्त्रां त्रिनेत्राम् । बीजापूरेषुपाशांकुशमदनधनुः सत्कपालानि हस्तैर्बिभ्राणामानताङ्गीं स्तनभरभरणादऽम्बिकामाश्रयामः ॥ चापं पाशाङ्कुशसरसिजान्यङ्कुशं पुष्पबाणान्बिभ्राणां तां करसरसिजैरत्नमौलिं त्रिनेत्राम् । हेमाब्जाभां कुचभरनतां रत्नमञ्जीरकाञ्चीग्रैवेयाद्यैर्विलसिततनुं भावयेच्छक्तिमाद्याम् ॥ चन्द्रार्कानलकोटिनीरदरुचिं पाशाङ्कुशौचाशुगान्मुण्डं खड्गमभीतिमीश्वरवरं हस्ताम्बुजैरष्टभिः । कामेशानशिवोपरिस्थितपदां त्र्यक्षां वहन्तीं परां श्रीचिन्तामणिमन्त्रराजवपुषं ध्यायेन्महाषोडशीम् ॥ त्र्यर्णा त्र्यश्रनिविष्टमूर्तिरधिका मुद्रात्रयोद्भासिता या धत्तेऽङ्कुशपाशबाणनिचयं चापं चतुर्भिर्भुजैः । देवीभिस्तिसृभिस्तथाष्टभिरथो दिग्दिग्मनुख्यातिभिर्वस्वष्टप्रमिताभिरष्टभिरथो जीयाज्जगन्मातृका ॥ प्रसीद परदेवते मम हृदि प्रभूतं तमो विदारय दरिद्रतां दलय देहि सर्वज्ञताम् । विधेहि करुणानिधे चरणपद्मयुग्मं स्वकं विदारितजरामृतिं त्रिपुरसुन्दरि श्रीशिवे ॥ या वह्नीन्दुदिवाकराक्षिमधुरा या रक्तपद्मासना रत्नाकल्पविराजिताङ्गिलतिका बालेन्दुचूडोज्ज्वला । अक्षस्रक्सृणिपाशपुस्तककरा या बालभानुप्रभा तां वन्दे सुरसिद्धवन्दितपदामिष्टार्थसिद्ध्यै सदा ॥१००॥ गणेशबटुकस्तुता रतिसहायकामान्विता स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता । अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ अरुणकिरणजालैरञ्जिताशावकाशा विधृतजपवटीका पुस्तकाभीतिहस्ता । इतरकरवराढ्या फुल्लकल्हारसंस्था निवसतु हृदि बालादित्यकल्याणरूपा ॥ शब्दात्मिकासि विमलार्ग्यजुषां निदानमुद्गीथरम्यपदपाठ-

वतां च साम्नाम् । देवि त्रयी भगवती भवभावनाय वार्तासि सर्वजगतां परमार्तिहन्त्री ॥ ते संमता जनपदेषु धनानि तेषां तेषां यशांसि नच सीदति बन्धुवर्गः । धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ॥ धर्म्याणि देवि सकलानि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृती करोति। स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकद्वयेपि फलदा ननु देवि तेन ॥ देवि प्रसादपरमा भवती भवाय सद्यो विनाशयति कोपवती कुलानि । विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महिषासुरस्य ॥ ईषत्सहासममलं परिपूर्णचन्द्रबिम्बानुकारि कनकोत्तमकान्तिकान्तम्। अत्यद्भुतं प्रहृतमात्तरुषा तथापि वक्रं विलोक्य सहसा महिषासुरेण ॥ दृष्ट्वापि देवि कुपितं भ्रुकुटीकरालमुद्यच्छशाङ्कसदृशच्छवि यन्न सद्यः । प्राणान्मुमोच महिषस्तदतीव चित्रं कैर्जीव्यते हि कुपितान्तकदर्शनेन ॥ तनीयांसं पांसुं तव चरणपङ्केरुहभवं विरिञ्चिः सञ्चिन्वन्विरचयति लोकानविकलान् । वहत्येनं शौरिः कथमपि सहस्रेण शिरसा हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥१०९॥ अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी जडानां चैतन्यस्तवकमकरन्दस्रुतिसिरा । दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥ त्वदन्यः पाणिभ्यामभयवरदो दैवतगणस्त्वमेका नैवासि प्रकटितवराभीत्यभिनया । भयात्त्रातुं दातुं वरमपि च वाञ्छासमधिकं शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे । शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां भजन्ति त्वां धन्याः कतिचन चिदा-

नन्दलहरीम् ॥ भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः । तदैव त्वं
तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीरा-
जितपदाम् ॥ सुधामप्याऽस्वाद्य प्रतिभयजरामृत्युहरिणीं वि-
पद्यन्ते विश्वे विधिशतमखाद्या दिविषदः । करालं यत्क्ष्वेडं
कवलितवतः कालकलना न शम्भोस्तन्मूलं तव जननि ताटङ्क-
महिमा ॥ तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं प्रविष्टं
स्वाधारं पुनरपि सुधावृष्टिवपुषा । किमप्यष्टात्रिंशत्किरणसक-
लीभूतमनिशं भजे धाम श्यामं कुचभरनतं बर्वरकचम् ॥ चतुः-
पत्रान्तःषड्दलभगपुटान्तस्त्रिवलयस्फुरद्विद्युद्वह्निद्युमणिनियुता-
भद्युतियुते । षडश्रं भित्त्वादौ दशदलमऽथ द्वादशदलं कलाश्रं
च त्र्यश्रं गतवति नमस्ते गिरिसुते ॥ प्रकाशानन्दाभ्यामविदि-
तचरीं मध्यपदवीं प्रविश्यैतद्वन्द्वं रविशशिसमाख्यं कवलयन् ।
प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः प्रसादात्ते जन्तुः
शिवमकुलमम्ब प्रविशति ॥ महीं मूलाधारे कमपि मणिपूरे हुत-
वहस्थितिं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि । मनोपि भ्रूमध्ये
सकलमपि भित्त्वा कुलपथं सहस्रारे पद्मे सह रहसि पत्या
विहरसि ॥ यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या योनि-
स्तस्याः प्रथितमुदरे यत्तदोंकारपीठम् । तस्मिन्नन्तः कुचभ-
रनतां कुण्डलीतः प्रवृत्तां श्यामाकारां सकलजननीं सन्ततं
भावयामि ॥ मूलालवालकुहरादुदिता भवानि निर्भिद्य षट्सरसि-
जानि तडिल्लतेव । भूयोपि तत्र विशसि ध्रुवमण्डलेन्दुनिष्यन्द-
मानपरमामृततोयरूपा ॥ १२० ॥ कालाग्निकोटिरुचिमम्ब
षडध्वशुद्धावाप्लावनेषु भवतीममृतौघवृष्टिम् । श्यामां घनस्तन-

तटां सकलीकृतौ च ध्यायन्त एव जगतां गुरवो भवन्ति ॥ श्रीमत्सुरासुराराध्यचरणाम्भोरुहद्वयीम् । चराचरजगद्धात्रीं चण्डिकां प्रणमाम्यहम् ॥ अरिशङ्खकृपाणखेटबाणान्सुधनुःशूलकतर्जनीं दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥ रक्ताम्बरां सिंहगतां सितास्यां पाशाङ्कुशौ नैकवटीं दधानाम् । विद्यां त्रिशूलं कमलं वहन्तीं ध्यायामि त्वां देवदेवीमपर्णाम् ॥ सृष्टौ संस्थापनाय त्वऽपहरणविधौ मोहनेऽनुग्रहेपि सर्वेषामर्गलानां निजमहिमवशादक्रमेणैव याऽलम् । नित्यं क्रीडाप्रसक्ता रचयति सकलं स्वात्मशक्त्या प्रपञ्चं सा नस्त्राणाय भूयादऽभिमतफलदा भद्रकाली च काली ॥ कालाम्बुवाहद्युतिमिन्दुवक्त्रां तारावलीशोभिपयोधराढ्याम् । कपालपाशांकुशशूलहस्तां नीलाम्बरां यामवतीं नमामि ॥ खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुसुण्डीं शिरः शङ्खं सन्दधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभं नीलाश्मद्युतिमाऽस्यपाददशकां सेवे महाकालिकाम् ॥ अक्षस्रक्परशूगदेषुकुलिशान्पद्मं धनुष्कुण्डिकां दण्डं शक्तिमसिं च चर्म जलदं घण्टां सुराभाजनम् । शूलं पाशसुदर्शनौ च दधतीं हस्तैः प्रवालप्रभैः सेवे सौरिभमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥ उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम् । हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् ॥ कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुलेखां शङ्खं चक्रं कृपाणीं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम् । सिंहस्कन्दाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं ध्यायेद्दुर्गां

जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥ १३० ॥
घंटाशूलहलानि शङ्खमुसले चक्रं धनुः सायकं हस्ताब्जैर्दधतीं
घनान्तविलसच्छीतांशुतुल्यप्रभाम्। गौरीदेहसमुद्भवां त्रिजगता-
माधारभूतां महापूर्वामत्र सरस्वतीमनु भजे सुम्भादिदैत्यार्दि-
नीम् ॥ सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः शङ्खं चक्र-
धनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता। आमुक्ताङ्गदहारकङ्क-
णरणत्काञ्चीक्वणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लस-
त्कुंण्डला ॥ ध्यायेयं रत्नपीठे शुककलपठितं शृण्वतीं श्यामलाङ्गीं
न्यस्तैकाङ्घ्रिं सरोजे शशिशकलधरां वल्लकीं वादयन्तीम्। कल्हा-
राबद्धमालानियमितविलसच्चूलिकां रक्तवस्त्रां मातङ्गीं शङ्खपात्रां
मधुमदविवशां चित्रकोद्भासिभालाम् ॥ नागाधीश्वरविष्टरां
फणिफणोत्तंसोरुरत्नावलीभास्वद्देहलतां विभाकरनिभां नेत्रत्रयो-
द्भासिताम्। मालाकुम्भकपालनीरजकरां चन्द्रार्धमौलिं परां
सर्वेशेश्वरभैरवाङ्कनिलयां पद्मावतीं चिन्तयेत् ॥ बन्धूककाञ्चन-
निभं रुचिराक्षमालां पाशाङ्कुशौ च वरदं निजबाहुदण्डैः।
बिभ्राणमिन्दुशकलाभरणं त्रिनेत्रमर्धाम्बिकेशमनिशं वपुराश्र-
यामि ॥ उत्तप्तहेमरुचिरां रविचन्द्रवह्निनेत्रां धनुःशरयुताङ्कुश-
कामपाशान्। रम्यैर्भुजैश्च दधतीं शिवशक्तिरूपां कामेश्वरीं
हृदि भजामि धृतेन्दुलेखाम् ॥ उद्यद्दिनद्युतिमिन्दुकिरीटां तुङ्ग-
कुचां नयनत्रययुक्ताम्। स्मेरमुखीं वरदाङ्कुशपाशाऽभीतिकरां
प्रभजे भुवनेशीम्। विद्युद्दामसमप्रभां मृगपतिस्कन्दस्थितां
भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं बिभ्राणामनला-
त्मिकां शशिधरां दुर्गां त्रिनेत्रां स्मरे ॥ बालार्कमण्डलाभासंचतु-

र्याहुं त्रिलोचनाम् । पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां भजे ॥
पद्मासनस्थां करपङ्कजाभ्यां रक्तोत्पले सन्दधतीं त्रिनेत्राम् ।
सम्बिभ्रतीमाभरणानि रक्तां पद्मावतीं पद्ममुखीं नमामि॥१४०॥
ये भावयन्त्यमृतवाहिभिरंशुजालैराप्यायमानभुवनाममृतेश्वरीं
त्वाम् । ते लङ्घयन्ति ननु मातरलङ्घनीयां ब्रह्मादिभिः सुरव-
रैरपि कालकक्ष्याम् ॥ शर्वाणि सर्वजनवन्दितपादपद्मे पद्मच्छ-
दच्छविविडम्बितनेत्रलक्ष्मि । निष्पापमूर्तिजनमानसराजहंसि
हंसि त्वमापदमनेकविधां जनस्य ॥ तव न का किल स्तुतिरम्बिके
सकलशब्दमयी किल ते तनुः । निखिलमूर्तिषु मे भवदन्वयो
मनसिजासु बहिष्प्रसरासु च ॥ इति विचिन्त्य शिवे शमिता-
ऽशिवे जगति जातमयत्नवशादिदम् । स्तुतिजपार्चनचिन्तन-
वर्जिता न खलु काचन कालकलास्ति मे ॥ रोगानशेषान-
पहंसि तुष्टा पुष्णासि कामान्सकलानभीष्टान् । त्वामाश्रितानां
न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥ पूर्णेन्दोः
शकलैरिवातिबहुलैः पीयूषपूरैरिव क्षीराब्धेर्लहरीभरैरिव सुधा-
पङ्कस्य पिण्डैरिव । प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये
श्रद्धया चित्तान्तर्निहितार्तितापविपदस्ते सम्पदं बिभ्रति ॥
कृपापाङ्गालोकं वितर सहसा साधुचरिते न ते युक्तोपेक्षा मयि
शरणदीक्षामुपगते । न चेदिष्टं दद्यादनुपदमहो कल्पलतिका
विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ॥ अयः स्पर्शे लग्नं
सपदि लभते हेमपदवीं यथा रथ्यापाथः शुचि भवति गाङ्गौघ-
मिलितम् । तथा तत्तत्पापैरतिमलिनमन्तर्यदि मम त्वयि प्रेम्णा-
सक्तं कथमिव न जायेत विमलम् ॥ आलम्बाज्जननि त्वदीय-
चरणाम्भोजद्वयस्यासकृद्दर्पेणालघुना मया सुरगणा व्रीडास्पदं

प्रापिता: । औदासीन्यमथो समाश्रयसि चेद्दैवाहते त्वं मयि केषां वा वदनं कथं वद शिवे पश्याम्यनालम्बनः ॥ तत्त्वातत्त्व-विशारदे भगवति श्रीशारदे शारदे मातर्भारति तत्तमोऽपनय मेऽमेयप्रमासिद्धिदे । संशक्यं विनियन्तुमल्पमपि यन्नो पुष्पद-न्तादिभिर्येनायं क्षपितान्तरायनिचयो निःश्रेयसं प्राप्नुयाम् ॥ १५० ॥ यदुन्मीलनयुक्त्यैव विश्वमुन्मीलति क्षणात् । ताम-भीष्टफलोदारकल्पवल्लीं शिवां भजे ॥ रक्षणीयं वर्धनीयं बहु-मूल्यमिदं प्रभो । संसारदुर्गतिहरं भवद्भक्तिमहाधनम् ॥ प्रथमं शैलपुत्रीति द्वितीयं ब्रह्मचारिणी । तृतीयं चण्डघण्डीति कूष्मा-ण्डेति चतुर्थकम् ॥ पञ्चमं स्कन्दमातेति षष्ठं कात्यायिनीति च । सप्तमं कालरात्रीति महागौरीति चाष्टमम् । नवमं सिद्धि-दात्रीति नव दुर्गाः प्रकीर्तिताः ॥ १५४ ॥ सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो दुर्गा प्रचोदयात् ॥ ३ ॥ श्रीईश्वर उवाच ॥ महाविद्या जगन्माता ॥ इत्यादि भवानीसहस्रनाम प्रारम्भः ॥ इतिश्रीरत्नमालाख्या देवीस्तुतिः ॥ अथ शारिका-स्तुतिः ॥ बीजैः सप्तभिरुज्ज्वलाकृतिरसौ या सप्तसप्तिद्युतिः सप्तर्षिप्रणताङ्घ्रिपङ्कजयुगा या सप्तलोकार्तिहृत् । काश्मीरप्रवरे-शमध्यनगरे प्रद्युम्नपीठे स्थिता देवीसप्तकसंयुता भगवती श्रीशा-रिका पातु नः ॥ जय भगवति विन्ध्यवासिनि कैलासवासिनि श्मशानवासिनि हुङ्कारिणि कालायनि कात्यायनि हिमगिरितनये कुमारमातः गोविन्दभगिनि शितिकण्ठकण्ठाभरणे अष्टादशभुजे भुजङ्गवलयमण्डिते केयूरहाराभरणेऽजेय-खड्गत्रिशूलडमरुमुद्ग-रचषककलशशरचापवराऽभयपाशपुस्तककपालखट्वाङ्गगदामुसु-लतोमरचक्रहस्ते कृपापरे प्रभूतविविधायुधे चण्डिके चण्डघण्टे

किरातवेशे ब्रह्माणि रुद्राणि नारायणि ब्रह्मचारिणि दिव्यतपोविधायिनि वेदमातः गायत्रि सावित्रि सरस्वति सर्वाधारे सर्वेश्वरि विश्वेश्वरि विश्वकर्त्रि समाधिविश्रान्तिमये चिन्मये चिन्तामणिस्वरूपे कैवल्ये शिवे निराश्रये निरुपाधिमये निरामयपदे ब्रह्मविष्णुमहेश्वरनमिते मोहिनि तोषिणि भयंकरनाशिनि दितिसुतप्रमथिनि काले कालकिंकरमथिनि कालाग्निशिखे कालरात्रि अजे नित्ये सिंहस्थे योगरते योगेश्वरनमिते भक्तजनवत्सले सुरप्रियकारिणि दुर्गे दुर्जये हिरण्ये शरण्ये कुरु मां दयाम् ॥ प्रद्युम्नशिखरासीनां मातृचक्रोपशोभिताम् । पीठेश्वरीं शिलारूपां शारिकां प्रणमाम्यहम् ॥ अमा माऽवतु कामा च चार्वङ्गी टङ्कधारिणी । तारा च पार्वती चैव यक्षिणी शारिकाष्टमी ॥ इति श्रीशारिकास्तोत्रम् ॥

अथ ब्राह्मीविद्या ॥ ॐ ॐ ॐ त्रिगुणपुरुष क्षेत्रचर मोहं भिन्धि रजस्तमसी भिन्धि प्राकृतपाशजालं सावरणं परिहर सत्वं गृहाण पुरुषोत्तमोसि सोमसूर्यानलप्रवरपरमधामन् ब्रह्मविष्णुमहेश्वरस्वरूप सृष्टिस्थितिसंहारकारक भ्रूमध्यनिलय तेजोसि धामासि अमृतात्मन् ॐतत्सत् हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं परंब्रह्मस्वरूप सर्वगत सर्वशक्ते सर्वेश्वर सर्वेन्द्रियग्रन्थिभेदं कुरु कुरु परमं पदं परामर्शय परमार्गं ब्रह्मद्वारं सर कुमार्गं जहि षट्कोशिकं शरीरं त्यज शुद्धोऽसि बुद्धोसि विमलोसि क्षमस्व स्वपदमास्वादयाऽस्वादय स्वाहा ॥ इति ब्राह्मीविद्या ॥

---

## अथ लघुस्तवः प्रथमः ॥

नमस्त्रिपुरसुन्दर्यै ॥ लघुस्तवः प्रथमोयमारभ्यते ॥ ॐ ऐन्द्रस्येव शरासनस्य दधती मध्येललाटं प्रभां, शौक्लीं कान्ति-मनुष्णगोरिव शिरस्यातन्वती सर्वतः । एषाऽसौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाऽहःस्थिता, छिन्द्यान्नः सहसा पदैस्त्रि-भिरघं ज्योतिर्मयी वाङ्मयी ॥ १ ॥ या मात्रा त्रपुसीलतातनुल-सत्तन्तूत्थितिस्पर्धिनी, वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् । शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धो-द्यमा, ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥२॥ दृष्ट्वा संभ्रमकारि वस्तु सहसा ऐऐइतिव्याहृतं, येनाऽऽकूतवशा-दऽपीह वरदे! बिन्दुं विनाप्यक्षरम् । तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे, वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥ ३ ॥ यन्नित्ये! तव कामराजमपरं मन्त्राक्षरं निष्कलं तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि । आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः, प्रारम्भे प्रणवास्पद-प्रणयितां नीत्वोच्चरन्ति स्फुटम् ॥४॥ यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैस्तार्तीयीकमहं नमामि मनसा त्वद्बीजमिन्दुप्रभम् । अस्त्वौर्वोपि सरस्वतीमऽनुगतो जाड्याम्बुविच्छित्तये गोशब्दो गिरि वर्तते स नियतं योगं विना सिद्धिदः ॥ ५ ॥ एकैकं तव देवि बीजमनघं सव्यञ्जनाऽव्यञ्जनं कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात् । यं यं काममपेक्ष्य येन विधिना केनापि

वा चिन्तितं, जप्तं वा सफलीकरोति सहसा तं तं समस्तं नृणाम् ॥६॥ वामे पुस्तकधारिणीमऽभयदां साक्षस्रजं दक्षिणे, भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् । उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं ये त्वामऽम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥७॥ ये त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां, सिञ्चन्तीमऽमृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम् । अश्रान्तं विकटस्फुटाक्षरपदा निर्याति वक्राम्बुजात्तेषां भारति ! भारती सुरसरित्कल्लोललोलोर्मिवत् ॥८॥ ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमामुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव । पश्यन्ति क्षणमऽप्यऽनन्यमनसस्तेषामऽनङ्गज्वरक्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति स्फुटम् ॥ ९ ॥ चञ्चत्काञ्चनकुण्डलाङ्गदधरामाऽऽबद्धकाञ्चीस्रजं ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थितिम् । तेषां वेश्मसु विभ्रमादऽहरहः स्फारीभवन्त्यश्चिरं माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ते श्रियः ॥ १० ॥ आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं, बन्धूककुसुमारुणाम्बरधरां प्रेतासनाध्यासिनीम् । त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामाऽपीनतुङ्गस्तनीं मध्ये निम्नबलित्रयाङ्कितततनुं त्वद्रूपसंवित्तये ॥ ११ ॥ जातोऽप्यऽल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः । यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभवद्देवि ! त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ॥ १२ ॥ चण्डि ! त्वच्चरणाम्बुजार्चनविधौ बिल्वीदलोल्लुण्ठनत्रुट्यत्कण्टककोटिभिः परिचयं

येषां न जग्मुः कराः । ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्स-मत्स्याङ्कितैर्जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः ॥ १३ ॥ विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वा-सवैस्त्वां देवि ! त्रिपुरे ! पराऽपरमयीं सन्तर्प्य पूजाविधौ । यां यां प्रार्थयते मनः स्थिरधियां तेषां त एव ध्रुवं तां तां सिद्धिम-वाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४ ॥ शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे, त्वत्तः केशववासवप्रभृतयोऽ-प्याविर्भवन्ति स्फुटम् । लीयन्ते खलु यत्र कल्पविरमे ब्रह्मा-दयस्तेऽप्यमी सा त्वं काचिदऽचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५ ॥ देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरास्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः । यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं तत्सर्वं त्रिपुरीतिनाम भगवत्यन्वेति ते तत्त्वतः ॥ १६ ॥ लक्ष्मीं राजकुले जयां रणभुवि क्षेमङ्करीमध्वनि क्रव्यादद्विपसर्पभाजि शवरीं कान्तारदुर्गे गिरौ । भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे ॥ १७ ॥ माया कुण्डलिनी क्रिया मधुमती काली कला मा-लिनी मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी । शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी ह्रींकारी त्रिपुरा पराऽपरमयी माता कुमारीत्यसि ॥ १८ ॥ आईप-ल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः काद्यैः क्षान्तगतैः स्वरा-दिभिरथो क्षान्तैश्च तैः सस्वरैः । नामानि त्रिपुरे ! भवन्ति खलु यान्यत्यन्तगुह्यानि ते तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः

परेभ्यो नमः ॥ १९ ॥ बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं भारत्यास्त्रिपुरेत्यनन्यमनसो यत्राद्यवृत्ते स्फुटम् । एकद्वित्रिपदक्रमेण कथितस्तत्पादसंख्याक्षरैर्मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥ २० ॥ सावद्यं निरवद्यमस्तु यदि वा किंवानया चिन्तया नूनं स्तोत्रमिदं पठिष्यति नरो यस्यास्ति भक्तिस्त्वयि । सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठात्त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि स्फुटम् ॥ २१ ॥ इति श्रीपञ्चस्तव्यां लघुस्तवः प्रथमः समाप्तः ॥

---

## अथ चर्चस्तवो द्वितीयः ॥

नमस्त्रिपुरसुन्दर्यै ॥ आनन्दसुन्दरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु मे विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १ ॥ सौन्दर्यविभ्रमभुवो भुवनाधिपत्यसम्पत्तिकल्पतरवस्त्रिपुरे ! जयन्ति । एते कवित्वकुमुदप्रकरावबोधपूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः ॥ २ ॥ देवि स्तुतिव्यतिकरे कृतबुद्धयस्ते वाचस्पतिप्रभृतयोपि जडीभवन्ति । तस्मान्निसर्गजडिमा कतमोऽहमत्र स्तोत्रं तव त्रिपुरतापनपत्नि ! कर्तुम् ॥ ३ ॥ मातस्तथापि भवतीं भवतीव्रतापविच्छित्तये स्तुतिमहार्णवकर्णधारः । स्तोतुं भवानि स भवच्चरणारविन्दभक्तिग्रहः किमपि मां मुखरीकरोति ॥४॥ सूते जगन्ति भवती भवती बिभर्ति जागर्ति तत्क्षयकृते भवती भवानि । मोहं भिनत्ति भवती भवती रुणद्धि लीलायितं जयति चित्रमिदं

भवत्याः ॥ ५ ॥ यस्मिन्मनागऽपि नवाम्बुजपत्रगौरि! गौरि!
प्रसादमधुरां दृशमाऽदधासि । तस्मिन्निरन्तरमऽनङ्गशरावकीर्ण-
सीमन्तिनीनयनसन्ततयः पतन्ति ॥ ६ ॥ पृथ्वीभुजोऽप्युदयन-
प्रवरस्य तस्य विद्याधरप्रणतिचुम्बितपादपीठः । यच्चक्रवर्तिपद-
वीप्रणयः स एष त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ ७ ॥
कल्पद्रुमप्रसवकल्पितचित्रपूजामुद्दीपितप्रियतमामदरक्तगीतिम् ।
नित्यं भवानि भवतीमुपवीणयन्ति विद्याधराः कनकशैलगुहा-
गृहेषु ॥ ८ ॥ लक्ष्मीवशीकरणकर्मणि कामिनीनामाऽकर्षणव्य-
तिकरेषु च सिद्धमन्त्रः । नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो देवि!
त्वदऽङ्घ्रिजनितो जयति प्रसादः ॥ ९ ॥ देवि त्वदऽङ्घ्रिनखर-
त्नभुवो मयूखाः प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति । सेवानतिव्य-
तिकरे सुरसुन्दरीणां सीमन्तसीम्नि कुसुमस्तवकायितं यैः ॥१०॥
मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं मध्येललाटममरायुधरश्मि-
चित्रम् । हृच्चक्रचुम्बिहुतभुक्कणिकानुरूपं ज्योतिर्यदेतदिदमम्ब!
तव स्वरूपम् ॥ ११ ॥ रूपं तव स्फुरितचन्द्रमरीचिगौरमाऽ-
लोकते शिरसि वागधिदैवतं यः । निःसीमसूक्तिरचनामृतनि-
र्भरस्य तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ १२ ॥ सिन्दूर-
पांसुपटलच्छुरितामिव द्यां त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ।
यः पश्यति क्षणमपि त्रिपुरे! विहाय व्रीडां मृडानि! सुदृश-
स्तमनुद्रवन्ति ॥ १३ ॥ मातर्मुहूर्तमपि यः स्मरति स्वरूपं लाक्षा-
रसप्रसरतन्तुनिभं भवत्याः । ध्यायंत्यनन्यमनसस्तमनङ्गतप्ताः
प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्याः ॥ १४ ॥ योयं चकास्ति
गगनार्णवरत्नमिन्दुर्योयं सुराऽसुरगुरुः पुरुषः पुराणः। यद्वाममर्ध-

मिदमऽन्धकसूदनस्य देवि! त्वमेव तदितिप्रतिपादयन्ति ॥१५॥ इच्छानुरूपमनुरूपगुणप्रकर्षं सङ्कर्षणि ! त्वमनुसृत्य यदा बिभर्षि । जायेत स त्रिभुवनैकगुरुस्तदानीं देवः शिवोपि भुवनत्रयसूत्रधारः ॥ १६ ॥ रुद्राणि! विद्रुममयीं प्रतिमामिव त्वां ये चिन्तयन्त्यरुणकान्तिमऽनन्यरूपाम् । तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते कण्ठाऽवसक्तमृदुबाहुलतास्तरुण्यः ॥ १७ ॥ त्वद्रूपमुल्लसितदाडिमपुष्परक्तमुद्भावयेन्मदनदैवतमक्षरं यः । तं रूपहीनमपि मन्मथनिर्विशेषमालोकयन्त्युरुनितम्बभरास्तरुण्यः ॥ १८ ॥ ध्याताऽसि हैमवति! येन हिमांशुरश्मिमालाऽमलद्युतिरऽकल्मषमानसेन । तस्याऽविलम्बमऽनवद्यमऽनल्पकल्पमऽल्पैर्दिनैः सृजसि सुन्दरि! वाग्विलासम् ॥ १९ ॥ आधारमारुतनिरोधवशेन येषां सिन्दूररञ्जितसरोजगुणानुकारि । तीव्रं हृदि स्फुरति देवि! वपुस्त्वदीयं ध्यायन्ति तानिह समीहितसिद्धसाध्याः ॥ २० ॥ त्वामैन्दवीमिव कलामनुभालदेशमुद्भासिताम्बरतलामऽवलोकयन्तः । सद्यो भवानि! सुधियः कवयो भवन्ति त्वं भावनाहितधियां कुलकामधेनुः ॥ २१ ॥ त्वां व्यापिनीति सुमना इति कुण्डलीति त्वां कामिनीति कमलेति कलावतीति । त्वां मालिनीति ललितेत्यपराजितेति देवि! स्तुवन्ति विजयेति जयेत्युमेति ॥ २२ ॥ ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति रूपं तवाम्ब! नवयावकपङ्कपिङ्गम् । तेषां सदैव कुसुमायुधबाणभिन्नाऽऽवक्षःस्थला मृगदृशो वशगा भवन्ति ॥ २३ ॥ उत्तप्तहेमरुचिरे! त्रिपुरे! पुनीहि चेतश्चिरन्तनमघौघवनं लुनीहि । कारागृहे निगडबन्धनपीडितस्य त्वत्संस्मृतौ

झटिति मे निगडास्त्रुट्यन्ते ॥ २४ ॥ शर्वाणि सर्वजनवन्दित-पादपद्मे पद्मच्छदच्छविविडम्बितनेत्रलक्ष्मि ! । निष्पापमूर्तिजन-मानसराजहंसि ! हंसि त्वमापदमऽनेकविधां जनस्य ॥ २५ ॥ त्वत्पादपङ्कजरजःप्रणिपातपूतैः पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः । क्षीरक्षपाकरदुकूलहिमावदाता कैरप्यवापि भुवनत्रि-तयेऽपि कीर्तिः ॥ २६ ॥ त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशो-स्त्वद्गुणग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि । त्वत्पा-दार्चनचातुरी करयुगे त्वत्कीर्तनं वाचि मे कुत्रापि त्वदुपासन-व्यसनिता मे देवि ! मा शाम्यतु ॥ २७ ॥ उद्दामकामपरमार्थ-सरोजषण्डचण्डद्युतिद्युतिमुपासितषट्प्रकाराम् । मोहद्विपेन्द्रकद-नोद्यतबोधसिंहलीलागुहां भगवतीं त्रिपुरां नमामि ॥ २८ ॥ गणेशवटुकस्तुता रतिसहायकामान्विता स्मरारिवरविष्टरा कुसु-मबाणबाणैर्युता । अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ २९ ॥ यः स्तोत्रमेत-दनुवासरमीश्वरायाः श्रेयस्करं पठति वा यदि वा शृणोति । तस्येप्सितं फलति राजभिरीड्यतेऽसौ जायेत स प्रियतमो हरिणेक्षणानाम् ॥ ३० ॥ ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मिस्कन्द-द्विपाननहुताशनवन्दितायै । वागीश्वरि ! त्रिभुवनेश्वरि ! विश्व-मातरन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥ ३१ ॥ इति श्रीपञ्चस्तव्यां चर्चस्तवो द्वितीयः समाप्तः ॥ ॥

---

## अथ तृतीयो घटस्तवः ॥ ३ ॥

ॐनमस्त्रिपुरसुन्दर्यै ॥ देवि त्र्यम्बकपत्नि पार्वति सति त्रैलोक्यमातः शिवे शर्वाणि त्रिपुरे मृडानि वरदे रुद्राणि कात्या-

यनि । भीमे भैरवि चण्डि शर्वरि कले ! कालक्षये शूलिनि त्वत्पादप्रणतानऽनन्यमनसः पर्याकुलान्पाहि नः ॥ १ ॥ उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्च्छा इव प्राप्तप्रौढमदा इवातिविरहग्रस्ता इवार्ता इव । ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एकाग्रतस्त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति वामभ्रुवः ॥ २ ॥ देवि त्वां सकृदेव यः प्रणमति क्षोणीभृतस्तं नमन्त्याजन्म स्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः । यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यः स्तौति स स्तूयते यस्त्वां ध्यायति तं स्मरार्तिविधुरा ध्यायन्ति वामभ्रुवः ॥ ३ ॥ ध्यायन्ति ये क्षणमपि त्रिपुरे हृदि त्वां लावण्ययौवनधनैरपि विप्रयुक्ताः । ते विस्फुरन्ति ललितायतलोचनानां चित्तैकभित्तिलिखितप्रतिमाः पुमांसः ॥ ४ ॥ एतं किंनु दृशा पिबाम्युत विशाम्यस्याङ्गमङ्गैर्निजैः, किंवामुं निगलाम्यनेन सहसा किंवैकतामाश्रये । तस्येत्थं विवशो विकल्पघटनाकूतेन योषिज्जनः किं तद्यन्न करोति देवि ! हृदये यस्य त्वमावर्तसे ॥ ५ ॥ विश्वव्यापिनि यद्वदीश्वर इति स्थाणावनन्याश्रयः शब्दः शक्तिरिति त्रिलोकजननि त्वय्येव तथ्यस्थितिः । इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं त्वद्भक्तानऽपि न क्षणोषि च रुषा तद्देवि चित्रं महत् ॥ ६ ॥ इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायां मनोहारिणीं पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम् । वर्षन्तीममृतं भवानि भवतीं ध्यायन्ति ये देहिनस्ते निर्मुक्तरुजो भवन्ति विपदः प्रोज्झन्ति तान्दूरतः ॥ ७ ॥ पूर्णेन्दोः शकलैरिवातिबहलैः पीयूषपूरैरिव क्षीराब्धेर्लहरीभरैरिव सुधापङ्कस्य

पिण्डैरिव । प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया चित्तान्तर्निहतार्तितापविपदस्ते सम्पदं बिभ्रति ॥ ८ ॥ ये संस्मरन्ति तरलां सहसोल्लसन्तीं त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम् । रागार्णवे बहलरागिणि मज्जयन्तीं कृत्स्नं जगद्दधति चेतसि तान्मृगाक्ष्यः ॥ ९ ॥ लाक्षारसस्नपितपङ्कजतन्तुतन्वीमऽन्तः स्मरत्यऽनुदिनं भवतीं भवानि । यस्तं स्मरप्रतिममऽप्रतिमस्वरूपा नेत्रोत्पलैर्मृगदृशो भृशमऽर्चयन्ति ॥ १० ॥ स्तुमस्त्वां वाचमऽव्यक्तां हिमकुन्देन्दुरोचिषम् । कदम्बमालां बिभ्राणामाऽऽपादतललम्बिनीम् ॥ ११ ॥ मूर्ध्नीन्दोः सितपङ्कजासनगतां प्रालेयपाण्डुत्विषं वर्षन्तीमऽमृतं सरोरुहभुवो वक्त्रेऽपि रन्ध्रेऽपि च । अच्छिन्ना च मनोहरा च ललिता चाऽतिप्रसन्नाऽपि च त्वामेव स्मरतां स्मरारिदयिते ! वाक्सर्वतो वल्गति ॥ १२ ॥ ददातीष्टान्भोगान्क्षपयति रिपून्हन्ति विपदो दहत्याधीन्व्याधीञ्छमयति सुखानि प्रतनुते । हठादऽन्तर्दुःखं दलयति पिनष्टीष्टविरहं सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ॥ १३ ॥ यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तयत्यन्वेति प्रतिपद्यते कलयति स्तौत्याश्रयत्यर्चति । यश्च त्र्यम्बकवल्लभे तव गुणानाऽकर्णयत्यादरात्तस्य श्रीर्न गृहादपैति विजयस्तस्याग्रतो धावति ॥ १४ ॥ किं किं दुःखं दनुजदलिनि ! क्षीयते न स्मृतायां का का कीर्तिः कुलकमलिनि ! ख्याप्यते न स्तुतायाम् । का का सिद्धिः सुरवरनुते ! प्राप्यते नार्चितायां कं कं योगं त्वयि न चिन्वते चित्तमालम्बितायाम् ॥ १५ ॥ ये देवि ! दुर्धरकृतान्तमुखान्तरस्था ये कालि !

कालघनपाशनितान्तबद्धाः । ये चण्डि ! चण्डगुरुकल्मषसिन्धुमग्नास्तान्पासि मोचयसि तारयसि स्मृतैव ॥ १६ ॥ लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति । यानि प्रणाममिलितानि नृणां ललाटे लुम्पंति दैवलिखितानि दुरक्षराणि ॥ १७ ॥ रे मूढाः किमयं वृथैव तपसा कायः परिक्लिश्यते यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तीक्रियन्ते गृहाः । भक्तिश्चेदऽविनाशिनी भगवती पादद्वयी सेव्यतामुन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥ १८ ॥ याचे न कंचन न कंचन वञ्चयामि सेवे न कंचन निरस्तसमस्तदैन्यः । श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्रीर्देवी हृदि स्फुरति मे कुलकामधेनुः ॥ १९ ॥ शब्दब्रह्ममयि ! स्वच्छे देवि त्रिपुरसुन्दरि । यथाशक्ति जपं पूजां गृहाण परमेश्वरि ॥ २० ॥ नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः । अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ २१ ॥ दर्शनात्पापशमनी जपान्मृत्युविनाशिनी । पूजिता दुःखदौर्भाग्यहरा त्रिपुरसुन्दरी ॥ २२ ॥ नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् । भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ २३ ॥ मंत्रहीनं क्रियाहीनं विधिहीनं च यद्गतम् । त्वया तत्क्षम्यतां देवि ! कृपया परमेश्वरि ॥२४॥ इति पञ्चस्तव्यांघटस्तवस्तृतीयः ॥

---

## अथ पञ्चस्तव्यामऽम्बस्तवश्चतुर्थः ।

ॐ यामाऽऽमनन्ति मुनयः प्रकृतिं पुराणीं विद्येति यां श्रुतिरहस्यविदो वदन्ति । तामऽर्धपल्लवितशङ्कररूपमुद्रां देवीमऽ-

नन्यशरणः शरणं प्रपद्ये ॥ १ ॥ अम्ब ! स्तवेषु तव तावदऽ-
कर्तृकाणि कुण्ठीभवन्ति वचसामऽपि गुम्फनानि । डिम्बस्य
मे स्तुतिरसावऽसमञ्जसाऽपि वात्सल्यनिघ्नहृदयां भवतीं धिनोति
॥ २ ॥ व्योमेति बिन्दुरिति नाद इतीन्दुरेखारूपेति वाग्भवत-
नूरिति मातृकेति । निःष्यन्दमानसुखबोधसुधास्वरूपा विद्योतसे
मनसि भाग्यवतां जनानाम् ॥ ३ ॥ आविर्भवत्पुलकसन्ततिभिः
शरीरैर्निःष्यन्दमानसलिलैर्नयनैश्च नित्यम् । वाग्भिश्च गद्गदपदा-
भिरुपासते ये पादौ तवाम्ब ! हृदयेषु त एव धन्याः ॥ ४ ॥
वक्त्रं यदुद्यतमऽभिष्टुतये भवत्यास्तुभ्यं नमो यदपि देवि ! शिरः
करोति । चेतश्च यत्त्वयि परायणमम्ब तानि कस्यापि कैरपि
भवन्ति तपोविशेषैः ॥ ५ ॥ मूलालवालकुहरादुदिता भवानि
निर्भिद्य षट्सरसिजानि तडिल्लतेव । भूयोऽपि तत्र विशसि
ध्रुवमण्डलेन्दुनिःष्यन्दमानपरमामृततोयरूपा ॥ ६ ॥ दग्धं यदा
मदनमेकमऽनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयांचकार । धत्ते
तदाप्रभृति देवि ललाटनेत्रं सत्यं ह्रियेव मुकुलीकृतमिन्दुमौलिः
॥ ७ ॥ अज्ञातसम्भवमनाकलितान्ववायं भिक्षुं कपालिनमवास-
समद्वितीयम् । पूर्वं करग्रहणमङ्गलतो भवत्याः शम्भुं क एव
बुबुधे गिरिराजकन्ये ॥ ८ ॥ चर्माम्बरं च शवभस्मविलेपनं
च भिक्षाटनं च नटनं च परेतभूमौ । वेतालसंहतिपरिग्रहता च
शम्भोः शोभां बिभर्ति गिरिजे तव साहचर्यात् ॥ ९ ॥ कल्पो-
पसंहरणकेलिषु पण्डितानि चण्डानि खण्डपरशोरपि ताण्डवानि ।
आलोकनेन तव कोमलितानि मातर्लास्यात्मना परिणमन्ति
जगद्विभूत्यै ॥ १० ॥ जन्तोरपश्चिमतनोः सति कर्मसाम्ये

निःशेषपाशपटलच्छिदुरा निमेषात् । कल्याणि दैशिककटाक्ष-
समाश्रयेण कारुण्यतो भवसि शाम्भववेददीक्षा ॥ ११ ॥
मुक्ताविभूषणवती नवविद्रुमाभा यच्चेतसि स्फुरसि तारकितेव
सन्ध्या । एकः स एव भुवनत्रयसुन्दरीणां कन्दर्पतां व्रजति
पञ्चशरीं विनापि ॥ १२ ॥ ये भावयन्त्यमृतवाहिभिरंशुजालै-
राप्यायमानभुवनाममृतेश्वरीं त्वाम् । ते लङ्घयन्ति ननु मातरऽल-
ङ्घनीयां ब्रह्मादिभिः सुरवरैरपि कालकक्ष्याम् ॥ १३ ॥ यः
स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां व्याख्यासमुद्यतकरां शरदि-
न्दुशुभ्राम् । पद्मासनां च हृदये भवतीमुपास्ते मातः स विश्वक-
वितार्किकचक्रवर्ती ॥ १४ ॥ बर्हावतंसयुतबर्बरकेशपाशां गुञ्जा-
वलीकृतघनस्तनहारशोभाम् । श्यामां प्रवालवदनां सुकुमारहस्तां
त्वामेव नौमि शबरीं शबरस्य जायाम् ॥ १५ ॥ अर्धेन किं
नवलताललितेन मुग्धे क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनस्य परिहासवचांसि मन्ये मन्दस्मितेन तव देवि जडी-
भवन्ति ॥ १६ ॥ ब्रह्माण्डबुद्बुदकदम्बकसंकुलोयं मायोदधि-
र्विविधदुःखतरङ्गमालः । आश्चर्यमम्ब झटिति प्रलयं प्रयाति
त्वद्ध्यानसन्ततिमहावडवामुखाग्नौ ॥ १७ ॥ दाक्षायणीति कुटि-
लेति गुहारणीति कात्यायनीति कमलेति कलावतीति ।
एका सती भगवती परमार्थतोऽपि सन्दृश्यसे बहुविधा ननु
नर्तकीव ॥ १८ ॥ आनन्दलक्षणमनाहतनाम्नि देशे नादात्मना
परिणतं तव रूपमीशे । प्रत्यङ्मुखेन मनसा परिचीयमानं शंसन्ति
नेत्रसलिलैः पुलकैश्च धन्याः ॥ १९ ॥ त्वं चन्द्रिका शशिनि
तिग्मरुचौ रुचिस्त्वं त्वं चेतनासि पुरुषे पवने बलं त्वम् । त्वं

स्वादुतासि सलिले शिखिनि त्वमूष्मा निःसारमेव निखिलं त्वदृते यदि स्यात् ॥ २० ॥ ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं सूते पयांसि यदहिर्धरणीं च धत्ते । यद्वाति वायुरनलो यदुदर्चिरास्ते तत्सर्वमम्ब तव केवलमाज्ञयेव ॥ २१ ॥ सङ्कोचमिच्छसि यदा गिरिजे तदानीं वाक्तर्कयोस्त्वमसि भूमिरनामरूपा । यद्वा विकासमुपयाति यदा तदानीं त्वन्नामरूपगणनाः सुकरीभवन्ति ॥ २२ ॥ भोगाय देवि भवतीं कृतिनः प्रणम्य भ्रूकिङ्करीकृतसरोजगृहासहस्राः । चिन्तामणिप्रचयकल्पितकेलिशैले कल्पद्रुमोपवन एव चिरं रमन्ते ॥ २३ ॥ हन्तुं त्वमेव भवसि त्वदधीनमीशे संसारतापमखिलं दयया पशूनाम् । वैकर्तनी किरणसंहतिरेव शक्ता घर्मं निजं शमयितुं निजयैव वृष्ट्या ॥ २४ ॥ शक्तिः शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमासनजालमिच्छा । ऐश्वर्यमायतनमावरणानि च त्वं किं तन्न यद्भवसि देवि शशाङ्कमौलेः ॥ २५ ॥ भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्याऽनले मरुति शान्तिरतीतशान्तिः । व्योम्नीति याः किल कलाः कलयन्ति विश्वं तासां विदूरतरमम्ब पदं त्वदीयम् ॥ २६ ॥ यावत्पदं पदसरोजयुगं त्वदीयं नाङ्गीकरोति हृदयेषु जगच्छरण्ये । तावद्विकल्पजटिलाः कुटिलप्रकारास्तर्कग्रहाः समयिनां प्रलयं न यान्ति ॥ २७ ॥ यद्देवयानपितृयानविहारमेके कृत्वा मनः करणमण्डलसार्वभौमम् । याने निवेश्य तव कारणपञ्चकस्य पर्वाणि पार्वति नयन्ति निजासनत्वम् ॥ २८ ॥ स्थूलासु मूर्तिषु महीप्रमुखासु मूर्तेः कस्याश्चनापि तव वैभवमम्ब यस्याः । पत्या गिरामपि न शक्यत एव वक्तुं सासि स्तुता

किल मयेति तितिक्षितव्यम् ॥ २९ ॥ कालाग्निकोटिरुचिमम्ब षडध्वशुद्धावाप्लावनेषु भवतीममृतौघवृष्टिम् । श्यामां घनस्तनतटां सकलीकृतौ च ध्यायन्त एव जगतां गुरवो भवन्ति ॥३०॥ विद्यां परां कतिचिदम्बरमम्ब केचिदानन्दमेव कतिचित्कतिचिच्च मायाम् । त्वां विश्वमाहुरपरे वयमामनाम साक्षादपारकरुणां गुरुमूर्तिमेव ॥ ३१ ॥ कुवलयदलनीलं वर्बरस्निग्धकेशं पृथुतरकुचभाराक्रान्तकान्तावलग्नम् । किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नःसकलभुवनमातः सन्ततं सन्निधत्ताम् ॥ ३२ ॥ इति श्रीपञ्चस्तव्यां चतुर्थोऽम्बस्तवः ॥

---

## अथ सकलजननीस्तवः पञ्चमः ॥

ॐअजानन्तो यान्ति क्षयमवशमन्योन्यकलहैरमी मायाग्रन्थौ तव परिलुठन्तः समयिनः । जगन्मातर्जन्मज्वरभयतमःकौमुदि ! वयं नमस्ते कुर्वाणाः शरणमुपयामो भगवतीम् ॥ १ ॥ वचस्तर्कागम्यस्वरसपरमानन्दविभवप्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे । शिवस्याराध्याय स्तनभरविनम्राय सततं नमो यस्मै कस्मैचन भवतु मुग्धाय महसे ॥ २ ॥ लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिकामुदञ्चद्धर्माम्भःकणगुणितनीलोत्पलरुचम् । शिवं पार्थत्राणप्रवणमृगयाकारगुणितं शिवामन्वग्यान्तीं शवरमहमन्वेमि शवरीम् ॥३॥ मिथः केशाकेशिप्रधननिधनास्तर्कघटना बहुश्रद्धाभक्तिप्रणयविषयाश्वासविधयः । प्रसीद प्रत्यक्षीभव गिरिसुते देहि शरणं निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ॥ ४ ॥ शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं कदा केन केति

क्वचिदपि न कश्चित्कलयति। अमुष्मिन्विश्वासं विजहिहि ममाह्वाय वपुषि प्रपद्येथाश्चेतः सकलजननीमेव शरणम् ॥ ५ ॥ अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी शिवस्यासीर्यत्त्वं परिणयविधौ देवि! गृहिणी। सवित्री भूतानामपि यदुदभूः शैलतनया तदेतत्संसारप्रणयनमहानाटकसुखम् ॥ ६ ॥ ब्रुवन्त्येके तत्त्वं भगवति सदन्ये विदुरसत्परे मातः प्राहुस्तव सदसदन्ये सुकवयः। परे नैतत्सर्वं समभिदधते देवि सुधियस्तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ॥ ७ ॥ तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा। किमप्यष्टात्रिंशत्किरणसकलीभूतमनिशं भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८ ॥ चतुष्पत्रान्तःषड्दलभगपुटान्तस्त्रिवलयस्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतियुते। षडश्रं भित्त्वादौ दशदलमथ द्वादशदशं कलाश्रं च द्व्यश्रं गतवति नमस्ते गिरिसुते ॥ ९ ॥ कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः परे तत्सम्भेदं समभिदधते कौलमपरे। चतुर्णामप्येषामुपरि किमपि प्राहुरपरे महामाये तत्त्वं तव कथममी निश्चिनुमहे ॥१०॥ षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम्। वितन्वानः शैवं किमपि वपुरिन्दीवररुचिः कुचाभ्यामानम्रः शिवपुरुषकारो विजयते ॥ ११ ॥ प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं प्रविश्यैतद्द्वन्द्वं रविशशिसमाख्यं कवलयन्। प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः प्रसादात्ते जन्तुः शिवमकुलमम्ब! प्रविशति ॥ १२ ॥ प्रियङ्गुश्यामाङ्गीमरुणतरवासःकिसलयां समुन्मीलन्मुक्ताफल-

बहुलनेपथ्यकुसुमाम् । स्तनद्वन्द्वस्फारस्तवकनमितां कल्पलतिकां सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ॥ १३ ॥ षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलैश्चलन्मुद्राफेनैर्बहुविधलसद्दैवतझषैः । क्रमस्रोतोभिस्त्वं वहसि परनादामृतनदी भवानि प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥ १४ ॥ महीपाथोवह्निश्वसनवियदात्मेन्दुरविभिर्वपुर्भिर्ग्रस्तांशैरपि तव कियानम्ब महिमा । अमून्यालोक्यन्ते भगवति ? न कुत्राप्यणुतरामवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥ १५ ॥ मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् । कटाक्षश्चेदत्र क्वचन तव मातः करुणया शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ १६ ॥ कलां प्रज्ञामाद्यां समयमनुभूतिं समरसां गुरुं पारम्पर्यं विनयमुपदेशं शिवकथाम् । प्रमाणं निर्वाणं परममनुभूतिं परगुहां विधिं विद्यामाहुः सकलजननीमेव मुनयः ॥ १७ ॥ प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे ततस्तत्त्वे चाष्टध्वनिभिरनुपाधिन्युपरते । श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम् ॥ १८ ॥ परानन्दाकारां निरवधिशिवैश्वर्यवपुषं निराकारज्ञानप्रकृतिमनवच्छिन्नकरुणाम् । सवित्रीं भूतानां निरतिशयधामास्पदपदां भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १९ ॥ जगत्काये कृत्वा तमपि हृदये तच्च पुरुषे पुमांसं बिन्दुस्थं तमपि परनादाख्यगहने । तदेतज्ज्ञानाख्ये तदपि परमानन्दविभवे महाव्योमाकारे त्वदनुभवशीलो विजयते ॥२०॥ विधे विद्ये वेद्ये विविधसमये वेदजननि ? विचित्रे विश्वाद्ये

विनयसुलभे वेदगुलिके । शिवाज्ञे शीलस्थे शिवपदवदान्ये
शिवनिधे शिवे मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥२१॥
विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले हरिं शूलप्रोतं यदऽग-
मयदंसाभरणताम् । अलंचक्रे कण्ठं यदपि गरलेनाम्ब गिरिशः
शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम् ॥ २२ ॥ विरि-
ञ्च्याख्या मातः सृजसि हरिसंज्ञा त्वमवसि त्रिलोकीं रुद्राख्या
हरसि विदधासीश्वरदशाम् । भवन्ती सादाख्या शिवयसि च
पाशौघदलिनी त्वमेवैकाऽनेका भवसि कृतभेदैर्गिरिसुते ॥२३॥
मुनीनां चेतोभिः प्रमृदितकषायैरपि मनागऽशक्ये संस्प्रष्टुं
चकितचकितैरम्ब सततम् । श्रुतीनां मूर्धानः प्रकृतिकठिनाः
कोमलतरे कथं ते विन्दन्ते पदकिसलये पार्वति पदम् ॥२४॥
तडिद्वल्लीं नित्याममृतसरितं पाररहितां मलोत्तीर्णां ज्योत्स्नां
प्रकृतिमगुणग्रन्थिगहनाम् । गिरां दूरां विद्यामऽवनतकुचां
विश्वजननीमपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥२५॥
शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमिदं सुखं दुःखं चायं
कलयति पुमांश्चेतन इति । स्फुटं जानानोऽपि प्रभवति न
देही रहयितुं शरीराहंकारं तव समयबाह्यो गिरिसुते ॥ २६ ॥
पिता माता भ्राता सुहृदऽनुचरः सद्म गृहिणी वपुः पुत्रो मित्रं
धनमपि यदा मां विजहति । तदा मे भिन्दाना सपदि भय-
मोहान्धतमसां महाज्योत्स्ने मातर्भव करुणया सन्निधिकरी २७
सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः सदोषं तं हित्वा
तदनु गिरिराजस्य तनया । अनाद्यन्ता शम्भोरपृथगपि शक्ति-
र्भगवती विवादाज्जायासीत्यहह चरितं वेत्ति तव कः ॥ २८ ॥

कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः परं ब्रह्म क्षुद्रं तव नियतमाऽनन्दकणिका। शिवादिक्षित्यन्तं त्रिवलयतनोः सर्वमुदरे तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ॥२९॥ त्वया यो जानीते रचयति भवत्यैव सततं त्वयैवेच्छत्यम्ब ! त्वमसि निखिला यस्य तनवः। गतः साम्यं शम्भुर्वहति परमं व्योम भवती तथाप्येवं हित्वा विहरति शिवस्येति किमिदम् ॥ ३०॥ पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं परं स्थूलं सूक्ष्मं सकुलमकुलं गुह्यमगुह्यम्। दवीयो नेदीयः सदसदिति विश्वं भगवतीं सदा पश्यन्त्याज्ञां वहसि भुवनक्षोभजननीम् ॥ ३१ ॥ मयूखाः पूषणीव ज्वलन इव तद्दीप्तिकणिकाः पयोधौ कल्लोलप्रतिहतमहिम्नीव पृषतः। उदेत्योदेत्याम्ब त्वयि सह निजैस्तात्त्विककुलैर्भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः॥ ३२ ॥ विधुर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः स्वभावो जैनेन्द्रः सुगतमुनिराकाशमनिलः। शिवः शक्तिश्चेति श्रुतिविषयतां तामुपगतां विकल्पैरेभिस्त्वामऽभिदधति सन्तो भगवतीम् ॥ ३३ ॥ प्रविश्य स्वं मार्गं सहजदयया दैशिकदृशा षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम्। परानन्दाकारां सपदि शिवयन्तीमपि तनुं स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥ ३४ ॥ शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः। अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे ॥३५॥ असंख्यैः प्राचीनैर्जननि जननैः कर्मविलयाद्धते जन्मन्यन्तं गुरुवपुषमासाद्य गिरिशम्। अवाप्याज्ञां शैवीं क्रमतनुरपि त्वां

विदितवान्नयेयं त्वत्पूजास्तुतिविरचनेनैव दिवसान् ॥ ३६ ॥ यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् । तस्मिन्नऽन्तःकुचभरनतां कुण्डलीतः प्रवृत्तां श्यामाकारां सकलजननीं सन्ततं भावयामि ॥ ३७ ॥ भुवि पयसि कृशानौ मारुते खे शशाङ्के सवितरि यजमानेऽप्यष्टधा शक्तिरेका । वहति कुचभराभ्यां या विनम्रापि विश्वं सकलजननि सा त्वं पाहि मामित्यवश्यम् ॥ ३८ ॥ इति पञ्चस्तव्यां सकलजननीस्तवः पञ्चमः ॥ समाप्ता चेयं पञ्चस्तवी ।

---

## अथ शङ्कराचार्यकृता सौन्दर्यलहरी ॥

ॐ नमश्चिच्छक्त्यै ॥ शिवः शिक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि । अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ १ ॥ तनीयांसं पांसुं तव चरणपङ्केरुहभवं विरिञ्चिः संचिन्वन्विरचयति लोकानऽविकलम् । वहत्येनं शौरिः कथमपि सहस्रेण शिरसां हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम् ॥ २ ॥ अविद्यानामऽन्तस्तिमिरमिहिरोद्दीपनकरी जडानां चैतन्यस्तवकमकरन्दस्रुतिसिरा । दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ॥ ३ ॥ त्वदन्यः पाणिभ्यामभयवरदो दैवतगणस्त्वमेका नैवासि प्रकटितवराभीत्यभिनया । भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं शरण्ये लोकानां तव हि

चरणावेव निपुणौ ॥ ४ ॥ हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् । स्मरोपि त्वां नत्वा रतिनयनलेह्येन वपुषा मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥ ५ ॥ धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखा वसन्तः सामन्तो मलयमरुदाऽयोधनरथः । तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपामपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥ ६ ॥ क्वणत्काञ्चीदामा करिकलभकुम्भस्तनभरा परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना । धनुर्बाणान्पाशं सृणिमपि दधाना करतलैः पुरस्तादाऽस्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥ सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे । शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥ ८ ॥ महीं मूलाधारे कमपि मणिपूरे हुतवहस्थितिं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि । मनोपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥ ९ ॥ सुधाधारासारैश्चरणयुगलान्तर्विगलितैः प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसा । अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥१०॥ चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरथो प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः । त्रयश्चत्वारिंशद्वसुदलकलास्त्रत्रिवलयत्रिरेखाभिः सार्धं तव भुवनकोणाः परिणताः ॥ ११ ॥ त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः । यदालोक्यौ-

त्सुक्याद्मरललना यान्ति मनसा तपोभिर्दुष्प्रापामपि गिरिश-
सायुज्यपदवीम् ॥ १२ ॥ नरं वर्षीयांसं नयनविरसं नर्मसु
जडं तवापाङ्गालोके पतितमनुधावन्ति शतशः । गलद्वेणी-
बन्धाः कुचकलशविस्रस्तसिचया हठात्त्रुट्यत्काञ्च्यो विगलित-
दुगूला युवतयः ॥ १३ ॥ क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चा-
शदुदके हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले । दिवि द्विःष-
ट्त्रिंशन्मनसि च चतुःषष्टिरिति ये मयूखास्तेषामप्युपरि तव
पादाम्बुजयुगम् ॥ १४ ॥ शरज्ज्योत्स्नाशुभ्रां शशियुतजटा-
जूटमुकुटां वरत्रासत्राणस्फटिकघुटिकापुस्तककराम् । सकृन्नत्वा
न त्वां कथमिव सतां सन्निदधते मधुक्षीरद्राक्षामधुरिमधुरीणा
भणितयः ॥ १५ ॥ कवीन्द्राणां चेतःकमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् । विरिञ्चिप्रेयस्या-
स्तरलतरशृङ्गारलहरीगभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी
॥ १६ ॥ तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभिर्दिवं सर्वा-
मुर्वीमरुणिमनिमग्नां स्मरति यः । भवन्त्यस्य त्रस्यद्वनहरिणशा-
लीननयनाः सहोर्वश्या वश्याः कतिकति न गीर्वाणगणिकाः
॥ १७ ॥ मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो हरार्धं
ध्यायेद्यो हरमहिषि ते मन्मथकलाम् । स सद्यः संक्षोभं नयति
वनिता इत्यतिलघु त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम्
॥ १८ ॥ किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसं हृदि
त्वामाधत्ते हिमकरशिलामूर्तिमिव यः । स सर्पाणां दर्पं शमयति
शकुन्ताधिप इव ज्वरप्लुष्टं दृष्ट्या सुखयति सुधासारसिरया ॥ १९ ॥
तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीं निषण्णां षण्णामप्युपरि

कमलानां तव कलाम् । महापद्माटव्यां मृदितमलमायेन मनसा महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ २० ॥ सवित्रीभिर्वाचां शशिमणिशिलाभङ्गिरुचिभिर्वशिन्याद्याभिस्त्वां सह जननि संचिन्तयति यः । स कर्ता काव्यानां भवति कविताभङ्गिसुभगैर्वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ २१ ॥ भवानि त्वं दासे मयि वितर दृष्टिं सकरुणामिति स्तोतुं वाञ्छन्कथयति भवानि त्वमिति यः । तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ॥२२॥ त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा शरीरार्धं शम्भोरपरमपि शङ्के हृतमभूत् । तथाहि त्वद्रूपं सकलमरुणाभं त्रिनयनं कुचाभ्यामानम्रं कुटिलशशिचूडालमुकुटम् ॥ २३ ॥ जगत्सूते धाता हरिरवति रुद्रः क्षिपयते तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति । सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवस्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २४ ॥ त्रयाणां देवानां त्रिगुणजनितानां परशिवे भवेत्पूजा पूजा तव चरणयोर्या विरचिता । तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमुकुटाः ॥ २५ ॥ विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् । वितन्द्रा माहेन्द्री विततिरपि संमीलति दृशां महासंहारेऽस्मिन्विलसति सति त्वत्पतिरसौ ॥ २६ ॥ जपो जल्पः शिल्पं सकलमपि मुद्राविरचनं गतिः प्रादक्षिण्यक्रमणमऽशनाद्याहुतिविधिः । प्रणामः संवेशः सुखमखिलमात्मार्पणदशा सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥ २७ ॥ ददाने दीनेभ्यः

श्रियमनिशमाशानुसदृशीममन्दं सौन्दर्यप्रकरमकरन्दं विकिरति। तवास्मिन्मन्दारस्तवकसुभगे यातु चरणे निमज्जन्मज्जीवः करणचरणैः षट्चरणताम् ॥ २८ ॥ सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरणीं विपद्यन्ते विश्वे विधिशतमुखाद्या दिविषदः । करालं यत्क्ष्वेडं कवलितवतः कालकलना न शम्भोस्तन्मूलं जननि तव ताटङ्कमहिमा ॥ २९ ॥ किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः कठोरे कोटीरे स्खलसि जहि जम्भारिमुकुटम् । प्रणम्रेष्वेतेषु प्रसभमभियातस्य भवनं हरस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ ३० ॥ चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः । पुनस्त्वन्निर्बन्धादऽखिलपुरुषार्थैकघटनात्स्वतन्त्रं ते तन्त्रं क्षितितलमऽवातीतरदिदम् ॥ ३१ ॥ शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः स्मरो हंसः शक्रस्तदनु च परामारहरयः । अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥ ३२ ॥ स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनोर्निधायैके नित्ये निरवधिमहाभोगरसिकाः । जपन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥ ३३ ॥ शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं तवात्मानं मन्ये भगवति नवात्मानमनघम् । अतः शेषः शेषीत्ययमुभयसाधारणतया स्थितः सम्बन्धो वां समरसपदानन्दपरयोः ॥ ३४ ॥ मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां नहि परम् । त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दा-

कारं हरमहिषिभावेन विभृषे ॥ ३५ ॥ तवाज्ञाचक्रस्थं तपनश-शिकोटिद्युतिधरं परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता । यमाराध्यन्भक्त्या रविशशिशुचीनामविषये निरालोके लोको निवसति हि भालोकभवने ॥ ३६ ॥ विशुद्धौ ते शुद्धस्फटिक-सदृशं व्योमजनकं शिवं सेवे देवीमपि शिवसमानव्यसनि-नीम् । ययोः कान्त्या यात्या शशिकिरणसारूप्यसरणिर्विधू-तान्तर्ध्वान्ता विलसति चकोरीव जगती ॥ ३७ ॥ समुन्मील-त्संवित्कमलमकरन्दैकरसिकं भजे हंसद्वन्द्वं किमपि महतां मानसचरम् । यदालापादष्टादशगुणितविद्यापरिणतिर्यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥ ३८ ॥ तव स्वाधिष्ठाने हुतव-हमधिष्ठाय निभृतं तमीडे संवर्तं जननि महतीं तां च समयाम् । यदालोके लोकान्दहति महति क्रोधकलिले दयार्द्रा त्वदृष्टिः शिशिरमुपचारं रचयति ॥ ३९ ॥ तडित्वन्तं शक्त्या तिमिर-परिपन्थिस्फुरणया स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् । तव श्यामं मेघं कमपि मणिपूरैकशरणं निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥ ४० ॥ तवाधारे मूले सह समयया लास्यपरया नवात्मानं वन्दे नवरसमहाताण्डवनटम् । उभाभ्यामेताभ्यामु-दयविधिमुद्दिश्य दयया सनाथाभ्यां जज्ञे जनकजननीमज्जग-दिदम् ॥ ४१ ॥ गतैर्माणिक्यत्वं गगणमणिभिः सान्द्रघटितं किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः । सनीडे यच्छाया-च्छुरणशबलं चन्द्रशकलं धनुः शौनासीरं किमिदमिति बध्नाति धिषणाम् ॥ ४२ ॥ धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं घनस्निग्धं श्लक्ष्णं चिकुरनिकुरम्बं तव शिवे । यदीयं सौरभ्यं

सहजमुपलब्धुं सुमनसो वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ॥ ४३ ॥ वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् । तनोतु क्षेमं नस्तव वदनसौरभ्यलहरीपरीवाहस्रोतः सरणिरिव सीमन्तसरणिः ॥४४॥ अरालैः स्वाभाव्यादऽलिकुलहसश्रीभिरलकैः परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् । दरस्मेरे यस्मिन्दशनरुचिकिञ्जल्करुचिरे सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः ॥ ४५ ॥ ललाटं लावण्यद्युतिविमलमाभाति तव यद्द्वितीयं तन्मन्ये मुकुटशशिखण्डस्य शकलम् । विपर्यासन्यासादुभयकृतसन्धानघटितः सुधालेपस्फूर्तिः परिणमति राकाहिमकरः ॥ ४६ ॥ भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणे । धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमिदम् ॥ ४७ ॥ अहः सूते सव्यं तव नयनमर्कात्मकतया त्रियामां वामं ते सृजति रजनीनायकतया । तृतीया दृष्टिस्ते दरदलितहेमाम्बुजरुचिः समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥ ४८ ॥ विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः कृपाधारापारा किमपि मधुरा भोगवतिका । अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥ कवीनां सन्दर्भस्तवकमकरन्दैकभरितं कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् । अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरलावसूयासंसर्गादऽलिकनयनं किञ्चिदऽरुणम् ॥ ५० ॥ शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा सरोषा गङ्गायां गिरिशचरिते विस्मय-

वती । हराहिभ्यो भीता सरसिरुहसौभाग्यजननी सखीषु स्मेरा ते मयि जयति दृष्टिः सकरुणा ॥ ५१ ॥ गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती पुरांभेत्तुश्चित्तप्रशमरसविद्रावणफले ॥ इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५२ ॥ विभक्तत्रैवर्ण्यंव्यतिकरणनीलाञ्जनतया विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते । पुनः स्त्रष्टुं देवान्द्रुहिणहरिरुद्रानुपरतान्रजः सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥ ५३ ॥ पवित्रीकर्तुं नः पशुपतिपराधीनहृदये दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः । नदः शोणो गङ्गा तपनतनयेति ध्रुवमिमं त्रयाणां तीर्थानामुपनयसि सम्भेदमनघे ॥ ५४ ॥ तवापर्णे कर्णेजपनयनपैशुन्यचकिता निलीयन्ते तोये नियतमनिमेषाः शफरिकाः । इयं च श्रीर्बद्धच्छदपुटकपाटंकुवलयं जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५५ ॥ निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती तवेत्याहुः सन्तो धरणिधरराजस्य तनये । त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५६ ॥ दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा दवीयांसं दीनं स्नपय कृपया मामपि शिवे । अनेनायं धन्यो भवति नच ते हानिरियता वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥ अरालं ते पालीयुगलमऽगराजस्य तनये न केषामाधत्ते कुसुमशरकोदण्डकुतकम् । तिरश्चीने यत्र श्रवणपथमुल्लंघ्य विलसन्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥ ५८ ॥ स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं

चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् । यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं महावीरो मारः प्रमथपतये स्वं जितवते ॥ ५९ ॥ सरस्वत्याः सूक्तीरमृतलहरीः कौशलहरीः पिबन्त्याः शर्वाणि श्रवणचषकाभ्यामविरतम् । चमत्कारश्लाघा चलितशिरसः कुण्डलगणो फणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥ ६० ॥ असौ नासावंशस्तुहिनगिरिवंशध्वजपटस्त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् । वहन्नन्तर्मुक्ताः शिशिरतरनिःश्वासघटिताः समृद्ध्या यत्तासां बहिरपिच मुक्तामणिधरः ॥ ६१ ॥ प्रकृत्या रक्तायास्तव सुदति दन्तच्छदरुचेः प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता । क्व बिम्बं त्वद्बिम्बप्रतिफलनलाभादरुणितं तुलामध्यारोढुं कथमिव न लज्जेत कलया ॥ ६२ ॥ स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां चकोराणामासीदतिरसितया चञ्चुजडिमा । अतस्ते शीतांशोरमृतलहरीमम्लरुचयः पिबन्ति स्वच्छन्दं निशिनिशि भृशं काञ्जिकधिया ॥ ६३ ॥ अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा जपापुष्पच्छाया तव जननि जिह्वा जयति सा । यदग्रासीनायाः स्फटिकदृशदच्छच्छविरुचिः सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥ ६४ ॥ रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिर्निवृत्तैश्चण्डांशुत्रिपुरहरनिर्माल्यविमुखैः । विरिञ्चीन्द्रोपेन्द्रैः शशिशिशिरकर्पूरधवला विलिप्यन्ते मातस्तव वदनताम्बूलशकलाः ॥ ६५ ॥ विपञ्च्या गायन्ती विविधमवदातं पशुपतेस्त्वयारब्धे वक्तुं स्खलितवचसा साधुवचने । त्वदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां निजां वीणां

वाणी निचुलयति चोलेन निभृतम् ॥ ६६ ॥ कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया गिरीशेनोदस्तं मुहुरधरपानाकुलतया । करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते कथङ्कारं ब्रूमस्तव चिबुकमौपम्यरहितम् ॥ ६७ ॥ भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् । स्वतः श्वेता कालागुरुबहलजम्बालमलिना मृणालीलालित्यं वहति यदधो हारलतिका ॥ ६८ ॥ गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः । विराजन्ते नानाविधमधुररागाकरभुवां त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥ मृणालीमृद्वीनां तव भुजलतानां चतसृणां चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः । नखेभ्यः सन्त्रस्यन्प्रथमदमनादन्धकरिपोश्चतुर्णां वक्त्राणां सममभयदानार्पणधिया ॥ ७० ॥ नखानामुद्द्योतैर्नवनलिनरागं विहसतां कराणां ते कान्तिं कथय कथयामः कथमुमे । कदाचिद्वा साम्यं भजतु कलया हन्त कमलं यदि क्रीडल्लक्ष्मीचरणतललाक्षारुणदलम् ॥ ७१ ॥ समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् । यदालोक्याशङ्काकुलितहृदयो हासजनकः स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥ ७२ ॥ अमू ते वक्षोजावमृतरसमाणिक्यकलशौ न सन्देहस्पन्दो नगपतिपताके मनसि नः । पिबन्तौ तौ यस्मादविदितवधूसङ्गमरसौ कुमारावद्यापि द्विरदवदनक्रौञ्चदमनौ ॥ ७३ ॥ वहत्यम्ब स्तम्बेरमवदनकुम्भप्रकृतिभिः समारब्धां मुक्तामणिभिरमलां हारलतिकाम् । कुचाभोगो

बिम्बाधररुचिभिरन्तः शवलितां प्रतापव्यामिश्रां पुरविजयिनः कीर्तिमिव ते ॥ ७४ ॥ तव स्तन्यं मन्ये तुहिनगिरिकन्ये हृदयतः पयःपारावारः परिवहति सारस्वत इति । दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥ हरक्रोधज्वालावलिभिरवलीढेण वपुषा गभीरे ते नाभीसरसि कृतजम्पो मनसिजः । समुत्तस्थौ तस्मा-द्चलतनये धूमलतिका जनस्तां जानीते तव जननि रोमावलि-रिति ॥ ७६ ॥ यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे कृशे मध्ये किंचिज्जननि तव तद्भाति सुधियाम् । विमर्दादन्योन्यं कुचकलशयोरन्तरगतं तनूभूतं व्योम प्रविशदिव नाभीकुहरि-णीम् ॥ ७७ ॥ स्थिरो गङ्गावर्तः स्तनकमलरोमावलिलता जलावालं कुण्डं कुसुमशरतेजोहुतभुजः । रतेर्लीलागारं किमपि तव नाभीति गिरिजे बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥ ॥ ७८ ॥ निसर्गक्षीणस्य स्तनयुगभरेण क्लमजुषो नमन्मूर्तेर्नाभौ वलिषु शनकैरुद्यत इव । चिरं ते मध्यस्य त्रुटिततटिनीतीरत-रुणा समावस्थास्थेम्नो भवतु कुशलं शैलतनये ॥ ७९ ॥ कुचौ सद्यः स्विद्यत्तटघटितकर्पासभिदुरौ कषन्तौ दोर्मूले कनककल-शाभौ कलयता । तव त्रातुं भङ्गादलमितिविलग्नं तनुभुवा त्रिधानद्धं देवि त्रिवलिलवलीवल्लिभिरिव ॥ ८० ॥ गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजान्नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे । अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ॥ ८१ ॥ करी-न्द्राणां शुण्डाकनककदलीकाण्डपटलीमुभाभ्यामूरुभ्यामुभयमपि

निर्जित्य भवती । सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते विजिग्ये जानुभ्यां विबुधकरिकुम्भद्वयमपि ॥ ८२ ॥ पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत । यदग्रे लक्ष्यन्ते दशशरफलाः पादयुगलीनखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ॥ ८३ ॥ श्रुतीनां मूर्धानो दधति तव यौ शेखरतया ममाप्येतौ मातः शिरसि दयया धेहि चरणौ । ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥ ८४ ॥ हिमानीहन्तव्यं हिमगिरितटाक्रान्तिचतुरौ निशायां निद्राणं निशि च परभागे च विशदौ । परं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां सरोजं त्वत्पादौ जननि हसतश्चित्रमिह किम् ॥ ८५ ॥ नमोवाकं ब्रूमो नयनरमणीयाय पदयोस्तवास्मै द्वन्द्वाय स्फुटरुचिरसाऽलक्तकवते । असूयत्यत्यर्थं यदभिहननाय स्पृहयते पशूनामीशानः प्रमदवनकङ्कोलतरवे ॥८६॥ मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं ललाटे भर्तारं चरणयुगले ताडयति ते । चिरादन्तःशल्यं दहनकृतमुन्मीलितवता तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ॥ ८७ ॥ पदं ते कान्तीनां प्रपदमपदं देवि विपदां कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् । कथं वा हस्ताभ्यामुपयमनकाले पुरभिदा तदादाय न्यस्तं दृषदि दयमानेन मनसा ॥ ८८ ॥ नखैर्नाकस्त्रीणां करकमलसंकोचशशिभिस्तरूणां दिव्यानां हसत इव ते चण्डि चरणौ । फलानि स्वस्थेभ्यः किसलयकराग्रेण ददतां दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥ ८९ ॥

कदा काले मातः कथय कलितालक्तकरसं पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् । प्रकृत्या मूकानामपि च कविताकारणतया यदाधत्ते वाणीमुखकमलताम्बूलरसताम् ॥ ९० ॥ पदन्यास-क्रीडापरिचयमिवारब्धुमनसश्चरन्तस्ते खेलं भवनकलहंसा न जहति । स्वविक्षेपे शिक्षां सुभगमणिमञ्जीररणितच्छदादाचक्षाणं चरणकमलं चारुचरिते ॥ ९१ ॥ अराला केशेषु प्रकृतिसरला मन्दहसिते शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे । भृशं तन्वी मध्ये पृथुरपि वरारोहविषये जगत्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९२ ॥ पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः सपर्यामर्यादा तरलकरणानामसुलभा । तथाप्येते नीता शतमखमुखा सिद्धिमतुलां तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥ ९३ ॥ तवानीतः पद्यां मणिमुकुरतामम्बरमणिर्भयादऽन्तर्बद्धस्तिमितकिरणश्रेणिमसृणः । ददाति त्वद्वक्त्रप्रतिफलितमश्रान्तविकचं निरातङ्कं चन्द्रो निजहृदयपङ्केरुहमिव ॥ ९४ ॥ गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः शिवः स्वच्छच्छाया-कपटघटितप्रच्छदपटः । त्वदीयानां भासां प्रतिफलनलाक्षारुणतया शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥९५॥ कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् । अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं विधिर्भूयो भूयो निबिडयति नूनं तव कृते ॥ ९६ ॥ कलत्रं वैधात्रं कतिकति भजन्ते न कवयः श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः । महादेवं हित्वा तव सति सतीनामचरमे कुचाभ्यामासङ्गः कुरबकतरोरप्यसुलभः ॥ ९७ ॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो निषेव्यां नित्ये त्वामहमिति सदा भावयति यः । किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥ ९८ ॥ गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् । तुरीया कापि त्वं दुरधिगमनिःसीममहिमा महामाये विश्वं भ्रमयसि परंब्रह्ममहिषि ॥ ९९ ॥ समुद्भूतस्थूलस्तनभरमुरश्चारु हसितं कटाक्षे कन्दर्पः कतिचन कदम्बद्युतिवपुः । हरस्य त्वद्भ्रान्तिं मनसि जनयन्ति स्म विमला भवत्या ये भक्ताः परिणतिरमीषामियमुमे ॥ १०० ॥ सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विजयते रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा । चिरंजीवन्नेव क्षपितपशुपाशव्यतिकरः परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ॥ १०१ ॥ निधे नित्यस्मेरे निरवधिगुणे नीतिनिपुणे निराकारज्ञाने नियमपरचित्तैकनिलये । नियत्या निर्मुक्ते निखिलनिगमान्तस्तुतिपदे निरातङ्के नित्ये निगमय ममापि स्तुतिमिमाम् ॥ १०२ ॥ प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना । स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ १०३ ॥ इतिश्रीमत्परिव्राजकाचार्यश्रीशङ्कराचार्यविरचितं सौन्दर्यलहरीस्तोत्रं सम्पूर्णम् ॥

---

# अथ वटुकपूजाविधिः ।

कलशस्थापनम् ॥ (पत्थरके चूर्णसे ईशानी
अष्टदल ब्रह्मकलश लिखके, अष्टदलपर
ौर विष्टर युक्त पानी का घडा कलश
ससे नैर्ऋतकोणपर प्रणीतपात्रभी रखके
फी मंत्र फूल व अक्षत छोडना) ॥ ॥ ॐकारो
क्रमपदजठरच्छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं
ल: स्यादथर्वः प्रतिष्ठा । यज्ञच्छायासुशीतो द्विज-
ते यस्य नित्यं शक्तिः सन्ध्यात्रिकालं दुरितभ-
नो वेदवृक्षः ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखै-
मिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गा-
याङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्द-
हन्तीं भजे ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवा-
त्री च्छन्दसांमातर्ब्रह्मयोने नमोस्तु ते ॥ ३ ॥ भद्रं
म भद्रं भद्रं वदेम शृणुयाम भद्रम् । तन्नो मित्रो
न्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ "देवीना-
हणान्याम्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽ-
वा" ॥ अभि नो देवीरवसा महः शर्मणा नृ-
छन्नपत्राः सचन्ताम् ॥ इहेन्द्राणीमुपह्वये वारुणानीं
यीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं
पिपृतां नो भरीमभिः ॥ तयोरिद्घृतवत्पयो विप्रा

## अथ वटुकपूजाविधिः।

तत्रादौ कलशस्थापनम् ॥ (पत्थरके चूर्णसे ईशानी कोणपर अष्टदल ब्रह्मकलश लिखके, अष्टदलपर अक्षोट और विष्टर युक्त पानी का घडा कलश रखके, उससे नैर्ऋतकोणपर प्रणीतपात्रभी रखके कलश को फी मंत्र फूल व अक्षत छोडना) ॥ ॥ ॐकारो यस्य मूलं क्रमपदजठरच्छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलः स्यादथर्वः प्रतिष्ठा । यज्ञच्छायासुशीतो द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्यात्रिकालं दुरितभयहरः पातु नो वेदवृक्षः ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी । गायत्री च्छन्दसांमातर्ब्रह्मयोने नमोस्तु ते ॥ २ ॥ भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रम् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ "देवीनामेकेन्द्राणीवरुणान्याग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा" ॥ अभि नो देवीरवसा महः शर्मणा नृपत्नीः, अच्छिन्नपत्राः सचन्ताम् ॥ इहेन्द्राणीमुपह्वये वारुणानीं स्वस्तये, अग्नायीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्, पिपृतां नो भरीमभिः ॥ तयोरिद्घृतवत्पयो विप्रा

रिहन्ति धीतिभिः, गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवि भवा-
नृक्षरा निवेशनी, यच्छाऽनः शर्म सप्रथः ॥ अतो देवा अवन्तु
नो यतो विष्णुर्विचक्रमे, पृथिव्याः सप्तधामभिः ॥ इदं विष्णु-
र्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा
विचक्रमे विष्णुर्गोपा अदाभ्यः, अतो धर्माणि धारयन् ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे, इन्द्रस्य युज्यः
सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव
चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते,
विष्णोर्यत्परमं पदम् ॥ ॐगायत्र्यै नमः ॐभूर्भुवःस्वस्तत्सवितुर्व-
रेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् । २ । इति
विष्णुभद्रम् ॥ (अब क्षेत्रपालों को अक्षत छोडना ॥
अश्वमेधे घोराणामार्षम् । ॐद्रष्ट्रेनम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः
ख्यात्रे नम उपख्यात्रे नमो नुकशात्रे नमः शृण्वते नम उपशृण्वते
नमः सते नमोऽसते नमो जाताय नमो जनिष्यमानाय नमो
भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो
वाचे नमो ब्रह्मणे नमः शान्ताय नमस्तपसे नमः । भूतं भव्यं
भविष्यद्वषट्स्वाहा नम, ऋक्सामयजुर्वषट्स्वाहा नमो, गायत्री
त्रिष्टुब्जगती वषट्स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा
नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः, पिता पुत्रः पौत्रो वषट्स्वाहा
नमः, प्राणो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्वर्वषट्
स्वाहा नमः ॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त
उत विश्वतस्पात् । संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनय-
न्देव एकः ॥ ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामस्मि-

राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽन-
ड्वानाशुः सप्तिर्जिष्णूरथेष्ठः पुरन्धिर्योषा सभेयो युवाऽस्य यज-
मानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फल-
वतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ( और
कलशपर अक्षतपुष्प छोडना )। "इषे त्वोर्जे त्वेति ब्र-
ह्मणः" । इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः
सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यायध्वमघ्न्या देवभागं
प्रजावतीरनमीवा अयक्ष्मा मावस्ते न ईशत माऽघशंसः, परि
वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य
पशून्पाहि यजमानस्य पशुपा असि, देवस्य त्वा सवितुः प्र-
सवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे, गोषदसि प्रत्युष्टं
रक्षः प्रत्युष्टाऽरातिः प्रेयमागाद्धिषणा बर्हिरच्छ मनुना कृता,
स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि माधो मो-
परि परस्त ऋद्ध्या, स मा च्छेता ते मा रिषत् देवबर्हिः श-
तवल्शं विरोह सहस्रवल्शं विवयं रुहेम, आदित्या रास्नासी-
न्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य
त्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि देवं गममसि
तदा हरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे, वसोः
पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः
प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः, मधुमद्घृतव-
त्पिन्वमाना जीवा जीवन्तीरुप वः सदेम मातरिश्वानो घर्मोसि
द्यौरसि पृथिव्यसि विश्वधाया परेण, धाम्ना, हुतासि माह्वाः
सा विश्वायुः सा विश्वव्यचाः सा विश्वधाया हुतस्तोको हुतो

द्रप्सोऽग्नये बृहते नाकाय स्वाहा, द्यावापृथिवीभ्यां सपृच्छ्यध्वमृतावरी ऊर्मिणा मधुमत्तमा मान्द्राधानस्य सातयः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत, महितृणां मत्रोस्तु द्युम्नं मित्रस्यार्यम्णः, दुराधर्षं वरुणस्य, नहि तेषाममाचन नाध्वसु वरणेषु ईशे रिपुरघशंसः, यस्मै पुत्रासो अदितेः प्रजीवसे मर्त्याय ज्योतिर्यच्छन्त्यजस्रम्, सोमानं स्वरणं कृणुहि ब्रह्मणस्पते, कक्षीवन्तं य औषजो यो रेवाण्यो अमीवहा वसुवित्पुष्टिवर्धनः सनः सिषक्तु यस्तुरः, मा नः शंसो अररुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ (अब तिल अक्षत पुष्प पानी और विष्टरवाले प्रणीतपात्र में गन्ध और तीन मंत्रोंसे तीन फूल पाना) ॥ संव्वः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥ १ ॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संय्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ (प्रणीतपात्र के विष्टर से कलश और क्षेत्रेशों को जीवाधान करना) ॥ अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्धेहि ॥ इन्द्रस्य प्राणः स ते प्राणन्ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ पितृणां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ मरुतां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ विश्वेषान्देवानां प्राणास्तेते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ प्रजापतेः प्राणः परमेष्ठिनः प्राणस्तौ ते प्राणन्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा ॥ यदऽसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदऽद्रियथास्तद्घृतमभवो ॥ घृतस्य धाराममृतस्य पन्था-

मिन्द्रेण दत्तं प्रयतं मरुद्भिः । तत्त्वा विष्णुरन्वपश्यत्तत्त्वेडा गव्यैरयत् ॥ पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्या पांशोर्वीर्येणोद्धराम्यसौ ॥ बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याऽया असौ । देवा आयुष्मन्तस्तेऽमृतेनाऽयुष्मन्तस्तेषामयमायुषाऽयुष्मानऽस्त्वसौ ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तस्यायमाऽयुषाऽयुष्मानऽस्त्वसौ ॥ यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ सोम आयुष्मान्स ओषधीभिरायुष्मांस्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्तासामयमाऽयुषाऽयुष्मानऽस्त्वसौ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत् ॥ अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव ॥ (अब पूजामण्डप के दिशायों का अक्षतयुक्त राक्षस घातक तिल फेंकना) ॥ ("प्रथम पूर्व को") ॥ ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (दक्षणको) ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (पश्चिम को) ॥ ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ (उत्तर को) ॥ ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षो-

रिहन्ति धीतिभिः, गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवि भवानृक्षरा निवेशनी, यच्छाऽनः शर्म सप्रथः ॥ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे, पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः, अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे, इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥ ॐगायत्र्यै नमः ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् । ३ । इति विष्णुभद्रम् ॥ (अब क्षेत्रपालों को अक्षत छोडना ॥ अश्वमेधे घोराणामार्षम् । ॐद्रष्ट्रेनम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमो नुक्शात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमानाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः शान्ताय नमस्तपसे नमः । भूतं भव्यं भविष्यद्वषट्स्वाहा नम, ऋक्सामयजुर्वषट्स्वाहा नमो, गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः, पिता पुत्रः पौत्रो वषट्स्वाहा नमः, प्राणो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्वर्वषट्स्वाहा नमः ॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात् । संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामस्मि-

त्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽन-
ड्वानाशुः सप्तिर्जिष्णूरथेष्ठः पुरन्ध्रिर्योषा सभेयो युवाऽस्य यज-
मानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फल-
वतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ( और
कलशपर अक्षतपुष्प छोडना )। "इषे त्वोर्जे त्वेति ब्र-
ह्मणः"। इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः
सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यायद्ध्वमघ्न्या देवभागं
प्रजावतीरनमीवा अयक्ष्मा मावस्ते न ईशत माऽघशंसः, परि
वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य
पशून्पाहि यजमानस्य पशुपा असि, देवस्य त्वा सवितुः प्र-
सवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे, गोषदसि प्रत्युष्टं
रक्षः प्रत्युष्टाऽरातिः प्रेयमागाद्धिषणा बर्हिरच्छ मनुना कृता,
स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि माधो मो-
परि परस्त ऋद्ध्या, स मा च्छेता ते मा रिषत् देवबर्हिः श-
तवल्शं विरोह सहस्रवल्शं विवयं रुहेम, आदित्या रास्नासी-
न्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य
त्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि देवं गममसि
तदा हरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे, वसोः
पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः
प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः, मधुमद्घृतव-
त्पिन्वमाना जीवा जीवन्तीरुप वः सदेम मातरिश्वानो घर्मोसि
द्यौरसि पृथिव्यसि विश्वधाया परेण, धाम्ना, हुतासि माह्वाः
सा विश्वायुः सा विश्वव्यचाः सा विश्वधाया हुतस्तोको हुतो

द्रप्सोऽग्नये बृहते नाकाय स्वाहा, द्यावापृथिवीभ्यां सपृच्चयध्वमृतावरी ऊर्मिणा मधुमत्तमा मान्द्राधानस्य सातयः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत, महितृणां मवोस्तु द्युम्नं मित्रस्यार्यम्णः, दुराधर्ष वरुणस्य, नहि तेषाममाचन नाध्वसु वरणेषु ईशे रिपुरघशंसः, यस्मै पुत्रासो अदितेः प्रजीवसे मर्त्याय ज्योतिर्यच्छन्त्यजस्त्रम्, सोमानं स्वरणं कृणुहि ब्रह्मणस्पते, कक्षीवन्तं य औषजो यो रैवाण्यो अमीवहा वसुवित्पुष्टिवर्धनः सनः सिषक्तु यस्तुरः, मा नः शंसो अररुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ (अब तिल अक्षत पुष्प पानी और विष्टरवाले प्रणीतपात्र में गन्ध और तीन मंत्रोंसे तीन फूल पाना) ॥ संवः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥ १ ॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संप्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ (प्रणीतपात्र के विष्टर से कलश और क्षेत्रेशों को जीवाधान करना) ॥ अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्धेहि ॥ इन्द्रस्य प्राणः स ते प्राणन्ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ पितृणां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ मरुतां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ विश्वेषान्देवानां प्राणास्तेते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ प्रजापतेः प्राणः परमेष्ठिनः प्राणस्तौ ते प्राणन्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा ॥ यदऽसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदऽद्रियथास्तद्घृतमभवो ॥ घृतस्य धाराममृतस्य पन्था-

मिन्द्रेण दत्तं प्रयतं मरुद्भिः । तत्त्वा विष्णुरन्वपश्यत्तत्त्वेडा गव्यैरयत् ॥ पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्या पांशो-र्वीर्येणोद्धराम्यसौ ॥ बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याऽया असौ । देवा आयुष्मन्त-स्तेऽमृतेनाऽयुष्मन्तस्तेषामयमायुषाऽयुष्मानऽस्त्वसौ ॥ ब्रह्मायु-ष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ अग्निरा-युष्मान्स वनस्पतिभिरायुष्मांस्तस्यायमाऽयुषाऽयुष्मानऽस्त्वसौ ॥ यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तस्यायमायुषाऽयुष्मानऽ-स्त्वसौ ॥ सोम आयुष्मान्स ओषधीभिरायुष्मांस्तस्यायमायुषाऽ-युष्मानऽस्त्वसौ ॥ ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्ता-सामयमाऽयुषाऽयुष्मानऽस्त्वसौ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत् ॥ अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव ॥ ( अब पूजाम-ण्डप के दिशायों का अक्षतयुक्त राक्षस घातक तिल फेंकना) ॥ ("प्रथम पूर्व को") ॥ ये देवाः पुरःसदोऽग्नि-नेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (दक्ष-णको) ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ ( पश्चिम को ) ॥ ये देवाः पश्चा-त्सदो मरुन्नेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ ( उत्तर को ) ॥ ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षो-

हणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ ( उपर आकाशको ) ॥ ये देवा उपरिषदः सोमनेत्रा अवस्वदन्तो रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (आग्नेय कोण को )॥ इदमहं रक्षोभिः समूहाम्यग्ने संदह रक्षः संदग्धं रक्षोग्नये पुरः सदे रक्षोघ्ने स्वाहा ॥ ( नैऋत कोण को ) यमाय दक्षिणात्सदे रक्षोघ्ने स्वाहा ॥ (वायव्यकोण को) मरुद्भ्यः पश्चात्सद्भ्यः रक्षोहभ्यः स्वाहा ( ईशानकोण को ) मित्रावरुणाभ्यामुत्तरात्सद्भ्यां रक्षोहभ्यां स्वाहा ॥ ( नीचे धरती को ) ॥ सोमायोपरिषदेऽवस्वदते रक्षोघ्ने स्वाहा ॥ ( अब प्रणीतपात्र के विष्टर से उस का पानी आलोडन करना ) ॥ रथः पञ्चवाही दक्षिणा ॥ ( उस विष्टर से द्रव्यों की शुद्धि करना ॥ "पहिले जल की" ) ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते ह नः, उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः ॥ ( अक्षतकी शुद्धि ) ॥ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्, भवावाजस्य सङ्गथे ॥ ( फूलों की ) पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ (तिलककी) ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ( कुशाकी ) ॥ कर्मणे वां वानस्पत्यमसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रियमागाद्विषेण बर्हिरच्छ मनुना कृता सुधया वितुष्ट उर्वन्तरिक्षं वीहि ॥ (धूपकी) धूरसि धूर्व

धूर्वन्तं योस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व । देवानामसि वह्नितमं सस्नितमं पप्रितममिष्टतमं देवहूतमं विष्णोः क्रमोऽस्यांहुतमसि हविर्दानं दृंहस्व माह्वान्मित्रस्यत्वा चक्षुषा प्रेक्ष उरु त्वा वाताय वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वत् । रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वत् । आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गिरस्वत् । विश्वे त्वा देवा वैश्वानरा धूपयन्तु आनुष्टुभेन च्छन्दसाऽङ्गिरस्वत् इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ (सूरजकी) उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (दीपकी) ॥ तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ (अपने आप को तिलक लगाना) ॥ अध्वर्योयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देवयज्ञ । (अक्षत और फूल चढाना) ॥ इहैवैधि मा पच्योष्ठाः पर्वता इवाविचाचलत् । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुदारय ॥ (दो काण्ड दर्भ का अपना आसन छोडना) ॥ इममिन्द्रो अदीधरद्ध्रुवन्ध्रुवेण हविषा हविः । तस्मै सोमो अधिब्रुवत्तस्मा उ ब्रह्मणस्पतिः ॥ (कलश को आसन छोडना) ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ (भूमी को तिलकफूल और अक्षत लगाना) ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ (आकाश

को ) ॥ बडित्था पर्वतानां क्षेत्रं बिभर्षि पृथिवि प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ ( अष्टदलके नीचे लिखे हुई पांच कोनों मेंसे वायुकोण पर गणेश को ) ॥ निषुसीद गणपते गणेषुत्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवंश्चित्रमर्च ॥ ( नैर्ऋतकोण पर कुमार को ) ॥ कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य नमिमज्जनासः पुरा पश्यन्ति निहितमरतौ ॥ ( ईशानकोण पर श्रिई को ) अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ( बीच में उपर सरस्वती को ) ॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानुर्गिरीणान्तविंश्वेभिरूर्मिभिः । परावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥ ( बीच में नीचे लक्ष्मीको ) कांस्यसितां हिरण्यप्राकारामाद्रीं ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ( आग्नेय कोणपर विश्वकर्म को ) ॥ विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शितः । ते त्वा घृतस्य धारया श्रैष्ठाय समसृपत ॥ ( कलशपात्र में और देवों को ) ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगानाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ यो रुद्रो अग्नौ योऽप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं

रत्नधातमम् ॥ इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः सविता प्रार्पयत, श्रेष्ठतमाय कर्मणे ॥ अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः ॥ आहं पितृन्सुविदत्रां अवित्सि न पातञ्च विक्रमणं च विष्णोः । बर्हिषदो ये सुधया सुतस्य भाजन्त पित्वस्त इहागमिष्ठाः ॥ वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदानः ॥ फाल्गुणे शक्तिसहिताय चक्रिणे नमः । क्रियासहिताय गोविन्दाय नमः ॥ दुर्गायै नमः । त्र्यम्बकाय नमः, वरुणाय नमः, यज्ञपुरुषाय नमः अग्निष्वात्ता-दिभ्यः पितृगणदेवताभ्यो नमः ॥ ( प्रधान हैं ) ॥ रात्रीं प्रपद्ये जननीं सर्वभूतनिवेशिनीम् । भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ॥ संवेशिनीं संयमनीं ग्रहनक्षत्रमालिनीम् । प्रपन्नोहं शिवां रात्रीं भद्रे पारमशीमहिनमः । कालरात्र्यै नमः तालरात्र्यै नमः राज्ञिरात्र्यै नमः शिवरात्र्यै नमः ॥ यो रुद्रो अग्नौ य अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि गामश्वं पोषयित्वा स नो मृडातीदृशे ॥

| | | | | |
|---|---|---|---|---|
| द्वादश्यां<br>त्रयोदश्यां | "पूर्वे" | देवीपुत्र हेरकनाथाय<br>देवीपुत्र वटुकनाथाय | "आग्नेये" | त्रिपुरान्तकाय<br>भूतबलेभ्यो |
| "दक्षिणे" | वेतालराजाय<br>अग्निवेतालराजाय | "नैर्ऋते" | अग्निजिह्वाय<br>बहुखातकेश्वराय | "पश्चिमे" |
| करालाय<br>स्थानक्षेत्रपालाय | "वायवे" | कामाख्याय<br>मङ्गलराजाय | "उतरे" | एकपादाय<br>योगिनीबलेभ्यो |

"ईशाने" भीमरूपिणे विश्वक्सेनाय "ऊर्ध्वे" तारकाख्याय जयक्सेनाय "पाताले" हाटकेश्वराय तेजाय "मध्ये" राजराजेश्वराय चण्डाय नमः समस्तशिवरात्रीयागदेवताभ्यो नमः तद्विष्णोःपरमं० विष्णु–पञ्चायतनदेवताभ्योनमः। अभयङ्करीदेव्यै नमः क्षेमङ्करीभगवत्यै नमः सर्वशत्रुघातिन्यै नमः इह राष्ट्राधिपतये अमुकभैरवाय नमः ॥ यौ ते श्वानौ यमरक्षतारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परिदेहिराजन्स्वस्ति चास्मा अनमीवञ्च धीहि ॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि तत्र हव्यानि गन्तय ॥ मुञ्चामि त्वा हविषा जीवनायकमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहि जग्राह यदि वैतदेनन्तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥ गायत्र्यै नमः । ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥३॥ ऐन्द्राग्नं वर्म वहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ (कलश को नैवेद्य रखना) सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामादधे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय फाल्गुणे शक्तिसहिताय चक्रिणे, क्रि-

यासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै द्वादश्यां त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथाय देवीपुत्रवटुकनाथाय

"आग्नेये" त्रिपुरान्तकाय भूतबलेभ्यः "दक्षिणे" वेतालराजाय अग्निवेतालराजाय "नैर्ऋतये"

अग्निजिह्वाय बहुखातकेश्वराय "पश्चिमे" करालाय स्थानक्षेत्रपालाय "वायवे" कामाख्याय मङ्गलराजाय

"उत्तरे" एकपादाय योगिनीबलेभ्यः "ईशाने" भीमरूपिणे विश्वक्सेनाय "ऊर्ध्वे"

तारकाख्याय जयक्सेनाय "पाताले" हाटकेश्वराय तेजाय "मध्ये" राजराजेश्वराय चण्डाय

समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय तिलतण्डुलमात्रं दधिमधुमिश्रं ॐ नमो नैवेद्यं निवेदयामि नमः॥ ( कलश को फूल अर्घ छोडना )॥

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव । ईशेयो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ २ ॥ य ओजदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ३ ॥ येन द्यौरुग्रा पृथिवी दृढा येन सुस्तम्भितं येन नाकम् । यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा

विधेम ॥ ४ ॥ य इमे द्यावा पृथिवी तस्तभाने आधारयद्रोधसी रेजमाने । यस्मिन्नधि विततः सूर एति कस्मै देवाय हविषा विधेम ॥५॥ यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः । दिशो यस्य प्रदिशः पञ्चदेवी कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो ह यन्महती विश्वमायुर्गर्भं दधाना जनयन्तीरग्निम् । ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥ आ नः प्रजाञ्जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ८ ॥ अर्चन्तस्त्वा हवामहे अर्चन्तः समिधीमहि । अग्नेरर्चत ऊतये अर्चत प्रार्चत प्रियमेधसो अर्चत । अर्चन्तु पुत्रका उत पुरं न धृष्णमर्चत अर्चत अर्चत ॥
इति कलशस्थापनम् ॥

अथ पूजाविधिः ।(पीठ परे सन्यपुतुल रखके, पानी छोडना)। अस्य श्री आसनशोधनमन्त्रस्य, मेरुपृष्ठ ऋषिः, सुतलं च्छन्दः, कूर्मो देवता, आसनशोधने विनियोगः । मेरुपृष्ठ ऋषये नमः शिरसि (सिरको हाथों से छोना) सुतलं च्छन्दसे नमः, मुखे (मुंहको) कूर्मो देवतायै नमः हृदि (हृदय को) आसनशोधने विनियोगाय नमः सर्वाङ्गेषु । (सब अङ्गों को)॥ (दो दर्भकाण्डे भूमी को आसन छोडना) ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि । (गन्ध अर्घ फूल देना) श्रीं पृथिव्यै आधारशक्त्यै समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः । (हाथ जोड के मांगना) पृथ्वि त्वया

धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ (अथ इष्टदेवके स्मरणपूर्वक नमस्कार करना) शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ गुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे नमः, परमाचार्याय नमः, आद्यसिद्धेभ्यो नमः ॥ (अब न्यास करना) अ नाभौ (नाभिस्थान को हाथोंसे छोना) उ हृदि (हृदयको) म शिरसि (सेरको) । भूः पादयोः (पैरोंको) । भुवः हृदि (हृदयको) स्वः शिरसि (सेरको) भूरङ्गुष्ठाभ्यां नमः (अङ्गुठोंको) भुवस्तर्जनीभ्यां नमः (दूसरी अंगुली को) स्वर्मध्यमाभ्यां नमः (तीसरी अङ्गुली को) महः अनामिकाभ्यां नमः (चौथमी अङ्गुली को) जनः कनिष्ठिकाभ्यां नमः (पिच्छली अङ्गुली को) तपःसत्यं करतलकरपृष्ठाभ्यां नमः (हाथों के दोतले और दो पीठभी मेलाना) भूः पादयोः (पैरोंको) भुवः जान्वोः (घुट्टनोंको) स्वः गुह्ये (गुदाको) महः नाभौ (नाभी को) जनः हृदि (हृदयको) तपः कण्ठे (गले को) सत्यं शिरसि (सेरको) ॥ भूः हृदयाय नमः (हृदयको) भुवः शिरसे स्वाहा (सिरको) स्वः शिखायै वषट् (शिखाको) महः कवाचाय हुं (बाही हाथ दाही कान के दाही हाथ बाही कान के आगे रखना)

जनः नेत्राभ्यां वौषट् ( आखोंको ) तपः सत्यमस्त्राय फट् ( तीन छोटिका सिरको ईर्द गीर्द मारना ) ॥ ( इसीतराह औरोंभी ) तत्सवितुरङ्गुष्ठाभ्यां नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गो देवस्य मध्यमाभ्यां नमः । धीमहि अनामिकाभ्यां नमः । धियो योनः कनिष्ठिकाभ्यां नमः । प्रचोदयात्करतलकरपृष्ठाभ्यां नमः । तत्पादयोः सवितुर्जान्वोः ॥ वरेण्यं कट्यां । भर्गो नाभौ ॥ देवस्य हृदये । धीमहि कण्ठे ॥ धियो नासिकायां । यश्चक्षुषे ॥ नः ललाटे । प्रचोदयाच्छिरसि ॥ तत्सवितुर्हृदयाय नमः । वरेण्यं शिरसे स्वाहा ॥ भर्गो देवस्य शिखायै वषट् । धीमहि कवचाय हुं ॥ धियो योनः नेत्राभ्यां वौषट् । प्रचोदयादऽस्त्राय फट् ॥ आपः स्तनयोः । ज्योतिर्नेत्रयोः ॥ रसो मुखे । अमृतं ललाटे ॥ ब्रह्मभूर्भुवः स्वरों शिरसि । यो रुद्रो अग्नौ, हृदयाय नमः ॥ यो अप्सु य ओषधीषु, शिरसे स्वाहा । यो वनस्पतिषु, शिखायै वषट् ॥ यो रुद्रो विश्वा भुवना विवेश, कवचाय हुँ । तस्मै रुद्राय, नेत्राभ्यां वौषट् ॥ नमो अस्तु देवा अस्त्राय फट् । ( चारों तरफ तेल फेकते हुई पडना) अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ( प्राणायाम करना ) । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयादोमापो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ ( पैरो और मुंह को छेडकना ) तीर्थे स्नेयं तीर्थमेव समानानां भवति, मानः शंसो अररुषो धूर्तिः प्राणङ् मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ ( पवित्र अनामिका में धारना ) वसोः

पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्ति ॥ (शकुनसहित आशीर्वाद देना) ॥ यावदिन्द्रादयो देवा यावच्चन्द्रदिवाकरौ। यावद्रामकथा लोके भूयात्तावत्स्थितिस्तव ॥ (रक्षासूत्र बान्धना) ॥ यदाबन्धन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानः । तन्म आबध्नामि शतशारदायाऽयुष्माञ्जर-दष्टिर्यथासत् ॥ रक्षस्व मे केशवः सविता सत्यधर्मा रक्षस्व मे केशवः प्राणधनानि यानि। रक्षस्व मे केशवश्चोभयलोकवीरं शंनो भवतु मे द्विपदे शं चतुष्पदे ॥ रक्षाणो ब्रह्मणस्पते ॥ (अपने आप को गन्ध व पुष्प और अर्घ लगाना) परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणाय आधारशक्त्यै समालभनं गन्धो नमः। अर्घोनमः। पुष्पं नमः ॥ (दीवा को गन्ध अर्घ और फूल चडाना)। स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः । प्रसीद मम गोविन्द दीपोयं परिकल्पितः।(धूप को)। वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः। आधारः सर्वदेवानां धूपोयं परिकल्पितः ॥ (सूरज को) नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे। नमः प्रत्यक्षदे-वाय भास्कराय नमो नमः ॥ (अर्घ व विष्टर समेत पानीसे संकल्पछोडना) यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च। न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये। आत्मने नारायणाय आधारशक्त्यै दीपधूपसङ्कल्पात्सि-द्धिरस्तु दीपोनमः धूपोनमः । तत्सद्ब्रह्म अद्यतावत्तिथावद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां शनिवारान्वितायां

महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय फाल्गुने शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः ॥ कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै

| | | | | |
|---|---|---|---|---|
| द्वादश्यां<br>त्रयोदश्यां | "पूर्वे" | देवीपुत्रहेरकनाथाय<br>देवीपुत्रवटुकनाथाय | "आग्नेये" | त्रिपुरान्तकाय<br>भूतबलेभ्यः |
| "दक्षिणे" | वेतालराजाय<br>अग्निवेतालराजाय | "नैर्ऋतये" | अग्निजिह्वाय<br>बहुखातकेश्वराय | |
| "पश्चिमे" | करालाय<br>स्थानक्षेत्रपालाय | "वायवे" | कामाख्याय<br>मङ्गलराजाय | "उत्तरे" |
| एकपादाय<br>योगिनीबलेभ्यः | "ईशाने" | भीमरूपिणे<br>विश्वक्सेनाय | "ऊर्ध्वे" | तारकाख्याय<br>जयक्सेनाय |
| "पाताले" | हाटकेश्वराय<br>तेजाय | "मध्ये" | राजराजेश्वराय<br>चण्डाय | समस्तशिवरात्रीदे- |

वताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं शिवरात्रीव्रतनिमित्तं दीपधूपात्संकल्पसिद्धिरस्तु दीपोनमः धूपोनमः ॥ अपसव्येन (बाहे तर्फ जञू रख के तिल समेत) नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे । नमो यमाय रुद्राय कान्तारपतये नमः ॥ ३ ॥ तत्सद्ब्रह्माऽद्यतावत्तिथा० ॥ पित्रे पितामहाय प्रपितामहाय । मात्रे पितामह्यै प्रपितामह्यै । मातामहाय प्रमातामहाय वृद्धप्रमा-

तामहाय । मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै समस्तमाता-पितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः शिवरात्रीव्रतनिमित्तं दीपः स्वधा धूपःस्वधा ॥ "सव्येन ॥" ( दाही तर्फ जनू रख के तीन दफा फूल और गन्ध विष्टरसहित पानीकी पात्र में छोडना ) संवः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥१॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संप्रिया वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ (सब देवों को जीवाधान देना, उस पानी से ) । अश्विनोः प्राणस्तौ ते प्राणन्दत्तान्तेन जीव मित्रावरुणयोः प्राणस्तौ ते प्राणंदत्तान्तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव । (देव को दो दर्भकाण्डों से चा मर सा न्यास करना) अ नाभौ, उ हृदि, म शिरसि, भूः पादयोः भुवः हृदि, स्वः शिरसि । भूरङ्गुष्ठाभ्यां नमः भुवस्तर्ज-नीभ्यां नमः स्वर्मध्यमाभ्यां नमः महः अनामिकाभ्यां नमः जनः कनिष्ठिकाभ्यां नमः तपःसत्यं करतलकरपृष्ठाभ्यां नमः । भूः पादयोः भुवःजान्वोः स्वःगुह्ये महः नाभौ जनःहृदि तपःकण्ठे सत्यं शिरसि । भूः हृदयाय नमः भुवःशिरसे स्वाहा स्वः शिखायै वषट् महःकवचाय हुं जनः नेत्राभ्यां वौषट् तपःसत्यमस्त्राय-फट् ॥ तत्सवितुरङ्गुष्ठाभ्यां नमः, वरेण्यंतर्जनीभ्यां नमः भर्गोदेवस्य मध्यमाभ्यां नमः धीमहिअनामिकाभ्यांनमः धियो-योनः कनिष्ठिकाभ्यांनमः प्रचोदयात्करतलकरपृष्ठाभ्यां नमः । तत्पादयोः सवितुर्जान्वोः वरेण्यं कट्यां भर्गो नाभौ, देवस्य हृदये, धीमहि कण्ठे, धियोनासिकायां, यश्चक्षुषे, नः

ललाटे, प्रचोदयाच्छिरसि । तत्सवितुर्हृदयाय नमः वरेण्यं शिरसेस्वाहा भर्गोदेवस्यशिखायैवषट् धीमहिकवचायहुं धियोयोनः नेत्राभ्यां वौषट् प्रचोदयादस्त्राय फट् । आपः स्तनयोः ज्योतिर्नेत्रयोः रसो मुखे अमृतं ललाटे ब्रह्मभूर्भुवःस्वरों शिरसि ॥ यो रुद्रो अग्नौ हृदयाय नमः, यो अप्सु य ओषधीषु शिरसे स्वाहा, यो वनस्पतिषु शिखायै वषट्, यो रुद्रो विश्वा भुवना विवेश कवचाय हुँ तस्मै रुद्राय नेत्राभ्यां वौषट्, नमो अस्तु देवाः अस्त्राय फट् ॥ (दो दर्भकाण्ड अक्षतयुक्त हाथ में रख के देवों से पूजा की आज्ञा लेना )। ॐभूः पुरुषमाऽवाहयामि नमः ॐभुवः पुरुषमावाहयामि नमः ॐस्वः पुरुषमावाहयामि नमः ॐभूर्भुवःस्वःपुरुषमावाहयामि नमः ॥३॥ ॐभूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ३ ॥ ॐह्रींश्रींदेवीपुत्राय विद्महे क्षेत्रेशमुख्याय धीमहि द्वादश्यां / त्रयोदश्यां तन्नः हेरकभैरवः / बटुकभैरवः प्रचोदयात् ॥३॥ ॐतत्सद्ब्रह्माद्यतावत्तिथावऽद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथावमुकायां अमुकवारान्वितायां महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेर्नारायणस्य "फाल्गुने" शक्तिसहितस्य चक्रिणः क्रियासहितस्य गोविन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणयागदेवतानां कालरात्र्याः तालरात्र्याः राज्ञिरात्र्या शिवरात्र्या द्वादश्यां / त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथस्य / देवीपुत्रबटुकनाथस्य

"आग्नेये" त्रिपुरान्तकस्य भूतबलानां "दक्षिणे" वेतालराजस्य अग्निवेतालराजस्य "नैर्ऋते" अग्निजिह्वस्य बहुखातकेश्वरस्य "पश्चिमे" करालस्य स्थानक्षेत्रपालस्य "वायवे" कामाख्यस्य मङ्गलराजस्य "उत्तरे" एकपादस्य योगिनीबलानां "ईशाने" भीमरूपिणः विश्वक्सेनस्य "ऊर्ध्वे" तारकाख्याय जयक्सेनस्य "पाताले" हाटकेश्वरस्य तेजस्य "मध्ये" राजराजेश्वरस्य चण्डस्य विष्णुपञ्चायतनदेवतानां अभयङ्करीदेव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इहराष्ट्राधिपतेः अमुकभैरवस्य आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं शिवरात्रीव्रतनिमित्तं कलशपूजनं शिवरात्रीयागपूजनमर्चामहं करिष्ये ॐ कुरुष्व ॥ (तिल सर्षप और जवें चारोंतर्फ फैंकके, आसन देना ॥)
मृडा नो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छञ्च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेः नारायणस्य "फाल्गुने" शक्तिसहितस्य चक्रिणः, क्रियासहितस्य गोविन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणयागदेवतानां कालरात्र्याः तालरात्र्याः राज्ञिरात्र्याः शिवरात्र्याः द्वादश्यां त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथस्य देवीपुत्रबटुकनाथस्य "आग्नेये" त्रिपुरान्तकस्य भूतबलानां

"दक्षिणे" वेतालराजस्य / अग्निवेतालराजस्य "नैर्ऋते" अग्निजिह्वस्य / बहुखातकेश्वरस्य "पश्चिमे" करालस्य / स्थानक्षेत्रपालस्य "वायवे" कामाख्यस्य / मङ्गलराजस्य "उत्तरे" एकपादस्य / योगिनीबलानां "ईशाने" भीमरूपिणः / विश्वक्सेनस्य "ऊर्ध्वे" तारकाख्यस्य / जयक्सेनस्य "पाताले" हाटकेश्वरस्य / तेजस्य "मध्ये" राजराजेश्वरस्य / चण्डस्य समस्तशिवरात्रीदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करीदेव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इह राष्ट्राधिपतेः अमुकभैरवस्य इदमासनं नमः ॥ (अर्घसमेत दो दर्भों हाथ में रख कर आवाहन करना) ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायैत्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै द्वादश्यां / त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथाय / देवीपुत्रबटुकनाथाय "आग्नेये" त्रिपुरान्तकाय / भूतबलेभ्यः "दक्षिणे" वेतालराजाय / अग्निवेतालराजाय "नैर्ऋते" अग्निजिह्वाय / बहुखातकेश्वराय "पश्चिमे" करालाय / स्थानक्षेत्रपालाय "वायवे" कामाख्याय / मङ्गलराजाय "उत्तरे" एकपादाय / योगिनीबलेभ्यः "ईशाने" भीमरूपिणे / विश्वक्सेनाय "ऊर्ध्वे"

तारकाख्याय / जयक्सेनाय “पाताले” हाटकेश्वराय / तेजाय “मध्ये” राजराजेश्वराय / चण्डाय

समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय युष्मान् वः पूजयामि ॐ पूजय । इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नः शमस द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्माणं द्वार्देवताः प्रजापतिं ब्रह्माणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं “फाल्गुने” शक्तिसहितं चक्रिणं क्रियासहितं गोविन्दं दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वात्तादीः पितृगणयागदेवताः

कालरात्रीं तालरात्रीं राज्ञिरात्रीं शिवरात्रीं द्वादश्यां / त्रयोदश्यां “पूर्वे”

देवीपुत्रहेरकनाथं / देवीपुत्रबटुकनाथं “आग्नेये” त्रिपुरान्तकं / भूतबलान् “दक्षिणे” वेतालराजं / अग्निवेतालराजं

“नैर्ऋते” अग्निजिह्वं / बहुखातकेश्वरं “पश्चिमे” करालं / स्थानक्षेत्रपालं “वायवे”

कामाख्यं / मङ्गलराजं “उत्तरे” एकपादं / योगिनीबलान् “ईशाने” भीमरूपिणं / विश्वक्सेनं “ऊर्ध्वे”

तारकाख्यं / जयक्सेनं “पाताले” हाटकेश्वरं / तेजं “मध्ये” राजराजेश्वरं / चण्डं समस्तशिवरात्रीदेवताः विष्णुपञ्चायतनदेवताः अभयङ्करीदेवीं क्षेमङ्करीभ-

वानीं सर्वशत्रुघातिनीं इहराष्ट्राधिपतिं अमुकभैरवं आवाहयिष्यामि ॐ आवाहय ॥ ( काश्मीरी भाषा में । बबरकाठ फुलों से आवाहन करना ) । ( द्वादशी दिनके आवाहन ) आवाहयामि देवेशं हेरकं भैरवेश्वरम् । उग्रदंष्ट्रं भीमरूपं पूर्वस्यां विघ्नहारकम् ॥ "पूर्वे" हेरकाय नमः ॥ आवाहयामि भूतेशं त्रिपुरान्तकभैरवम् । त्रिनेत्रं भीमकर्माणमाग्नेये विघ्ननाशकम् ॥ "आग्नेये" त्रिपुरान्तकाय नमः ॥ आवाहयामि विश्वेशं वेतालमतिभैरवम् । हयारूढं वृतं वीरैर्दक्षिणे दुःखहारकम् ॥ "दक्षिणे" वेतालराजाय नमः । आवाहयामि वीरेशमऽग्निजिह्वं शवासनम् । भूतसङ्घानुगं भीमं नैर्ऋते विघ्नभक्ष्यकम् ॥ "नैर्ऋते" अग्निजिह्वाय नमः । आवाहयामि श्रीकण्ठं करालं भैरवाकृतिम् । करालवदनं घोरं पश्चिमे कृतमङ्गलम् ॥ "पश्चिमे" करालाय नमः । आवाहयामि कामाख्यं भैरवेशं शवासनम् भक्ताभीष्टकरं क्रूरं वायवेऽतिसुखप्रदम् ॥ "वायवे" कामाख्याय नमः । आवाहयाम्येकपादभैरवं सिंहवाहनम् । त्र्यक्षं पिङ्गलकेशाढ्यमुत्तरे भयनाशनम् ॥ "उत्तरे" एकपादाय नमः । आवाहयामि प्रेताढ्यं भीमरूपिणमीश्वरम् । खड्गकपालमालाढ्यमीशाने सौख्यदं नृणाम् ॥ ईशाने" भीमरूपिणे नमः । आवाहयामि भूताढ्यं तारकाख्यंहि भैरवम् । उग्ररूपधरं भीममाकाशे भयनाशकम् ॥ "ऊर्द्ध्वे" तारकाख्याय नमः । आवाहयामि देवेन्द्रं हाटकेश्वरभैरवम् । भक्ताभीष्टकरं त्र्यक्षं पाताले भयकृन्तनम् ॥ "पाताले" हाटकेश्वराय नमः । आवाहयामि घोरास्यं राजराजेश्वरं प्रभुम् ॥ यक्षरक्षोगणैः सेव्यं मध्ये भीतिहरं नृणाम् ॥ "मध्ये" राजराजेश्वराय नमः ॥

( त्रयोदशी दिनके आवाहन ) कुलाकुलपदे योसौ पालको भूतविग्रहः । चिदानन्दरसपूर्णं वन्दे बटुकभैरवम् ॥ नृत्यन्तं भुजयुगलेन दत्ततालं पञ्चास्यं दहनपतङ्गकोटिभासम् । सत्पात्रद्विजक खड्गचर्महस्तं वीरेशं बटुकमभीष्टदं प्रपद्ये ॥ "पूर्वे" बटुकाय नमः ॥१॥ आवाहयामि चाग्नेये भूतबलगणं विभुम् । शवासनं रसभुजं भक्ताभयवरप्रदम् । "आग्नेये" भूतबलेभ्यो नमः ॥ २ ॥ आवाहयामि वक्रैकमग्निवेतालभैरवम् । खरकर्णं विशालाक्षं दक्षिणे विघ्नहारिणम् ॥ "दक्षिणे" अग्निवेतालराजाय नमः ॥ ३ ॥ आवाहयामि नैर्ऋत्यां त्वां बहुखातकेश्वरम् । उग्रदंष्ट्रं महौजस्कमष्टबाहुं शवासनम् । "नैर्ऋते" बहुखातकेश्वराय नमः ॥४॥ आवाहयामि वारुण्यां त्वां स्थानक्षेत्रपालकम् । त्रिलोचनं पञ्चवक्त्रं मुण्डखड्गाद्युदायुधम् । "पश्चिमे" स्थानक्षेत्रपालाय नमः ॥ ५ ॥ आह्वये मङ्गलेशानं पञ्चवक्त्रं कपालिनम् । षड्भुज रक्तवर्णं त्वां वायवे सिद्धिदं विभुम् । वायवे मङ्गलराजाय नमः ॥ ६ ॥ योगिनीबलवृन्दं तं प्रपद्येऽहं चतुर्भुजम् । उत्तरे योगिनीयुक्तं नृत्यगीतप्रियं प्रभुम् । उत्तरे योगिनीबलेभ्यो नमः ॥ ७ ॥ विष्वक्सेनं प्रपद्येहं पञ्चवक्त्रं भयानकम् । अष्टबाहुं दीर्घनासमैशान्यां सिद्धिदायकम् । "ईशाने" विष्वक्सेनाय नमः ॥ ८ ॥ जयक्सेनं प्रपन्नोहं त्रिनेत्रं सूकराननम् । आकाशे विघ्नभीतिघ्नं प्रेतासनकृतस्थितिम् । "ऊर्ध्वे" जयक्सेनाय नमः ॥ ९ ॥ आवाहयामि पाताले स्वामिनं तेजभैरवम् । त्रिनेत्रं प्रेतमध्यस्थं नानायुधविराजितम् । "पाताले" तेजाय नमः ॥ १० ॥ आवायाम्यहं मध्ये चण्डं चण्डेश्वरं विभुम् । सप्तवक्त्रं

विंशभुजं भक्ताभीष्टाभयप्रदम् । "मध्ये" चण्डाय नमः ॥११॥ भगवन्पुण्डरीकाक्ष भक्तानुग्रहकारक । अस्मद्यानुरोधेन सन्निधानं कुरु प्रभो ॥ ३ ॥ इत्याहूय तु गायत्रीं त्रिः समुच्चार्य तत्ववित् । मनसा चिन्तितैर्द्रव्यैर्देवमात्मनि पूजयेत् । तेजोरूपं ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत् ॥ (चारों तर्प जऊं फैंकके प्राणायाम करना ) पाद्यार्थमुदकं नमः ॥ ( पात्रका पानी हाथसे उसी में और छोडना ) शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः ॥ ( उस पात्र में लाजा गन्ध सर्वौषधी विष्टर और पानी रखना ) लाजाश्च कुङ्कुमं चैव सर्वौषधिसमन्वितम् । दर्भाङ्कुरं जलं चैव पश्चाङ्गं पाद्यलक्षणम् ( देवों को हाथ जोडना ) भगवन्तः पाद्यंपाद्यं ( पाद्य देना ) हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योनाः भवन्तु ॥ १ ॥ यासां देवा दिवि कृण्वन्ति भक्ष्यं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ २ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ ३ ॥ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे । मधुश्च्युतः शुचयो या पावकास्ता न आपः शंस्योना भवन्तु ॥ ४ ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये

नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै

शिवरात्र्यै द्वादश्यां / त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथाय / देवीपुत्रबटुकनाथाय "आग्नेये"

त्रिपुरान्तकाय / भूतबलेभ्यः "दक्षिणे" वेतालराजाय / अग्निवेतालराजाय "नैर्ऋते"

अग्निजिह्वाय / बहुखातकेश्वराय "पश्चिमे" करालाय / स्थानक्षेत्रपालाय "वायवे" कामाख्याय / मङ्गलराजाय

"उत्तरे" एकपादाय / योगिनीबलेभ्यः "ईशाने" भीमरूपिणे / विश्वक्सेनाय "ऊर्ध्वे"

तारकाख्याय / जयक्सेनाय "पाताले" हाटकेश्वराय / तेजाय "मध्ये" राजराजेश्वराय / चण्डाय

समस्तशिवरात्रीदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय पाद्यंनमः ।। (पाद्यकाशेष छोडना) पाद्यशेषं निवारयेत् ।। (और हाथसे वापस पात्रमें पानी छोडना) शन्नो देवीरभिष्टय आपो भवन्तु पीतये, शंय्योरभि स्रवन्तु नः ।। (उस पात्रमें पानी दूध विष्टर घृत दही चावल यवा सर्षप यह आठ द्रव्य पाके नमस्कार करना) आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति ह्यर्घ्यमष्टाङ्गमुच्यते ।। भगवन्तः अर्घ्यमऽर्घ्यम् । ( अर्घ्य देना )। त्वेषं वयं रुद्रं यज्ञसाधनमऽङ्कङ्कविमवसे निह्वयामहे । आरे अस्मद्दैव्यं हेडो

अस्यतु सुमतिमिद्वयमऽस्या वृणीमहे ॥ आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते हनः, उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः । महागणपते कुमार श्रीः सरस्वति लक्ष्मीः विश्वकर्मन् द्वार्देवताः प्रजापते ब्रह्मन् कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वर सानुचर ऋतुपते नारायण "फाल्गुने" शक्तिसहित चक्रिन् क्रियासहित गोविन्द दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निष्वात्तादयः पितृगणयागदेवताः कालरात्रि तालरात्रि राज्ञिरात्रि शिवरात्रि

द्वादश्यां<br>त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथ<br>देवीपुत्रवटुकनाथ "आग्नेये" त्रिपुरान्तक<br>भूतबलाः

"दक्षिणे" वेतालराज<br>अग्निवेतालराज "नैर्ऋते" अग्निजिह्व<br>बहुखातकेश्वर "पश्चिमे"

कराल<br>स्थानक्षेत्रपाल "वायवे" कामाख्य<br>मङ्गलराज "उत्तरे" एकपाद<br>योगिनीबलाः

"ईशाने" भीमरूपिन्<br>विश्वक्सेन "ऊर्ध्वे" तारकाख्य<br>जयक्सेन "पाताले" हाटकेश्वर<br>तेज

"मध्ये" राजराजेश्वर<br>चण्ड समस्तशिवरात्रीदेवताः विष्णुपञ्चायतनदेवताः अभयङ्करीदेवि क्षेमङ्करीभवानि सर्वशत्रुघातिनि इह राष्ट्राधिपते अमुकभैरव इदं वः अर्घ्यं नमः ॥ ( सफा पानीसे आचमन देना )। दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा निह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं वयं सत् ॥ शन्न आपो धन्वन्याः

शन्नः सन्त्वनूप्याः । शन्नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै

राज्ञिरात्र्यै शिवरात्र्यै द्वादश्यां<br>त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथाय<br>देवीपुत्रवटुकनाथाय

"आग्नेये" त्रिपुरान्तकाय<br>भूतबलेभ्यः "दक्षिणे" वेतालराजाय<br>अग्निवेतालराजाय "नैर्ऋते"

अग्निजिह्वाय<br>बहुखातकेश्वराय "पश्चिमे" करालाय<br>स्थानक्षेत्रपालाय "वायवे" कामाख्याय<br>मङ्गलराजाय

"उत्तरे" एकपादाय<br>योगिनीबलेभ्यः "ईशाने" भीमरूपिणे<br>विश्वक्सेनाय "ऊर्ध्वे"

तारकाख्याय<br>जयक्सेनाय "पाताले" हाटकेश्वराय<br>तेजाय "मध्ये" राजराजेश्वराय<br>चण्डाय

समस्तशिवरात्रीदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय आचमनीयं जलं नमः ॥ (सफा पानीसे और भी मैली उठानी ) ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् । रास्वाचनो अमृत मर्त्यभोजनं त्मने तोकाय तनयाय मृड ॥ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभिदुद्रोह यद्वाशेप उतानृतम् ॥ महागणपतये० चातुर्वेदेश्व-

राय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै द्वादश्यां त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथाय देवीपुत्रबटुकनाथाय "आग्नेये" त्रिपुरान्तकाय भूतबलेभ्यः "दक्षिणे" वेतालराजाय अग्निवेतालराजाय "नैर्ऋते" अग्निजिह्वाय बहुखातकेश्वराय "पश्चिमे" करालाय स्थानक्षेत्रपालाय "वायवे" कामाख्याय मङ्गलराजाय "उत्तरे" एकपादाय योगिनीबलेभ्यः "ईशाने" भीमरूपिणे विश्वक्सेनाय "ऊर्ध्वे" तारकाख्याय जयक्सेनाय "पाताले" हाटकेश्वराय तेजाय "मध्ये" राजराजेश्वराय चण्डाय समस्तशिवरात्रीदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय मन्त्रस्नानीयं नमः ॥ ( पानी दूध दही घी शहद लाजा सर्षप तिल जव शाली विष्ठर दूर्वा मिट्टी भस्म मेवा मिठास पञ्चामृत पञ्चगव्य कर्पूर सर्वौषधी गन्ध और फूल, २१ यह एकीस द्रव्य पात्र में जमा करना ) पयोदधिघृतक्षौद्रलाजासिद्धार्थकास्तिलाः । यवव्रीहिकुशादूर्वामृद्भस्मफलशर्कराः । पञ्चामृतं पञ्चगव्यं कर्पूरौषधयस्तथा । एकविंशतिस्नानानि गन्धाद्भिःकुसुमैरपि ॥ ( इन से स्नान देना ) ( पानी ) । उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय । अथावयं अदित्यव्रते तवानागसो अदितये स्याम ॥१॥

( क्षीर ) पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥ ( दही ) । दधि क्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत् ॥ ३ ॥ ( घी ) घृतवती भुवनानामभिश्रियोर्वी पृथिवी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कम्भिते अजरे भूरिरेतसा ॥ ४ ॥ ( शहद ) । मधुवाता ऋतायते मधुक्षिरन्ति सिन्धवः । माध्वीर्नः सन्त्वौषधीः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः, मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमानऽस्तु सूर्यः, माध्वीर्गावो भवन्तु नः ॥ ५ ॥ ( लाजा ) । तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगऽस्य मांसमऽभवन्न लाजाः ॥ ६ ॥ ( सर्षप ) । रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समृद्धः स नोदिवः सरिषः पातु नक्तम् ॥ ७ ॥ ( तिल ) । तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रयत्नवद्भिः पितृंल्लोकान्प्राण आयाहि नः स्वधा ॥ ८ ॥ (यवा) । यवोसि यवयास्मद्द्विषं यावया रातिम् । पितृषदनं त्वा लोकमास्तृणामि ॥ ९ ॥ ( शाली ) । धान्यमसि धिनोहि देवान्धिनोहि यज्ञं धिनोहि यज्ञपतिं धिनोहि मां यज्ञम् ॥ १० ॥ ( दर्भांकुर ) । देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे ॥ ११ ॥ ( दूर्वा ) । काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ १२ ॥ ( मिट्टी ) । आक्रम्य वाजिन्पृथिवीमग्निमिच्छा रुचात्वम् ।

भूम्यायत्वायनो ब्रूहि यतः खनेम ते वयम् ॥१३॥ ( भस्म )। प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने: । संसृज्य मातृभिष्टं ज्योतिष्मान्पुनरासदः ॥ १४ ॥ ( मेवा ) । याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः । बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वंहसः ॥ १५ ॥ ( मिठास )। शर्कराभिरवकामऽवकाभिः शर्करामुत्सादेन जिह्वामवक्रन्देन तालुं सरस्वती जिह्वाग्रेण ॥ १६ ॥ ( घी दही तिल जव और शर्कर रूप। पञ्चामृत ) । पञ्चव्युष्टीरनुपञ्च दुहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोकमेकम् ॥ १७ ॥ ( पञ्चगव्य )। गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम् । मिश्रीकृत्य। समुद्रादूर्मिर्मधुमा उदारदुपांशुना समऽमृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानामऽमृतस्य नाभिम् ॥१८॥ (कपूर)। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥१९॥ ( सर्वौषधीः )। या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामहं शतं धामानि सप्त च ॥ २० ॥ ( गन्ध )। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । ( और फूल )। पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः । ॥ २१ ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोवि-

१४३ पृष्ट ९ पंक्तिमें "एकविंशतिस्नानानि नमः" पीछे है

अथ पञ्चदशस्नानानि ॥ पानीयान्तरितैः पयोदधिघृतैः क्षौद्रेक्षुभिः सौषधैर्व्रीह्यद्भिः कुसुमोदकैः फलजलैः सिद्धार्थलाजोदकैः । गन्धाद्भिः शुभहेमरत्नसलिलैरित्थं सदा चोत्तमैर्दद्यात्पञ्चदशाम्बुना सह महास्नानानि शम्भोः क्रमात् ॥ (अब पानी क्षीर दही घी शहद खण्ड सर्वौषधी शाली फूल मेवा सर्षप लाज चन्दन सोना और रत्न इन पंद्राह द्रव्योंसे स्नान देना ) ॥ असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम् । तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ १ ॥ येऽस्मिन्महत्यर्णवेऽन्तरिक्षे भवा अधि । तेषां सहस्रयोजने० ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठाः दिवं रुद्रा उपाश्रिताः । तेषां० ॥ ३ ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः । तेषां० ॥४॥ ये वनेषु शिष्पिञ्जरा नीलग्रीवा विलोहिताः । तेषां० ॥ ५ ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् । तेषां० ॥६ ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः । तेषां० ॥ ७ ॥ ये पथीनां पथि रक्षय ऐड मृदाय व्युधः । तेषां० ॥ ८ ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः । तेषां० ॥९॥ य एतावन्तो वा भूयांसो वा दिशो

रुद्रा वितिष्ठिरे । तेषां० ॥ १० ॥ ॐ नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दश उदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १ ॥ ॐ नमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दश उदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ २ ॥ ॐ नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दश उदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ३ ॥ ॐ भूर्भुवः स्वः क्षुच्च शुक् च उष्णा च उग्रा च भीमा च राष्ट्रा च बीभत्सा च वैशन्ता च शार्दूराका चानिराका चामीवाचानाहुतिश्च निर्ऋतिरेतास्तेऽग्निवर्तिमतिस्तन्वस्ताभिस्त्वं गच्छ योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमर्पय ॥ ॐ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ भवाय देवाय० । पूर्वे देवीपुत्रबटुकनाथाय० शिवरात्रीयागदेवताभ्यः पञ्चदशस्नानानि नमः ॥

न्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञीरात्र्यै शिवरात्र्यै द्वादश्यां त्रयोदश्यां "पूर्वे" देवीपुत्रहेरकनाथाय देवीपुत्रबटुकनाथाय "आग्नेये" त्रिपुरान्तकाय भूतबलेभ्यः

"दक्षिणे" वेतालराजाय अग्निवेतालराजाय "नैर्ऋते" अग्निजिह्वाय बहुखातकेश्वराय "पश्चिमे"

करालाय स्थानक्षेत्रपालाय "वायवे" कामाख्याय मङ्गलराजाय "उत्तरे" एकपादाय योगिनीबलेभ्यः

"ईशाने" भीमरूपिणे जयक्सेनाय "ऊर्ध्वे" तारकाख्याय विश्वक्सेनाय "पाताले"

हाटकेश्वराय तेजाय "मध्ये" राजराजेश्वराय चण्डाय समस्तशिवरात्रीयागदेवताभ्यः

विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय एकविंशतिस्थानानि नमः ॥ ( देवोंको अर्घ दही तिल शहद घी समेत पानी से तृप्ति करनी)। ततो दध्यक्षततिलैरित्थं मध्वाज्यमिश्रितैः। तर्पयेदुदकैर्देवानृषिपूर्वान्सपितृकान् ॥ ( अञ्जली करके देवों का ध्यान करना)। गृत्समदस्य गायत्री ॥ विश्वेदेवास आगत। श्रृण्वताम इमं हवमिदं बर्हिर्निषीदत । ( तर्पण करना )। ब्रह्मा तृप्यतां विष्णुस्तृप्यतां रुद्रस्तृप्यतां प्रजापतिस्तृप्यतां वेदास्तृप्यन्तां छन्दांसि तृप्यंतां ऋषयस्तृप्यन्तां तपोधनास्तृप्यन्तां आचार्यास्तृप्यन्तां गन्धर्वास्तृप्यंतां पितराचार्यास्तृप्यन्तां संवत्सराः सावयवास्तृप्यन्तां देवास्तृप्यन्तां अप्सरसस्तृप्यन्तां देवानुगास्तृप्यन्तां नागास्तृप्यन्तां सागरास्तृप्यन्तां पर्वता-

स्तृप्यन्तां सरितस्तृप्यन्तां मनुष्यास्तृप्यन्तां यक्षास्तृप्यन्तां रक्षांसि तृप्यन्तां पिशाचास्तृप्यन्तां सुपर्णास्तृप्यन्तां भूतानि तृप्यन्तां पशवस्तृप्यन्तां वनस्पतयस्तृप्यन्तां ओषधयस्तृप्यन्तां भूतग्रामाश्चतुर्विधास्तृप्यन्तां असुरास्तृप्यन्तां क्रूरास्तृप्यन्तां सर्पास्तृप्यन्तां जम्बुकास्तृप्यन्तां खगास्तृप्यन्तां विद्याधरास्तृप्यन्तां जलाधारास्तृप्यन्तां निराधारास्तृप्यन्तां पापधर्मरतास्तृप्यन्तां सर्वे देवाः सर्वे ग्रहास्तृप्यन्तां यमस्तृप्यतां धर्मराजस्तृप्यतां मृत्युस्तृप्यतां अन्तकस्तृप्यतां वैवस्वतस्तृप्यतां कालस्तृप्यतां सर्वप्राणहरस्तृप्यतां औदुम्बरस्तृप्यतां नीलस्तृप्यतां ब्रभ्रस्तृप्यतां परमेष्ठिस्तृप्यतां वृकोदरस्तृप्यतां भीमस्तृप्यतां चित्रस्तृप्यतां चित्रगुप्तस्तृप्यतां ॥ ( गले मे जञ्जू रखना )। कण्ठोपवीती। ( ऋषियोंका ध्यान करना ) अग्निर्ऋषिः पावमानः पञ्चजन्यः पुरोहितः, तमीमहे महागयम् ॥ ( ऋषियोंको दो दो अञ्जलि करतलसे देना )। सनकस्तृप्यतां तृप्यतां सनन्दनः, सनातनः, सनत्कुमारस्तृप्यतां २ कपिलः, आसुरिः वोढा पञ्चशिखः मरीचिः अत्रिः अङ्गिराः, पुलहः, पुलस्त्यः, भृगुः, क्रतुः, प्रचेताः, वसिष्ठः, नारदस्तृप्यतां तृप्यतां ॥ ( बाहे तरफ जञ्जू रखना ) अपसव्येन। ( पितरोंका ध्यान करना ) उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशन्त आवह पितॄन्हविषे अत्तवे ॥ ( तीन तीन जलाञ्जली देना )। कव्यवाडऽनलः स्वधा येभ्यः स्वधा नमस्तृप्यतां तृप्यतां तृप्यतां, सोमः स्वधा येभ्यः स्वधा नमस्तृ० ३, यमः, अर्यमाः, अग्निष्वात्ताः स्वधा येभ्यः स्वधा नमस्तृप्यन्तां

२, बर्हिषदः स्वधायेभ्यः स्वधानमस्तृप्यन्तां २, हविष्मन्तः, सुकालिनः सोमपाः आज्यपाः वसवः रुद्राः आदित्याः स्वधा येभ्यः स्वधा नमस्तृप्यन्तां २ । देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह ॥ ॐ तत्सद्ब्रह्माऽद्यतावत्तिथावद्यफाल्गुनमासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां रविवारान्वितायां पितामुकोऽमुकगोत्रः स्वधा नमस्तृप्यतां २ पितामहः प्रपितामहः । माता पितामही प्रपितामही । मातामहः प्रमातामहः वृद्धप्रमातामहः । मातामही प्रमातामही वृद्धप्रमातामही । ( इसी तरह सब सम्बन्धियोंको पानी देना) मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः हिमपानं स्वधा क्षीरपानं स्वधा मधुपानं स्वधा तिलोदकं स्वधा उदकतर्पणं स्वधा हिमंहिमं रजतंरजतं ॥ (दाहीं तर्फ जञ्जू करना ) । सव्येन । वसन्तायनमः ग्रीष्मायनमः वर्षाभ्योनमः शरदेनमः हेमन्तायनमः शिशिरायनमः षड़ृतुभ्योनमः । ॐ नमो देवेभ्यः । ( गले में जञ्जू ) । कण्ठोपवीती । स्वाहा ऋषिभ्यः ( वाहे तर्फ जञ्जू ) । अपसव्येन । स्वधा पितृभ्यः । ( दाहे तर्फ जञ्जू ) । सव्येन । आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं । जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु ॥ ( सफा पानीसे स्नानद्रव्यों का मलमिटाना ) । त्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् । उर्वारुकमिव बन्धनान्मृत्यो-

मुक्षीय मामृतात् । शिवरात्रीदेवताभ्यः मन्त्रगुडकं परिकल्पयामि नमः ॥ ( बाहे हाथ के तलेमें पानी और अक्षत रखके देवताओंको आलत निकाल के बाहे स्कन्द से फैंकना ) ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं पृथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो देवः सरिषः पातु नक्तम् । शिवरात्रीदेवताभ्यः आरात्रिकां परिकल्पयामि नमः ॥ ( देव के पादों का पानी आंखों को मलना ) १ मृड त्वमसभ्यं रुद्रैतदस्तु हुतं तव । पशूनस्माकं मा हिंसीरेतदसा असद्धुतम् ॥ शिवरात्रीयागदेवताभ्यो नेत्रस्पर्शनं परिगृह्णामि नमः ॥ ( बिठाने के जगाह आसन फूलों से रखना ) । आसनाय नमः सिंहासनाय नमः प्रेतासनाय पद्मासनाय नमः वृषभासनाय विचित्रवाहासनाय नमः ( द्रव्यों के असम्भवकी माफी मांगकर सफाई और गन्ध अक्षतों से अङ्गराग करना ) । रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना । १ । या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्व ऽन्तः । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना । २ । सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्रह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना । ३ । या राजन्ये दुन्दुभावायतायामश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना । ( महिम्नः पार आदि स्तोत्र भी पढ कर ) । मा नो महान्तमुत मा नो अर्भकं मा न उक्ष-

न्तमुत मा न उक्षितम् । मा नो वधीः पितरमुत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ शिवरात्रीयागदेवताभ्योऽनुलेपनं परिकल्पयामि नमः । ( वस्त्र पहनना ) । मा न स्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमि त्वा हवामहे ॥ युवा सुवासाः परिवीत आगात्स उच्छ्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति साध्यो मनसा देवयन्तः ॥ शिवरात्रीदेवताभ्यः वस्त्रं परिकल्पयामि नमः ॥ ( जन्नू लगाना ) । उप ते स्तोमन्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे । भद्रा हि ते सुमतिर्मृडयत्तमाथावयमव इत्ते वृणीमहे ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा उपवीतेन उपनह्यामि ॥ शिवरात्रीदेवताभ्यः यज्ञोपवीतं परिकल्पयामि नमः ॥ ( गन्ध चडाना ) । आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु । मृडा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम् ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः कालरात्र्यै

तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै "पूर्वे" देवीपुत्रवटुकनाथाय "आग्नेये" भूतबलेभ्यः "दक्षिणे" अग्निवेतालराजाय "नैर्ऋते" बहुखातकेश्वराय "पश्चिमे" स्थानक्षेत्रपालाय "वायवे" मङ्गलराजाय "उत्तरे" योगिनीवलेभ्यः "ईशाने" जयक्सेनाय "ऊर्ध्वे" विश्वक्सेनाय "पाताले" तेजाय "मध्ये" चण्डाय शिवरात्रीदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय समालभनं गन्धोनमः ॥ (गन्ध लेप दो के, अर्घ और फूल चढाना) ॥ अवोचाम नमो असा अवस्यवः शृण्वन्तु नो हव्यं रुद्रो मरुत्वान् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीउत द्यौः ॥ पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव-सजित्वरीर्वीरुधः पारयिष्णवः ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै "पूर्वे" देवीपुत्रवटुकनाथाय "आग्नेये" भूतबलेभ्यः "दक्षिणे" अग्निवेतालराजाय "नैर्ऋते" बहुखातकेश्वराय "पश्चिमे" स्थानक्षेत्रपालाय "वायवे" मङ्गलराजाय "उत्तरे" योगिनीवलेभ्यः "ईशाने" जयक्सेनाय "ऊर्ध्वे" विश्वक्सेनाय "पाताले" तेजाय "मध्ये" चण्डाय शिवरात्रीदेवताभ्यः

विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय अर्घो नमः पुष्पं नमः (धूप चढाना) ॥ वयमग्ने धनवन्तः स्यामाऽलं यज्ञायोत दक्षिणायै । ग्रावा, वदेदऽभि सोमस्यांशुमिन्द्रं शिक्षिमिन्दुना सुतेन ॥ धूरसि धूर्व धूर्वन्तं योस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व । देवानामसि वह्नितमं सस्नितमं पप्रितममिष्टतमं देवहुतमं विष्णोः क्रमोस्याहुतमसि हविर्दानं दृंहस्व माह्वान्मित्रस्य त्वा चक्षुषा प्रेक्ष उरु त्वा वाताय वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वत् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वत् । आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाऽङ्गिरस्वत् । विश्वे त्वा देवा वैश्वानरा धूपयन्तु आनुष्टुभेन च्छन्दसाऽङ्गिरस्वत् इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु । शिवरात्रीदेवताभ्यो धूपं समर्पयामि नमः ॥ (रत्नदीप और कपूर चढाना) रायस्पोषं नो देहि जातवेद ऊर्जो भागं मधुमत्स्यां घृतावत् । दधान यज्ञं सुवनाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र ॥ तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ शिवरात्रीदेवताभ्यो रत्नदीपं कर्पूरं परिकल्पयामि नमः (चामर करना) ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे ॥ "जय सर्व जनाधीश" (इह शिवपूजा की तीन स्तोत्र पढकर) शिवरात्रीदेवताभ्यश्चामरं परिकल्पयामि नमः ॥ (फूलों का छत्र

चढाना ) ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ शिवरात्रीदेवताभ्यः छत्रं परिकल्पयामि नमः ॥ ( आईना दिखना ) । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ शिवरात्रीदेवताभ्यः आदर्शं परिकल्पयामि नमः ॥ ( पानी छोडना ) ॥ एताभ्यो देवताभ्यो धूपदीपात्सङ्कल्पसिद्धिरस्तु धूपो नमः दीपो नमः ॥ ( कलश को भी वस्त्र या फूल देना ) ॥ एताभ्यो देवताभ्यो वासो नमः ( माफी लेना ) एतासां शिवरात्रीदेवतानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ ( दूध और कन्द चढाना ) ईशानं त्वा शुश्रुमा वयं धनानां धनपते गोमदग्ने । अश्ववद्भूरि पुष्टं हिरण्यवद्धनवद्धेहि मह्यम् ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ शिवरात्रीदेवताभ्यो मात्रामधुपर्कं चरुं समर्पयामि नमः ॥ ( आलचा सुपारी नार्जील वगैरा ताम्बूल चढाना ) ॥ ताम्बूलं विविधैर्द्रव्यैर्नारिकेलादिभिर्युतम् । मुखशुद्धिकरं स्वामिन्गृहाण वरदो भव । शिवरात्रीदेवताभ्यस्ताम्बूलं समर्पयामि नमः ( आधा प्रक्रम देना ) । दुहान्ते द्यौः पृथिवी पयोऽजगरस्त्वा सोदको विसर्पतु । प्रजापतिनात्मनाप्रीणेऽरिक्तो स आत्मा ॥ ॐ नमो भैरवेशाय बटुकभैरव सानुग भगवन् प्रसीद ॥ ( दीनाक्रन्दनस्तोत्रादि पढकर साष्टाङ्ग प्रणाम करना ) ॥ उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा चोरसा वचसा मनसा च नमस्कारं करोमि

नमः ॥ ( कमी या अधिक होनी की माफी माङ्गना ) ॥ अन्नंनमः अन्नंनमः आज्यमाज्यमद्य दिने अद्य यथासङ्कल्पात्सिद्धिरस्तु अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्वमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ ( हाथ से पात्र में वापस किये पानीसे आचमन देना ) । शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः । शिवरात्रीदेवताभ्योऽपोशानं नमः आचमनीयं नमः । ( और हाथ से पात्र में उलटाये पानी में तिल और दक्षिणा देना ) । पुनः, शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः । शिवरात्रीदेवताभ्यो दक्षिणायैतिलहिरण्यरजतनिष्कर्णं ददाति । एता देवताः सदक्षिणा अनेन प्रीयन्तां प्रीताः सन्तु ॥ ( कलश को दो फूल चडाना ) । ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् ॥ १ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥ २ ॥ ( बटुक को फूल ) ॥ नाथं नाथं त्रिभुवननाथं भूतिसितं त्रिनयनं त्रिशूलधरम् । उपवीतीकृतभोगिनमिन्दुकलाशेखरं वन्दे ॥ ( अत्र नित्यकर्म जपपाठादि करके व्याहृति करना ) ।

## अथ व्याहृतिः ॥

( अग्नि जलाकर उसके ईशानकोणे पर विष्टर तिल अक्षत फूल और पानीवाला प्रणीतपात्र रख के उस में और अग्निमेंभी तिल छोडना ) । पात्रं तिलाक्षतैर्मिश्रं कुसुमोदकविष्टरैः । अग्नेश्चैशानदिग्भागे

प्रणीतमभिधीयते ॥ प्रणीतं नैर्ऋते स्थाप्यं स विष्णुर्नात्र संशयः ॥ (पात्र में तीन दफा फूल छोडना) ॥ सं वः सृजामीति द्वाभ्यां पुष्पाणां त्रितयं क्षिपेत् ॥ सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥ १ ॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संय्यावः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ ( दो दर्भकाण्ड जलाई दाहे तरफ छोडना ) । निर्दिग्धं रक्षो निर्दग्धारातिरपाग्ने । अग्निमामादं जहि निष्क्रव्यादं सीधा देवयजनं वह ॥ ( प्राणायाम करके अग्नि को प्रणीत पात्र में से नौ छिडकियां देना ) ॥ ऋतं त्वा सत्येन परिसमूह्यामि ॥ १ ॥ सत्यं त्वर्तेन परिसमूह्यामि ॥ २ ॥ ऋतसत्याभ्यां त्वा परिसमूह्यामि ॥ ३ ॥ ऋतं त्वा सत्येन पर्युक्षामि ॥ ४ ॥ सत्यं त्वर्तेन पर्युक्षामि ॥ ५ ॥ ऋतसत्याभ्यां त्वा पर्युक्षामि ॥ ६ ॥ ऋतं त्वा सत्येन परिषिञ्चामि ॥ ७ ॥ सत्यं त्वर्तेन परिषिञ्चामि ॥ ८ ॥ ऋतसत्याभ्यां त्वा परिषिञ्चामि ॥ ९ ॥ ( अग्नि के चार दिशायों के पूर्व और उत्तर अग्रवाला के चार दर्भकाण्ड छोडना ) । यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै स्तृणामि । पुरस्तात्, दक्षिणतः, उत्तरतः, पश्चात्, इति स्तरैः ॥ ( अग्नि को गन्ध फूल लगाना ) । अग्नये शुकारूढाय स्वाहासहिताय त्रिनेत्राय तेजोरूपाय समालभनं गन्धोनमः अर्घोनमः पुष्पं नमः ॥ ( दर्भकाण्ड दो जलाकर यवा, तिल, घी, दही, मिठास, रूप पञ्चामृत हवि में लगाना)। इदं हविः प्रजननं मे अस्तु

दशवीरं सर्वगणं स्वस्तये आत्मसनि प्रजासनि पशुसनि अभयसनि लोकसनि अग्निः प्रजां बहुलां मे करोतु अन्नं पयो रेतो अस्मासु दत्त घृतेन संलिप्य शृतमन्नं शृतमभिघार्य ॥ (महागायत्रीका ध्यान करके अग्निमें फूल चढाना) । मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी । गायत्रि च्छन्दसां मातर्ब्रह्मयोने नमोस्तु ते ॥ २ ॥ (आहुती अनवच्छन्न देना)। "महाव्याहृतयः प्रजापतेः" । ॐ अग्नये स्वाहा ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहा। ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ महः स्वाहा ॐ जनः स्वाहा ॐ तपः स्वाहा ॐ सत्यं स्वाहा ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ३ ॥ (फूल चढाना)। अश्वमेधे घोराणामार्षम् । (आहुति देना)। द्रष्ट्रेनम, उपद्रष्ट्रे नमोऽनुद्रष्ट्रेनमः, ख्यात्रेनम, उपख्यात्रेनमो, नुक्शास्त्रेनमः, शृण्वतेनम, उपशृण्वतेनमः, सते नमोऽसते नमो, जाताय नमो, जनिष्यमाणाय नमो, भूताय नमो, भविष्यते नमश्चक्षुषे नमः, श्रोत्राय नमो, मनसे नमो, वाचे नमो, ब्रह्मणे नमः शान्ताय नमस्तपसे नमः ॥ भूतं भव्यं भविष्यद्वषट्स्वाहा नम, ऋक्साम यजुर्वषट् स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट् स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट् स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः, पिता पुत्रः पौत्रो वषट्

स्वाहा नमः, प्राणो व्यानोऽपानो वषट् स्वाहा नमो, भूर्भुवः स्वर्वषट् स्वाहा नमः ॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात् । संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चस्वी जायतामऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां, दोग्ध्री धेनुर्वोढाऽनड्वानाऽऽशुः सप्तिर्जिष्णूरथेष्ठः पुरन्धिर्योषा सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यतां योगक्षेमो नः कल्पताम् ॥ (फूल चढाना)। चतुर्भुजामऽर्कसहस्रकोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखाङ्कोपगतां महोज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ॥ (आहुती देना) । ॐ ओजोसि सहोसि बलमसि भ्राजोसि देवानान्धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॥ ॐ देवाश्च वा असुराश्च संय्यन्ता आसंस्तान्गायत्र्याऽन्तरातिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो वा वैनान्सोऽन्तरातिष्ठच्चतुर्विंशतिर्गायत्र्या अक्षराणि चतुर्विंशतिः संवत्सरस्यार्धमासास्ते विदुर्यतरान्वा इयमुपवर्त्स्यति त इदं भविष्यन्तीति तं व्यहूयन्तदाभीत्यसुराह्वयन् विश्वकर्मन्निति देवासस्तान्यतरांश्च नोपवर्तत ते देवा एतद्यजुरपश्यन्नोजोसि सहोसि बलमसि भ्राजोसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरिति सा देवानुपावर्तत ततो देवा अभवन् पराऽसुरा अभवन्नाग्नेयमष्टाकपालं निर्वापेद्भ्रातृव्यवान्वा स्पर्धमानो वा तमाऽसाद्यैतैर्यजुर्भिरभिमृशेदोजो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृव्यस्य

वृङ्क्ते स निर्वीर्यः पराभवति सैषा गायत्री नामेष्टे रथो आहुः क्षेत्रस्य संवर्ग इति ॥ श्रीमहागायत्र्यै स्वाहा सावित्र्यै स्वाहा सरस्वत्यै स्वाहा । (तर्पण करना)। अनेन मन्त्रहोमेन आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं शिवरात्रीव्रत-निमित्तं महागायत्रीदेवीसन्तोषणार्थं महागायत्री सावित्री सरस्वती प्रीयतां प्रीताऽस्तु । (आहुती देना)। अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय। विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव यज्ञम् ॥ १ ॥ इहैवैधि मा पच्योष्ठाः पर्वता इवाविचाचलत् । इन्द्र इहेव ध्रुवस्तिष्ठेह यज्ञमुधारय ॥ २ ॥ इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा हविः । तस्मै सोमो अधिब्रुवत्तस्मा उ ब्रह्मणस्पतिः ॥ ३ ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्व-मिदं जगद्ध्रुवो राजा विशामसि ॥ ४ ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ ५ ॥ बडित्था पर्वतानां क्षेत्रं बिभर्षि पृथिवि । प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ ६ ॥ निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवंश्चित्रमर्च ॥ १ ॥ कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य नमिमज्जनासः पुरः पश्यन्ति निहितमरतौ ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्ति-नादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥३॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानुगिरीणान्तविषेभिरूर्मिभिः । पा-रावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥४॥

कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ५ ॥ विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शिनः । ते त्वा घृतस्य धारया श्रेष्ठाय समसृपत ॥ ६ ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ ७ ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वऽधि क्षियन्ति भुवनानि विश्वा ॥ ८ ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ ९ ॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ १० ॥ इषे त्वोर्जे त्वा वायवः स्थोऽपायवः स्थ देवो वः सविता प्रार्पयतु । श्रेष्ठतमाय कर्मणे ॥ ११ ॥ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ १२ ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंय्योरभि स्रवन्तु नः ॥ १३ ॥ आहं पितृन्सुविदत्रां अवित्सि न पातं च विक्रमणं च विष्णोः । बर्हिषदो ये सुधया स्वतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ १४ ॥ वषट्ते विष्ण वास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ "फाल्गुने" शक्तिसहिताय चक्रिणे स्वाहा । क्रियासहिताय दामोदराय स्वाहा दुर्गायै स्वाहा त्र्यम्बकाय स्वाहा वरुणाय स्वाहा यज्ञपुरुषाय स्वाहा अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः स्वाहा (प्रधान देना)।

रात्रीं प्रपद्ये जननीं सर्वभूतनिवेशिनीम् । भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् । संवेशिनीं संयमनीं ग्रहनक्षत्रमालिनीम् । प्रपन्नोहं शिवां रात्रीं भद्रे पारमशीमहि स्वाहा ॥ कालरात्र्यै स्वाहा तालरात्र्यै स्वाहा राज्ञिरात्र्यै स्वाहा शिवरात्र्यै स्वाहा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः स्वाहा । क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयिन्त्वा स नो मृडातीदृशे स्वाहा । ( पूर्वे ) । ॐ ह्रीं श्रीं देवीपुत्रबटुकनाथाय स्वाहा । ( आग्नेये ) । भूतबलेभ्यः स्वाहा । ( दक्षिणे ) । अग्निवेतालराजाय स्वाहा । ( नैर्ऋते ) । बहुखातकेश्वराय स्वाहा । ( पश्चिमे ) । स्थानक्षेत्रपालाय स्वाहा । ( वायवे ) । मङ्गलराजाय । ( उत्तरे ) । योगिनीबलेभ्यः स्वाहा । ( ईशाने ) । विश्वक्सेनाय स्वाहा । ( ऊर्ध्वे ) । जयक्सेनाय स्वाहा । ( पाताले ) । तेजाय । ( मध्ये ) । चण्डाय स्वाहा । शिवरात्रीयागदेवताभ्यः स्वाहा । ( फूल चढाना ) ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ १ ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ २ ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुभन्तस्य देवता । विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ ३ ॥ पुरुषमेधः पुरुषस्य नारायणस्यार्षम् । ( आहुति देना ) ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो-
वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च
भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एता-
वानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादो-
स्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥४॥
तस्माद्विराडऽजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत
पश्चाद्भूमिमऽथो पुरः ॥ ५ ॥ यत्पुरुषेण हविषा देवा यज्ञ-
मतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त
साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदा-
ज्यम् । पशूंस्तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ८ ॥
तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे
तस्माद्यजुस्तस्मादजायत ॥ ९ ॥ तस्मादऽश्वा अजायन्त येकेचो-
भयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ
बाहू का ऊरू पादा उच्येते ॥११॥ ब्राह्मणोस्य मुखमासीद्बाहू
राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत
॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादि-
न्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्या आसीदन्त-
रिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा
लोकानकल्पयत् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः
कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥ (फूल चढाना)। मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः। क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये । (आहुति देना)। रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ १ ॥ या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वन्तः। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ २ ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्रह्मणे सूर्ये या। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ ३ ॥ या राजन्ये दुन्दुभावायतायामश्वस्य क्रन्दे पुरुषस्य मायौ। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ ४ ॥ प्रियं मां कुरु देवेषु प्रियं राजसु मा कुरु। प्रियं विश्वेषु गोप्त्रेषु मयि देहि रुचारुचिम् ॥ ५ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥ भगवते वासुदेवाय स्वाहा सङ्कर्षणाय स्वाहा प्रद्युम्नाय स्वाहा अनिरुद्धाय स्वाहा सत्याय स्वाहा पुरुषाय स्वाहा अच्युताय स्वाहा माधवाय स्वाहा गोविन्दाय स्वाहा सहस्रनाम्नेविष्णवे स्वाहा लक्ष्मीसहिताय नारायणाय स्वाहा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु। यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः स्वाहा ॥ भवाय

देवाय स्वाहा शर्वायदेवाय स्वाहा रुद्रायदेवाय स्वाहा पशुपतयेदेवाय स्वाहा उग्रायदेवाय स्वाहा महादेवाय स्वाहा भीमायदेवाय स्वाहा ईशानायदेवाय स्वाहा पार्वतीसहितायपरमेश्वराय स्वाहा ॥ गणानान्त्वा गणपतिं हवामहे कविंकवीनामुपम श्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनम् ॥ विनायकाय स्वाहा एकदन्तायस्वाहा कृष्णपिङ्गलाय स्वाहा गजाननाय स्वाहा लम्बोदराय स्वाहा भालचन्द्राय स्वाहा हेरम्बाय स्वाहा आखुरथाय स्वाहा विघ्नेशाय स्वाहा विघ्नभक्ष्याय स्वाहा वल्लभासहिताय श्रीमहागणेशाय स्वाहा ॥ चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ह्रांह्रींसः सूर्याय स्वाहा सप्ताश्वाय स्वाहा अनश्वाय स्वाहा एकाश्वाय स्वाहा नीलाश्वाय स्वाहा प्रत्यक्षदेवाय स्वाहा परमार्थसाराय तेजोरूपाय स्वाहा प्रभासहिताय आदित्याय स्वाहा ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ अमायै स्वाहा कामायै स्वाहा चार्वङ्ग्यै स्वाहा टङ्कधारिण्यै स्वाहा तारायै स्वाहा पार्वत्यै स्वाहा यक्षिण्यै स्वाहा श्रीशारिकाभगवत्यै स्वाहा श्रीशारदाभगवत्यै स्वाहा श्रीमहाराज्ञी भगवत्यै स्वाहा श्रीज्वालाभगवत्यै स्वाहा व्रीडाभगवत्यै स्वाहा वैखरीभगवत्यै स्वाहा वितस्ताभगवत्यै स्वाहा गङ्गाभगवत्यै स्वाहा यमुनाभगवत्यै स्वाहा कालिकाभगवत्यै स्वाहा सिद्धलक्ष्म्यै स्वाहा महालक्ष्म्यै स्वाहा महात्रिपुरसुन्दर्यै स्वाहा सहस्र-

नाम्न्यैदेव्यैभगवत्यै स्वाहा ॥ ॐ यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि स्वाहा ॥ अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय स्वाहा । ( इष्टदेव का दशांश देना ) । हेरकादिभ्यः स्वाहा बटुकादिभ्यः स्वाहा ॥ यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परिदेहि राजन्स्वस्ति चास्मा अनमीवं च देहि ॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥ मुञ्चामि त्वा हविषा जीवनायकमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिमं विवृधामि ते ॥ ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् ॥३॥ ॐतद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः स्वाहा । ( तर्पण करना ) । अनेन मन्त्रहोमेन आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीशिवरात्रीव्रतनिमित्तं महागणपतिः कुमारः श्रीः सरस्वती लक्ष्मीः विश्वकर्मा द्वार्देवताः प्रजापतिः ब्रह्मा कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वराः सानुचराः "फाल्गुने" शक्तिसहितश्चक्री क्रियासहितो गोविन्दः दुर्गा त्र्यम्बकः वरुणः यज्ञ-

पुरुषः अग्निष्वात्ताद्यः पितृगणदेवताः कालरात्री तालरात्री राज्ञिरात्री शिवरात्री "पूर्वे" देवीपुत्रबटुकनाथः "आग्नेये" भूतवलाः "दक्षिणे" अग्निवेतालराजः "नैर्ऋते" बहुखातकेश्वरः "पश्चिमे" स्थानक्षेत्रपालः "वायवे" मङ्गलराजः "उत्तरे" योगिनीबलाः "ईशाने" विश्वक्सेनः "ऊर्ध्वे" जयक्सेनः "पाताले" तेजः "मध्ये" चण्डः शिवरात्रीयागदेवताः वासुदेवः लक्ष्मीसहितो नारायणः भवोदेवः पार्वतीसहितः परमेश्वरः विनायकः वल्लभासहितः महागणेशः ह्रांह्रींसः सूर्यः प्रभासहित आदित्यः अमा कामा चार्वङ्गी टङ्कधारिणी तारा पार्वती यक्षिणी श्रीशारिकाभगवती श्रीशारदा श्रीज्वाला श्रीमहाराज्ञी त्रिपुरसुन्दरी सहस्रनाम्नी भगवती अभयङ्करीदेवी क्षेमङ्करीभवानी सर्वशत्रुघातिनी इहराष्ट्राधिपतिरमुकभैरवः पञ्चामृतहोमेन प्रीयन्तां प्रीताः सन्तु ॥ इति व्याहृतिः ॥ ( अब वैश्वदेवकी विधि है ) ॥

## अथ वैश्वदेवम् ॥

( पकाय हुई अन्न या रूटी घीयुक्तको जुलाई हुई दो दर्भकाण्ड लगाना ) ॥ वैश्वदेवस्य सिद्धस्य सर्वतोऽग्र्यस्य अन्नस्य जुहोतिपाकस्य घृतेन संलिप्य यजमानाय स्वस्त्यस्तु भृतमभिघार्य ॥ ( उससे अग्निके उत्तरभाग में प्रथम, दक्षिणभाग में दूसरी आहुति देकर उन में भाकय आहुति देना ) ॥ "आदौ" अग्नये स्वाहा "इत्युत्तरतः" । सोमाय स्वाहा "इति दक्षिणतः" ॥ "तयोर्मध्ये" मित्राय स्वाहा वरुणाय स्वाहा इन्द्राय स्वाहा इन्द्राग्निभ्यां स्वाहा विश्वेभ्योदेवेभ्यः स्वाहा

प्रजापतये स्वाहा अनुमत्यै स्वाहा धान्वन्तरये स्वाहा वास्तोष्पतये स्वाहा वासुदेवाय स्वाहा सङ्कर्षणाय स्वाहा प्रद्युम्नाय स्वाहा अनिरुद्धाय स्वाहा सत्याय स्वाहा पुरुषाय स्वाहा अच्युताय स्वाहा माधवायस्वाहा गोविन्दायस्वाहा सहस्रनाम्ने विष्णवे लक्ष्मी-सहितायनारायणायस्वाहा । ( सबसलोनयुक्त अन्नका बान्धवसहित नैवेद्य चढाना )। अमृतेशमुद्रया अमृती-कृत्य । अमृतमस्तु अमृतायतां नैवेद्यं सावित्राणि सावित्रस्य देवस्य त्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णोहस्ताभ्यामादधे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहे-श्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे, क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै "पूर्वे" देवीपुत्रवटुकनाथाय "आग्नेये" भूतबलेभ्यः "दक्षिणे" अग्निवेतालराजाय "नैर्ऋते" बहुखातकेश्वराय "पश्चिमे" स्थानक्षेत्रपालाय "वायवे" मङ्गलराजाय "उत्तरे" योगिनीब-लेभ्यः "ईशाने" विष्वक्सेनाय "ऊर्ध्वे" जयक्सेनाय "पाताले" तेजाय "मध्ये" चण्डाय शिवरात्रीदेवताभ्यः । भगवते वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय सत्याय पुरुषाय अच्युताय माधवाय गोविन्दाय सहस्रनाम्ने विष्णवे लक्ष्मीसहि-तायनारायणाय । भवायदेवाय शर्वायदेवाय रुद्रायदेवाय पशुपतयेदेवाय उग्रायदेवाय भीमायदेवाय महादेवाय ईशाना-

यदेवाय ईश्वरायदेवाय उमासहितायशिवाय पार्वतीसहिताय परमेश्वराय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभासहिताय श्रीमहागणेशाय । क्लींकांकुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । ह्रांह्रींसः सूर्याय सप्ताश्वाय अनश्वाय एकाश्वाय नीलाश्वाय प्रत्यक्षदेवाय परमार्थसाराय प्रभासहिताय आदित्याय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै व्रीडाभगवत्यै वैखरीभगवत्यै वितस्ताभगवत्यै गङ्गाभगवत्यै यमुनाभगवत्यै कालिकाभगवत्यै सिद्धलक्ष्म्यै. महालक्ष्म्यै महात्रिपुरसुन्दर्यै सहस्रनाम्न्यैदेव्यैभवान्यै । अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय । इन्द्राय वज्रहस्ताय अग्नये शक्तिहस्ताय यमाय दण्डहस्ताय नैर्ऋतयेखड्गहस्ताय वरुणाय पाशहस्ताय वायवे ध्वजहस्ताय कुबेराय गदाहस्ताय ईशानाय त्रिशूलहस्ताय ब्रह्मणे पद्महस्ताय विष्णवे चक्रहस्ताय अनन्तादिभ्योऽष्टाभ्यः कुलनागदेवताभ्यः । अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादिभ्यःपञ्चचत्वारिंशद्वास्तोष्पतिदेवताभ्यः । ब्राह्म्यादिभ्योमातृभ्यः गौर्यादिभ्योमातृभ्यः ललितादिभ्योमातृभ्यः दुर्गा

क्षेत्रगणेशदेवताभ्यः राकादेवताभ्यः त्रिकादेवताभ्यः सिनीवालीदेवताभ्यः यामीदेवतायः रौद्रीदेवताभ्यः वारुणीदेवताभ्यः बार्हस्पत्यदेवताभ्यः ॐभूर्देवताभ्यः ॐभुवःदेवताभ्यः ॐस्वर्देवताभ्यः ॐभूर्भुवःस्वर्देवताभ्यः । अखण्डब्रह्माण्डयागदेवताभ्यः धूर्भ्यः उपधूर्भ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरकादिभ्यो वटुकादिभ्यः ॥ उत्पन्नममृतं दिव्यं प्राक्क्षीरोदधिमन्थनात् । अन्नममृतरूपेण नैवेद्यं प्रतिगृह्यताम् । ॐतत्सद्ब्रह्म अद्यतावत्तिथावद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथावमुकायामात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं शिवरात्रीव्रतनिमित्तमोंनमो नैवेद्यं निवेदयामिनमः ॥ ( पूर्वकेतरफ अग्रवाले कुशा धरतीपर बिछाना ) पूर्वाग्रान्दर्भानास्तीर्य । ( उस पर वायवीकोणसे लैनमें तीन २ नैर्ऋतीकोण तक और उपर उपर नैर्ऋतसे वायुकोण तक लैनमें तीन २ ऐसी छतीस देवोंका बलि देना ) ॥ तक्षायनमः, उपतक्षायनमः, अम्बानामासि नमस्ते, दुलानामासि नमस्ते, नितत्नीनामासि नमस्ते, चुपनीकानामासि नमस्ते, अभ्रयन्तीनामासि नमस्ते, मेघयन्तीनामासि नमस्ते, वर्षयन्तीनामासि नमस्ते, नन्दिनि नमस्ते, १० सुभगे नमस्ते; सुमङ्गलि नमस्ते, भद्रङ्करि नमस्ते, श्रियै हिरण्यकेश्यैनमः, वनस्पतिभ्योनमः, १५ धर्मायनमः, अधर्मायनमः, मृत्यवेनमः, मरुद्भ्योनमः, वरुणायनमः, विष्णवेनमः, २१ वैश्रवणायराज्ञेनमः, भूतेभ्योनमः, इन्द्रायनमः, इन्द्रपुरुषेभ्योनमः, २५ यमायनमः, यमपुरुषेभ्योनमः, सोमायनमः, सोमपुरुषेभ्योनमः, वरुणायनमः, ३०वरुण-

पुरुषेभ्योनमः, ब्रह्मणेनमः, ब्रह्मपुरुषेभ्योनमः, "ऊर्ध्व" आकाशायनमः "स्थण्डिले" दिवश्चरेभ्योभूतेभ्योनमः नक्तश्चरेभ्योभूतेभ्योनमः ३६ षट्त्रिंशत्तक्षादिभ्योऽन्नंनमः आचमनीयंनमः ॥ (बाहेतर्फ जञ्जू करना)। अपसव्येन (दाहे तर्फ अग्रवाले दर्भ बिछावना)। दक्षिणाग्रान्दर्भानास्तीर्य ॥ (उनपर तिल और पानीसे मार्जन करना) समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यो भूपृष्ठे दर्भास्तरणे तिलोदकेन अवनेजनं स्वधा ॥ (उसपर अंगूठ फिरावना) ॥ उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आवह पितॄन्हविषे अत्तवे (तिल पानी दूध दीप धूप अन्न घी और शहद यह आठ द्रव्य पितरोंका अन्नहै) ॥ तिलास्तोयं तथा क्षीरं दीपधूपौ बलिस्तथा। मधुसर्पिःसमायुक्तमष्टाङ्गमन्नसम्भवम् ॥ (बाहे घोठना धरतीपर डकाना)। वामजानुं भूमौ निधाय। (पितरोंको मन्त्र व नाम उच्चारके अन्न देना) देवताभ्यः पितृभ्यश्च महायोगिभ्यएवच। नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह ॥ तत्सद्ब्रह्म अद्यतावत्तिथौ अद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथौ अमुकायां अमुकवारान्वितायां आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं पितः "अमुक अमुकगोत्र एतत्ते अन्नं ये च त्वानु। (इसी तरह पुरुषोंको)। पितामह "अमुक०" प्रपितामह "अमु०"। मातः "अमुके अमुकगोत्रि एतत्ते अन्नं याश्चत्वाऽनु"। (इसी तरह औरतोंको) पितामहि "अमुके" प्रपितामहि। मातामह "अमुक"। प्रमातामह। वृद्धप्रमातामह। मातामहि "अमुके"

प्रमातामहि । वृद्धप्रमातामहि ॥ ( इसी तरह और सम्ब-
न्धियों को भी अन्न वगैरा देना ) । भ्रातः । "एतत्ते अन्नं"।
मातुल "एतत्ते अन्नं" । इत्थं सर्वान्सम्बन्धिनश्च तर्पयेत् ॥ मा-
तृपक्ष्यास्तु ये केचिद्येचान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये
कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना येचान्ये श्राद्धवर्जिताः ।
अन्नदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् । समस्तमातापितृभ्यो
द्वादशदैवतेभ्यः पितृभ्योऽन्नं स्वधा । ( लेप मिटाना ) अन्नलेपं
निवारयेत् ॥ ( गन्ध वगैरा चडाना ) । "समस्तमातापि-
तृभ्यः" समालभनं गन्धः स्वधा । "समस्त" अर्घ्यः स्वधा ।
पुष्पंस्वधा "समस्त०" दीपः स्वधा धूपः स्वधा "समस्तमा"
भक्ष्यभोज्यफलमूलबलिनैवेद्यमाऽहारादि अन्नं स्वधा "समस्त"
तिलमधुमिश्रमुदकपात्रमाचमनीयं जलं स्वधा । "समस्त"
हिमपानंस्वधा "स०" क्षीरपानंस्वधा "समस्तमा" मधुपानं-
स्वधा "सम" तिलोदकंस्वधा "समस्तमातापितृभ्यः" उदक-
तर्पणंस्वधा हिमंहिमं रजतंरजतं । ( दाहे जन्नू करना ) ।
सव्येन । ( तर्पण ) । वसन्तायनमः ग्रीष्मायनमः वर्षाभ्योनमः
शरदेनमः हेमन्तायनमः शिशिरायनमः षडृतुभ्योनमः ।
( अग्निके ईशानकोनपर अन्नकी आहुति देकर दोनू
हाथ दोना ) । अग्नये स्विष्टकृते स्वाहा । हस्तौ प्रक्षाल्य ।
( प्राणायाम करना ) । "प्राणायामः" । ( अग्निको तीन
वार छिडकना ) । ऋतंत्वा सत्येन विमुञ्चामि १ सत्यं त्वर्तेन
विमुञ्चामि २ ऋतसत्याभ्यां त्वा विमुञ्चामि ॥ ३ ॥ ( अग्नि
के आस्तरण छोडे होई दर्भा उठाना ) । यज्ञस्य सन्त-

तिरसि यज्ञस्य त्वा सन्तत्यै नयामि ॥ ( अग्निको फूलोंसे आशीर्वाद मांगना ) । धर्मं देहि धनंदेहि पुत्रपौत्रांश्च देहि मे । आयुरारोग्यमैश्वर्यं देहि मे हव्यवाहन ॥ १ ॥ भक्तिं देहि श्रियं देहि सुखं देहि स्वतन्त्रताम् । देहि भोगं च मोक्षं च मनोभिलषितं तथा ॥ २ ॥ गच्छगच्छ सुरश्रेष्ठ ब्रह्मविष्णुमहेश्वराः । यत्र देवालयाः सर्वे तत्र गच्छ हुताशन ॥ ३ ॥ तेजोसि तेजो मयि देहि । ( अपने तर्फ ज्योति लेके अग्निके रुकसत देना ) । "इत्यात्मानं देहि" भगवन् सन्निधत्सु ॥ ( धरतीपर यक्ष्म रोगराजको बल देना ) । भगवन् यक्ष्म एतत्तेऽन्नंनमः एतत्ते आचमनीयंनमः । ( गले में जञू रखके सनकादि सिद्धोंको बल हाथके तलेसे छोडना ) । कण्ठोपवीती । हन्त मनुष्येभ्यः । सनकादिभ्यऋषिभ्यः अन्नंनमः । आचमनीयंनमः ॥ ( दाहे जञू रखके योगिनियोंका ध्यान करके बल । कश्मीरभाषया "चोठ" रखना ) । सव्येन । या काचिद्योगिनी रौद्रा सौम्या घोरतरा परा । खेचरी भूचरी रामा तुष्टा भवतु मे सदा ॥ आकाशमातृभ्योऽन्नंनमः समालभनंगन्धोनमः अर्घोनमः पुष्पंनमः ॥ ( धरतीपर और जीवोंकी तृप्ति अन्नसे देनी ) ॥ ततो गोग्रासादि । सौरभेय्याः स्वर्गहिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः । "गोभ्योन्नंनमः" । ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिकाश्चये । वायसाः प्रतिगृह्णन्तु इमं पिण्डं मयोद्धृतम् । "काकेभ्योऽन्नंनमः" । श्वानौ द्वौ शाव-

शवलौ वैवस्वतकुलोद्भवौ । ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ । श्वभ्यः श्वानकेभ्योऽन्नंनमः । ( बाहे जञ्जू से ) । अपसव्येन । रौरवाधीनसत्वानां प्रेतद्वारनिवासिनाम् । अर्थिनां याचमानानामक्षय्यमुपतिष्ठतु ॥ ( दाहे जञ्जू से ) । सव्येन । शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि ॥ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः । प्रेताःपिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मणि बद्धबद्धाः । प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति । तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते यान्तु तृप्तिं मुदिता भवन्तु ॥ भूतानि सर्वाणि तथान्नमेतदयं चरिष्णुर्न ततोन्यदस्ति । तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥ चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसङ्घाः । तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु ॥ इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः । भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥ ( बाहे जञ्जू करके ) । अपसव्येन । यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वप्राणहराय च ॥ औदुम्बराय नीलाय ब्रध्नाय परमेष्ठिने । वृकोदराय भीमाय चित्रगुप्ताय वै नमः ॥ पाशहस्तकृतान्ताय प्रेताधिपतये नमः । श्रीयमराजधर्मराजचित्रगुप्ततृप्तयेऽस्तु ॥ ( दाहे जञ्जू से ) । सव्येन । ( कुलाचार से बलदेने

योग्य अन्न मांस अपूप साथ सप्तधान्य वगैरा द्रव्योंपर अर्घ और पानी पाना )॥ ये विश्वभाविनो भूता ये च तेष्वऽनुयायिनः । आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शिवं मम॥ (उह भांटके बाराह भैरवों को देना। पहिले बटुकनाथ को पूर्वसे )" ॥ पाशाङ्कुशौ डमरकाद्ययुतौ वहन्तं शुक्लं तथैकवदनं परिनृत्यमानम् । दक्षाननं त्रिनयनं शशिखण्डचूडं ध्यात्वाऽर्चये बटुकमिन्द्रदिशि स्फुरन्तम्॥ ॐह्रीं-श्रींदेवीपुत्र बटुकनाथभैरव आगच्छ २ रक्षरक्ष सुगन्धिपुष्पदीपधूपान्नपिशितादि क्षेत्रपालबलिं गृह्णगृह्ण वौषट् "पूर्वे बटुकनाथभैरवायनमः ॥ ( अग्ने कोणसे ) ॥ भूतबलगणं पूज्यमाग्नेये विघ्ननाशनम् । हसन्तं त्रिमुखं ध्यात्वाऽर्चयेऽहं बलिना प्रभुम् ॥ ॐह्रींश्रींभैंभूतबलभैरव आगच्छ आगच्छ सुगन्धपुष्पदीपधूपान्नपिशितादि बलिं गृह्ण २ वौषट् "आग्नेये त्रिनेत्र भूतबलेभ्योनमः ॥ ( दक्षण से )॥ ज्वालाकेशं त्रिनेत्रं भुजगपतिमहाभीषणं मुण्डमालां देवीं कर्त्रीं कपालं डमरमथ महाघोरशूलं दधानम् । वीणां वाद्यप्रवीणामुरसि विनिहितां वादयन्तं भुजाभ्यां वन्दे वेतालमुद्यद्दिनकरसदृशं नाट्यलग्नं हसन्तम् ॥ ॐह्रींश्रीं कपिलजटाजूटभारभास्वर अग्निवेताल-भैरव एहि एहि अन्नमांसादि बलिं गृह्णगृह्ण वौषट् । दक्षिणे अग्निवेतालराजाय नमः ॥ ( नैर्ऋतकोण से ) ॥ नैर्ऋते दिशि विभुं च मनोहरं वेदबाहुममरेशवन्दितम् । भक्तवत्सलमजं दयापरं तं नमामि बहुखातकेश्वरम् ॥ ॐह्रींश्रींबहुखातकेश्वरभैरव आगच्छ आगच्छ सुगन्धपुष्पदीपधूपान्न-

मांसरक्तादिबलिं गृह्णगृह्ण वौषट् । नैर्ऋते बहुखातकेश्वराय नमः ॥ ( पश्चिमसे ) ॥ स्थानेशश्चतुरास्यषड्भुजमहाभीमस्वभावः करैर्बिभ्राणश्चषकाब्जमुण्डपरशून् खट्वाङ्गकाद्याङ्कुशान् । मुद्रास्वस्तिक ताण्डवीमऽसिमथो प्रेतासनस्थोऽन्वहं वारुण्यां सुदिशिस्थितो बलयुतो ध्येयः स्वभक्तार्तिहा ॥ ॐह्रींश्रींक्षांस्थानक्षेत्रपालभैरव आयाहि आयाहि भक्ष्यभोज्यान्न पिशतादिबलिं गृह्ण गृह्ण वौषट् । "पश्चिमे" स्थानक्षेत्रपालाय नमः ॥ ( वायुकोणसे ) ॥ एकद्वित्रिचतुर्मुखैर्दशचतुःषष्ट्यैकदोर्भिः क्वचिन्नानाघोरवरायुधैस्त्रिभुवने ख्यातैः सदास्थानतः । भूतैस्ताण्डवमण्डितैः प्रकुपितैर्हर्षान्वितैश्चार्चितो वायव्यां दिशि मङ्गलेश्वर इति ख्यातोऽस्तु सौख्यप्रदः ॥ ॐह्रींश्रींमां मङ्गलेश्वर भैरव आगच्छ आगच्छ सुगन्धि पुष्पदीपधूपान्नपिशितादिबलिं गृह्ण गृह्ण वौषट् । "वायवे" मङ्गलराजायनमः ॥ ( उत्तरसे ) ॥ भूपातालखदिक् प्रचारनिरता एकद्विपञ्चानना नानावर्णधराश्चतुर्द्विनवषट् दोर्दण्डहेत्यन्विताः । उष्ट्रश्वाश्वसृगालवायसमुखीः कौवीरदिक्संस्थिता देवीः स्वामिभिरर्चये त्वनुगता भक्तार्तिविध्वंसिनीः ॥ ॐह्रींश्रींहसरक्षमलवयऊं योगिनीबलगण आगच्छ आगच्छ सुगन्धि पुष्पदीपधूपान्नपिशितादिबलिं गृह्ण गृह्ण वौषट् । "उत्तरे" योगिनी बलेभ्यो नमः ॥ ( ईशानसे ) ॥ श्यामवर्णं तु द्विभुजं विष्णोरनुचरं नुमः । उपवीतिनमीशाने विष्वक्सेनं महाबलम् ॥ ॐह्रींश्रीं विष्वक्सेन भैरव आगच्छ आगच्छ सुगन्धिपुष्पदीपधूपान्नव्यञ्जनादि बलिं गृह्ण गृह्ण वौषट् । "ईशाने" विष्व-

क्सेनाय नमः ॥ ( उपरसे ) ॥ मङ्गलादित्यमदैन्यं नाना मङ्गलभूषितम् । जयक्सेनमहमूर्द्ध्वं वन्दे क्षेत्रेश्वरं विभुम् ॥ ॐह्रीं श्रींजयक्सेनभैरव रक्षरक्ष एहिएहि सुगन्धिपुष्पदीप-धूपान्नपिशिनादिबलिं गृह्ण गृह्ण वौषट् । ऊर्द्ध्वे जयक्सेनाय नमः ॥ ( नीचेसे ) ॥ कपालमालाभरणमानन्दमदघूर्णितम् । कल्पान्तमेघसदृशं श्रीतेजेशं नमोस्त्वऽधः ॥ ॐह्रींश्रीं श्रीतेज भैरव आगच्छ आगच्छ नानाविधभक्ष्यभोज्यादिबलिं गृह्ण गृह्ण वौषट् । "पाताले" तेजायनमः ॥ ( बीचमें ) ॥ मध्ये राष्ट्रपतिं दशार्धवदनं शून्यैकबाहुं महाप्रेतस्थं तिथि-लोचनं गणपतिं श्रीचण्डमष्टेष्टदम् । नानावर्णसुवर्णविग्रह-रुचिं खट्वाङ्गकाद्याङ्कुशं पाशासि स्फुरन्मुण्डशूलडमरू घण्टाधरं भावये ॥ ॐह्रींश्रींचण्ड भैरव आगच्छ आगच्छ सुगन्धि पुष्पदीपधूपान्नपिशितादिबलिं गृह्ण गृह्ण वौषट् । "मध्ये" चण्डाय नमः ॥ ( सबोंको ) । क्षांक्षेत्रपतिभ्यो बलिंनमः । रांराष्ट्रपतिभ्यो बलिंनमः । सर्वे अभयवरप्रदा मह्यं पुष्टिं पुष्टिपतयो ददतु ॥ ( बाहे जन्नूसे ) ॥ अपसव्येन ॥ ( अन्नकानों पर फूल लगाना ) ॥ आयुः प्रजां धनं विद्यां स्वर्गमोक्षौ सुखानि च । प्रयच्छन्तु तथा राज्यं नृणां प्रीताः पितामहाः । १ । एष पिण्डो मया दत्तस्तव हस्ते जनार्दन । गयायां पितृरूपेण स्वयमेवोपगृह्यताम् । २ । आत्मनश्चार्थलाभाय क्षेमाय विजयाय च । शत्रूणां बुद्धिनाशाय पितॄनुद्धरणाय च । ३ । पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिला । यत्र तत्र स्मरेन्नित्यं पितॄणां दत्तमक्षयम् । इति वैश्वदेव-

विधिः ॥ ( दाहे जनू से ) ॥ सव्येन । ( दो दर्भकाण्ड अर्घयुक्त हाथ में रख के देवोंका रुकसथ देना ) ॥ ॐभूः पुरुषं विसर्जयामिनमः ॐभुवः पुरुषं विसर्जयामिनमः ॐस्वः पुरुषं विसर्जयामिनमः ॐभूर्भुवःस्वःपुरुषं विसर्जयामिनमः ॥ ३ ॥ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ३ ॥ ॐह्रींश्रींदेवीपुत्राय विद्महे क्षेत्रेशमुख्याय धीमहि । तन्नो वटुकभैरवः प्रचोदयात् ॥ ३ ॥ ॐतत्सद्ब्रह्म अद्यतावत्तिथावद्यफाल्गुनमासस्य कृष्णपक्षस्य तिथावमुकायां अमुकवारान्वितायां महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेर्नारायणस्य "फाल्गुने" शक्तिसहितस्य चक्रिणः क्रियासहितस्य गोविन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणदेवतानां कालरात्र्याः तालरात्र्याः राज्ञिरात्र्याः शिवरात्र्याः "पूर्वे" देवीपुत्रवटुकनाथस्य "आग्नेये" भूतबलानां "दक्षिणे" अग्निवेतालराजस्य "नैर्ऋते" बहुखातकेश्वरस्य "पश्चिमे" स्थानक्षेत्रपालस्य "वायवे" मङ्गलराजस्य "उत्तरे" योगिनीबलानां "ईशाने" विश्वक्सेनस्य "ऊर्ध्वे" जयक्सेनस्य "पाताले" तेजस्य "मध्ये" चण्डस्य शिवरात्रीदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करीदेव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इह राष्ट्राधिपतेः अमुकभैरवस्य आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं शिवरात्रीव्रतनिमित्तं कलशपूजनं शिवरात्रीयागपूज-

नमऽच्छिद्रं सर्वमस्तु एवमस्तु ॥ ( यवोदक छोडना ) ॥ एताभ्यो देवताभ्यो यवोदकंनम उदकतर्पणंनमः ॥ ( फूलों से प्रार्थना करना ) ॥ आज्ञा मे दीयतां नाथ नैवेद्यस्यास्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन् क्षन्तुमर्हसि ॥ आपन्नोसि शरण्योसि सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोसि रक्ष मां शरणागतम् ॥ ( कलश को ) ॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् । क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः ॥ कलिकलुषविमुक्तैः पूजितः सिद्धसङ्घैरमरचमरमालावीजमानोप्सरोभिः । पितृशतमपि बन्धून्पुत्रपौत्रान्प्रपौत्रानपि नरकनिमग्नांस्तारयेद्विष्णुरेव ॥ ( स्तोत्रपाठादि कालानुसार पढकर ) ॥ क्षमध्वं मम क्षेत्रेशा ददध्वं सुखसम्पदः । खगोपातालदिक्संस्थास्तुष्टा यान्तु स्वकं पदम् ॥ आह्वानं नैव जानामि नैव जानामि पूजनम् । पूजाभागं न जानामि क्षम्यतां परमेश्वर ॥ ( अष्टाङ्ग प्रणाम देना ) ॥ उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा चोरसा च वचसा च मनसा च नमस्कारं करोमि नमः ॥ ( तर्पण करना ) ॥ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि ॥ ३ ॥ इत्येतासामेव देवतानां सामीप्यं सार्ष्टितां सायुज्यं सलोकतामाप्नोति य एवं विद्वान्स्वाध्यायमधीते ॥ ( कलश ब्राह्मणहाथ देकर स्वस्त्ययन का मार्जनउससे बन्धुसहित लेना ) ॥ उदकलशमुपनिधाय स्वस्त्ययनं वाचयति ॥ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहि उपप्रयन्तु मारुतः सदानव इन्द्र प्राशूर्भवा-

सचा, अर्यमाऽयातु वृषभस्तुविष्मान् यन्ता वसूनि विधत्ते तनूपाः, सहस्राक्षो गोत्रभिद्वज्रबाहुः, अस्मासु देवो द्रविणं ददातु, ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन् दिव आचरन्ति, तेभिर्नो अद्य पथिभिः सुगेभीरक्षा च नो अधि च ब्रूहि देव ॥ "राष्ट्रभृतां देवानामार्षम्" । बोधश्च मा प्रतिबोधश्च पुरस्ताद्गोपायतामऽस्वप्नश्च माऽणवद्राणश्च दक्षिणतो गोपायतां गोपायमानश्च मा रक्षमानश्च पश्चाद्गोपायतां जागृविश्च माऽरुन्धती चोत्तराद्गोपायताम् । अनमित्रं नो अधराग‍ऽनमित्रमुदक्कृधि, इन्द्रानमित्रं नः पश्चादऽनमित्रं पुरस्कृधि । अनमित्रैरहोभिः सचेमहि विश्वेदेवा अनमित्रान उशसः सन्तु निम्रुचः । याः षडुर्वीः पञ्च प्रदिशस्ता नः पान्तु मित्रधानो मित्रे दधात अभयं नो अस्तु । ये रात्रीमनु तिष्ठथ ये च भूतेषु जागृथ पशून्ये सर्वांत्रक्षत तेन आत्मा सुजागृत । बोधप्रतीबोधाऽस्वप्नानवद्राणो गोपायमान रक्षमाण जागृवेऽरुन्धति ये देवास्तनूपाः स्थ ते म इह तन्वं पात बोधप्रतीबोधेत्यसौ वा आदित्यो बोधः प्रतीबोधोऽग्निः स्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नोयं य्यः पवते सोणवद्राणो गोपायमान रक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृवेरुन्धतीति यज्ञो वै दक्षिणारुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेष्ट्वे आत्मनो गोपीथाय ॥ (यजमानों को अक्षोट सहित फूलदेना) मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव । मार्कण्डेयमुनेः स्वर्गवैद्ययोः स्वर्पतेर्यथा । आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते । जीव त्वं शरदः शतम् ॥

इति शिवरात्रौ वटुकपूजा सम्पूर्णा ॥

ॐअथ द्वादश्यां पूज्यानां भैरवानां नामानि ॥ ( वागुर-द्वादशीमें पूजाके विषय भैरव लिखते हैं । ) "पूर्वे" हेरुकाय "अग्नये" त्रिपुरान्तकाय "दक्षिणे" वेतालाय "नैर्ऋते" अग्निजिह्वाय "पश्चिमे" करालाय "वायवे" कामाख्याय "उत्तरे" एकपादाय "ईशाने" भीमरूपिणे "ऊर्ध्वे" तारकाक्ष्याय "पाताले" हाटकेश्वराय "मध्ये" राजराजेश्वराय ॥ ( इन हेरकादिक नामों से द्वादशीकी दिन कलशपर या और वागुरनाम बरतन रख के कुलाचारसे पूजा करना ) ॐपुष्पाणि सन्तु तव देव मदिन्द्रियाणि धूपोगुरुर्वपुरिदं हृदयं प्रदीपः । प्राणा हवींषि करणानि नवाक्षतास्ते पूजाफलं व्रजतु साम्प्रतमेष जीवः ॥ १ ॥ वाञ्छामि नाहमपि सर्वरसाधिपत्यं नेच्छे पुरन्दरपुरं न पुरं विधातुः । भूयो भवामि यदि जन्मनि जन्मनि स्यां त्वत्पादपङ्कजलसन्मकरन्दभृङ्गः ॥ २ ॥ जन्मानि सन्तु मम देव शताधिकानि माया च मे विशतु चित्तमबोधहेतुः । किञ्च क्षणार्धमपि त्वच्चरणारविन्दान्माऽपैतु मे हृदयमीश! नमो नमस्ते ॥ ३ ॥

इति द्वादशीपूजाविधिः ॥



# अथ दूर्गापूजा प्रारभ्यते

ॐ अस्य श्रीआसनशोधनमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः कूर्मो देवता आसनशोधने विनियोगः ॥ ॐ श्रीं पृथिव्यै आधारशक्त्यै समालभनं गन्धोनमः अर्घोनमः पुष्पं नमः ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ "नमस्कार करना" ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ महाबले महोत्साहे महाभयविनाशिनि । पाहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ गुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे नमः, परमाचार्याय नमः, आद्यसिद्धेभ्योनमः ॥ "करन्यास" ॥ ह्रां अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां नमः, ह्रूं मध्यमाभ्यां नमः, ह्रैं अनामिकाभ्यां नमः, ह्रौं कनिष्ठिकाभ्यां नमः, ह्रः करतलकरपृष्ठाभ्यां नमः ॥ "षडङ्गन्यास" । ह्रां हृदयायनमः, ह्रीं शिरसे स्वाहा, ह्रूं शिखायै वषट्, ह्रैं कवचाय हुँ, ह्रौं नेत्राभ्यां वौषट्, ह्रः अस्त्राय फट् ॥ "चारोंतर्फ तिल फेंकना" ॥ अपसर्पन्तु ते भूता ये दिवि भुवि संस्थिताः । ये दिक्षु विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ प्राणायामः ॥ "मुख और पैरोंको पानी छिडकना" ॥ तीर्थे स्नेयं तीर्थमेव समानानां भवति ॥ मा नः शंस्यो अररुषो धूर्तिः प्रणङ् मर्त्यस्य रक्षाणो

ब्रह्मणस्पते ॥ "पवित्र धारना" ॥ वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्ति ॥ "अपने आप को गन्धादिक लगाना" ॥ स्वात्मने शक्तिस्वरूपाय समालभनं गन्धोनमः, अर्घोनमः पुष्पं नमः ॥ "दीपको" ॥ स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः । प्रसीद मम गोविन्द दीपोऽयं परिकल्पितः ॥ "धूप को" ॥ वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः । आघ्रेयः सर्वदेवानां धूपोयं परिकल्पितः ॥ "सूरज को" ॥ नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥ "पानी से संकल्प छोडना" ॥ यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च । न ज्ञायते यत्र दिनं न रात्रिस्तमात्मदीपं शरणं प्रपद्ये ॥ स्वात्मने शक्तिस्वरूपाय दीपधूपसङ्कल्पात्सिद्धिरस्तु दीपो नमः धूपो नमः ॥ ॐ तत्सद्ब्रह्माऽद्यतावत्तिथावद्यामुकमासस्यामुकपक्षस्य तिथावमुकायामात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीदेवीप्रीत्यर्थं अमुककामनासिद्ध्यर्थं भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै त्रीडाभगवत्यै वैखरीभगवत्यै वितस्ताभगवत्यै गङ्गाभगवत्यै यमुनाभगवत्यै कालिकाभगवत्यै सिद्धलक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै शैलपुत्र्यै, ब्रह्मचारिण्यै, कूष्माण्ड्यै, चण्डघण्टायै, स्कन्दमात्रे, सिद्धिदायै, महागौर्यै, कालरात्र्यै, कात्यायन्यै नवदुर्गाभगवत्यै सहस्रनाम्न्यै दुर्गादेव्यै भवान्यै दीपोनमः धूपोनमः ॥ "अपसव्येन" ॥ ॐ तत्सद्ब्रह्माद्यतावत्० । पित्रे पितामहाय, प्रपि-

तामहाय, मात्रे पितामह्यै प्रपितामह्यै, मातामहाय प्रमातामहाय, वृद्धप्रमातामहाय, मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै इत्यादिभ्यः दीपः स्वधा धूपः स्वधा ॥ "सव्येन" ॥ "विष्टरसहित पानीमें तीन वार फूल और गन्ध छोडना" ॥ संव्रः सृजामि हृदयं संसृष्टं मनो अस्तु वः । १ । संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः । २ । सं य्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥३॥ "वह पानी प्रतिमापर छोडना" ॥ अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्ददातु तेन जीव ॥ "देवीका न्यास" ह्रां अङ्गुष्ठाभ्यां नम इत्यादि ॥ अक्षत युक्त दो दर्भकाण्ड हाथमें रख कर ॥ बीजत्रयाय विद्महे, तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात् । ३ । ॐ तत्सद्ब्रह्म० । भगवत्याः अमायाः कामायाः चार्वङ्ग्याः टङ्कधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञीभगवत्याः श्रीज्वालाभगवत्याः व्रीडाभगवत्याः वैखरीभगवत्याः वितस्ताभगवत्याः गङ्गाभगवत्याः यमुनाभगवत्याः कालिकाभगवत्याः सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुरसुन्दर्याः शैलपुत्र्याः, ब्रह्मचारिण्याः, कूष्माण्ड्याः, चण्डघण्टायाः, स्कन्दमातुः, सिद्धिदायाः, महागौर्याः, कालरात्र्याः, कात्यायन्याः नवदुर्गाभगवत्याः सहस्रनाम्न्याः दुर्गादेव्याः भवान्याः आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीदेवीप्रीत्यर्थं देवीपूजनमऽर्चामहं करिष्ये ॐ कुरुष्व ॥ "तिल फैंकके आसन देना" ॥ आगच्छ त्वममादेवि! भक्ताऽशयनिवासिनि!। प्रीत्या

दत्तमासनं ते स्वास्यतां मम प्रीतये ॥ भगवत्याः अमायाः० । इदमासनं नमः ॥ "आवाहन करना" ॥ भगवत्यै अमायै० युष्मान्वः पूजयामि ॐ पूजय । भगवतीं अमां कामां चार्वङ्गीं टङ्कधारिणीं तारां पार्वतीं यक्षिणीं श्रीशारिकाभगवतीं श्रीशारदाभगवतीं श्रीमहाराज्ञीभगवतीं श्रीज्वालाभगवतीं व्रीडाभगवतीं वैखरीभगवतीं वितस्ताभगवतीं गङ्गाभगवतीं यमुनाभगवतीं कालिकाभगवतीं सिद्धलक्ष्मीं महालक्ष्मीं महात्रिपुरसुन्दरीं शैलपुत्रीं, ब्रह्मचारिणीं कूष्माण्डीं, चण्डघण्टां, स्कन्दमातरं, सिद्धिदां, महागौरीं, कालरात्रीं, कात्यायनीं, नवदुर्गाभगवतीं सहस्रनाम्नीं दुर्गादेवीं भवानीं आवाहयिष्यामि ॐ आवाहय ॥ श्रीशारिके त्रिपुरसुन्दरि शर्मसिन्धो ज्वालेऽत्र राज्ञि वरदेऽखिलविश्वमातः । शर्वार्धदेहनिलये धिषणे मदीयां पूजामिमां स्वपरिवारयुता गृहाण ॥ हे देवि त्वं पराशक्ते भक्तानुग्रहकारिणि । अस्मद्दयानुरोधेन सन्निधिं कुरु चात्र भोः ॥ ३ ॥ इत्याहूय च गायत्रीं त्रिःसमुच्चार्य तत्ववित् । मनसा चिन्तितैर्द्रव्यैर्देवीमात्मनि पूजयेत् ॥ तेजोरूपां ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत् ॥ यवान्विकीर्य ॥ प्राणायामः । पाद्यार्थमुदकं नमः ॥ "पानी हाथसे पात्रमें छोडना" ॥ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभि स्रवन्तु नः ॥ यह द्रव्य उसमें छोडना" ॥ लाजाश्च कुङ्कुमं चैव सर्वौषधिसमन्वितम् । दर्भाङ्कुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम् ॥ भगवति पाद्यं पाद्यम् ॥ एहि कामे कामहर्त्रि स्वेष्टकामदुघे शिवे । भक्त्या पाद्यं मया दत्तं क्षाल्यतां पादपीठिकाम् ॥ भगवत्यै अमायै० पाद्यंनमः । शेषं निवारयेत् ॥ पुनः । शन्नो देवी० ॥ "यह द्रव्य

उसमें छोडना" ॥ आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः। यवाः सिद्धार्थकाश्चेति ह्यर्घ्यमष्टाङ्गमुच्यते ॥ भगवति अर्घ्यं अर्घ्यं ॥ चार्वङ्गि त्वमिहागच्छ सतां चार्वङ्गदायिनि । मयाऽऽनीतमर्घ्यमिदं शुद्ध्येतां मुखहस्तकौ ॥ भगवति अमे कामे चार्वङ्गि टङ्कधारिणि तारे पार्वति यक्षिणि श्रीशारिकाभगवति श्रीशारदाभगवति श्रीमहाराज्ञीभगवति श्रीज्वालाभगवति व्रीडाभगवति वैखरीभगवति वितस्ताभगवति गङ्गाभगवति यमुनाभगवति कालिकाभगवति सिद्धलक्ष्मीः महालक्ष्मीः महात्रिपुरसुन्दरि शैलपुत्रि, ब्रह्मचारिणि, कूष्माण्डि, चण्डघण्टे, स्कन्दमातः, सिद्धिदे, महागौरि, कालरात्रि, कात्यायनि, नवदुर्गाभगवति, सहस्रनाम्नि दुर्गादेवि भवानि इदं वोऽर्घ्यं नमः ॥ सफा पानीसे ॥ टङ्कधारिणि त्वमेहि दुष्टान् टङ्कैर्विधारिणि । गृहाणाचमनं दत्तं मुखान्तर्मलमृष्टये । भगवत्यै० आचमनीयं नमः ॥ और भी पानीसे ॥ आगच्छ तारे स्थानेऽस्मिन् भवसागरतारिणि । मलोत्थापनकं देहात्मन्त्रस्नानं च स्वीकुरु ॥ भगवत्यै० मन्त्रस्नानीयं नमः ॥ ॥ लाजागन्धवचः कुष्ठं वालुकं शङ्खपुष्पकम् । कुङ्कुमागुरुकर्पूरान् स्नाने देव्याः प्रकल्पयेत् ॥ ॥ इदमपि च ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसितरसे नमः ॥ १ ॥ अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंय्योः ॥ २ ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि । अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ ३ ॥ पृतनाजितं सहमानमुग्रमग्निं हुवेम परमात्सधस्थात् । स नः पर्षदतिदुर्गाणि विश्वा

क्षामाद्देवो अति दुरितात्यग्निः ॥४॥ प्रत्नोहि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि । स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमा यजस्व ॥ ५ ॥ यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्वस्विदऽस्याः परमं जगाम ॥ ६ ॥ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ॥ ७ ॥ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ॥ ८ ॥ ॐ गायत्र्यै नमः ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॥ ३ ॥ ९ ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १० ॥ भगवत्यै० अष्टौ स्नानानि नमः ॥ ॐनमो देवेभ्यः । "कंठोपवीती" स्वाहा ऋषिभ्यः । "अपसव्येन" स्वधा पितृभ्यः । "सव्येन" आ ब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं जगत् तृप्यतु तृप्यतु तृप्यतु एवमस्तु॥ फिर पात्रमें पानी 'ऐंक्लींसौः हसरक्षमलवयऊंह्रींश्रींरां' इस मन्त्रसे सात वार मन्त्रित करके अपने माथेतक लेके अमृतसे भराहुवा ध्यान करके देवीके सिरपर छोडना । यह मन्त्रगुडक है ॥" "बाहे करतल में अक्षत युक्त पानी रख के आरात्रिका निकालना ।"

गृह्णन्तु चण्डिकाभक्ता भूताः प्रासादबाह्यगाः । पञ्चभूतात्मकाः प्रेतास्ते तृप्यन्तु सदा वौषट् ॥ देवीके पादोंका जल नेत्रोंको मलना" ॥ एहि देवि पराशक्ते भगवत्यमलाशये । प्रकाशय परं तेजो नेत्रस्पर्शेन वैष्णवि ॥ उत्तिष्ठ देहि शरणं भुवि चित्रमाये ह्युत्तिष्ठ दुष्टकृतदुःखततिं कृणीहि । उत्तिष्ठ भक्तवरदायकमऽक्षि

धेहि ह्युत्तिष्ठ शोकभयकुञ्जमिदं लुनीहि ॥ "देवी को बिछाना" ॥ आसनाय नमः, सिंहासनाय नमः, शवासनाय नमः, सुश्वासनाय नमः, ज्ञानासनाय नमः ॥ "अनुलेपन करना"॥ स्रष्टेरधिष्ठितिभुवः किमु चासनं ते, नानाचमत्कृतिकृतः किमु भूषणं वा॥ किं देयमस्ति भुवनासुप्रदायिकाया वाच्यं किमस्ति स्वयमेव त्रयीजनन्याः॥ "ऐसे ही देवीस्तोत्र पढते हुए देवीको चन्दनादि द्रव्योंसे अनुलेपन करना"॥ "वस्त्र पहनना" एहि पार्वति शैलोत्थे वस्त्रं त्वग्रोमकोशजम् । नानावर्णं मयानीतं त्रियतां चारु भावजम् ॥ भगवत्यै० वस्त्रं परिकल्पयामिनमः ॥ "जनूपहनना" ॥ यक्षिण्येहि यज्ञमातः सुवर्णतन्तुनिर्मितम् । त्रिगुणात्म यज्ञसूत्रं मयानीतं सुवीछ्यताम् । भगवत्यै० यज्ञोपवीतं नमः "गन्ध चढाना" ॥ शारिके त्वं विद्रुमाभे चन्दनागुरुकुङ्कुमैः। संस्कृतं तिलकं भाले क्रियतां मम प्रीतये ॥ भगवत्यै० समालभनं गन्धोनमः । लेपं निवारयेत् ॥ "अक्षत और फूल चढाना" ॥ हे शारदे शास्त्रदात्रि दूर्वार्घबिल्वपुष्पवत् । नानाविधं पुष्पजाति प्रीत्यानीतं सुमर्घ्यताम् ॥ ॐ गांगणपतये नमः, भैंभीमराजायनमः, कांकुमारायनमः । जुंजाङ्गलेश्वरायनमः । ओंलं इन्द्रायनमः ॐ ह्रीं अग्नये नमः ॐ ह्रींधर्मराजाय, नैर्ऋतये, वरुणाय, वायवेनमः, कुबेराय, ईशानायनमः, ब्रह्मणे, अनन्तायनमः । धूम्रार्चिषेनमः, ऊष्माय, ज्वलिन्यै, ज्वालिन्यै, विस्फुलिङ्गिन्यै, सुश्रिये, स्वरूपाय, कपिलायै, हव्यवाहनायै, कव्यवाहनाय, दशकलात्मने वह्नये- नमः। तपिन्यैनमः, तापिन्यै नमः, धूम्रायै, मरीच्यै, ज्वलिन्यै, तथ्यै, सुषुम्णायै, भोगदायै, विश्वायै, बोधिन्यै, धारिण्यै, क्षमायै, द्वादशकलात्मनेसूर्यायनमः। अमृतायै, आनन्दायै, पूषा-

यै, तुष्ट्यै, पुष्ट्यै, रत्यै, धृत्यै, शिशिन्यै, चण्डिकायै, कान्त्यै, ज्योत्स्नायै, श्रियै, प्रीत्यै, अङ्गदायै, पूर्णायै, पूर्णामृतायै, षोडशकलात्मनेशशिनेनमः । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ ॐ गुरवे नमः, परमगुरवेनमः, परमेष्ठिगुरवेनमः ॥ अभीष्टसि० द्वितीयावरणार्चनम् । अनन्तनागराजायनमः, वासुकिना०, कार्कोटना०, शङ्खपालना०, तक्षकना०, कलिकना०, पद्मना०, महापद्मनागराजाय नमः ॥ अभीष्ट० तृतीयावरणार्चनम् ॥ असिताङ्गभैरवयुतब्राह्म्यैनमः, रुरुभै० वैष्णव्यै, चण्डभै० रुद्राण्यै, क्रोधभै० नारसिंह्यै, उन्मत्तभै० कौमार्यै, भीषणभै० चामुण्डायै, कपालेश्वरभै० वाराह्यै, संहारभै० महालक्ष्म्यैनमः ॥ अभीष्ट० चतुर्थावरणार्चनम् ॥ दुर्गायैनमः, भगवत्यै, अमायै, कामायै, चार्वङ्ग्यै, टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकायै, श्रीशारदायै, श्रीमहाराज्ञै, श्रीज्वालायै, व्रीडायै, वैखर्यै, वितस्तायै, गङ्गायै, यमुनायै, कालिकायै, सिद्धलक्ष्म्यै, महात्रिपुरसुन्दर्यैनमः ॥ अभीष्ट० पञ्चमावरणार्चनम् ॥ ॥ गायत्र्यै, सावित्र्यै, सरस्वत्यै, बालायै, भुवनेश्वर्यै ॥ अभीष्ट० षष्ठावरणार्चनम् ॥ वज्राय, शक्तये, दण्डाय, खड्गाय, पाशाय, ध्वजाय, गदायै, त्रिशूलाय, पद्माय, चक्रायनमः ॥ अभीष्ट० सप्तमावरणार्चनम् ॥ अग्न्यादित्याभ्यां, वरुणचन्द्रमोभ्यां, कुमारभौमाभ्यां, विष्णुबुधाभ्यां, इन्द्राबृहस्पतिभ्यां, सरस्वतीशुक्राभ्यां, प्रजापतिशनैश्चराभ्यां, गणपतिराहुभ्यां, रुद्रकेतुभ्यां, ब्रह्मध्रुवाभ्यां, अनन्तागस्त्याभ्यां नमः ॥ पराशक्तये, चिच्छक्तये, सहस्रनाम्न्यै, दुर्गादेव्यै, भवान्यै, अर्घोनमः पुष्पं

नमः ॥ "धूप चडाना" ॥ महाराज्ञि राजसेव्ये साज्यं गुग्गुलसंस्कृतम् । अष्टगन्धयुतं धूपं मया नीतं सुजिघ्रयताम् । भगवत्यै० धूपं परिकल्पयामि नमः ॥ "कपूर व रत्नदीप" ॥ एहि ज्वाले महाज्वाले कर्पूरपीठमण्डितम् । नानावर्ति रत्नदीपं मया दत्तं प्रकाश्यताम् । भगवत्यै० रत्नदीपं कर्पूरं समर्पयामि नमः ॥ "चामर" ॥ एहि व्रीडे वीतव्रीडे चामरं पिच्छलैर्युतम् । सुखवातप्रदं सम्यक् दत्तं स्वीक्रियतामिदम् ॥ "चामरस्तोत्र भी पढ कर" ॥ भगवत्यै० चामरं समर्पयामिनमः ॥ "अन्य उपकरण" एहि दुर्गे पराशक्ते भक्त्या कंकतिकां शुभाम् । ध्वजं छत्रं व्यञ्जनं च मया नीतं विभूष्यताम् । भगवत्यै० उपकरणानि समर्पयामि नमः ॥ "आईना" ॥ हे वैखरि विश्वमातस्त्वद्दृष्ट्याऽदर्शबिम्बवत् । भाति विश्वं स्वयं त्वं साऽऽदर्शं दत्तं सुपश्यताम् ॥ भगवत्यै० आदर्शं समर्पयामि नमः ॥ एताभ्यो देवताभ्यः दीपोनमः धूपोनमः ॥ सपरिवारायाः पराशक्तेरर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ "मधुपर्क" । हे वितस्ते पापहर्त्रि क्षीराज्यमधुशर्करम् । षड्रसास्वादितं भक्ष्यं चरुं न्यस्तं सुस्वाद्यताम् । भगवत्यै० चरुं स० ॥ "फूलोकी अञ्जलि" ॥ एहि गङ्गे विष्णुपज्जे बिल्वदूर्वाब्जमण्डिताम् । पुष्पाञ्जलिमिमां भक्त्या दत्तां नस्यां सुजिघ्रयताम् ॥ भगवत्यै० पुष्पाञ्जलि स० ॥ "फल" ॥ यमुने त्वं यमस्वसुर्भव्यखर्जूरदाडिमम् । द्राक्षारुकाम्बरम्भादि फलं प्रत्तं सुभक्ष्यताम् ॥ भगवत्यै० फलं स० ॥ "ताम्बूल" ॥ कालिके त्वं कोकिलाभे पूगताम्बूलपानकम् । मुखभागन्धदं दत्तं प्रीत्या श्वासं सुगन्ध्यताम् । भगवत्यै० ताम्बूलं सम० ॥ "एक प्रक्रम देना" ॥ सिद्धलक्ष्मीः वि-

ष्णुपति ज्ञाताज्ञातकृतानि मे । दशधैनांसि दह्यन्तां प्रक्रमैक-विधानतः ॥ ॐ नमो भगवत्यै भगवति प्रसीद ॥ "स्तोत्रपाठादि पढकर अष्टाङ्गप्रणाम देना" ॥ महालक्ष्मी मारमातर्भुक्तिमुक्ति-फलप्रदम् । भक्त्या कृतं प्रणामं ते साष्टाङ्गं स्वीविधीयताम् ॥ उभाभ्यां जानुभ्यां पाणिभ्यामुरसा शिरसा मनसा वचसा च नमस्कारं करोमि नमः ॥ अन्नं नमः २ आज्यमाज्यमऽद्यदिनेऽद्ययथासङ्कल्पात् सिद्धिरस्तु । अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्वमऽच्छिन्द्रं सम्पूर्णमस्तु एवमस्तु ॥ शन्नोदेवी० । भगवत्यै अपोशानं नमः ॥ "पुनः" शन्नोदेवी० । भगवत्यै० दक्षिणायै तिलहिरण्यरजतनिष्कर्षं ददानि ॥ एता देवताः सदक्षिणाऽन्नेन प्रीयन्तां प्रीताः सन्तु ॥ "नैवेद्यः" ॥ अमृतेशमुद्रयाऽमृतीकृत्य अमृतमस्तु अमृतायतां नैवेद्यम् । सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ भगवत्यै अमायै० ॐ नमो नैवेद्यं निवेदयामि नमः ॥ "योगिनीबलि-(चट्)" ॥ आकाशमातृभ्यो बलिंनमः, समालभनं गन्धोनमः अर्घोनमः पुष्पं-नमः ॥ "देवीको" ॥ दुर्गाभगवत्यै फलादिसमर्पयामिनमः ॥ "क्षेत्रपालको" ॥ क्षांक्षेत्राधिपतयेऽत्रं नमः रां राष्ट्राधिपतयेऽत्रं नमः सर्वाभयवरप्रद मयि पुष्टिं पुष्टिपतिर्ददातु ॥ "नित्यकर्म जपादि करके । पृच्छा करना" ॥ बीजत्रयाय विद्महे, तत्प्रधानाय धीमहि, तन्नः शक्तिः प्रचोदयात् ॥ ३ ॥ ॐ तत्सद्ब्रह्माद्यतावत्तिथावद्यामुकमासस्याऽमुकपक्षस्य तिथावमुकायां भगवत्याः अमायाः कामायाः० आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीदेवीप्रीत्यर्थं देवीपूजनमच्छिद्रंसम्पूर्णमस्तु एवमस्तु ॥

"तर्पण करना" एताभ्यो देवताभ्यो यवोदकं नमः उदकतर्पणं-नमः ॥ "क्षमाफूलचढाना" आपन्नोस्मि शरण्यासि सर्वावस्थासु सर्वदा । भवानि त्वां प्रपन्नोस्मि रक्ष मां शरणागतम् । "स्तोत्रादि पढकर" अपराधो भवत्येव सेवकस्य पदे पदे । का परा सहते देवि केवलं स्वामिनं विना ॥ यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् । निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ॥ आह्वानं नैव जानामि नैव जानामि पूजनम् । पूजाभागं न जानामि क्षम्यतां परमेश्वरि ॥ उभाभ्यामिति अष्टाङ्ग प्रणामं करोमिनमः ॥ "तर्पणं" । नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि ।३। इत्येतासामेव देवतानां सलोकतां सायुज्यं सार्ष्टिं सामीप्यमाप्नोति य एवं विद्वान् स्वाध्यायमधीते ॥ "माफीकी प्रार्थना" स्वच्छस्वान्तेन ते भक्त्या महात्रिपुरसुन्दरि । यथाभावं कृतां पूजां स्वीकृत्य विश स्वाश्रयम् ॥ मनस्यन्तर्गतं मन्त्रं मन्त्रस्यान्तर्गतं मनः । मनोमन्त्रमयं दिव्यमेकपुष्पं पराऽर्चनम् ॥ इति दुर्गापूजा-सम्पूर्णा ॥

---

## ॐमहाराज्ञीस्तोत्रम् ॥



ॐ या द्वादशार्कपरिमण्डितमूर्तिरेका सिंहासनस्थितिमती-
मुरगैर्वृतां च । देवीमनक्षगतिमीश्वरतां प्रपन्नां तां नौमि भर्ग-
वपुषीं परमार्थराज्ञीम् ॥ १ ॥ यत्पादपङ्कजतलेऽमरमूर्धमौ-
लिन्यस्तेन्द्रनीलमणिसन्ततयः पतन्ति । किञ्जल्कपानरतमुग्ध-
मधुव्रतत्वं राज्ञी सदा भगवती जननीव नोऽव्यात् ॥२॥ द्वारं
यदीयचरणाम्बुजयुग्मनिर्यद्रेणुस्मृतिर्विवृतमस्ति महोदयानाम् ।
अम्बाधिकप्रणयपूरितचित्तवृत्ती राज्ञी शुभं वितनुयान्मम से-
वकस्य ॥ ३ ॥ दम्भं विहाय भवदङ्घ्रिनतिं तनोति यो राज्ञि !
देवि न विमुञ्चति मुक्तकान्ता । तं रूपहीनमपि काममिवाधि-
गम्य तां त्वां नतोस्म्यऽशरणो भवभारखिन्नः ॥ ४ ॥ शान्तिं
निनाय दशकन्धरमुग्ररूपं यत्पादसद्दशनखाग्रलुठत्किरीटः ।
रामो दशेन्द्रियनिवृत्तिविधानदक्षो राज्ञीं नतोस्म्यऽशरणो ज-
गदम्बिकां ताम् ॥ ५ ॥ अर्कप्रभा प्रबलमोहतमःप्रशान्तौ च-
न्द्रद्युतिर्भवभयद्विपदन्तभङ्गे । याऽग्नेः शिखा दुरितदारुणदा-
रुदाहे राज्ञीमनन्यशरणः प्रणमाम्यहं ताम् ॥ ६ ॥ कस्यापि
राज्ञि बहुभाग्यनिधेः स्वरूपं भावत्कमस्ति हृदि संश्रितसन्नि-
धानम् । दुष्टद्विषद्धृदयपाटनकृत्यहेतुं तां त्वां नतोस्मि नतलोक-
सुखप्रदात्रीम् ॥७॥ पत्तिर्द्युलोकपतिवैभवमाददाति देवाधिपोऽपि
ननु पत्त्यनुकारमेति । यत्प्रोल्लसन्नयनयोगवियोगभावाद्राज्ञीं-
महोपपदरम्यतरां नमामि ॥ ८ ॥ रिक्तत्वमाप्य च धनेन यदी-
यभक्तिचिन्तामणिं विनिदधाति हृदब्जकोशे । नानाविधाभिम-

तसिद्धिकरं मनुष्यो राज्ञीं नमामि भववारिधितारिणीं ताम् ॥ ९ ॥ मर्त्याः शचीसहचरीकुचकुड्मलाग्रस्पर्शोचितं करसरोजमवाप्नुवन्ति । यत्पादयोः सकृदुपाहितपुष्पपूजास्तां शर्मदामनुदिनं प्रणमामि राज्ञीम् ॥ १० ॥ डिम्बोऽपि पूर्वसुकृतामृतसिक्तचित्तो ध्यानस्थयच्चरणभक्तिसुकल्पवीरुत् । अभ्येत्यभीष्टफलसंग्रहभाजनत्वं राज्ञी तनोतु शुभतन्तुमहर्निशं सा ॥ ११ ॥ तापः प्रयाति विलयं नरकाभिषङ्गजातो यदर्चनसुधारससारसेकात् । जन्तोरबोधकृतदुष्कृतभग्नमूर्ते राज्ञी रिपून्दलयतान्मम सन्ततं सा ॥ १२ ॥ मूलच्छिदाकरणकारणमङ्घ्रिपद्मयुग्मस्मृतेर्भगवति प्रभवोऽनुभावः । संसारपादपततेस्तव देवि यस्या भूयान्मदीयहृदयाहितसन्निधिः सा ॥ १३ ॥ तीव्रः प्रताप इह दुःसहतां प्रयाति यन्मूर्तिचिन्तननुतिप्रभवात्प्रभावात् । धन्यस्य कस्यचिदपि क्षितिपालमौले राज्ञीं दयारसनिधिं प्रणमाम्यहं ताम् ॥ १४ ॥ रेणुर्यदङ्घ्रिकमलप्रभवः प्रयाति प्रेतेशभृत्यनयनान्ध्यनिमित्तभावम् । चित्रं स्वभक्तनयने भजतेऽञ्जनत्वं राज्ञीं समस्तरिपुनिर्दलनाय वन्दे ॥ १५ ॥ मेघत्वमीहितपयोधरवृष्टिदाने यन्मूर्तिरेति चरणौ स्मरतां स्मृतैव । असाकवैरिनिवहं नयताद्विनाशं राज्ञी त्रिलोकजननी खलु निर्विलम्बम् ॥ १६ ॥ कामी यदीयनयनाञ्चलपूतदेहो मन्त्रं विनौषधमृते मणिमन्तरेण । क्षिप्रं हि संवननमेणदृशां करोति राज्ञी ममान्तरनुरञ्जतु वाञ्छितेन ॥ १७ ॥ सिन्धोरवाप्य तटमर्चननाम यस्या गीर्वाणदुर्लभसुधारससारमय्याः । योगी प्रयाति परिलङ्घ्य भवाब्धिपारं राज्ञी सदा शुभततिं प्रददातु मह्यम्

॥ १८ ॥ हालाहलं स गिरिशो विदधाति हीनशक्तिं स्वकण्ठगतमङ्गिनतः सुरेन्द्रः । यद्दर्शनामृतभरप्रभवात्प्रसादाद्राज्ञी वितारयतु संसृतिसागरान्माम् ॥ १९ ॥ सर्पाधिपो भवति यद्गुणकीर्तनेषु शक्तो न वाग्दशशतद्वयसंयुतोपि । स्वात्मीयभक्तजनवाञ्छितदानदक्षा सा सर्वशत्रुदलनं विदधातु राज्ञी ॥ २० ॥ नश्यत्यनन्यशरणस्य नरस्य यस्या ध्यानप्रभापरिवृढोदयसङ्गमेन । नीहारराशिरभितो वृजिनाभिधानः सा मङ्गलं त्रिजगतां विदधातु राज्ञी ॥ २१ ॥ स्थित्या स्थितिं कमलजा यदनुग्रहस्य वाग्देवता च विदधाति गृहे मुखे च । मर्त्यस्य तीव्रतरभक्तिसमन्वितस्य राज्ञी ददातु शुभसन्ततिमाशु मह्यम् ॥ २२ ॥ तिर्यग्गणादऽहमवैमि विचारशून्यं तं मानवं यदभिवन्दनसौख्यलेशम् । स्वप्नेपि न स्पृशति जातु यदीयचित्तं राज्ञी स्वभक्तजनमङ्गलदाऽस्तु नित्यम् ॥ २३ ॥ मन्त्रं यदीयमभिवाञ्छितदं पठित्वा मर्त्यः प्रभावसहितः स्पृहणीयताथाः । पात्रीभवत्यमरवारविलासिनीनां दुर्वारपापदलनं विदधातु राज्ञी ॥ २४ ॥ तीक्ष्णद्युतिः शतसहस्रतनुत्वमेत्य यत्तेजसा तुलयितुं कणमप्यऽशक्तः । राज्ञी तथाविधसविस्मयदुर्निरीक्ष्यतेजोन्विता जयतु मङ्गलकारिणी सा ॥ २५ ॥ मुक्ता भवन्त्यऽचलपूर्वस्वकर्ममेघमुक्ताः प्रलभ्य यदुपासनभक्तिशुक्तेः । मध्यं कदाचिदऽर्णवो बहुलोद्भवान्ते कुर्याच्छुभं निरुपमं स्वजनस्य राज्ञी ॥ २६ ॥ रश्मिः सहस्रकिरणस्य करालपङ्कसंशोषणे हिमकरस्य रुचिर्विकासे । काव्योत्पलस्य ननु यच्चरणाब्जसेवा राज्ञीं विपक्षदमनीं प्रणमाम्यहं ताम् ॥ २७ ॥ गायन्ति सर्वधरणीधरक-

न्दरासु नित्यं सुपर्वहरिणीनयनासमूहाः । क्षेमाय यच्चरणमद्भुतमन्तहीनं राज्ञीं स्मरामि मनसा दुरितापहत्यै ॥ २८ ॥ वृक्षा यदर्चनविधावुपयोगमीयुः पुष्पैः सुगन्धहृतभृङ्गकदम्बकैर्ये । नाकेऽद्य कल्पतरवश्च त एव सन्ति राज्ञी वपुर्मम निषिञ्चतु भाग्यवर्षैः ॥ २९ ॥ ता निष्पतन्ति नरि तत्र खलेकपोतन्यायेन भाग्यभरभागिनि सिद्धयोऽष्टौ । यः सर्वदा भजति राज्ञि तवाङ्घ्रियुग्मं सा त्वं ममार्द्रकरुणा भव सुप्रसन्ना ॥३०॥ चामीकरप्रकरमर्थिगणाय यस्याः श्रोद्दिश्य नाम मनुजो हि ददाति भक्तः । यः स प्रयाति कनकाद्रिगृहाधिपत्यं राज्ञी भवत्वखिललोकहिता सदैव ॥ ३१ ॥ देवालयादपि परं पदमामनन्ति[1] काश्मीरदेशममलेक्षणयुग्मयुक्ताः । मूर्त्यन्तरान्वितयदीयपदारविन्दद्वन्द्वार्पणाद्भवतु सा विभवाय राज्ञी ॥ ३२ ॥ वीतान्यवस्तुनिवहस्पृहया कृता यत्पादाब्जयोर्जनतया भजतां प्रणामाः । नाशाय भाविजननप्रकरस्य राज्ञी कल्याणमन्तरहितं प्रददातु मह्यम् ॥ ३३ ॥ मन्यूत्कटभ्रुकुटिविक्रमवेक्ष्य यस्याः कालोऽङ्घ्रिनम्रशिरसां सहति स्वरूपम् । द्रष्टुं न दुःसहगिरीशविलोचनाग्निशङ्कायुतो भवतु मे शुभदास्तु राज्ञी ॥ ३४ ॥ नर्नर्ति रम्यकररङ्गतले नटो यत्पादाब्जनम्रशिरसः सुभटस्य खड्गः । सङ्ग्रामनिर्दलितशत्रुजयार्जितश्री राज्ञी करोतु मदधीनमशेषशर्म ॥३५॥ क्षत्रव्रजोऽतिबलदक्षिणबाहुकोशकृष्टासिमन्दरविलोडितसंगराब्धिः । लक्ष्मीं परां भजति यच्चरणप्रसादाल्लक्ष्मीं जनाय भजते प्रददातु राज्ञी ॥ ३६॥ गङ्गादितीर्थजलपूतशरीरयष्टिर्यः

1 भवन्तीति शेषः.

पूर्वजन्मनि यमान्नियमांश्च सेवे । भावत्कभक्तिविषयं भजते स एव दूरीकृताखिलभयां प्रणमामि राज्ञीम् ॥ ३७ ॥ तिग्मांशुमग्निमनिलं क्षितिमम्बु चन्द्रमात्मानमभ्रमपि यत्तनुमामनन्ति । राज्ञीं समस्तदुरितापहतिप्रगल्भां भर्गाब्धिनिर्झरनदीं सततं स्मरामि ॥ ३८ ॥ मीनध्वजो ननु बभूव यदीयदृष्टिपीयूषवृष्टिमधिगम्य विलब्धजीवः । भूतेशभालनयनानलदग्धदेहो राज्ञीं प्रसादसुमुखीं प्रणमाम्यहं ताम् ॥ ३९ ॥ श्वभ्रं परापतति दुष्कृतसारणी यद्ध्यानाचलेन्द्रपरिणद्धपुरः प्रयाणा । राज्ञीं भजे रविजकिङ्करभीतिभङ्गदानोद्यतां हृदयसन्निहितानुकम्पाम् ॥ ४० ॥ रज्जुर्विमार्गगतभक्तकरावलम्बे यत्पादपङ्कजनतिर्जगति प्रसिद्धा । राज्ञीमपारतरदुष्कृतकक्ष्यभारदाहे दवानलशिखां प्रणमामि नित्यम् ॥ ४१ ॥ तां हेलयैव गतिमेति यदङ्घ्रिनम्रः पत्युः पतेन्मखलिहामपि नेत्रमार्गम् । स्वप्ने न या कठिनपापतमोविनाशनित्योदितार्यमरुचिं प्रणमामि राज्ञीम् ॥ ४२ ॥ प्राणो न कर्कशकृतान्तधृतावलेपपाशोरगेन्द्रकवलत्वमुपैति जन्तोः । यद्भक्तिताक्ष्‍र्यतनुसंश्रितमानसस्य राज्ञी मुदं वितनुयात्स्वजनस्य तूर्णम् ॥ ४३ ॥ पङ्गुर्गृहाङ्गणगतः पवनोऽन्तरायनामा यदङ्घ्रियुगनम्रतनोर्नरस्य । कीनाशलोकदलनोद्यमदक्षशक्तिं राज्ञीमनन्तकरुणाब्धिमुपास्महे ताम् ॥ ४४ ॥ नानाकृतिर्विलयमेति भवाभिधानो यक्षो यदङ्घ्रिनतिभास्करभानुयोगात् । मर्त्यस्य शुद्धमनसः सततं स्मरामि तस्या अहं पदसरोजरजांसि राज्ञ्याः ॥ ४५ ॥ ताराधिपद्युतिरनारतशोककोकसंयोगनाशनविधौ स्मृतिरस्ति यस्याः । पापक्षयाय निज-

मूर्ध्नि करोम्यहं तद्राज्ञीपदाम्बुजयुगोत्थितरेणुपुञ्जम् ॥ ४६ ॥ नौर्दीर्घदुर्गतिसरस्तरणोन्मुखानां यत्पादपङ्कजयुगप्रणतिर्नराणाम् । कश्मीरपण्डितमनोरचितप्रतिष्ठां वाग्देवतातनुमुपैम्यहमाशु राज्ञीम् ॥ ४७ ॥ मिथ्या व्ययं परितनोति धनस्य मूढो यज्ञक्रियावितरणच्छलयुक्तचेताः । सत्यां यदङ्घ्रिविनतौ शुभकामदायां राज्ञीपदाब्जयुगलं शरणं श्रयामि ॥ ४८ ॥ भागीरथीसलिलसन्ततिरुग्ररूपां तापप्रभूतिमपि यां ग्रसितुं न शक्ता । तां हेलया ग्लपयति स्मृतिरेव यस्या राज्ञी महादुरितभारमऽपाकरोतु ॥ ४९ ॥ गण्डस्थलानि सुदृशां त्रिदिवालयानां वश्यान्यवश्यमचिरेण करोति यस्याः । पादस्मृतिर्हि निजभक्तनखक्षतानां मथ्नात्वऽमन्ददुरितानि ममाशु राज्ञी ॥ ५० ॥ वन्दारुलोकनिलयेषु करोति पद्मावाहद्विपो हि वसतिं स्थिरतां गृहीत्वा । यत्पादपङ्कजयुगोत्थितरेणुपुञ्जयोगाद्धितं त्रिजगतां प्रतनोतु राज्ञी ॥ ५१ ॥ पुष्णाति वैभवमपाकुरुते विपत्तिं दुःखानि हन्ति वृजिनं हरति स्मृता या । पादाम्बुजन्मयुगलाग्रत एव राज्ञ्या आधारहीनतरदण्डनिभं पतामि ॥ ५२ ॥ षड्भिर्मुखैर्गजमुखास्यकृतानुचर्यैः स्तौतीक्ष्यते च नयनप्रकरैः कुमारः । यां द्वादशार्कवपुषीं धृतसप्तलोकरक्षां निवारयतु भक्तभयानि राज्ञी ॥ ५३ ॥ पथ्यं भिषग्भिरनधीतचरं समस्तैर्दूरं महौषधिगणाच्च यदङ्घ्रिसेवा । दुर्वाररोगगुरुभारजुषां जनानां राज्ञी विनाशयतु भक्तजनामयं सा ॥५४॥ रम्भामुखं भवति नैव सुखाय जन्तोर्यद्भक्तिनाकवनिताबहुभोगभाजः । सुदुष्टपूर्वजननान्तरसञ्चितानि राज्ञी विचूर्णयतु

मे दुरितानि नित्यम् ॥ ५५ ॥ मान्यं पदं समुपयाति स वन्दिवक्त्रसत्स्थावरावनिसमर्पितकीर्तिबीजः । यो नित्यमर्चति तवाङ्घ्रिमनन्यकर्मा हेराज्ञि मातरऽशुभात्परिपाहि सा माम् ॥५६॥ अर्थान्प्रकाशयति दीपशिखेव दीप्रा या ध्यायिनां दहति पापपतङ्गपङ्क्तिम् । ध्यानाभिधं किरति कज्जलजालमक्ष्णोरंहो हिनस्तु मम सा प्रणतस्य राज्ञी ॥ ५७ ॥ राज्ञां शिरो लुठति पादतलाऽऽनुतानां विश्वम्भरेशशिरसां विलसत्किरीटम् । पादे यदीयचरणस्मरणायुषस्तां राज्ञीं भयापहतये प्रणमामि नित्यम् ॥ ५८ ॥ नो यस्मिन्पठिते मनोऽर्हति नृणामातङ्कशंकाङ्कनं गुप्ताद्गुप्ततरामिहाशयदिशं नो दोषराशिः स्पृशेत् । युक्तिः सिन्धुसुतावशीकृतिविधौ हेतुर्वचोदेवताप्राप्तौ पण्डितकृष्णकेन स महाराज्याः स्तवो निर्मितः ॥ ५९ ॥

इति श्रीपण्डितकृष्णकविरचितः श्रीमहाराज्ञीस्तवः सम्पूर्णः ॥

---

## ॐ श्रीमद्ऽलक्ष्येश्वरीपरपर्यायसाहिभद्ररूपभवानीवाक्यमञ्जरी ॥

ॐ श्रीगुरवे परमशिवाय नमः ॥ आदौ निर्वाणदशकम् ॥

ॐ सहस्रसर्वत्रव्यापी सुहृत् विचार्य, बहु बलू सं बाहु एक त्वं स्वयम्भूः परमाकारी, अन्तर्मुखे दृष्टे निर्वाणरहस्ततती परमागती ॥ १ ॥ शुद्ध्युक्तमूलाधारे कुण्डलिनीमण्डले, गौरी सिद्धार्थ सूक्ष्मो सुषुप्तीचक्र विरक्त, शान्ताधारी ईश्वरी तुर्यातीत परमानन्दी, अन्तर्मुखे दृष्टे निर्वाणरहस ततती परमागती ॥ २ ॥

तद्रूपमयी तत्परमागती, सर्वगताश्याने प्रवाहे गति घट् पूरणे, छ्युदाह् देह तृपितं, समर्थस्वामी परमार्थनिधानम्, अन्तर्मुखे दृष्टे निर्वाणरहस् तती परमागती ॥ ३ ॥ उपनिषत्पारिजाता अक्षय फल एकार्थी, सद्गुरो योगी अदेहो पुराणम्, बहु तेज-भानी सुशीतल् सुदर्शन्, निनायो अग्रायो परमदीप प्रसन्नो, अन्तर्मुखे दृष्टे निर्वाणरहस् तती परमागती ॥ ४ ॥ पवित्र-नेत्र पश्यतमुखी अन्तरबाहु, बहुधनाढ्यी असन्नकामकर्तये राजयोगी, दातपिता सर्वकाङ्क्षासु अर्थापूरगे, अन्तर्मुखे दृष्टे निर्वाणरहस् तती परमागती ॥ ५ ॥ निर्लज्जा रमणो पररूप निदारा, स्थित संहार प्रलय चित् अदृष्टो अग्रन्थो निजानो प्रसन्नो, आदिदेव तत् निहानो निमानो निष्फल स्थिररूपस्, अन्तर्मुखे दृष्टे निर्वाणरहस तती परमागती ॥ ६ ॥ लोत्रवेत्र नासी गोत्री न भाषी, न कुली न कृत्यं महानन्दरूपं, शयं स्थानवासी आदि सर्वमध्यं, जिता सन्यासी भिन्न बिन्दुनादी, अन्तर्मुखे दृष्टे निर्वाणरहस तती परमागती ॥ ७ ॥ न जाया न जन्मी दग्धकर्मकाण्डी, यथा शान्तभस्मी अरूपः सुरूपं, सर्वत्रसुखी अदेहसमाधि, अमोह सावधानं तत् निष्कल निराकार, अन्तर्मुखे दृष्टे निर्वाणरहस तती परमागती ॥ ८ ॥ अहन्ता ममता गलेत स्थित प्रलय ना आसि, यथा न आसि मिलेत कवलदल त जलबिन्द, मध्य आकाशे कदाचित् वृक्ष ना आसि, लगि नत क्याह् वाचि फला रसगुणी शिलाजल सग्, अग्निदाह भस्मो साध ताप समो, अन्तर्मुखे दृष्टे निर्वाण-रहस तती परमागती ॥ ९ ॥ वेदवाक् अर्था अमृतनदी सं-

प्रीता, अनेकप्रवाहे समन्वय षोडश चन्द्रकले सपण्डिता, समदर्शघने अर्चने देव निर्मल स्तोत्री, सत स्तवपाठे सर्वत्र जगद्गुरोसेवा, अनन्तपूजने एको, अन्तर्मुखे दृष्टे निर्वाणरहस ततीपरमागती ॥ १० ॥ "इति निर्वाणदशकम्" ॥

ॐ गुर अन्तर तत् निर्मलं, शुद्धं अत्यन्तविद्याधरम्, लल्नाम लल परमागुरुं, शिवमाधव नाहं परंब्रह्म सोहम् ॥ १ ॥ कृपा करे सर्व रोगा हरे, ज्ञानी छाल फिरे तान तान विसरे, समाधी देह सरे, सूय अग्नवतूर, अखण्ड यज्ञ करे, अग्न प्रज्वाले गीता पडे, शुय् चेने कपाल मूचे, गोपाल जी नाट करे गोपीसहाय, योसो होम सूय मधुरस गियि कनि दिये, कन्द होमे खण्ड होमे पननो देह, श्रीफल जाफल सुफल हिये, मोरेत् शिर नैवेद्यस जय् । समिव त्रिकारण किन अकुय शुय्, पान ति शुयके येहुयू अकुय, यज्ञस भिहित भस्स कियवे, अञ्जन शुयि के आञ्जन द्राव, पाताल छाल फेरेत् ता खारूं, मिचि त कन्यन् मञ्ज अनूमसू पयू, अद नद उदूं त गल नद् पीवों, प्रभातों स्वात् सुथो प्रज्वालों ता न किंह । हेञ् अने पाताल गगन गमें, मूर्त्त ना मूर्त्त पञ्चतत्व चेतन मले, शून्या गले पन्वनै सा सत् ॥ आसि शुवे न आसै पान्, नासे ग्रास करि पवान्, नर कासे ना क्यंह फासे, नासीर् क्याह आसीर् शुय, द्रायिस त निर्वाणो आवहिं जाञ्जे, चि न त कारुण मञ्जे कस, रङ्गारङ्गी गुल फुल्लू हं अङ्गे, मि न त भिय चित चिञ्जे कस । पद विना मा त्राव पादू, वादा पूरक आदू छचू वासा, शुकून् नाभद्र शूकूने खासे, परम पदू परमानन्द हासील । रूप अताये

आये वशनरा निरालंभा रूप, कृपा पर आनन्द जानवारा औतार रोम रोम रूप, समुद्र प्याल त मुद्र वासन्, अवै क्या सन मङ्ग उञ्, ज्ञान रूप त शून्या आसन्, आसुन् नासुन सूते छयो। यव ध्यान भक्चेस करे, तव ज्ञान आदरे पान, यत्र प्याल भरे भङ्करे, तवा लये सुमारे स्सरे पान्, यो सो तौख त्रावेत् मौख मेलावे, प्रैणा प्रेम लारे प्रार, विथूर ज्ञान त पान तलरे, शून्यस शून्य मिलावे, सुर त्रावि त तृहणा मङ्गे, तीर लायि त त्रावे सङ्ग, शेरि गङ्ग त निथूय नावे, दुह पाथ्युं त अजोंम् भ्रुह, शून्या अंशा आवहिं अथे, गज़ि सम्रोम् तव सूती, यव सूती जन उपदावों, तिय ठहरावो मनस सूती, ग्वारीत् समू-रीत् शून्या खारुं, पारुद् मारुं तव सूती, पञ्च अग्न लाल च्य-रावों, ग्वाश प्रज्वलावों तव सूती, न करुं रुतू न यछ जानुं जे, रुतू नत रातू किंह करुं नो, मूद मुतू देह सन्दारुं, न जी-वन्तू मारुं मो, आगर फ़ीरित् ता ग्रज़ुं, उगवान्ये ड्रूरू सगूमो, और के कृपा सूति आलम् भरुं, योर ना किंह सुरुं मो, प्रभा तेजूय उन्दि आ दरुं, रोम रोम ज्योत् तरुं मो, कृष्णारूपय ब्रह्म हा सरेत्, विष्णु महेश्वरा, गुरुमुखै ध्याना ध्यायरे, चरणा हृदय कमल, तूल पवन मूल, शून्या ऊर्ध्वमुखी गगनमण्डला, नानारङ्गशाख चतुर्वेद पानै, मान नद् सगवान् नानाप्रकार, ध्याना थानू ज्ञाननाम, अनेकधन् स्थानापूरक, मनूय सरे वाणी निराकार स्वारेत्, गट्ट त्रावेत् ग्वाशस् चायस्, मारीत् स्वर् यिम् च्यानी पञ्च इन्द्रिय, तव सहज कले योग साधित्, सर्ववादी जानीं ज्ञानपानस ह्युहूय । धरणी प्रावों त सुरन्यी

पियस् , हरा उञ् चू भर वसुरुं, दिम् कुसुम जरित आस्य चूये, आस्‌ करूथं त खास् भरुं, सहज सिपर पूरित् द्रायिस्, दि-ति नम् जू पर शाही त शाह हेश छ्यस, स्‌ह् जन् लागित् वाह जन् हितो, वाहजन् तोतस त हारे गिन्दूम् , पैरिम् सहज सिप-रता, तुरगस ज्यीना लगू रव, पोपनूलन् ता वीणा वजे, काली शङ्खशब्द ता, घण्टा वायान् क्रिय नद् उजे, दिवान् शङ्क-रस् गङ्ग, हाल् मेलि त जाल वहारे, प्राण लारे मारे मीन् , रोग गालि त ज्योग सन्दारे, भोग आहारे करे शरीर, सोर गों सुफली अङ्ग मिलि ने, अङ्ग सवारे भङ्ग निवारे, यी न फले ती वले, ज्यन्त्र तन्त्र अनाहत अनामय, अक्षय सावधान खेले, अङ्ग वचवान् अङ्ग प्रज्वलान् , स्थिरवासन् धारान् , अटल साव-धान्, उ आप भगवान् ॥ शु शिव गत् चू शिव पान् , वर दिय त शुन रुय वासा, पाद् गमि रसा रसा खसान् त, शब्द चू-नुम् , आहङ्ग २, सारङ्ग २, राग त वीणा च्यङ्ग । यस्‌ह सहाय सुय पानै आसान, अथ वासा शिव त शून्या कस, यस् विह गाले तिह निवारे, स् शरीर थावे शुंह, पर वारे साथा तारे, द्वयी शु गाले आसे, तस ज्ञानी दर्शन दिये इक्कासे, तस पा-नय कल्पन कासे, नाव नारा वाव सवारा, नानारङ्ग ना वर्ण ना गोत्र, शुंह अन्य निन्दूय पत करि वारे, कहान्दू दार त कस चारे, दियि असिति ताराह त्रिय औतारे, यस् ग्वारान सु स्‌ती छ्, श्रुंह श्रुंह पके त दुह मौ लोसे, निथुय पोषि त सुय छुय सात्, क्षत् भजिरित् जात मौ सोरे, छिविथ थुरिजे कति क्या रूप, युस् स्‌ति हिये ध्यान त पानस, तिलि कुंह न मेले

त कंसि न गेले, जागे हरस त लागिस् वेले, पानै पानस खति मेले ॥ सन्तूख समाध एकासन मैंयू लगाया, प्रेम का दृढ किया वालत्राशी, अक्षयां का ज्योत् सुरूप किया करुं, मेरे से तान्तेरे सूक्ष्मरूप दिखाया, तुमरे आज्ञा से तुमरे चरण हृदय में भसाया, अपने घर आया आप स्वांयी, जो कुछ मैं था सो अब नाही, ये बुध आया सद्गुरू के भडायी, जिन गुरूने दिया सत् का तत्व भताये ॥ यवा तूर चलिय तिमै अफल वल अम्बर, यना शुछच चलिय आसख तृप्तो तिमै आहार, भक्त युक्त योग कर रोग गालिये, आसख मुक्तू निष्कल, तुष्टय तिलि विशेषा खेल, मिलित् ता च्यून ॥ भाग चायिस, भागि आयस, परमा सरस, नारस नरस, शरणि आयस, ललेश्वरस, गुरस, माधवा शिवस, सेवाद्वस, साकारस, निराकारस, अन्तरकिस सतस व्रतस, अहं पदव, सदा साधन, रव हंसा च्यूनुम ॥ मिदौ प्याल भरिमा मद की, मिदौ हाल पिवों सो दौ, देहानन्द नदमया लोचन प्याल मुचर, साके पिलाओ हूहा भूमहा हहा मुतूवाला ॥ आगर ग्रजि नद सान्ये, भान भरेत् ता फिरिम खासी, गुर्क माता उपानर भर्भर्ता पिव इक्कासी ॥ आगर ग्रजवनी अमृत ची नदा, रजवन्यी ग्रजलान सुधा भूत, तेलि तु लद्वन्यी त्रिन् भुवनन् , कदा मेलि तु समुद्र च्यी पद उय भुय ॥ होश मेलि त पोष फलानी, गोश खिलानी साधुसङ्ग, गङ्ग ज्ञानी अव रूप च्यानी, कृपा च्यानी बहुवानी रङ्ग, सोमा शमाह ग्रजलानी, तिमा भिन्न जलानी भो, अव रूप प्रेम छ्यो मिलानी, यिमै पद कैसि मिलानी

क्याह ॥ मथुरा पथ श्रुह सत रूप मिलोयौ, सत गत त तत्व तिलोयौ, रोमरगि हर रङ्ग मिलोयौ, आत्म सङ्ग रव ॥ अवल करियेन कुहन अट, लट दिवनो हावनम् ध्यान्, शुमुर्या देह दिव अवै वट, छट फिरवनो म्यानो पान्, तुष्टम् त कासूनम् नेत्रन घट, जन चाटस् गुरु वखनूम् ज्ञान, यस्य गुर पिता सुय छ्युम माल्, सुय प्रवलो दीपप्रकाश, सुय सर्वकुलस उद्धार कर उन्, सुय ईश्वर सुय छ्यूम् गुर ॥ कुह यदि दजन त विह हियि भारि, शुय हियि हाहे अचिस ग्रक्, कूह त्रावि उछ्यस् स्वभावे, शिहिले चन्दन धारे क्राय । यस्य शुहा त भिय विचारे, इन्द्रिय मारे जन मुङ्गर, सिद्ध त साधू गले अथ हुनरे, कैसे लोभ त भारे क्याह ॥ द्राव उहि वावरूपी गुर, ईश्वर आव अविनाशी, पान मशि त ध्यान तोषे, सुमन परमानन्द वातू तत् राशी ॥ सू वा अन्दर निभर प्रत्दीशन, कन्दिव देशन ग्वारान त्सूस्तूय दुह, चित थव मरिस अन्दर छ्यूय निशान, दूषन वालित्त दितस् छुह ॥ कैत्यान कृपा करेत् पान स्वगन, यिमन मन लगान मानस स्तुति, शुम व्यूह त्रावेथ आय सुदेह साधन, वातिख वानस लाल रत्न कथ मानस कुस ॥ नौ पाठ जानस तव पाठ पडअ, नौ जप जानस् तव माला फिरअ, समुद्रा हावतं यव मुद्रू प्याल च्यस्अ, नद नाल रट भुय नै जै जै रत्नमाल ॥ नौ पाठ जानस् तव पाठ पडअ, सू पाठ पानै मनि वाचू, जपान आत्म त दपान वाणी, पिव मधु रस भान भरित्हा छिव ॥ तिथू ध्याना हितअ, यिथू ज्ञानस अन्त, तिथू सहज दितअ, यिथू बहुत शङ्कर

भक्ची, तिथू पानस् मि चु लागतअ, यिथू बहुत शंकर भक्ची, यिथू पानस् मु चू रावणम् ॥ न हि हू यिहय कुल्, मूलता श्वाह तुल्, यत्र शाख पन त फूल, दात पपिव समुद्रा, पान रसि सवाद ननिस जात ॥ मन समुद्र धानू सान्यी, छ्युक स-माध नाद विन्द चअटू, दान अखण्ड मिलायो, मखन साधि कारिस गिव ॥ ज्यो तत्पर जानि कारण च्यानि, मानि अतूर त ननिस मुय, भान फुटरित पानै थुरि, कुस् मरि त कस लमि दुःख, पानै नाहि पानै पूरि, कुस् मरि त कस ईयि टुक ॥ अथ जिनसस अंशा थउन, अथि कँसि न चेतन थउन, तति जन अनून त पुंछवा फीरित न्याउन, भिय मिलनाउन गज्ञस स्तुति ॥ यिवान पान त जुवान पान अ, रिवान पान त नि-वान टूक, नाना प्रकार गिन्दान पानअ, रिन्दान पान त हि-वान पन्थ, पिवान प्याल त छिवान पानअ, मुत्रन पान त चूवन टूक ॥ रञ्जित रुय द्रायिस सङ्ग कूय, मुक्त मुख चू ज्ञानू अकुय, मुय भक्तीरूप ग्वारान न किंह रुय, न कुह मुयि त न कुह मुय । ध्यान आशक आसन चूये, आशक चूयत मुता कुंह, ज्ञानी ग्वाश ग्वाह आशक चूये, विज्ञानी लाशक मशक चूये, मरू युस् जालि नार दरू, नौ संसार दरू, सू जियि नत मरि न, चरू युस् ग्वालि आर, सोरू भोग आहारि निराहार, न निन्द्रि न हूस्यार रहेत, सौरू कर्म करि नित्य भि-कार, रोम रोम आव अवतार ध्यानस्, मि चू त पानस मु चू, अथि ज्ञानस चि मि नमस्कार ॥ पानै पान पर्जन त, पानै विचि न त अथ जाननस वि चिय, जानित न कुंह छ्युह शाह त गदा, सह ति पानै दात खसान पूरि रव ॥ कुनि गव

रय पय कुनि गव भूरि, फलकुलिनूय मूरि रव, कुनि तमाये कुनि तक भूरे, शमा होरि त पूरि रव, कृपा त कारुण युस्र पानै जाने, मनूय मारि दिन त रात, सर्वरूप ध्यान पर्जाने, मनै मानि त ननिस जात, युस रूप तरि त दीप सन्दारे, नाथ सो नृप विचारि मन, किंह मूदि त किंह बिमारे, कैंसि ज्ञान खोरू त तारे नाव, माता रूपी समुद्र धाम तो, पिव तत् उपासी मय पिव, चर चारि तत् रूपी, रव रूपी त्रिभाविन् ॥ अन्दर त्रूख्यू त निभर सिदी, उदिख नाग त जागुख तती, किंह भिमारे रस्ति य मूदी, किंचन विदू न त रूदी तती ॥ नानमुस न कदाचित् नमनो, नितममनो सदा सर्वदा, आकाशरूप जगि अन्दर रमनो, तथी नमूस तथा सुनमनो ॥ पद हियि त पाद छ्युम अज्ञान्, अज्ञन् अज्ञन् श्रपुं रूप, अग्निकुण्ड येथ रूप सन्दारे, अमृतधारि पिवान देह, पानस मानि त भियिन स्वारे, निशि काठस् तारि चन्दन मुय, यिथ मुय हिये चन्दनधारे, सहज ग्वारि त ननिस जात, धात गालित क्या विचारे, पानूह मरि त सन्दारे भिय, विह गालि त अमृत तारे, तिथू यि रूप चि वरि क्याह ।

अर्पावेत् जन्म चिदानन्द, हंसद्वार रव रगता रूप, यति कूनि उछ्यान तति पानै, सर्व ध्यानै रद्द मस रूप, दीपप्रकाश तेजरव पानै, मि जान्यौं मने छ्यो, ज्ञान आकाश वाणी निर्वाणी, मनि सहाय स्थानस स्थानै छ्यो, आरामी रामी मुल्ह पान, मुये मुयि त म्यानि छ्यो, शयि आशक शयि छवोस, लयि पानै मुयि छ्युस, निरित गच्छान तिलित एवान, मिलित

पान दयै छ्युस, नादय बिन्दुह पदय परम, मदय मारिफतय छ्युस, विष्णु ब्रह्मा महेश्वर, कृष्ण श्यामसुन्दर छ्युस, पूग तोलि रामा भोलि, ब्रह्म स्वामी मन्दोरि छ्युस, यि किंह काङ्क्षि ति किं ह दिये, दूकान स मुद्रय छ्युस, डेशान दिशन हैरान गयस, निशान मि अनू मस शून्यालये ॥ छल लदूं च्यर्कस त कल आयि मशान, यिमन षण्ण सतन हुशार भुयि ॥ छ्यु न कुने छुना कुने, उछ्युं और न योर न कुने, दियि फश तुले मूल न कुने, छ्युवै चेतन त स्वारितौन कुने ॥ और ति जीवा योर ति जीवा, जीवस जीवा रस ख्यावान, युस नानारङ्ग रवण छ्यु, प्रत्कुणे वातउनू, च्यानू म्यानू रानू भिन्नू, नत लानू अङ्कुय भुय ॥ न पृथ्वी न पीठी न पाताले, न तले अपारेजित, अन्तराशुद्धं शान्तं, निर्मलं सर्वं ततदेवः ॥ कौन मरि त कौन पितरे, समुद्र तारे थाह, मधुरस गङ्ग त शशि औतारे, पानस पान पूशारे, हि मालय चूय वालिख, तवा पञ्च सारिम् एकान्त, न दाह दिये न किञ्च ग्रावे, ठहरावे सिह न किंह, कांक्षा पूरे आकाङ्क्षितू वाते, पानै दाता भुक्ता आसे, वासन्य गाले, भ्रान्ताह त्रावे, नानारङ्ग सीर नाथा भावे, माता पिता भ्राता पानै, ग्रथ थानै न कथ निये, निराकार रूप लागित पानै, सत्पानै न कथ निये ॥ कौन जाने तेरा स्वभाव प्रभाव परमानन्दा जी, जो सरे हृदय में पावे जैसे प्रभा श्रीभास्करा जी ॥ सारा तत्व आहारिं, गार चापूं भ्रमवाउं, अखण्ड मण्डल त पाताल हाहूमे, गिव विलावों अङ्ग नावों विशेषागङ्ग ॥ चितै लगीय त परदूय पान जान,

चित्तै लगीय पर्जान पान, चित्तै लगीय लिट्ठ छ्यूय उपर्जान, तिट्ठ जान म्यूठ त शुद्ध जान पान, वाव रट्ट द्वादश रव संघट, माया तृष्णा मारे मन, भ्रान्त त्राव नाथ छ्यू पननी घरे, सात रट्ट सुय त ज्ञानदेह, मात्र भिन्नो भिन्नो त नाव छ्यूस क्रैटान, अञ्जन अञ्जन अकुय पय, लय पवनस मय छ्यूय भाजुस, मानून त पानस निशि छ्यूय् दय्, मूर्ताह करि त पच्यु खाख, छ्यता क्याह पच्यू, पञ्च महाभूत करिन फचे, हिचू माया करिना भूत्, मन गालि त पानै विचि, अह ग्वारि तक्याह इच्छे, भियन ठरू डालि त पानै नचे, वाह वाह गुल फुली ना तुल्, नामूल गण्डेत दण्डो द्रायाय, भूतस क्याह लभू तस आसन ज्याय। न श्रुयि पाप तस न पुण्य खुय तस्, आसान श्रुयि तस् नासान ज्याय्, सम्भूर वीरू वातान भूतस्, तम्भूर साजुय गूँ यस् सुय्, शशिधारि लव दि महाभूतस्, गम्भीर तोतस क्याह भोल्याह, अनेक नजूमिजं दर्याव अवै, स्वभाव आव स्वरूप, न किंह थव त न किंह त्राव, बहु दीप आव छ्यपान रूप, आकाश स मदूर वछूं धार, तव ता रट्टमस् पय, दीपा शशि रव् रूप औतार, बह्वाकार निराकार, युसा कन्दि भस्र करि, पसुं तहान्दू शून्यारूप, शास्त्र शस्त्र क्याह मुचरि लुहार, अग्नस् मारिस देह, किंह न सू मंगे किंह न सुरे, ध्यान सू वरे भिय त पान्, अन्य पन् मनूह गण्डीत, पान ऋषि यिस फाकी भान, भरित् त पान साकी वाकी दानेस्त, दोलो चरो हर कांक्षा पूरे, खसिहिं आयेत सूय शन् आयेन करनै, शीतल माह श्रुख॥ दर्याव अन्दर

अंशा आव, जाव मि चि त जायिस मि चू, मि चूय् भोग त न्यामूच् र्व्याव, मि चिय गय आयाव वर हित यिति, सुर रहोम्न समूरिन् मि चि माजि त वाव, अग्न आव त वाह् वाह् रङ्ग, आज्ञा आयित चल् चूर जन, वाव आस् उथदन्य त, किथसन् पिव रहिनिशान् ईश्वर सन्दू नाव, किति आयाव त कतू सन गव्, समूरित् साधित तमि कज्याव, देव हित मुखे त सेव कर हास, छुनुनस काम क्रोध लोभ मोह, मद् अहङ्कार चाव संसारस्, अमल करिस्, पतै अहमाल, अमल होर्नेगव, पछ्र आयाव त कुस् क्याह नियेे, ईश्वर वादहित कज्याव्, यति आयाव त आस् मनुष्या देह्, युस् देव सुरे मनस भाव ग्रथ जीवस्, तिम जू सेवकस् मालि अथि आये, तिमय् छियय मनुष्य, नत किंह द्राय् गुपन्, यिमन् आदन सु पान मशीत गौ, पियक् शुडित चेतन सु धन सोरिव, छ्यन्य् भाजुंह कति मालि दर्कार यिये, सहज त आनन्द रहहा धारित्, पानै पान् सन्धारित कित्, सहजज्ञान रजिय परमानन्द आव रूप, सानन्द आसि कुये आत्मा रजिय वाचू, सामनद मधुरसा नद् वहवन्ये ॥ ॥ ॐ भूयो न बीजं तोया न तेजस्, वायुर्नाकाशं अवताह सर्वम्, नजि ब्रह्माण्डं नच स्वात्म आत्मं, शक्तिस्वरूपं परंब्रह्म सोहम् ॥ १ ॥ पुरुषो न पुरुषार्थात् विमर्शो न मर्षात्, वर्ण तेजः शान्तरन्तर आकाशम्, सूक्ष्मो न विस्तार न परं व्यापारं, न ह अन्तधारं परंब्रह्म सोहम् ॥ २ ॥ स्थावर न जङ्गम नह चतुर्वर्ण, जग न चराचर तत्परमाकार, सत् नासतो अच्छिन्नधारं, सूक्ष्मो स-

माधि परंब्रह्म सोहम् ॥ ३ ॥ ज्योगो न ज्युगान्तर सन्यासवर्ण, तुर्यावतीर्णा तत्प्रसिद्धोहम्, अचिन्त्यरूपं परमाकारं, स्थिर केवलोहं परंब्रह्म सोहम् ॥ ४ ॥ माता न पिता भ्राता न बन्धु, वार्ता स वेदं एकः केवलोऽहम्, गुरो न च्येला मन्त्रो न लीला तत् यू इकला परंब्रह्म सोहम् ॥५॥ मोहो न बुद्धि न च वैराग्यं, न च रागद्वेषं निर्वैर शान्तिः, स्वप्नो न जाग्रत् तत् शुद्धबोधं, सूक्ष्मो स्वयम्भूः परंब्रह्म सोहम् ॥ ६ ॥ पादू न बीजम् नच चतुर्भुजा, कारं न त्रिजग् अनन्तरूपम्, सहस्रनामं निराकारं, शुद्धस्वरूपं परंब्रह्म सोहम् ॥ ७ ॥ सिद्धू न सिजू विद्या न गति, सिद्ध ना परीक्षा आकाशरूपम्, खाकाश उलङ्घित् नच राजयोगं लम्भन निरालं परंब्रह्म सोहम् ॥ ८ ॥ रूप ना रस् स्पर्श गन्ध न देहो, यू यू न दायिस छ्युस् केवलोहम्, जीवो न जीवता न वक्ता न वार्ता, कर्ता सहोकार परंब्रह्म सोहम् ॥ ९ ॥ इडा न पिङ्गला नच ब्रह्मनाडी सा हि सुषुम्ना पायाहमेव, अनाहत अनामय तुरीयावस्था, आनन्दरूपं परंब्रह्म सोहम् ॥ १० ॥ ॥

ॐ तत् अन्तरदृष्ट सम्भावों, यिय मि त्रावों तिय आवों नये ॥ १ ॥ ललमाधव शिव इकावों, भिकावों देह पानै, चित्त अन्तर मञ्जले सावों, ललावों त भावों नये, पूरू विचार प्रगितू आवों, ये मि त्रावों तियू आवों नये, यमि त राजे सम्भावों, सावो आवों सुय पानयू, मन सत असत सिरावों, लानू त्रावों कसू मुत्ह् दिये, ओमूयू म्यानू सारू त तवै छ्यस आवों नये ॥ २ ॥ देहान्तर सु-सावों, यियू मि त्रावों तियू आवों नये ॥ २ ॥ देहान्तर सु-षुप्त सावों, जगावों तुरीया आये, अनाहत आनन्द खिलावों, मिलावों अनामय चूयू, तद्रूपू मि पान लिलावों, शु छ्यस

सावो त किंह न रावों नयि ॥ ३ ॥ कलि कले मिलनावों, ललि हावों रूप पानै, तवै अन्तर देह नावों, पित्रावों रस पानै, तवै तुष्टि निधाना प्रावों, प्रु छ्यस् सावो त किंह न रावों नये ॥ ४ ॥ बुध क्षयं च्ययं प्रकृटियं, छुम् वैराग्य अक्षय धाम, दुन् गोचर विचार सावों, निवाव ऋषीस तवै, आदि सत् आचार आवों, प्रु छ्यस् सावो त किंहन रात्रों नये ॥५॥ न खूचूस न किंह लज्जो, उपजितू पानै आव् , न मि करो त न सम्पन्नो, रोजूस् सूह जहेत् अवय्, रीच् प्रीच् त नीच् नि-भावों, प्रु छ्यस् सावो त किंह न रावों नाये ॥६॥ तत्प्रसन्नो उदय द्रावों, अङ्ग लागित् जगमा प्रुये, न खूचिव् लोकै रजि पजे, निर्मल शुद्ध शिवै, दिन प्रलय तत् एकावों, प्रु छ्यस् सावो त किंह न रावों नये ॥ ८ ॥ एकुत् परम बोध सदा-नन्द तस् , विदेह समाध यस सुर आसे, ऋजु सिजू विद्या यसू अदुर आसे,तत्पदवी रसे भिक्याह आसै, रिद्ध सिद्ध विद्या प्रजे आगरै तस्, गरै विभव सागरै ग्वाह, करे सूर्य उदय चलि घटकारूय्, सहज विचार तत्सार बोध, व्रत सत् तत्त्वबोध शुद्धो आचारः, यियू व्यवहारः वेद तै योग, चू कु प्रु कु वि-चारः अच्छिन्नधारः, सूय चेन रूप यि रूप सु रूप, पररूप वले आकले निरञ्जनारूप्, यियू शुभ लोभ भजान् वेगवले, अजरामर आसे शुद्धो देह ॥ ॥ इति श्रीमदलक्ष्येश्वरी परपर्याय-साहिभ दररूपभवानी वाक्यमञ्जरी सम्पूर्णा ॥ ॥

---

## अथ सरस्वतीस्तुतिः ॥

ॐ सितवर्णालङ्कारे सरस्वति समस्तवाङ्मयाधारे ! । कमलजमानसवरटे मृगाङ्कधवले नमस्तुभ्यम् ॥ १ ॥ धन्यः स एव लोके स एव पूज्यः स एव सर्वगुरुः । यस्य मुखकमलकोशे वाङ्मया कुलदेवते वससि ॥ २ ॥ कस्त्वां विना विवेकी विवेकविकलस्य निष्फलं जन्म । तस्माद्भारति भविनां त्वमेव हेतुर्विवेकेऽपि ॥ ३ ॥ लक्ष्मीवानपि पुरुषः शूरः सुभगोपि कामसमरूपः । वृष इव विबुधसभायां प्रतिभात्यमले त्वया रहितः ॥ ४ ॥ मुनिमनुजमाननीयो मातर्मूर्खोपि मानवो दक्षः । निःशेषशास्त्रवक्ता त्वन्मन्त्रध्यानतो भवति ॥ ५ ॥ कुवलयदृशः क तावद्वेश्मनि विलसन्ति कुचभरानम्राः । यावदसिताञ्जनयने न त्वं तुष्टासि देवि भुवि भविनाम् ॥६॥ जित्वा नरोरिराजकमगगुरुगजवाजिपुरुषबलसहितः । यदुपैति तत्समग्रं त्वच्चरणनुतेः फलं तस्य ॥ ७ ॥ आवर्जितापि कष्टैरिह जन्मनि मुञ्चति नरं श्रीः । न त्वं सप्तभवेष्विति मत्वा को नौति नो भवतीम् ॥ ८ ॥ कविवरवदनसरोरुहविहरणविस्रम्भविभ्रमद्भ्रमरि । भगवति पञ्चमुखीश्वरि वागीश्वरि नमस्तेस्तु ॥ ९ ॥ शम्भुप्रणतां वाणीं भक्त्या यः स्तौति सोऽचिरेणैव । अवहितबुद्धिप्रसरः कविराजो जायते मनुजः ॥ १० ॥

इति सरस्वतीस्तुतिः ॥

# अथ रुद्रमन्त्रकसूक्तं प्रथमम् ।



ॐनमः शिवाय । प्रणतोऽस्मि महादेव प्रपन्नोऽस्मि सदाशिव । निवारय महामृत्युं मृत्युञ्जय नमोऽस्तु ते ॥ देवं सुधाकलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाऽभयदं सुशुभ्रम् । शङ्खाऽभयाब्जवरभूषितया च देव्या वामेऽङ्कितं शमनभङ्गहरं नमामि ॥ शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधरं दशभुजं सर्वाभरणभूषितम् ॥ १ ॥ नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥ २ ॥ कमण्डल्वक्षसूत्राभ्यामन्वितं शूलपाणिकम् । ज्वलन्तं पिङ्गलजटाशिखमुद्योतकारिणम् ॥ ३ ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥ ४ ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमऽव्ययम् ॥ ५ ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजः सम्यक्ततो यजनमारभेत् ॥६॥ मृत्युञ्जय महादेव पाहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्धनात् ॥ ७ ॥ आराधितो मनुष्यैस्त्वं सिद्धैर्देवैर्महर्षिभिः । आवाहयामि भक्त्या त्वां गृहाणार्चां महेश्वर ॥८॥ हर शम्भो महादेव विश्वेशामरवल्लभ । शिव शङ्कर सर्वात्मन् नीलकण्ठ नमोस्तु ते ॥ ९ ॥ इति विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बकम् ॥ १० ॥ ॐत्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥ ॥ ॐआत्वा वहन्तु हरयः सचेतसः श्वेतैरश्वैरिह केतुमद्भिर्वाता-

जवेन बलमद्भिर्मनोजवा यांतु शीघ्रं मम रुद्राय हव्यन्देवानां च ऋषीणां चासुराणां च पूर्वजं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिवमावाहयाम्यहम् ॥ ॥ आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम् । वृषभासनमारूढं नागाभरणभूषितम् ॥ प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लवर्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोऽयं प्रतिगृह्यताम् ॥ ॥ ॐतत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ २ ॥ ॥ ॐशतरुद्रियन्देवानां रुद्रशमनं भवाय शर्वीयश्च प्रत्युत्क्रान्तानुवाकौ देवर्षी रुद्रदैवत्यस्त्रिष्टुपच्छन्दश्चयने विनियोगः, नमस्ते देवा रौद्रमानुष्टुभमाद्या गायत्री पञ्चमषष्ठ्यौ पांक्त्यन्ता महापंक्तिर्मा भैरेकपदा जगत्यनुष्टुप त्रिष्टुप् महाबृहती यवमध्या रुद्रो देवता चरुमेष्टिका, अस्य रुद्रस्य प्रश्नस्य अनुष्टुपच्छन्दः अघोर ऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परःपुरुषः सएव देवता, अग्निः क्रतुचरुमायामिष्टिकायां शतरुद्रे विनियोगः, सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दस्तिस्रोऽनुष्टुभस्तिस्रः पङ्क्यः सप्ताऽनुष्टुभौ द्वे जगत्यौ परमेष्ठी ऋषिः । आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थममुकस्कामनासिद्ध्यर्थे रुद्रमन्त्रपाठे होमे स्नाने पुष्पार्चने वा विनियोगः ॥ ॥ ॐकर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ ॥

॥ ॐनमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नम उत त इषवे नमः । या ते रुद्र शिवा तनूरऽघोरा पापकाशिनी । तया नस्तन्वा

शन्तमया गिरिशन्ताऽभिचाकशीहि । यामिषुङ्गिरिशन्त! हस्ते बिभर्ष्यऽस्तवे । शिवां गिरित्र ताङ्कुरु माहिंसीः पुरुषं जगत् । शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदऽयक्ष्मं सुमना असत् । अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् । अहींश्च सर्वाञ्जम्भय सर्वांश्च यातुधान्योऽधराचीः परासुव: । असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः । ये चेमे रुद्रा अभितो दिक्षु श्रिताः सहस्रशो वैषां हेड ईमहे । असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृश्यन्नुतैनमुदहार्यः । उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः । नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे । अथो य अस्य सत्वानोऽहन्तेभ्योऽकरं नमः । प्रमुञ्च धन्वनस्त्वमुभयो-रार्त्न्योर्ज्याम् । याश्च ते हस्त इषवः परस्ता भगवो वप । विज्यं धनुः कपर्दिनो विशल्यो बाणवानुत । १ । अनेशन्नस्येषव आभूरस्य निषङ्गथिः । या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान्विश्वतस्त्वमयक्ष्मेण परिभुज । परि ते धन्वनो हेति-रस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्निधीहि तम् । नमांसि त आयुधायाऽनातताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने । अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखं शिवो नः सुमना भव । या त इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या या तव तया नो मृड जीवसे ॥ २ ॥ ॐनमो हिरण्य-बाहवे सेनान्ये दिशां च पतये नमो, नमो वृक्षेभ्यो हरि-केशेभ्यः पशूनां पतये नमो, नमः शिष्पिञ्जराय त्विषीमते

पथीनाम्पतये नमो, नमो बभ्लुशाय व्याधिनेऽन्नानाम्पतये नमो, नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो, नमो भवस्य हेत्यै जगतस्पतये नमो, नमो रुद्रायाऽततायिने क्षेत्राणाम्पतये नमो, नमः सूतायाऽहन्त्याय वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो, नमो मन्त्रिणे वाणिज्याय कक्ष्याणां पतये नमो, नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः ॥ नम आक्रन्दाय त उच्चैर्घोषाय सत्वानां पतये नमो, नमः कृत्स्नवीताय धावते पत्तीनां पतये नमो, नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो, नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो, नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो, नमो निचराय परिचरायाऽरण्यानां पतये नमो, नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो, नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो, नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो, नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो ॥ नम इषुकृद्भ्यो धन्वकृद्भ्यश्चवो नमो, नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो, नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो, नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो, नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो, नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो, नमः शयानेभ्य आसीनेभ्यश्च वो नमो, नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो, नमः सभाभ्यः सभापतिभ्यश्च वो नमो, नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो, नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमो, नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो, नमो व्राते-

भ्यो व्रातपतिभ्यश्च वो नमो, नमो गणेभ्यो गणपति-
भ्यश्च वो नमो, नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो,
नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो, नमः सेनाभ्यः सेना-
नीभ्यश्च वो नमो, नमो रथेभ्यो वरूथिभ्यश्च वो नमो,
नमो महद्भ्योऽर्भकेभ्यश्च नमो, नमो युवभ्य आशिनेभ्यश्च
वो नमो, नमः क्षत्तृभ्यः संगृहीतृभ्यश्च वो नमो, नमस्तक्षभ्यो
रथकारेभ्यश्च वो नमो, नमः कुलालेभ्यः कर्मारेभ्यश्च वो
नमो, नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो, नमः श्वनिभ्यो
मृगयुभ्यश्च वो नमो, नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥
नमो भवाय च रुद्राय च, नमः शर्वाय च पशुपतये च, नमो
नीलग्रीवाय च शितिकण्ठाय च, नमो व्युप्तकेशाय च कप-
र्दिने च, नमः सहस्राक्षाय च शतधन्वने च ॥ नमो गिरि-
शाय च शिपिविष्टाय च, नमो मीढुष्टमाय चेषुमते च, नमो
ह्रस्वाय च वामनाय च, नमो बृहते च वर्षीयसे च, नमो
वृद्धाय च संवृध्वने च, नमोऽग्र्याय च प्रथमाय च, नम
आशवे चाऽजिराय च, नमः शीभ्याय च शीघ्र्याय च, नम
ऊर्म्याय चाऽवस्वन्याय च, नमो नाद्याय च द्वीप्याय च ॥
नमो ज्येष्ठाय च कनिष्ठाय च, नमः पूर्वजाय चापरजाय च,
नमो मध्यमाय चाऽप्रगल्भाय च, नमो बुध्न्याय च जघन्याय
च, नमः सोभ्याय च प्रतिसर्याय च, नम आशुषेणाय चाशुर-
थाय च ॥ नमो बिल्मिने च कवचिने च, नमो वर्मिणे च
वरूथिने च, नमः शूराय चावभेदिने च, नमः श्रुताय
च श्रुतसेनाय च, नमो याम्याय च क्षेम्याय च, नम उर्वर्याय

च खल्याय च, नमः श्लोक्याय चावसान्याय च, नमः श्रवाय च प्रतिश्रवाय च, नमो वन्याय च कक्ष्याय च, नमो दुन्दुभ्याय चाऽहनन्याय च, नमो धृष्णवे च प्रमृशाय च, नमो निषङ्गिणे चेषुधिमते च, नमस्तीक्ष्णेषवे चायुधिने च, नमः सायुधायच सुधन्वनेच ॥ नमः स्रुत्याय च पथ्याय च, नमः काट्याय च नीप्याय च, नमो नाद्याय च वैशन्ताय च, नमः कुल्याय च सरस्याय च, नमः कूप्याय चावट्याय च, नमो वर्ष्याय चाऽवर्ष्याय च, नमो मेघ्याय च विद्युत्याय च, नमो वीध्र्याय चातप्याय च, नमो वात्याय च रेष्म्याय च, नमो वास्तव्याय च वास्तुपाय च ॥ नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च, नमः शङ्गवे च पशुपतये च, नम उग्राय च भीमाय च, नमो हन्त्रे च हनीयसे च, नमोऽग्रेवधाय च दूरेवधाय च, नमो वृक्षेभ्यो हरिकेशेभ्यो, नमस्ताराय, नमः शम्भवे च मयोभवे च, नमः शङ्कराय च मयस्कराय च ॥ नमः शिवाय च शिवतराय च, नमः किंशिलाय च क्षयणाय च ॥ नम इरिण्याय च प्रपथ्याय च, नमः पुलस्तिने च कपर्दिने च, नमो गोष्ठ्याय च गृह्याय च, नमस्तल्प्याय च गेह्याय च, नमः पर्य्यायचावर्य्याय च, नमः प्रतरणाय चोत्तरणाय च, नमस्तीर्थ्याय च कुल्याय च, नमः फेन्याय च शष्प्याय च, नमः सिकत्याय च प्रवाह्याय च, नमो हृदय्याय च निवेष्प्याय च, नमः काट्याय च गह्वरेष्ठ्याय च, नमः शुष्क्याय च हरित्याय च, नमो लोप्याय चोलप्याय च, नमः पांसव्याय च रजस्याय च नमः सूर्म्याय चोर्म्याय

च, नमः पर्ण्याय च पर्णशादाय च, नम आखिदते च प्रखिदते च, नमोऽभिघ्नते चापगुरमाणाय च, नम आखिदाय च विखिदाय च नमो वः किरिकेभ्यो देवानां हृदयेभ्यो, नमो विचिनुत्केभ्यो, नमो विक्षीणकेभ्यो नम आनिर्हतेभ्यः ॥ द्रापे अन्धसस्पते दरिद्र नीललोहित, आसां प्रजानामेषां पुरुषाणामेषां पशूनां माभेर्मा रुङ्मा नः किञ्चनाऽममत् । इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नः शमऽसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् । या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजीः, शिवारुद्रस्य भेषजी तया नो मृड जीवसे । परि णो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मतेरघायोः, अवस्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड । मीढुष्टम शिवतम शिवो नः सुमना भव, परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकम् । बिभ्रदुच्चर विकिरिळ विलोहित नमस्ते अस्तु भगवः, यास्ते सहस्रं हेतयोऽन्येऽस्मिन्निव पान्तु ताः ॥ सहस्रधा सहस्राणि हेतयस्तव बाह्वोः, तासामीशानो भगवः पराचीना मुखाकुरु ॥ असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम्, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥१॥ येऽस्मिन्महत्यऽर्णवेऽन्तरिक्षे भवा अधि, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ २ ॥ ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ३ ॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधःक्षमाचराः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ४ ॥ ये वनेषु शिष्पिञ्जरा नीलग्रीवा विलोहिताः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥५॥

येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६ ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥७॥ ये पथीनां पथि रक्षय ऐड मृदाय व्युधः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ८ ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ९ ॥ य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितिष्ठिरे, तेषां सहस्रयोजनेऽव धन्वानि तन्मसि ॥ १० ॥ ॐनमो अस्तु रुद्रेभ्यो ये दिवि, येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु, ते नो मृडयन्तु, ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १ ॥ ॐनमो अस्तु रुद्रेभ्यो ये अन्तरिक्षे, येषां वातमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु, ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥२॥ ॐनमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामऽन्नमिषवस्तेभ्यो, दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ३ ॥ इति रुद्रमन्त्रसूक्तं प्रथमम् ॥

---

## अथ शताध्यायमन्त्रसूक्तं द्वितीयम् ॥

ॐ देवं तामरसाननं शशिकलालङ्कारमङ्कारमच्छङ्काम्भोज-
लसद्वराभयमहालक्ष्मीसमुद्भासितम् । सव्यासव्यकदोर्वराभ-
यसुधाकुम्भेन्दुमिन्दूल्लसत्सौम्यास्यं च चतुर्भुजं च भगवन्नेत्रं
त्रिनेत्रं स्तुमः ॥ १ ॥ चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्व-
यान्तःस्थितं मुद्रापाशसुधाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं कान्त्या विश्व-
विमोहनं पशुपतिं मृत्युञ्जयं भावये ॥ २ ॥ ॥ "इमा
रुद्रैकादश वासिष्ठैकादश देवता भूर्भुवः स्वश्चक्षुषा रूपाणि
वयमित्याङ्गिरसस्यैशानाः" ॥ ॥ ॐ इमा रुद्राय तवसे
कपर्दिने क्षयद्वीराय प्रभरामहे मतीः । यथा नः शमसद्द्विपदे
चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ १ ॥ मृडा नो
रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छ-
श्चयोश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ २ ॥
अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः ।
सुम्नायन्निद्विशो अस्माकमाऽचरारिष्टवीरा जुहुवाम ते हविः
॥ ३ ॥ त्वेषं वयं रुद्रं यज्ञं साधनमऽङ्कङ्कविमवसे निह्वया-
महे । आरे अस्मद्दैव्यं हेडो अस्यतु सुमतिमिद्वयमऽस्या वृ-
णीमहे ॥ ४ ॥ दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा
निह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं
वियंसत् ॥ ५ ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः
स्वादीयो रुद्राय वर्धनम् । रास्वाच नो अमृतमर्त्यभोजनं त्मने

तोकाय तनयाय मृड ॥ ६ ॥ मृळ त्वमस्मभ्यं रुद्रैतदऽस्तु हुतं तव । पशूनस्माकं माहिंसीरेतदऽस्मा असद्धुतम् ॥ ७ ॥ मानो महान्तमुत मानो अर्भकं मान उक्षन्तमुत मान उक्षितम् । मानो वधीः पितरं मोत मातरं मानः प्रियास्तन्वो रुद्र रीरिषः ॥ ८ ॥ मा नस्तोके तनये मा न आयौ मानो गोषु मा न अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते ॥ ९ ॥ उप ते स्तोमन्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे । भद्रा हि ते सुमतिर्मृडयत्तमाथा वयमव इत्ते वृणीमहे ॥ १० ॥ आरे ते गोघ्नमुत पुरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु । मृडा चनो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ ११ ॥ अवोचाम नमो अस्मा अवस्यवः शृण्वन्तु नो हव्यं रुद्रो मरुत्वान् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीरुत द्यौः ॥ १२ ॥

त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मरुतं प्रक्षया यशसे । त्वं वातैरारुणैर्यस्ते शङ्गयस्त्वं पूषा विदत्ता पासि नुत्मना ॥ देवा देवेषु श्रयन्तां, प्रथमा द्वितीयेषु श्रयन्तां, द्वितीयास्तृतीयेषु श्रयन्तां, तृतीयाश्चतुर्थेषु श्रयन्तां, चतुर्थाः पञ्चमेषु श्रयन्तां, पञ्चमाः षष्ठेषु श्रयन्तां, षष्ठाः सप्तमेषु श्रयन्तां, सप्तमा अष्टमेषु श्रयन्तां, अष्टमा नवमेषु श्रयन्तां, नवमा दशमेषु श्रयन्तां, दशमा एकादशेषु श्रयन्तां, देवास्त्रिरेकादशास्त्रयस्त्रिंशाः, उत्तरे भवथोत्तरे सत्वानो उत्तरवर्त्मान उत्तरलक्ष्माणो यज्ञामयेदं जुहोमि स मे कामः समृध्यतां वयं स्याम पतयो रयीणाम् ॥ ॥ ॐ भूर्भुवः स्वः क्षुच्च शुक्चोष्णा चोग्रा च

भीमा च राष्ट्रा च बीभत्सा च वैशन्ता च शार्दूराका चानिराका चामीवाचा नाहुतिश्च निर्ऋतिरेतास्ते अग्निवर्तिमतिस्त्वस्ताभिस्तं गच्छ योऽस्मान्द्वेष्टि यंच वयं द्विष्मस्तमर्पय ॥ ॥ भवा शर्वा मृडतमा वियातं पशुपती भूतपती नमो वाम् । प्रतिहितामयतामाविसृष्टं मानो हिंसिष्टं द्विपदो मा चतुष्पदः । शुने क्रोष्ट्रे मा शरीराणि कर्तमारिक्लवेभ्यो गृद्धेभ्यो ये च कृष्णा अवस्यवः । मक्षिकाः पशुपते वयांसि विघसे मा विदन्ते । क्रन्दाय ते प्राणाय ते याश्च ते भव हेतयः । नमस्ते उग्रकर्म सहस्राक्ष मर्त्य पुरस्तात्ते नमः । कूर्मोधरागुत्तरादनु, अमी वर्गाद्दिवस्पर्यन्तरिक्षाय ते नमः, मुखानि ते पशुपते यानि चक्षूंषि ते नमः, त्वचे रूपाय सन्दृशे प्रतीचीनाय ते नमः, अङ्गेभ्यस्त उदराय जिह्वायै दद्भ्यो गन्धाय घ्राणाय ते नमः । अहोरात्राणि विदधत्प्रतीचीनाय ते नमः । अस्तानीलकपर्दिने सहस्राक्षेण वाजिना, शर्वेणाऽध्वगगातिना तेन मा समरामसि । भवा ईश द्विपदो भव ईश चतुष्पदः, भवो विश्वस्य भुवनस्य राजति भवाय गाव ओषधीरजीगुर्भवाय द्यावापृथिवी नमेते । मानो रुद्रा परि णो वृणोक्तु हेत्याप इवाग्निः परिणो वृणक्तु, मानोभिमांस्त नमो अस्त्वस्मे, चतुर्नमोष्टकृत्वो भवाय दशकृत्वा पशुपते नमस्ते । योऽभियातो निलयते त्वं रुद्र निचकीर्षति, यो नः पश्चादति प्रयुङ्क्ते तं विद्ध्यस्व पदवीरिव । नमः सायं नमः प्रातर्नमो रात्र्या नमो दिवः, भवाय च शर्वाय चोभाभ्यामकरं नमः ॥ ॥ "अथ वायोरेकादश पुरुषस्यैकादशस्त्रीकस्य" ॥ ॥ प्रभ्राजमानानां रुद्राणां स्थाने

स्वतेजसा भानि १ व्यवजातानां रुद्राणां० ॥ २ ॥ वासुकिवैद्युतानां रु० ३ रजतानां रु० ४ पुरुषाणां रु० ५ श्यामानां रु० ६ कपिलानां रु० ७ अतिलोहितानां रु० ८ ऊर्ध्वानां रु० ९ अवपतन्तानां रु० १० वैद्युतानां रु० ११ ॥ ॥ "ॐ भूर्भुवःस्वःरूपाणि वो मिथुनं मा वो मिथुनं रीढ्वम्" ॥ ॥ ॐ प्रभ्राजमानानां रुद्राणीनां स्थाने स्वतेजसा भानि ॥ १ ॥ व्यवजातानां रुद्राणीनां० २ वासुकिवैद्युतीनां रु० ३ रजतानां रु० ४ पुरुषाणां रु० ५ श्यामानां रु० ६ कपिलानां रु० ७ अतिलोहितानां रु० ८ ऊर्ध्वानां रु० ९ अवपतन्तीनां रु० १० वैद्युतीनां रु० ११ ॥ ॥ "ॐ भूर्भुवःस्वः स्त्रियो वो मिथुनं मा वो मिथुनं रीढ्वम्" ॥ ॥ वयमग्ने धनवन्तःस्यामालं यज्ञायोत दक्षिणायै ग्रावा वदेदभि सोमस्यांशुमिन्द्रं सिक्षिमिन्दुना सुतेन ॥ १३ ॥ रायस्पोषं नो देहि जातवेद ऊर्जो भागं मधुमत्स्यां धृतावत् । दधान यज्ञं सुनवाम सोमं यज्ञेन त्वामुप शिक्षेम शक्र ॥ १४ ॥ ईशानन्त्वा शुश्रुमा वयं धनानां धनपते गोमदऽग्ने । अश्ववद्भूरि पुष्टं हिरण्यवद्धनवद्देहि मह्यम् ॥ १५ ॥ दुहान्ते द्यौः पृथिवी पयोऽजगरस्त्वा सोदको विसर्पतु । प्रजापतिनाऽत्मानमाप्रीणेऽरिक्तो म आत्मा ॥ १६ ॥ "तेजोऽसि०" । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः । मद्यं पीत्वा गुरुदारांश्च० ॥ इति शताध्यायमन्त्रसूक्तं द्वितीयम् ॥

---

## अथ चमषट्कमन्त्रसूक्तं तृतीयम् ॥



ॐ गात्रं भस्मसितं सितं च हसितं हस्ते कपालं सितं खट्वाङ्गं च सितं सितं च वृषभं कर्णे सिते कुण्डले । गङ्गाफेनसितो जटाजलसितश्चन्द्रः सितो मूर्धनि सोऽयं सर्वसितो दधातु विभवं पापक्षयं शङ्करः ॥ ॥ "आशुः शिशान इति शुक्रज्योतिष्मानंशुः प्रजननं सर्वाः प्रजाः कश्यपस्य वाजस्य प्रसवोऽग्नेः" ॥ ॥ ॐआशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः ॥ सङ्क्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा । स इषुहस्तैः स निषिङ्गिभिर्वशी संस्रष्टा सयुध इन्द्रो गणेन । संसृष्टजित्सोमपा बाहूशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परिदीया रथेन रक्षोहा मित्राँ अपबाधमानः । प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नऽस्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभिवीरो अभिषत्वा सहोजिज्जैत्रायनो रथमाऽतिष्ठ गोवित् ॥ गोत्रभिदङ्गोविदं वज्रबाहुं जयन्तमऽज्मा प्रमृणन्तमोजसा । इमं स जाता अनुवीरयध्वमिन्द्रसखायमऽनुसंरभध्वम् ॥ अभिगोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडऽयुध्योऽस्माकं सेना अवन्तु प्रयत्सु ॥ इन्द्र एषां नेता बृहस्पतिर्दक्षिणो यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्ज-

तीनां जयन्तीनां मारुतो यन्तु मध्ये ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् । महामनसां भुवनस्य वानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वऽस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्तवऽस्मान्नु देवा अवता भरेष्वा ॥ "होम पर खडा होके यह आहुति देना" ॥ ॐशुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्चर्तपाश्चात्यँहा ईदङ् चान्यादङ्च सदङ्च प्रतिसदङ्च मितश्च संमितश्च सभारा ऋतश्च सत्यश्च ध्रुवश्च धरणश्च धर्ता च विधर्ता च विधारय ऋतजिच्च सत्यजिच्च सेनाजिच्च सुषेणश्चान्तिमित्रश्च दूरे अमित्रश्च गण ईदक्षास एतादक्षास ऊषुणः सदक्षासः प्रतिसदक्षास एतानमितासश्च संमितासो नो अद्य सभारसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनु वर्त्मानो यथेन्द्रन्दैवीर्विशो मरुतोऽनु वर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानु वर्त्मानो भवन्तु ॥ ॥

वाजश्चमे प्रसवश्चमे प्रयतिश्चमे प्रसृतिश्चमे धीतिश्चमे ऋतुश्चमे स्वरश्च मे श्लोकश्चमे श्रावश्चमे श्रुतिश्च मे ज्योतिश्चमे स्वश्चमे प्राणश्चमे व्यानश्चमे अपानश्चमे असुश्चमे चित्तं चम आधीतंचमे वाक्मे मनश्चमे चक्षुश्चमे श्रोत्रं चमे दक्षश्चमे बलंचम ओजश्चमे सहश्चम आत्माचमे तनूश्चमे शर्म चमे वर्म चमे अङ्गानि चमे अस्थीनि चमे परुंषि चमे शरीराणिचम आयुश्चमे जराचमे ॥ ॐज्यैष्ठ्यंचम आधिपत्यं चमे, मन्युश्चमे भामश्चमे अमश्चमे अम्भश्चमे जेमाचमे महिमाचमे वरिमाचमे, प्रथिमाचमे, वर्ष्मा चमे, द्राघ्नाचमे, वृद्धंचमे, वृद्धिश्चमे, सत्यंचमे,

श्रद्धाचमे, जगच्चमे, धनंचमे, क्रीडाचमे, मोदश्चमे, वशश्चमे, त्विषिश्चमे, सूक्तंचमे, सुकृतंचमे, जातंचमे, जनिष्यमाणं चमे, वित्तंचमे, वेद्यंचमे, भूतंचमे, भविष्यं चमे, सुगंचमे, सुपथं चमे, ऋद्धंचम, ऋद्धिश्चमे, क्लृप्तं चमे क्लृप्तिश्चमे, मतिश्चमे सुमतिश्चमे ॥ ॥ ॐशञ्चमे, मयश्चमे, प्रियश्चमे, अनुकामश्चमे, कामश्चमे, सौमनसश्चमे, भगश्चमे, द्रविणं चमे, भद्रंचमे, श्रेयश्चमे, वस्यश्चमे, यशश्चमे, यन्ताचमे, धर्ताचमे, क्षेमचमे, धृतिश्चमे, संविच्चमे, ज्ञात्रंचमे, विश्वश्चमे, महश्चमे, सूश्चमे, प्रसूश्चमे, सीरंचमे, लयश्चम, ऋतञ्चमे, अमृतंचमे, अयक्ष्मंचमे, अनामयंचमे, जीवातुश्चमे, दीर्घायुष्त्वंचमे, अनमित्रं च मे, अभयञ्चमे, सुगंचमे, शयनंचमे, सूषाचमे, सुदिनं चमे ॥ उर्क्चमे, सूनृताचमे, पयश्चमे, रसश्चमे, घृतं च मे, मधुचमे, सग्धिश्चमे, सपीतिश्चमे, कृषिश्चमे, वृष्टिश्चमे, जैत्रंचम, औद्भिदंचमे, रयिश्चमे, रायश्चमे, पुष्टंचमे, पुष्टिश्चमे, विभुश्चमे, प्रभुश्चमे, पूर्णंचमे, पूर्णतरंचमे, कुयवंचमे, क्षितिश्चमे, अन्नंचम, इक्षुश्चमे, व्रीहयश्चमे, यवाश्चमे, माषाश्चमे, तिलाश्चमे, नीवाराश्चमे, श्यामकाश्चमे, अणवश्चमे, प्रियङ्गवश्चमे, गोधूमाश्चमे, मसूराश्चमे, मुद्गाश्चमे, खल्वाश्चमे ॥ ॥ अश्मा च मे, मृत्तिका च मे, गिरयश्चमे, पर्वताश्चमे, सिकताश्चमे, वनस्पतयश्चमे, हिरण्यञ्चमे, अयश्चमे, सीसञ्चमे, त्रपुश्चमे, श्यामंचमे, लोहितायसंचमे, अग्निश्चम, आपश्चमे, वीरुधश्चम, ओषधयश्चमे, कृष्टपच्यञ्चमे, अकृष्टपच्यञ्चमे, ग्राम्याश्चमे, पशव आरण्याश्चमे, वित्तंचमे, वित्तिश्चमे भूतंचमे, भूतिश्चमे, वसुचमे, वसतिश्चमे,

कर्मचमे, शक्तिश्चमे, अर्थश्चम, एमश्चम, इत्याचमे, गतिश्चमे, ॥ अग्निश्चम इन्द्रश्चमे, सोमश्चम इन्द्रश्चमे, सविताचम इन्द्रश्चमे, सरस्वती चम इन्द्रश्चमे, पूषा चम इन्द्रश्चमे, बृहस्पतिश्चम, इन्द्रश्चमे, मित्रश्चम इन्द्रश्चमे, वरुणश्चम इन्द्रश्चमे, धाताचम इन्द्रश्चमे, त्वष्टा चम इन्द्रश्चमे, मरुतश्चम इन्द्रश्चमे, विश्वेदेवाश्चम इन्द्रश्चमे पृथिवीश्चम इन्द्रश्चमे, अन्तरिक्षं चम इन्द्रश्चमे, द्यौश्चम इन्द्रश्चमे, समाश्चम इन्द्रश्चमे, नक्षत्राणि चम इन्द्रश्चमे, दिशश्चम इन्द्रश्चमे ॥ ॥ अंशुश्चमे, रश्मिश्चमे, दाभ्यश्चमे, अधिपतिश्चम, उपांशुश्चमे, अन्तर्यामश्चम, ऐन्द्रवायवश्चमे, मैत्रावरुणश्चम, आश्विनश्चमे, प्रतिप्रस्थानश्चमे, शुक्रश्चमे, मन्थीचम, आग्रायणश्चमे, क्षुल्लकवैश्वदेवश्चमे, ध्रुवश्चमे, वैश्वानरश्चम, ऐन्द्राग्नश्चमे, वैश्वदेवश्चमे, मरुत्वतीयश्चमे, महेन्द्रीयश्चमे, सावित्रश्चमे, सारस्वतश्चमे, पत्नीवतश्चमे, हारियोजनश्चमे ॥ इध्मा च मे, स्रुचश्चमे, चमसश्चमे, वायव्यानि च मे, द्रोणकलशश्चमे, पूतभृच्चमे, अपूतभृच्चमे, ग्रावाणश्चमे, अधिषवणश्चमे, अवभृथश्चमे, स्वगाकारश्चमे ॥ अग्निश्चमे, घर्मश्चमे, अर्कश्चमे सूर्यश्चमे, प्राणश्चमे, अश्वमेधश्चमे, पृथिवीचमे, दितिश्चमे, अदितिश्चमे, द्यौश्चमे, शक्करीरङ्गुलयो दिशश्चमे, यज्ञेन कल्पतां, व्रतं चर्तुश्च संवत्सरश्च तपश्चाहोरात्र, ऊर्वष्ठीवे बृहद्रथन्तरश्चमे यज्ञेन कल्पताम् ॥ गर्भाचमे, वत्साचमे, त्र्यविश्चमे, त्र्यवी चमे, दित्यवाट् चमे, दित्यौहीचमे, पञ्चाविश्चमे, पञ्चावीचमे, त्रिवत्साश्चमे, त्रिवत्सश्चमे, तुर्यवाट्चमे, तुर्यौहीचमे, पष्ठवाट्चमे, पष्ठौहीचम, उक्षाचमे, वशाचमे, अनड्वांश्चमे, धेनु-

श्वम, ऋषभश्चमे, वेहच्चमे ॥ एकाचमे, तिस्रश्चमे, तिसृश्चमे, त्रयस्त्रिंशच्चमे, चतस्रश्चमे, अष्टौचमे, अष्टचमे, अष्टाचत्वारिंश-च्चमे, वाजश्च, प्रसवश्चाऽपिजश्च क्रतुश्च वाक्पतिश्च वसुश्च स्वर्मोर्धो मूर्ध्वा वैयशनो व्यश्वाँन आन्त्योऽन्त्यो भौवनो भुवनस्य पतिः प्रजापतिरधिपतिरियन्ते राण्मित्रो यन्तासि यमन ऊर्जेत्वा वृष्टयै त्वा प्रजानां त्वाऽधिपत्याय, आयुर्यज्ञेन कल्पतां, मनो यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां, श्रोत्रं यज्ञेन कल्पतां, वाग्यज्ञेन कल्पतामाऽऽत्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां, पृष्ठं यज्ञेन कल्पतां, यज्ञो यज्ञेन कल्पताम् ॥ ऋक्च सामश्च स्तोमश्च यजुश्च बृहद्रथन्तरश्च स्वर्देवा अगन्म प्रजा-पतेः प्रजा अभूवन्नऽमृता अभूम वेट्स्वाहा ॥ ॥ "वाजस्य नु प्रसवा इति षट्" ॥ ॥ ॐ विश्वे अद्य मरुतो विश्व ऊतीर्विश्वे भवन्त्वऽग्नयः समिद्धाः । विश्वे मादेवा अवसा गमन्निह विश्वमस्तु द्रविणं वाजे अस्मिन् । [1]आ मा वाजस्य वाजे[2]स्यनु वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः। वाजो मा विश्वैर्देवैर्ध-नसाता इहावतु, वाजो मे अद्य प्रसुवातिदानं वाजो देवा-नृहविषा वर्धयाति, वाजस्य हि प्रसवेनान्नमिति विश्वा आशा वाजपतिर्जयेयम्, वाजः पुरस्तादुत मध्यतो नो वाजो देवानृ-तुभिः कल्पयाति, वाजस्य हि प्रसवेनान्नमेति सर्वा आशा वाजपतिर्भवेयम् ॥ सं मा सृजामि पयसः पृथिव्याः सं मा

---

१ आधुनिकैः कतिभिरन्विष्टः पाठोयम् ॥ ॥ आ मा वाजस्य प्रसवो जगम्या दाऽमा द्यावापृथिवी विश्वरूपे । आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ २ ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्मसाविषत्.

सृजाम्यद्भिरौषधीभिः सोहं वाजस्य नौम्यग्ने: ॥ ॥ "तेजोसि ॥" पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ तर्पणम् ॥ मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्यात्वा भस्मना कर्मबन्धी । रुद्रं दृष्ट्वा देवमीशानमुग्रं याति स्थानं तेन साकं तदीयम् ॥ अनेन मन्त्रपाठेनात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थममुककामनासिद्ध्यर्थं, भगवान्, भवो देवः ८ शतरुद्रेश्वरः, मृत्युञ्जयभट्टारकः पार्वतीसहितः परमेश्वरः प्रीयतां प्रीतोऽस्तु ॥ इति चमषट्कमन्त्रसूक्तं तृतीयम् ॥

---

## अथ सौमारुद्रसूक्तं चतुर्थम् ॥

ॐवन्दे रुद्रमुमापतिं सुरगुरुं वन्दे जगत्कारणं वन्दे पन्नगभूषणं शशिधरं वन्दे पशूनां पतिम् । वन्दे सूर्यशशाङ्कवह्निनयनं वन्दे मुकुन्दप्रियं वन्दे शैलसुतामनोहरतरं वन्दे शिवं शङ्करम् ॥ (ॐसौमारुद्रमिति ईश्वरो भ्रातृव्यः, ब्राह्मणानि सुमन्तोः कश्यपस्य ब्रह्मणश्च)॥ ॐसौमारुद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणां श्वेतायाः श्वेतवत्साया आज्यं मथितं स्यात्तस्मिन्ब्रह्मवर्चसकामः, स्वर्भानुर्वा आसुरः सूर्यन्तमसाऽविध्यत्स न विरोचत, तस्मै देवाः प्रायश्चित्तिमैच्छंस्तमेतयेष्ट्या याजयंस्तयाऽस्मात्तमोऽपाघ्नंस्तमसैव प्रावृतो योऽलं ब्रह्मवर्चसाय तत्र ब्रह्मवर्चस्वीभवति, तम एवास्मादऽपहन्ति ब्रह्मवर्चसेनैनं संसृजति, श्वेतायाः

श्वेतवत्साया आज्यं भवति शुक्ला व्रीहय एवमिव वै ब्रह्मवर्चसं ब्रह्मवर्चसमेव सन्ददाति ॥ घृतेन प्रोक्षन्ति घृतेन मार्जयन्ति शान्त्यै शान्तिर्ह्यापोऽप्यस्य तां रात्रीमाऽपो गृहान्नावहरेयुः परिश्रिते यजेत ब्रह्मवर्चसस्य परिगृहीत्यै प्रादेशमात्रश्चरुरूर्ध्वो भवत्येवं तिर्यङेतावान्वै पुरुषो यावदस्य प्राणां अभि यावानेवास्यात्मा तस्मात्तमोऽपहन्ति, सार्कं रश्मिभिः प्रचरन्त्यसा एवास्मादादित्य उद्यंस्तमोऽपहन्ति तिष्यापौर्णमासे यजेत, तिष्यो वै रुद्रश्चन्द्रमाः सोमः सौमीरतः प्राचीनमोषधयो रौद्रीः प्रातीचीनमोषधयो रात्रीः प्रतीचीनं पुष्यन्ति प्राचीनं शुष्यति प्रतीचीन प्रत्यक्षमेवैना ऋध्नोतीश्वरो दुश्चर्मा भवतोर्य एतया यजेतेऽतीव स्वस्मादपहन्ति, मनोर्ऋचः सामिधीनीष्वऽप्यनुब्रूयान्मनुर्वा यत्किञ्चाऽवदत्तद्भेषजमासीद्भेषजमेवास्मै करोत्यपक्षरन्ति सिन्धवे, मयोभुव इति नराशंस्या परिददाति शान्त्यै षट्पदा भवन्ति षड्वा ऋतव ऋतुष्वेव परितिष्ठति ॥ ईश्वरस्तु तदतिदुर्चर्मैव भवतोस्तेजांसि ह्येष प्रत्यारोहन्निति सौमापौष्णश्चरुं पशुकामोऽनुनिर्वपेत्सोमो वै ब्राह्मणस्य स्वा देवताः पशवः पूषा स्वामेव देवतां पशुभिर्बंहयते त्वचमेव कुरुते सौमारुद्रश्चरुं निर्वपेत् कृष्णानां व्रीहीनामभिचरन्सोमो वा आसां प्रजानामधिपती रुद्रोऽग्निरधिपतिर्वध्यस्य चावध्यस्य चेशेऽधिपतिमेवैनं निर्याश्य रुद्रायापिदधाति कृष्णानां व्रीहीणां भवति, कृष्णमिव वै तमस्तमे मृत्युर्मृत्युनैवैनं ग्राहयति शरमयं बर्हिः शीत्यै वैभीतया इध्मो विभित्यै सौमारुद्रं चरुं निर्वपेत् ॥ भ्रातृव्यतायैवाऽद्वितीयतायै वा तस्यार्धमर्धं सर्वं स्यादऽर्धं शु-

क्तानां व्रीहीणां स्यादऽर्धं कृष्णानामर्धं शरमयं बर्हिषोऽर्धं दर्भमयमर्धं वैभीतकमिध्मस्यार्धमन्यस्य वृक्षस्य सोमो वै ब्राह्मणस्य स्वा देवता स्वायामेवास्मै देवतायां द्वितीयं जनयति यदर्धमर्धं द्वितीयत्वायैव तत्सौमारुद्रं चरुं निर्वपेत् पयस्यामयाविनः सौम्यो वै जीवन्नाग्नेयः प्रमीतो नैव जीवो न मृतो य आमयावी तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ पयसि भवति पयो वै पयः पयः पुरुषः पय एतस्यामयति यस्यामयति पयसैवास्य पयः स्पृणोति प्रसितं वा एष एतं सौमारुद्रयोर्निष्वदति यो होता भवति स ईश्वरः प्रमीतो अनुड्वाहं तस्मै दद्यात्तं हन्यात्तस्याश्नीयात्सैव तत्र प्रायश्चित्तिः सौमारुद्रश्चरुं निर्वपेत् प्रजाकामो वा पशुकामो वा सोमो वै रेतोधा रुद्रोऽग्निः स प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजनयति विन्दते प्रजां वा पशून्वा यतरस्मै कामाय निर्वपति ॥ "सौमारुद्रचतुष्कं भारद्वाजः सौमारुद्रास्त्रिष्टुप्" ॐसौमारुद्रा धारयेथामसुर्यं प्रवामिष्टयोरमश्नुवन्तु, दमे दमे सप्तरत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥ १ ॥ सौमारुद्रा विवृहतं विषूचीममीवा या नो गयमाविवेश । आरे बाधेथां निर्ऋतिं पराचैरस्मे भद्रा सौश्रवसानि सन्तु ॥ २ ॥ सौमारुद्रा युवमेतान्यस्मै विश्वा तनूषु भेषजानि धत्तम् । अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मात् ॥ ३ ॥ "तेजोसि" । तिग्मायुधौ तिग्महेती सुशेवौ सौमारुद्राविव सुमृडतं नः । प्रनो मुञ्चतं वरुणस्य पाशाद्गोपायतं नः सुमनस्यमानाः ॥ "इति सौमारुद्रमन्त्रसूक्तं चतुर्थम् ॥ ४ ॥

---

## अथ दीक्षामन्त्रसूक्तं पञ्चमम् ॥

ॐ शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं शूलं वज्रं च खड्गं परशुमऽभयदं दक्षभागे वहन्तम् । नागं पाशं च घण्टां डमरुकसहितं साङ्कुशं वामभागे नानालङ्कारयुक्तं स्फटिकमणिनिभं नौमि दक्षं महेशम् ॥ "दीक्षया त्वा परिमित्येति पञ्चैते प्राजापत्यस्य येन देवा ज्योतिष्येति, संवर्तस्याऽङ्गिरसस्य यावद्ब्रह्मणः" ॥ ॐ दीक्षया विराडाप्त्यस्तिस्रो रात्रीर्दीक्षितः स्यात्रिपदा विराड्विराजमेवाप्नोति, षड्रात्रीर्दीक्षितः स्यात् षड्वा ऋतवः संवत्सरः संवत्सरो विराड्विराजमेवाप्नोति, दशरात्रीर्दीक्षितः स्याद्दशाक्षरा विराड्विराजमेवाप्नोति, द्वादशरात्रीर्दीक्षित स्याद्द्वादशमासाः संवत्सरः संवत्सरो विराड्विराजमेवाप्नोति, त्रयोदशरात्रीर्दीक्षितः स्यात्त्रयोदश मासाः संवत्सरः संवत्सरो विराड्विराजमेवाप्नोति, पञ्चदशरात्रीर्दीक्षितः स्यात्पञ्चदशार्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड्विराजमेवाप्नोति, सप्तदशरात्रीर्दीक्षितः स्याद्द्वादश मासाः पञ्चर्तवः संवत्सरः संवत्सरो विराड्विराजमेवाप्नोति, चतुर्विंशतिरात्रीर्दीक्षितः स्याच्चतुर्विंशतिः संवत्सरस्यार्धमासा रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड्विराजमेवाप्नोति, त्रिंशतं रात्रीर्दीक्षितः स्यात्त्रिंशदक्षरा विराड्विराजमेवाप्नोति ॥ मासंदीक्षितः स्याद्यो वै मासः संवत्सरः संवत्सरो विराड्विराजमेवाप्नोति, चतुरो मासो दीक्षितः स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमाजयग्गायत्रीं च्छन्दोष्टौ रुद्रास्तेऽन्तरिक्षमाजयंस्त्रिष्टुभं च्छन्दो द्वादशादित्यास्ते दिवमाजयञ्जगतीच्छन्दस्ततो वै ते व्यावृत-

मागच्छज्ज्यैष्ठ्यन्देवानां तस्माद्द्वादशमासो भूत्वाग्निश्चिन्वीत द्वादशमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरस्तस्याहोरात्राणीष्टकआप्तेष्टकमेवैनञ्चिनुत ऋध्नोति व्यावृतमेव गच्छति श्रैष्ठ्यं समानानां गायत्रं पुरस्ताद्गायति, शिरो वै देवानां गायत्रं गायत्रोऽग्निस्तस्माद्गायत्रं पुरस्ताद्गायति ॥ आग्निपावमान्यामयं वा वयः पवते स प्राणो मुखन्देवानामग्निर्मुखत एव प्राणन्दधाति, तस्मान्मुखतः प्राणो रथन्तरमुत्तराद्गायति बृहद्दक्षिणतः पक्ष एवास्योपदधातीयं वै रथन्तरमसौ बृहदाभ्यामेवैनं परिगृह्णाति यज्ञायज्ञीयं पुच्छे गायति, श्रोण्यां वामदेव्यमात्मा वै यज्ञायज्ञीयन्तनूर्वामदेव्यमात्मानमेवैनं सतनूञ्चिनुते हृदयमपि कक्षे तस्मादपि कक्षे हृदयमनृचं भवति तस्मादानस्थकं हृदयमर्थ्यैं परिगायत्यर्को वा अग्निरर्कमेवार्थ्यैः परिगायति शान्त्यै ॥ संवत्सरो वा अन्तरतमः स्वर्गं लोकं ज्योतिष्मतीरेताः साहस्रीरिष्टका यद्धिरण्यशुल्कैः प्रोक्षति ज्योतिष्यैवास्मै संवत्सरं विवासयति सहस्रस्य प्रमासि सहस्रस्य प्रतिमासीति सहस्रसंमिता हीमे लोका घ्नन्ति वा एतदग्नेर्यदस्यात्र न क्रियते यन्न चीयतेऽमृतं हिरण्यं यद्धिरण्यशुल्कैः प्रोक्षत्यमृतेनैवास्य तन्वं पृणन्ती सा मे अग्न इष्टका धेनवः सन्त्विति धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुष्मिंल्लोके उपतिष्ठन्ते रुद्रं वै देवा यज्ञान्निरभजन् स देवानायतयाभिपर्यावर्तत ते देवा एतच्छतरुद्रियमपश्यंस्तेनैनमशमयन् यच्छतरुद्रियञ्जुहोति तेनैवैनं शमयति ॥ जानुदघ्नेऽग्ने जुहोत्यस्या एव रुद्रमवजयतेऽथ नाभिदघ्नेऽन्तरिक्षादेव रुद्रमवयजतेऽथ पुरुषमात्रेऽमुष्या एव रुद्रमवयजत, इत एवोर्ध्वं

रुद्रमवयजतेऽथ पुरुषमात्रेथ नाभिदघ्नेथ जानुदघ्नेऽमुतएवार्वाञ्चं रुद्रमवयजते तत्षट् सम्पद्यते षड्भ्याऋतुभ्य एव रुद्रन्निरवयजते गवीधुकासक्तुभिर्वाजर्तिलैर्वा मृगक्षीरेण वा जुहोति यद्ग्राम्येन जुहुयाद्ग्राम्यावचारिणं रुद्रं कुर्यादारण्येनैवारण्यमभिरुद्रं निरवयजते ॥ अर्कपर्णेन जुहोत्यर्को वाग्निरर्केणैवैनमर्कादधि निरवयजत उत्तरस्य पक्षस्य या चरमेष्टका तस्यां जुहोत्येषा वै रुद्रस्य दिक्, स्वायामेव दिशि रुद्रं प्रतिगृह्यावयजते पशुर्वा अग्निरेतर्हि वा एष जायते यर्हि चीयते यथा वत्सो जातः स्तनं प्रेप्सति एवं वा एष एतर्हि भागधेयं प्रेप्सति स यजमानं चैवाधुर्युं च ध्यायति, यच्छतरुद्रियं जुहोति भागधेयेनैवैनं शमयति ॥ अङ्गिरसो वै स्वर्गलोकं यन्तस्ते जायां धर्मं प्रासिञ्चन्सा शोचन्ती पर्णं परामृशत्सोभवत्तदर्कस्यार्कत्वं यदर्कपर्णेन जुहोति स योनित्वाय यन्द्विष्यात्तस्य सञ्चरे पशूनां न्यसेद्यः प्रथमः पशुराक्रमति त आर्तिमार्च्छन्ति या उत्तमास्तां यजमानं वाचयेदेता वै देवताः स्वर्ग्यास्ताभिरेव स्वर्गलोकमित्येता वै देवता अभिचरणेया यन्द्विष्यात्तं ब्रूयादमुं वो जम्भे दधामि "तेजोसि" इत्येताभ्य एवैनं देवताभ्य आवृश्चति तादृक् प्रम्रधन्वति ॥ मध्यं पीत्वेति तर्पणम् ॥ "इति" दीक्षामन्त्रसूक्तं पञ्चमम् ॥ इति रुद्रपञ्चकं सम्पूर्णम् ॥

---

# अथ पार्थिवेश्वरपूजाविधिः ।

तत्रादौ कलशस्थापनम् ॥ (पत्थरके चूर्णसे ईशानी कोणपर अष्टदल ब्रह्मकलश लिखके, अष्टदलपर अक्षोट और विष्टर युक्त पानी का घडा कलश रखके, उससे नैर्ऋतकोणपर प्रणीतपात्रभी रखके कलश को भी मंत्र फूल व अक्षत छोडना) ॥ ॥ ॐकारो यस्य मूलं क्रमपदजठरच्छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलः स्यादथर्वः प्रतिष्ठा । यज्ञच्छायासुशीतो द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्यात्रिकालं दुरितभयहरः पातु नो वेदवृक्षः ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी । गायत्री च्छन्दसां मातर्ब्रह्मयोने नमोस्तु ते ॥ २ ॥ भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रम् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीरुत द्यौः ॥ "देवीनामेकेन्द्राणीवरुणान्याग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा" ॥ अभि नो देवीरवसा महः शर्मणा नृपत्नीः, अच्छिन्नपत्राः सचन्ताम् ॥ इहेन्द्राणीमुपह्वये वारुणानीं स्वस्तये, अग्नायीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्, पिपृतां नो भरीमभिः ॥ तयोरिद्घृतवत्पयो विप्रा

रिहन्ति धीतिभिः, गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवि भवानृक्षरा निवेशनी, यच्छाऽनः शर्म सप्रथः ॥ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे, पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः, अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे, इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥ ॐगायत्र्यै नमः ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् । ३ । इति विष्णुभद्रम् ॥ (अब क्षेत्रपालों को अक्षत छोडना ॥ अश्वमेधे घोराणामार्षम् । ॐद्रष्ट्रे नम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमो नुकूशात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमानाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः शान्ताय नमस्तपसे नमः । भूतं भव्यं भविष्यद्वषट्स्वाहा नम, ऋक्सामयजुर्वषट्स्वाहा नमो, गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः, पिता पुत्रः पौत्रो वषट्स्वाहा नमः, प्राणो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्वर्वषट्स्वाहा नमः ॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात् । संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चस्वी जायतामस्मि-

राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽन-ड्वानाशुः, सप्तिर्जिष्णूरथेष्ठः पुरन्ध्रिर्योषा सभेयो युवाऽस्य यज-मानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फल-वतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ( और कलशपर अक्षतपुष्प छोडना )। "इषे त्वोर्जे त्वेति ब्र-ह्मणः"। इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्मा मावस्ते न ईशत माऽघशंसः, परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा असि, देवस्य त्वा सवितुः प्र-सवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे, गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टाऽरातिः प्रेयमागाद्धिषणा बर्हिरच्छ मनुना कृता, स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि माधो मो-परि परस्त ऋद्ध्या, स मा च्छेता ते मा रिषत् देवबर्हिः श-तवल्शं विरोह सहस्रवल्शं विवयं रुहेम, आदित्या रास्नासी-न्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि देवं गममसि तदा हरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे, वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः, मधुमद्घृतव-त्पिन्वमाना जीवा जीवन्तीरुप वः सदेम मातरिश्वानो घर्मोसि द्यौरसि पृथिव्यसि विश्वधाया परेण, धाम्ना, हुतासि माह्वाः सा विश्वायुः सा विश्वव्यचाः सा विश्वधाया हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा, द्यावापृथिवीभ्यां सपृच्यध्वमृ-

तावरी ऊर्मिणा मधुमत्तमा मान्द्राधानस्य सातयः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत, महित्रृणां मवोस्तु द्युम्नं मित्रस्यार्यम्णः, दुराधर्षं वरुणस्य, नहि तेषाममाचन नाध्वसु वरणेषु ईशे रिपुरघशंसः, यस्मै पुत्रासो अदितेः प्रजीवसे मर्त्याय ज्योतिर्यच्छन्त्यजस्रम्, सोमानं स्वरणं कृणुहि ब्रह्मणस्पते, कक्षीवन्तं य औषजो यो रेवाण्यो अमीवहा वसुवित्पुष्टिवर्धनः सनः सिषक्तु यस्तुरः, मा नः शंसो अररुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ ( अब तिल अक्षत पुष्प पानी और विष्टरवाले प्रणीतपात्र में गन्ध और तीन मंत्रोंसे तीन फूल पाना ) ॥ संवः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥ १ ॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संप्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ (प्रणीतपात्र के विष्टर से कलश और क्षेत्रेशों को जीवाधान करना )॥ अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्धेहि ॥ इन्द्रस्य प्राणः स ते प्राणन्ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ पितृणां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ मरुतां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ विश्वेषान्देवानां प्राणास्तेते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा॥ प्रजापतेः प्राणः परमेष्ठिनः प्राणस्तौ ते प्राणन्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा ॥ यदऽसर्पस्तत्सर्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदऽद्रियथास्तद्घृतमभवो ॥ घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः । तत्त्वा विष्णुरन्वपश्यत्तत्त्वेडा

गन्धैरयत् ॥ पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्या पांशोर्वीर्येणोद्धराम्यसौ ॥ बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याऽया असौ । देवा आयुष्मन्तस्तेऽमृतेनाऽयुष्मन्तस्तेषामयमायुषाऽयुष्मानऽस्त्वसौ ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तस्यायमाऽयुषाऽयुष्मानऽस्त्वसौ ॥ यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ सोम आयुष्मान्स ओषधीभिरायुष्मांस्तस्यायमायुषाऽयुष्मानऽस्त्वसौ ॥ ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्तासामयमाऽयुषाऽयुष्मानऽस्त्वसौ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत् ॥ अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव ॥ ( अब पूजामण्डप के दिशाओं का अक्षतयुक्त राक्षस घातक तिल फेंकना) ॥ ("प्रथम पूर्व को") ॥ ये देवाः पुरःसदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (दक्षणको) ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (पश्चिम को) ॥ ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ ( उत्तर को ) ॥ ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ ( ऊपर आकाशको ) ॥ ये देवा उपरिषदः सोमनेत्रा अवस्वदन्तो रक्षोहणस्ते

नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥ (आग्नेय कोण को)॥ इदमहं रक्षोभिः समूहाम्यग्ने संदह रक्षः संदग्धं रक्षोऽग्नये पुरःसदे रक्षोघ्ने स्वाहा ॥ ( नैऋत कोण को ) यमाय दक्षिणात्सदे रक्षोघ्ने स्वाहा ॥ (वायव्यकोण को) मरुद्भ्यः पश्चात्सद्भ्यः रक्षोहभ्यः स्वाहा (ईशानकोण को) मित्रावरुणाभ्यामुत्तरात्सद्भ्यां रक्षोहभ्यां स्वाहा ॥ ( नीचे धरती को )॥ सोमायोपरिषदेऽवस्वदते रक्षोघ्ने स्वाहा ॥ ( अब प्रणीतपात्र के विष्टर से उस का पानी आलोडन करना )॥ रथः पश्ववाही दक्षिणा ॥ ( उस विष्टर से द्रव्यों की शुद्धि करना ॥ "पहिले जल की" )॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते ह नः, उशतीरिव मातरः । तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः ॥ ( अक्षतकी शुद्धि )॥ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्, भवावाजस्य सङ्गथे ॥ ( फूलों की ) पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ (तिलककी) ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ (कुशाकी)॥ कर्मणे वां वानस्पत्यमसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रियमागाद्विषेण बर्हिरच्छ मनुना कृता सुधया वितुष्ट उर्वन्तरिक्षं वीहि ॥ ( धूपकी ) धूरसि धूर्व धूर्वन्तं योऽस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमं विष्णोः क्रमोऽस्याहुतमसि हविर्दानं दृंहस्व माह्वान्मित्रस्यत्वा चक्षुषा

प्रेक्ष उरु त्वा वाताय वसवस्त्वा धूपयन्तु गायत्रेण च्छन्द-
साऽङ्गिरस्वत् । रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वत् ।
आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गिरस्वत् । विश्वे त्वा
देवा वैश्वानरा धूपयन्तु आनुष्टुभेन च्छन्दसाऽङ्गिरस्वत् इन्द्रस्त्वा
धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ (सूरजकी)
उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म
ज्योतिरुत्तमम् ॥ (दीपकी) ॥ तेजोसि शुक्रमसि ज्योतिरसि
धामासि प्रियन्देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवता-
भ्यो गृह्णामि यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ (अपने आप
को तिलक लगाना) ॥ अध्वर्योयं यज्ञो अस्तु देवा ओष-
धीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तु देवाः
स पिन्वस्व घृतवद्देवयज्ञ । (अक्षत और फूल चढाना) ॥
इहैवैधि मा पच्योष्ठाः पर्वता इवाविचाचलत् । इन्द्र इवेह ध्रुव-
स्तिष्ठेह यज्ञमुदारय ॥ (दो काण्ड दर्भ का अपना आसन
छोडना) ॥ इममिन्द्रो अदीधरद्ध्रुवन्ध्रुवेण हविषा हविः ।
तस्मै सोमो अधिब्रुवत्तस्मा उ ब्रह्मणस्पतिः ॥ (कलश को
आसन छोडना) ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता
इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ (भूमी को
तिलकफूल और अक्षत लगाना) ॥ मही द्यौः पृथिवी
च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ (आकाश
को) ॥ बडित्था पर्वतानां क्षेत्रं बिभर्षि पृथिवि प्रया भूमिं प्रव-
त्वति मह्ना जिनोषि महिनि ॥ (अष्टदलके नीचे लिखे हुई
पांच कोनों मेंसे वायुकोण पर गणेश को) ॥ निषुसीद
गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते

किंचनारे महामर्कं मघवंश्चित्रमर्च ॥ (नैर्ऋतकोण पर कुमार को) ॥ कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य नमिमज्जनासः पुरा पश्यन्ति निहितमरतौ ॥ (ईशानकोण पर श्रिई को) अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ (बीच में उपर सरस्वती को) ॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानुर्गिरीणान्तविंश्चेभिरूर्मिभिः । परावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥ (बीच में नीचे लक्ष्मीको) कांस्यसितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ (आग्नेय कोण-पर विश्वकर्म को) ॥ विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शितः । ते त्वा घृतस्य धारया श्रेष्ठाय समसूषत ॥ (कलशपात्र में और देवों को) ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगानाम् । श्येनो गृद्ध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ यो रुद्रो अग्नौ योऽप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः सविता प्रार्पयत, श्रेष्ठतमाय कर्मणे ॥ अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः ॥ आहं पितृन्सुविदत्रां अवित्सि न पातञ्च विक्रमणं च विष्णोः । बर्हिषदो ये सुधया सुतस्य

भाजन्त पितृवस्त इहागमिष्ठाः ॥ वषट्ते विष्णवास आकृणोमि
तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं
पात स्वस्तिभिः सदा नः ॥ ऋतुपतये नारायणाय नमः दुर्गायै
नमः । त्र्यम्बकाय नमः, वरुणाय नमः, यज्ञपुरुषाय नमः अग्नि-
ष्वात्तादिभ्यः पितृगणदेवताभ्यो नमः ॥ (प्रधान हैं) ॥ यो
रुद्रो अग्नौ य अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा
भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाय नमः । भवायदेवाय
नमः । ८ । अजैकपर्दिने नमः अहिर्बुध्न्याय कृत्तिवाससे पि-
नाकभृते सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभ-
वाहनाय शतरुद्रेश्वराय मृत्युञ्जयभट्टारकायनमः ॥ गणानान्त्वा
गणपतिं हवामहे कविङ्कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां
ब्रह्मणस्पत आनः श्रृण्वन्नूतिभिः सीद सादनं नमः । विना-
यकायनमः । ८ । कुमारं माता युवतिः समुब्धं गुहा बिभर्ति
न ददाति पित्रे । अनीकमस्य नमिमज्जनासः पुरा पश्यन्ति नि-
हितमरतौ ॥ क्लींकां कुमारायनमः षण्मुखायनमः मयूरवाहनाय
नमः सेनाधिपतये कुमाराय नमः ॥ जातवेदसे सुनवाम ० ।
भगवत्यै अमायै नमः । ८ ॥ तद्विष्णोः परमं ० । विष्णुपञ्चा-
यतनदेवताभ्यो नमः ॥ यत इन्द्र भयामहे ० । अभयङ्करीदे-
व्यै नमः क्षेमङ्करीभगवत्यै नमः सर्वशत्रुघातिन्यै नमः इह राष्ट्रा-
धिपतये अमुकभैरवाय नमः ॥ क्षेत्रस्य पतिना वयं हितेनेव
जयामसि गामश्वं पोषयित्वा स नो मृडातीदृशे नमः हेरकादि-
भ्यो नमः बटुकादिभ्यो नमः ॥ यौ ते श्वानौ यमरक्षतारौ
चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परिदेहिराजन्स्वस्ति
चास्मा अनमीवञ्च धेहि ॥ यत्र वेत्थ वनस्पते देवानां गुह्या

नामानि तत्र हव्यानि गन्तय ॥ मुञ्चामि त्वा हविषा जीवनायकमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहि जग्राह यदि वैतदेनन्तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥ गायत्र्यै नमः । ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॥३॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ (कलश को नैवेद्य रखना) सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामादधे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ॥ ऋतुपतये नारायणाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः भगवते भवायदेवाय शर्वायदेवाय रुद्रायदेवाय पशुपतयेदेवाय उग्रायदेवाय भीमायदेवाय महादेवाय ईशानायदेवाय पार्वतीसहिताय परमेश्वराय॥ अजैकपर्दिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय मृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्रौंकां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधियतये कुमाराय ।

भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै सहस्रनाम्न्यै देव्यै भवान्यै । विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्यो वटुकादिभ्यः तिलतण्डुलमात्रं दधिमधुमिश्रं ॐ नमो नैवेद्यं निवेदयामि नमः ॥ ( कलश को फूल अर्घ छोडना ) ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव । ईशेयो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ २ ॥ य ओजदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ ३ ॥ येन द्यौरुग्रा पृथिवी दृढा येन सुस्तम्भितं येन नाकम् । यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा विधेम ॥ ४ ॥ य इमे द्यावा पृथिवी तस्तभाने आधारयद्रोधसी रेजमाने । यस्मिन्नधि विततः सूर एति कस्मै देवाय हविषा विधेम ॥ ५ ॥ यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः । दिशो यस्य प्रदिशः पञ्चदेवी कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो ह यन्महती विश्वमायुर्गर्भं दधाना जनयन्तीरग्निम् । ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७ ॥ आ नः प्रजाञ्जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ८ ॥ अर्चन्तस्त्वा हवामहे अर्चन्तः समिधीमहि । अग्नेरर्चत ऊतये अर्चत प्रार्चत प्रियमेधसो

अर्चत । अर्चन्तु पुत्रका उत पुरं न धृष्णमर्चत अर्चत अर्चत ॥ इति कलशस्थापनम् ॥

अथ पूजाविधिः । (पीठ परे पार्थिवेश्वर रखके, पानी छोडना) । अस्य श्री आसनशोधनमन्त्रस्य, मेरुपृष्ठ ऋषिः, सुतलं च्छन्दः, कूर्मो देवता, आसनशोधने विनियोगः । मेरुपृष्ठ ऋषये नमः शिरसि (सिरको हाथों से छोना) सुतलं च्छन्दसे नमः, मुखे (मुंहको) कूर्मो देवतायै नमः हृदि (हृदय को) आसनशोधने विनियोगाय नमः सर्वाङ्गेषु । (सब अङ्गों को) ॥ (दो दर्भकाण्डे भूमी को आसन छोडना) ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि । (गन्ध अर्घ फूल देना) श्रीं पृथिव्यै आधारशक्त्यै समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः । (हाथ जोड के मांगना) पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ (अथ इष्टदेवके स्मरणपूर्वक नमस्कार करना) शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि । सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः । गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ गुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे नमः, परमाचार्याय नमः, आद्यसिद्धेभ्यो नमः ॥ (अब न्यास करना) अ नाभौ (नाभिस्थान को हाथोंसे छोना) उ हृदि (हृदयको)

म शिरसि ( सेरको ) । भूः पादयोः (पैरोंको) । भुवः हृदि ( हृदयको ) स्वः शिरसि ( सेरको ) भूरङ्गुष्ठाभ्यां नमः ( अङ्गुठोंको ) भुवस्तर्जनीभ्यां नमः ( दूसरी अंगुली को ) स्वर्मध्यमाभ्यां नमः ( तीसरी अङ्गुली को ) महः अनामिकाभ्यां नमः (चौथमी अङ्गुली को) जनः कनिष्ठिकाभ्यां नमः ( पिच्छली अङ्गुली को ) तपःसत्यं करतलकरपृष्ठाभ्यां नमः ( हाथों के दोतले और दो पीठभी मेलाना) भूः पादयोः ( पैरोंको ) भुवः जान्वोः ( घुट्टनोंको ) स्वः गुह्ये ( गुदाको ) महः नाभौ ( नाभी को ) जनः हृदि ( हृदयको) तपः कण्ठे ( गले को ) सत्यं शिरसि ( सेरको ) ॥ भूः हृदयाय नमः ( हृदयको ) भुवः शिरसे स्वाहा ( सिरको ) स्वः शिखायै वषट् ( शिखाको ) महः कवाचाय हुं ( बाही हाथ दाही कान के दाही हाथ बाही कान के आगे रखना ) जनः नेत्राभ्यां वौषट् ( आखोंको) तपः सत्यमस्त्राय फट् ( तीन छोटिका सिरको ईर्द गीर्द मारना ) ॥ ( इस्भीतराह औरोंभी ) तत्सवितुरङ्गुष्ठाभ्यां नमः । वरेण्यं तर्जनीभ्यां नमः । भर्गो देवस्य मध्यमाभ्यां नमः । धीमहि अनामिकाभ्यां नमः । धियो योनः कनिष्ठिकाभ्यां नमः । प्रचोदयात्करतलकरपृष्ठाभ्यां नमः । तत्पादयोः सवितुर्जान्वोः ॥ वरेण्यं कट्यां । भर्गो नाभौ ॥ देवस्य हृदये । धीमहि कण्ठे ॥ धियो नासिकायां । यश्चक्षुषे ॥ नः ललाटे । प्रचोदयाच्छिरसि ॥ तत्सवितुर्हृदयाय नमः । वरेण्यं शिरसे स्वाहा ॥ भर्गो देवस्य शिखायै वषट् । धीमहि कवचाय हुं ॥ धियो योनः नेत्राभ्यां वौषट् । प्रचोदयादऽस्त्राय फट् ॥ आपः स्तनयोः ।

ज्योतिर्नेत्रयोः ॥ रसो मुखे । अमृतं ललाटे ॥ ब्रह्मभूर्भुवः स्वरों शिरसि । यो रुद्रो अग्नौ, हृदयाय नमः ॥ यो अप्सु य ओषधीषु, शिरसे स्वाहा । यो वनस्पतिषु, शिखायै वषट् ॥ यो रुद्रो विश्वा भुवना विवेश, कवचाय हुँ । तस्मै रुद्राय, नेत्राभ्यां वौषट् ॥ नमो अस्तु देवा अस्त्राय फट् । गणानान्त्वा गणपतिं हवामहे, हृदयाय नमः । कविङ्कवीनां, शिरसेस्वाहा । उपमश्रवस्तमं, शिखायै वषट् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत, कवचाय हुं । आनः शृण्वन्, नेत्राभ्यां वौषट् । ऊतिभिः सीद सादनं, अस्त्राय फट् ॥ कुमारं माता युवतिः हृदयायनमः । समुब्धं गुहा बिभर्ति, शिरसेस्वाहा । न ददाति पित्रे, शिखायै वषट् । अनीकमसिनमिमज्ञनासः, कवचाय हुँ । पुरा पश्यन्ति, नेत्राभ्यां वौषट् । निहितमरतौ, अस्त्राय फट् ॥ जात शिखायां वेदसे, ललाटे । सुनवाम, कर्णयोः । सोमं, नासिकायां । अराति, चक्षुषोः । यत, ओष्ठयोः । नि दन्तेषु । दहाति, तालुनि । वेद जिह्वायां । स, ग्रीवायां । नः, बाह्वोः । पर्षत्, हृदि । अति, स्तनयोः । दुर्, कुक्षौ । गाणि, नाभौ । विश्वा, पृष्ठे, नाव, अपाने । इव, वृषणयोः । सिन्धुं, शिश्ने । दुर्, कट्यां । इत ऊर्वोः । अति, जङ्घयोः । अग्निः, पादयोः ॥ ( चारों तरफ तेल फेंकते हुई पडना) अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ ( प्राणायाम करना ) । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो योनः प्रचोदयादोमापो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ ( पैरो और मुंह को छेडकना ) तीर्थे स्नेयं तीर्थमेव समानानां

भवति, मानः शंस्यो अररुषो धूर्तिः प्राणङ् मर्त्यस्य रक्षाणो ब्रह्मणस्पते ॥ ( पवित्र अनामिका में धारना ) वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्ति ॥ ( शकुनसहित आशीर्वाद देना ) ॥ यावदिन्द्रादयो देवा यावच्चन्द्रदिवाकरौ । यावद्रामकथा लोके भूयात्तावत्स्थितिस्तव ॥ ( रक्षासूत्र बान्धना ) ॥ यदाबन्धन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानः । तन्म आबध्नामि शतशारदायाऽयुष्माञ्जर-दष्टिर्यथासत् ॥ रक्षस्व मे केशवः सविता सत्यधर्मा रक्षस्व मे केशवः प्राणधनानि यानि । रक्षस्व मे केशवश्चोभयलोकवीरं शंनो भवतु मे द्विपदे शं चतुष्पदे ॥ रक्षाणो ब्रह्मणस्पते ॥ (अपने आप को गन्ध व पुष्प और अर्घ लगाना ) परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणाय आधारशक्त्यै समालभनं गन्धो नमः । अर्घोनमः । पुष्पं नमः ॥ (दीवा को गन्ध अर्घ और फूल चडाना ) । स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः । प्रसीद मम गोविन्द दीपोयं परिकल्पितः। (धूप को)। वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः । आधारः सर्वदेवानां धूपोयं परिकल्पितः ॥ (सूरज को ) नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे । नमः प्रत्यक्षदे-वाय भास्कराय नमो नमः ॥ (अर्घ व विष्टर समेत पानीसे संकल्पछोडना) यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च । न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये । आत्मने नारायणाय आधारशक्त्यै दीपधूपसङ्कल्पात्सि-द्धिरस्तु दीपोनमः धूपोनमः । तत्सद्ब्रह्म अद्यतावत्तिथावद्य

फाल्गुनमासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां शनिवारान्वितायां महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः ॥ भगवते भवायदेवाय शर्वायदेवाय रुद्रायदेवाय पशुपतयेदेवाय उग्रायदेवाय भीमायदेवाय महादेवाय ईशानायदेवाय पार्वतीसहिताय परमेश्वराय ॥ अजैकपर्दिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय मृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्लींक्लीं कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै सहस्रनाड्यै देव्यै भवान्यै । विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्योवटुकादिभ्यः आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं पार्थिवेश्वरपूजानिमित्तं दीपधूपात्संकल्पसिद्धिरस्तु दीपोनमः धूपोनमः ॥ अपसव्येन (बाहे तर्फ जञू रख के तिल समेत) नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे । नमो यमाय रुद्राय कान्तारपतये नमः ॥ २ ॥ तत्सद्ब्रह्माऽद्यतावत्तिथा० ॥ पित्रे पितामहाय प्रपितामहाय । मात्रे पितामह्यै प्रपितामह्यै । मातामहाय प्रमातामहाय वृद्धप्रमा-

तामहाय। मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः पार्थिवेश्वरपूजानिमित्तं दीपः स्वधा धूपःस्वधा ॥ "सव्येन ॥" (दाही तर्फ जनू रख के तीन दफा फूल और गन्ध विष्टरसहित पानीकी पात्र में छोडना) संवः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥१॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संय्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ (सब देवों को जीवाधान देना, उस पानी से )। अश्विनोः प्राणस्तौ ते प्राणन्दत्तान्तेन जीव मित्रावरुणयोः प्राणस्तौ ते प्राणंदत्तान्तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव। (देव को दो दर्भकाण्डों से चा मर सा न्यास करना) अ नाभौ, उ हृदि, म शिरसि, भूः पादयोः भुवः हृदि, स्वः शिरसि। भूरङ्गुष्ठाभ्यां नमः भुवस्तर्जनीभ्यां नमः स्वर्मध्यमाभ्यां नमः महः अनामिकाभ्यां नमः जनः कनिष्ठिकाभ्यां नमः तपःसत्यं करतलकरपृष्ठाभ्यां नमः । भूः पादयोः भुवःजान्वोः स्वःगुह्ये महः नाभौ जनःहृदि तपःकण्ठे सत्यं शिरसि। भूः हृदयाय नमः भुवःशिरसे स्वाहा स्वः शिखायै वषट् महःकवचाय हुं जनः नेत्राभ्यां वौषट् तपःसत्यमस्त्रायफट् ॥ तत्सवितुरङ्गुष्ठाभ्यां नमः, वरेण्यंतर्जनीभ्यां नमः भर्गोदेवस्य मध्यमाभ्यां नमः धीमहिअनामिकाभ्यांनमः धियोयोनः कनिष्ठिकाभ्यांनमः प्रचोदयात्करतलकरपृष्ठाभ्यां नमः । तत्पादयोः सवितुर्जान्वोः वरेण्यं कट्यां भर्गो नाभौ, देवस्य हृदये, धीमहि कण्ठे, धियोनासिकायां, यश्चक्षुषे, नः

ललाटे, प्रचोदयाच्छिरसि । तत्सवितुर्हृदयाय नमः वरेण्यं शिरसेस्वाहा भर्गोदेवस्यशिखायैवषट् धीमहिकवचायहुं धियो-योनः नेत्राभ्यां वौषट् प्रचोदयादस्त्राय फट् । आपः स्त-नयोः ज्योतिर्नेत्रयोः रसो मुखे अमृतं ललाटे ब्रह्मभूर्भुवःस्वरों शिरसि ॥ यो रुद्रो अग्नौ हृदयाय नमः, यो अप्सु य ओषधीषु शिरसे स्वाहा, यो वनस्पतिषु शिखायै वषट्, यो रुद्रो विश्वा भुवना विवेश कवचाय हुं तस्मै रुद्राय नेत्राभ्यां वौषट्, नमो अस्तु देवाः अस्त्राय फट् ॥ गणानान्त्वा गणपतिं हवामहे हृदयायनमः, कविंकवीनां शिरसेस्वाहा, उपमश्रवस्तमं शिखायै-वषट्, ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते कवचाय हुँ, आनःश‍ृण्व-न्नेत्राभ्यां वौषट्, ऊतिभिः सीदसादनमस्त्राय फट् ॥ कुमारं माता युवतिः हृदयायनमः, समुब्धं गुहा बिभर्ति शिरसेस्वाहा, न ददाति पित्रे शिखायै वषट्, अनीकमस्य नमिनज्जनासः कवचाय हुँ, पुरापश्यंति नेत्राभ्यां वौषट् निहितमरतौ अस्त्राय फट् ॥ जातशिखायां, वेदसे ललाटे, सुनवाम कर्णयोः, सोमं नासिकायां, अरातिश्चक्षुषोः, यत ओष्ठयोः, नि दन्तेषु, दहाति तालुनि, वेद जिह्वायां, स ग्रीवायां, नः बाह्वोः, पर्षत् हृदि, अति स्तनयोः, दुर् कुक्षौ, गाणि नाभौ, विश्वा पृष्ठे, नावाऽपाने इव वृषणयोः, सिन्धुं शिश्ने, दुर् कत्यां इत ऊर्वोः, अति जङ्घयोः, अग्निः पादयोः ॥ (दो दर्भकाण्ड अक्षतयुक्त हाथ में रख के देवों से पूजा की आज्ञा लेना)। ॐभूः पुरुषमावाहयामि नमः ॐभुवःपुरुषमावाहयामि नमः ॐस्वः पु-रुषमावाहयामि नमः ॐभूर्भुवःस्वःपुरुषमावाहयामि नमः ॥३॥

ॐभूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् । ३ । तत्पुरुषाय विद्महे महादेवायधीमहि तन्नोरुद्रः प्रचोदयात् । ३ । तन्महेशाय विद्महे अर्धनारीश्वरायधीमहि तन्नः पार्थिवेश्वरः प्रचोदयात् । ३ । तत्पुरुषाय विद्महे वक्रतुण्डायधीमहि तन्नो दन्ती प्रचोदयात् । ३ । कार्तिकेयाय विद्महे सेनाधिपतयेधीमहि तन्नः कुमारः प्रचोदयात् । ३ । सुभगायै विद्महे काममालिन्यैधीमहि तन्नो दुर्गाप्रचोदयात् ॥३॥ ॐतत्सद्ब्रह्माद्यतावत्तिथावऽद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथावमुकायां अमुकवारान्वितायां महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेर्नारायणस्य "फाल्गुने" शक्तिसहितस्य चक्रिणः क्रियासहितस्य गोविन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणयागदेवतानां भवस्य देवस्य० ।८। अजैकपादिनः अहिर्बुध्न्यस्य कृत्तिवाससः पिनाकभृतः वृषाकपेः सिन्धोः बहुरूपस्य हरस्य त्र्यम्बकस्य त्रिनेत्रस्य वृषभवाहनस्य शतरुद्रेश्वरस्य श्रीमहामृत्युञ्जयभट्टारकस्य । विनायकस्य एकदन्तस्य कृष्णपिङ्गलस्य गजाननस्य लम्बोदरस्य भालचन्द्रस्य हेरम्बस्य आखुरथस्य विघ्नभक्ष्यस्य वल्लभासहितस्य महागणेशस्य । क्लीं कां कुमारस्य षण्मुखस्य मयूरवाहनस्य सेनाधिपतेः कुमारस्य । भगवत्याः अमायाः कामायाः चार्वङ्ग्याः टङ्कधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञीभगवत्याः श्रीज्वालाभगवत्याः सहस्रनाम्न्या

देव्याः भवान्याः पार्थिवेश्वरयागदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करीदेव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इहराष्ट्राधिपतेः अमुकभैरवस्य हेरकादीनां वटुकादीनां आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं पार्थिवेश्वरप्रीत्यर्थं कलशपूजनं पार्थिवेश्वरयागपूजनमर्चामहं करिष्ये ॐ कुरुष्व ॥ ( तिल सर्षप और जवें चारोंतर्फ फैंकके, आसन देना ॥ )
मृडा नो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छञ्च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ विश्वेश्वर महादेव राजराजेश्वरेश्वर । आसनं दिव्यमिशान दास्येऽहं परमेश्वर ॥ महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेः नारायणस्य "फाल्गुने" शक्तिसहितस्य चक्रिणः, क्रियासहितस्य गोविन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणयागदेवतानां भवस्य देवस्य ८ अजैकपर्दिनः अहिर्बुध्न्यस्य कृत्तिवाससः पिनाकभृतः वृषाकपेः सिन्धोः बहुरूपस्य हरस्य त्र्यम्बकस्य त्रिनेत्रस्य वृषभवाहनस्य शतरुद्रेश्वरस्य श्रीमहामृत्युञ्जयभट्टारकस्य । विनायकस्य एकदन्तस्य कृष्णपिङ्गलस्य गजाननस्य लम्बोदरस्य भालचन्द्रस्य हेरम्बस्य आखुरथस्य विघ्नभक्ष्यस्य वल्लभासहितस्य महागणेशस्य । क्लीं कां कुमारस्य षण्मुखस्य मयूरवाहनस्य सेनाधिपतेः कुमारस्य । भगवत्याः अमायाः कामायाः चार्वङ्ग्याः

टङ्कधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञीभगवत्याः श्रीज्वालाभगवत्याः सहस्रनाम्न्याः देव्याः भवान्याः पार्थिवेश्वरयागदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करीदेव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इह राष्ट्राधिपतेः अमुकभैरवस्य हेरकादीनां वटुकादीनां इदमासनं नमः ॥ (अर्घसमेत दो दर्भों हाथ में रख कर आवाहन करना) ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायैत्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः भवाय देवाय ८ अजैकपदिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय श्रीमहामृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्लीं कां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै सहस्रनाम्न्यै देव्यै भवान्यै पार्थिवेश्वरयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्व-

शत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्यो वटुकादिभ्यः युष्मान् वः पूजयामि ॐ पूजय। इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्माणं द्वार्देवताः प्रजापतिं ब्रह्माणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं "फाल्गुने" शक्तिसहितं चक्रिणं क्रियासहितं गोविन्दं दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वात्तादीः पितृगणयागदेवताः भवं देवं ८ अजैकपदिनं अहिर्बुध्न्यं कृत्तिवाससं पिनाकभृतं वृषाकपिं सिन्धुं बहुरूपं हरं त्र्यम्बकं त्रिनेत्रं वृषभवाहनं शतरुद्रेश्वरं श्रीमहामृत्युञ्जयभट्टारकं। विनायकं एकदन्तं कृष्णपिङ्गलं गजाननं लम्बोदरं भालचन्द्रं हेरम्बं आखुरथं विघ्नभक्ष्यं वल्लभासहितं महागणेशं। क्लीं कां कुमारं षण्मुखं मयूरवाहनं सेनाधिपतिं कुमारं। भगवतीं आमां कामां चार्वङ्गीं टङ्कधारिणीं तारां पार्वतीं यक्षिणीं श्रीशारिकाभगवतीं श्रीशारदाभगवतीं श्रीमहाराज्ञीभगवतीं श्रीज्वालाभगवतीं सहस्रनाम्नीं देवीं भवानीं पार्थिवेश्वरयागदेवताः। विष्णुपञ्चायतनदेवताः अभयङ्करीदेवीं क्षेमङ्करीभवानीं सर्वशत्रुघातिनीं इहराष्ट्राधिपतिं अमुकभैरवं हेरकादीन् वटुकादीन् आवाहयिष्यामि ॐआवाहय॥

॥आवाहनं शिवस्य॥—शुद्धस्फुटकसकाशं०। लिङ्गेत्र भक्तदयया क्षणमात्रमेकं स्थानं विधाय भव मन्निहिता पुरारे।

सर्वेश विश्वमय हृत्कमलाधिरूढ पूजां गृहाण भगवन्भव मेऽद्य तुष्टः । भूमेर्जलात्तु पवनादनलाद्धिमांशोरुष्णांशुतो हृदयतो गगनात्समेत्य । लिङ्गेत्र मृन्मणिमये मदनुग्रहार्थं भक्त्यैकलभ्य भगवन्कुरु सन्निधानम् । आगच्छ मृत्युञ्जय चन्द्रमौले व्याघ्राजिनालङ्कृत शूलपाणे । सुभक्तसंरक्षणकल्पवृक्ष प्रसीद सर्वेश्वर पार्थिवेश ॥ लिङ्गेस्मिन्भगवञ्छम्भो सदा सन्निहितो भव । गृहाणार्चामिमां देव कृपया परमेश्वर ॥ गणेशस्य ॥ शैलेश्वरस्य तनयार्भक भक्तविघ्ननाशाय हस्तधृतदण्डकुठारपाश । द्वारेश सर्वगणनायक पद्महस्त पूजां गृहाण भगवन्भव मेद्य तुष्टः । ध्याये गजाननं देवं तप्तकाञ्चनसन्निभम् । चतुर्भुजं महाकायं सर्वाभरणभूषितम् ॥ दन्ताक्षमालापरशुपूर्णमोदकपात्रकम् । उमासुतं च विघ्नेशं विश्वव्यापिनमीश्वरम् । आवाहयामि भक्त्या त्वामागच्छ द्विरदानन ॥ कुमारस्य ॥ आवाहयाम्यहं देवं कुमारं षण्मुखंप्रभुम् । मयूरासनमारूढं भक्तानामभयङ्करम् ॥ शुक्लवर्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव दीपोयं प्रतिगृह्यताम् ॥ दुर्गायाः ॥ श्रीशारदे सुरवरे त्रिपुरे सुरेशि दुर्गे भवानि खलु वैखरि विश्वमातः । शर्वार्धदेहनिलये परिवारयुक्ता पूजां गृहाण सुभगे भव मेऽद्य तुष्टः ॥ आवाहयाम्यहं दुर्गां शङ्खचापशरान्विताम् । त्रिशूलहस्तां वरदां त्रिनेत्रां चारुहासिनीम् । एह्येहि दुर्गे वरदे भजस्व प्रतिमां सदा । अनुकम्पय मां भक्त्या कृपां कुरु महेश्वरि ॥ भगवन्पार्वतीनाथ भक्तानुग्रहकारक । असद्दयानुरोधेन सन्निधानं कुरु प्रभो ॥ ३ ॥ इत्याहूयतु गायत्रीं त्रिः समुच्चार्य तत्ववित् ।

मनसा चिन्तितैर्द्रव्यैर्देवमात्मनि पूजयेत् । तेजोरूपं ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत् ॥ (चारों तर्फ जऊं फैंकके प्राणायाम करना) पाद्यार्थमुदकं नमः ॥ (पात्रका पानी हाथसे उसी में वापस छोडना) शन्नो देवीरभिष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः ॥ (उस पात्र में लाजा गन्ध सर्वौषधी विष्टर और पानी रखना) लाजाश्च कुङ्कुमं चैव सर्वौषधिसमन्वितम् । दर्भाङ्कुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम् (देवों को हाथ जोडना) भगवन्तः पाद्यंपाद्यं (पाद्य देना) हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ १ ॥ यासां देवा दिवि कृण्वन्ति भक्ष्यं या अन्तरिक्षे बहुधा भवन्ति । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ २ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् । या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु ॥ ३ ॥ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे । मधुश्च्युतः शुचयो या पावकास्ता न आपः शंस्योना भवन्तु ॥ ४ ॥ महादेव महेशान महानन्द परात्पर । गृहाण पाद्यं मद्दत्तं पार्वतीसहितेश्वर ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय

यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः भवाय देवाय ८ अजैकपदिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय श्रीमहामृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्लीं कां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै सहस्रनाम्न्यै देव्यै भवान्यै पार्थिवेश्वरयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्यो वटुकादिभ्यः पाद्यंनमः ॥ (पाद्यकाशेष छोडना) पाद्यशेषं निवारयेत् ॥ (और हाथसे वापस पात्रमें पानी छोडना) शन्नो देवीरभिष्टय आपो भवन्तु पीतये, शंय्योरभि स्रवन्तु नः ॥ (उस पात्रमें पानी दूध विष्टर घृत दही चावल यवा सर्षप यह आठ द्रव्य पाके नमस्कार करना) आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति ह्यर्घ्यमष्टाङ्गमुच्यते ॥ भगवन्तः अर्घ्यमऽर्घ्यम् । (अर्घ्य देना) । त्वेषं वयं रुद्रं यज्ञं साधनमऽङ्कुङ्कविमवसे निह्वयामहे । आरे असद्दैव्यं हेडो अस्यतु सुमतिमिद्वयमऽस्या वृणीमहे ॥ आपो हिष्ठा मयोभुवस्तान ऊर्जे दधातन, महे रणाय

चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते हनः, उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः । त्र्यम्बकेश सदाधार विपदां प्रतिघातक । अर्घ्यं गृहाण देवेश सर्वसम्पत्प्रदायक ॥ महागणपते कुमार श्रीः सरस्वति लक्ष्मीः विश्वकर्मन् द्वार्देवताः प्रजापते ब्रह्मन् कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वर सानुचर ऋतुपते नारायण "फाल्गुने" शक्तिसहित चक्रिन् क्रियासहित गोविन्द दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निष्वात्तादयः पितृ-गणयागदेवताः भवदेव शर्वदेव ८ अजैकपदिन् अहिर्बुध्न्य कृत्तिवासः पिनाकभृत् वृषाकपे सिन्धो वहुरूप हर त्र्यम्बक त्रिनेत्र वृषभवाहन शतरुद्रेश्वर श्रीमहामृत्युञ्जयभट्टारक । विनायक एकदन्त कृष्णपिङ्गल गजानन लम्बोदर भालचन्द्र हेरम्ब आखुरथ विघ्नभक्ष्य वल्लभासहित श्रीमहागणेश । क्रीं कां कुमार षण्मुख मयूरवाहन सेनाधिपते कुमार । भगवति अमे कामे चार्वङ्गि टङ्कधारिणि तारे पार्वति यक्षिणि श्रीशारिकाभगवति श्रीशारदाभगवति श्रीमहाराज्ञीभगवति श्रीज्वालाभगवति सहस्रनाम्नि देवि भवानि पार्थिवेश्वरयाग-देवताः । विष्णुपञ्चायतनदेवताः अभयङ्करीदेवि क्षेमङ्करी-भवानि सर्वशत्रुघातिनि इह राष्ट्राधिपते अमुकभैरव हेरकादयः वटुकादयः इदं वः अर्घ्यं नमः ॥ (सफा पानीसे आचमन देना)। दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा निह्वयामहे । हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यं सत् ॥ शन्न आपो धन्वन्याः शन्नः सन्त्व-

नूप्याः । शन्नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥ त्रिपुरान्तक दीनार्तिनाशिन् श्रीकण्ठ भूतये । गृहाणाचामनं देव पवित्रोदककल्पितम् ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवताभ्यः भवाय देवाय ८ अजैकपदिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय श्रीमहामृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्लीं क्रां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै सहस्रनाम्न्यै देव्यै भवान्यै पार्थिवेश्वरयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय आचमनीयं जलं नमः ॥ (सफा पानीसे और भी मैली उठानी) ॥

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् । रास्वाचनो अमृत मर्त्यभोजनं त्मने तोकाय तनयाय मृड ॥

इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभिदुद्रोह यद्वाशेप उतानृतम् ॥ त्रिकालकाल कालेश संहारकरणोद्यत । स्नानं तीर्थाहृतैस्तोयैर्गृहाण परमेश्वर ॥ महागणपतये० चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः भवाय देवाय ८ अजैकपादिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे बहुरूपाय हराय त्र्यम्बकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय श्रीमहामृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्रीं कां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै सहस्रनाम्न्यै देव्यै भवान्यै पार्थिवेश्वरयागदेवताः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्यो वटुकादिभ्यः मन्त्रस्नानीयं नमः ॥ ( पानी दूध दही घी शहद लाजा सर्षप तिल जव शाली विष्टर दूर्वा मिट्टी भस्म मेवा मिठास पञ्चामृत पञ्चगव्य कर्पूर सर्वौषधी गन्ध और फूल, २१ यह एकीस द्रव्य पात्र में जमा करना ) पयोदधिघृतक्षौद्रलाजासिद्धार्थकास्तिलाः ।

यवव्रीहिकुशादूर्वा मृद्भस्मफलशर्कराः । पञ्चामृतं पञ्चगव्यं कर्पूरौषधयस्तथा । एकविंशतिस्नानानि गन्धाद्भिः कुसुमैरपि ॥ ( इन से स्नान देना ) ( पानी ) । उदुत्तमं वरुण पाशमस्मद्ऽवाधमं विमध्यमं श्रथाय । अथावयं अदित्यव्रते तवानागसो अदितये स्याम ॥ १ ॥ ( क्षीर ) पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥ ( दही ) । दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्रण आयूंषि तारिषत् ॥ ३ ॥ ( घी ) घृतवती भुवनानामभिश्रियोर्वी पृथिवी मधुदुघे सुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ४ ॥ ( शहद ) । मधुवाता ऋतायते मधुक्षिरन्ति सिन्धवः । माद्ध्वीर्नः सन्त्वौषधीः ॥ मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः, मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमानऽस्तु सूर्यः, माध्वीर्गावो भवन्तु नः ॥ ५ ॥ ( लाजा ) । तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः । लोमानि शष्पैर्बहुधा न तोक्मभिस्त्वगऽस्य मांसमऽभवन्न लाजाः ॥ ६ ॥ ( सर्षप ) । रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समृद्धः स नोदिवा सरिषः पातु नक्तम् ॥ ७ ॥ ( तिल ) । तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रयत्नवद्भिः पितृंल्लोकान्प्राण आयाहि नः स्वधा ॥ ८ ॥ ( यवा ) । यवोसि यवयास्मद्द्विषं यावया रातिम् । पितृषदनं त्वा लोकमास्तृणामि ॥ ९ ॥ ( शाली ) । धान्यमसि धिनोहि देवान्धि-

नोहि यज्ञं धिनोहि यज्ञपतिं धिनोहि मां यज्ञम् ॥ १० ॥ ( दर्भांकुर )। देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे ॥ ११ ॥ ( दूर्वा )। काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥१२॥ ( मिट्टी ) । आक्रम्य वाजिन्पृथिवीमग्निमिच्छा रुचात्वम् । भूम्यायत्वायनो ब्रूहि यतः खनेम ते वयम् ॥१३॥ ( भस्म )। प्रसद्य भस्मना योनिमपश्च पृथिवीमग्नेः। संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥ १४ ॥ ( मेवा ) । याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः । बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वंहसः ॥ १५ ॥ ( मिठास )। शर्कराभिरवकामऽवकाभिः शर्करामुत्सादेन जिह्वामवक्रन्देन तालुं सरस्वती जिह्वाग्रेण ॥ १६ ॥ मध्वाज्यशर्करक्षीरद्राक्षाः पञ्चामृतं स्मृतम् । अथवाज्यं दधियुक्तं तिला यवाश्च शर्कराः ॥ ( शहद घृत शकर क्षीर और अंगूर ॥ अथवा । घी दही तिल जव और शकर रूप । पञ्चामृत )। पञ्चन्धुष्टीरनुपञ्च दुहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोकमेकम् ॥ १७ ॥ ( पञ्चगव्य )। गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम् । मिश्रीकृत्य । समुद्रादूर्मिर्मधुमां उदारदुपांशुना समऽमृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानामऽमृतस्य नाभिम् ॥ १८ ॥ ( कपूर )। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ १९ ॥ ( सर्वौषधीः )। या ओषधयः

प्रथमजा देवेभ्यस्त्रियुगं पुरा । मनैनु बभ्रूणामहं शतं धामानि सप्त च ॥ २० ॥ ( गन्ध ) । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । ( और फूल ) । पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ २१ ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः भवाय देवाय ८ अजैकपदिने अहिर्बुध्न्याय कृत्तिवाससे पिनाकभृते वृषाकपये सिन्धवे बहुरूपाय हराय त्र्यंबकाय त्रिनेत्राय वृषभवाहनाय शतरुद्रेश्वराय श्रीमहामृत्युञ्जयभट्टारकाय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नभक्ष्याय वल्लभासहिताय महागणेशाय । क्लीं कां कुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै सहस्रनाम्न्यै देव्यै भवान्यै पार्थिवेश्वरयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्यो वटुकादिभ्यः एकविंशतिस्नानानि नमः ॥ अथ शिवस्य पञ्चदशस्नानानि ॥ ( शिव जी को पन्द्राह द्रव्योंसे स्नान देना )

पानीयान्तरितैः पयोदधिघृतैः क्षौद्रेक्षुभिः सौषधैः व्रीह्यद्भिः कुसुमोदकैः फलजलैः सिद्धार्थलाजोदकैः। गन्धाद्भिः शुभहेमरत्नसलिलैरित्थं सदा चोत्तमैर्दद्यात्पञ्चदशाम्बुना सह महास्नानानि शम्भोः क्रमात्॥ (पानी दूध दही घी शहद खण्ड सर्वौषधी शाली फूल मिवा सर्षप लाजा गन्ध सोना और रत्नसमेत पानी से पांद्रा द्रव्यों का स्नान शम्भो को देना, उनके भी क्रमसे पीछले मंत्र रखते हैं) उदुत्तमं १ पयः पृथिव्यां २ दधिक्राव्णो ३ घृतवती ४ मधुवाता ५(इक्षु)॥ स्वादुःपवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने। स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमां अदाभ्यः ६ या ओषधयः ७ धान्यमसि ८ पुष्पवती ९ याः फलिनी १० रक्षोहणं ११ तदस्य रूपं १२ गन्धद्वारां १३ हिरण्यवर्णाः १४ ऋतं च सत्यं चाभी १५ रुद्रमंत्रश्च॥ असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम्। तेषां सहस्रयोजनेव धन्वानि तन्मसि १ येस्मिन्महत्यर्णवेन्तरिक्षे भवा अधि। तेषां० २ ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपश्रिताः। तेषां० ३ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषां० ४ ये वनेषु शिष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषां० ५ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषां० ६ ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषां० ७ ये पथीनां पथिरक्षय ऐडमृडाय व्युधः। तेषां० ८ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गणः। तेषां० ९ य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितिष्ठिरे। तेषां० १० ॐ नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो

दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः १ ओंनमो अस्तु रुद्रेभ्यो ये अन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राची० २ ओनमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दश० ३ यो रुद्रो अग्नौ० भवायदेवाय ८ अजैकपर्दिने० पञ्चदशस्नानानि नमः ॥ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः श्रृण्वन्नूतिभिः सीदसादनम् ॥ विनायकाय ८ चतुर्दशस्नानानि नमः ॥ कुमारं माता युवतिः समुब्धं गुहाबिभर्ति न ददाति पित्रे । अनीकमस्य नमिमज्जनासः पुरा पश्यन्ति निहितमरतौ ॥ क्लीं कां कुमाराय ५ षट्स्नानानि नमः ॥ जातवेदसे सुनवाम सोममरातियतो न दहाति वेदः । स नः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः । भगवत्यै अमायै ८ अष्टौ स्नानानि नमः ॥ ( देवोंको अर्घ दही तिल शहद घी समेत पानी से तृप्ति करनी ) । ततो दध्यक्षततिलैरित्थं मध्वाज्यमिश्रितैः । तर्पयेदुदकैर्देवानृषिपूर्वान्सपितृकान् ॥ ( अञ्जली करके देवों का ध्यान करना ) । गृत्समदस्य गायत्री ॥ विश्वेदेवास आगत श्रृण्वताम इमं हवमिदं बर्हिर्निषीदत । ( तर्पण करना ) । ब्रह्मा तृप्यतां विष्णुस्तृप्यतां रुद्रस्तृप्यतां प्रजापतिस्तृप्यतां वेदास्तृप्यन्तां छन्दांसि तृप्यंतां ऋषयस्तृप्यन्तां तपोधनास्तृप्यन्तां आचार्यास्तृप्यन्तां गन्धर्वास्तृप्यंतां पितराचार्यास्तृप्यन्तां संवत्सराः सावयवास्तृप्यन्तां देवास्तृप्यन्तां अप्सरसस्तृप्यन्तां देवानुगास्तृप्यन्तां नागास्तृप्यन्तां सागरास्तृप्यन्तां पर्वता-

स्तृप्यन्तां सरितस्तृप्यन्तां मनुष्यास्तृप्यन्तां यक्षास्तृप्यन्तां रक्षांसि तृप्यन्तां पिशाचास्तृप्यन्तां सुपर्णास्तृप्यन्तां भूतानि तृप्यन्तां पशवस्तृप्यन्तां वनस्पतयस्तृप्यन्तां ओषधयस्तृप्यन्तां भूतग्रामाश्चतुर्विधास्तृप्यन्तां असुरास्तृप्यन्तां क्रूरास्तृप्यन्तां सर्पास्तृप्यन्तां जम्बुकास्तृप्यन्तां खगास्तृप्यन्तां विद्याधरास्तृप्यन्तां जलाधारास्तृप्यन्तां निराधारास्तृप्यन्तां पापधर्मरतास्तृप्यन्तां सर्वे देवाः तृ० सर्वे ग्रहास्तृप्यन्तां यमस्तृप्यतां धर्मराजस्तृप्यतां मृत्युस्तृप्यतां अन्तकस्तृप्यतां वैवस्वतस्तृप्यतां कालस्तृप्यतां सर्वप्राणहरस्तृप्यतां औदुम्बरस्तृप्यतां नीलस्तृप्यतां ब्रध्नस्तृप्यतां परमेष्ठीतृप्यतां वृकोदरस्तृप्यतां भीमस्तृप्यतां चित्रस्तृप्यतां चित्रगुप्तस्तृप्यतां ॥ (अब पार्थिवेश्वर केसिर पर एक जलाञ्जलि और एक एक फूल चढाना) ॐनमः शिवाय शिवं तर्पयामि नमः । शशिशेखरायनमः । शशिशेखरं तर्प० । ॐ शङ्करायनमः शङ्करं तर्पयामिनमः । ॐ भवाय देवाय भवं । उग्रायदेवाय उग्रंदेवं । मृडायदेवाय मृडंदेवं । हराय हरं । विश्वरूपाय विश्वरूपं । कपर्दिने कपर्दिनं । त्र्यम्बकाय त्र्यम्बकं । ॐ मृत्युञ्जयभट्टारकाय नमः ॐ मृत्युञ्जयभट्टारकं तर्पयामि नमः । (गले मे जनू रखना)। कण्ठोपवीती । (ऋषियोंका ध्यान करना) अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः, तमीमहे महागयम् ॥ (ऋषियोंको दो दो अञ्जलि करतलसे देना)। सनकस्तृप्यतां तृप्यतां सनन्दनः, सनातनः, सनत्कुमारस्तृप्यतां २ कपिलः, आसुरिः वोढा पञ्चशिखः मरीचिः अत्रिः अङ्गिराः, पुलहः, पुलस्त्यः, भृगुः, क्रतुः, प्रचेताः, वसिष्ठः, नारदस्तृप्यतां तृप्यतां ॥

( बाहे तरफ जञ्जू रखना ) अपसव्येन । ( पितरोंका ध्यान करना ) उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशन्त आवह पितॄन्हविषे अत्तवे ॥ ( तीन तीन जलाञ्जली देना )। कव्यवाडऽनलः स्वधायिभ्यः स्वधा नमस्तृप्यतां तृप्यतां तृप्यतां, सोमः स्वधायिभ्यः स्वधा नमस्तृ० ३, यमः, अर्यमाः, अग्निष्वात्ताः स्वधायिभ्यः स्वधा नमस्तृप्यन्तां ३, बर्हिषदः स्वधायिभ्यः स्वधानमस्तृप्यन्तां ३, हविष्मन्तः, सुकालिनः सोमपाः आज्यपाः वसवः रुद्राः आदित्याः स्वधायिभ्यः स्वधा नमस्तृप्यन्तां ३ । देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह ॥ ॐ तत्सद्ब्रह्माऽद्यतावत्तिथावद्यफाल्गुनमासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां रविवारान्वितायां पितामुकोऽमुकगोत्रः स्वधा नमस्तृप्यतां ३ पितामहः प्रपितामहः । माता पितामही प्रपितामही । मातामहः प्रमातामहः वृद्धप्रमातामहः । मातामही प्रमातामही वृद्धप्रमातामही । ( इसी तरह सब सम्बन्धियोंको पानी देना ) मातृपक्षास्तु ये केचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः । जलदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् ॥ समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः हिमपानं स्वधा क्षीरपानं स्वधा मधुपानं स्वधा तिलोदकं स्वधा उदकतर्पणं स्वधा हिमंहिमं रजतंरजतं ॥ ( दाही तर्फ जञ्जू करना )। सव्येन । वसन्तायनमः ग्रीष्मायनमः वर्षाभ्योनमः शरदेनमः हेमन्तायनमः शिशिरायनमः षड्तुभ्योनमः । ॐ नमो देवेभ्यः । ( गले में जञ्जू ) । कण्ठोपवीती । स्वाहा

ऋषिभ्यः ( बाहे तर्फ जञ्जू ) । अपसव्येन । स्वधा पितृभ्यः । ( दाहे तर्फ जञ्जू ) । सव्येन । आब्रह्मस्तम्बपर्यन्तं ब्रह्माण्डं सचराचरं । जगत्तृप्यतु तृप्यतु तृप्यतु एवमस्तु ॥ ( सफा पानीसे स्नानद्रव्यों का मलमिटाना ) । त्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । पार्थिवेश्वरयागदेवताभ्यः मन्त्रगुडकं परिकल्पयामि नमः ॥ ( बाहे हाथ के तलेमें पानी और अक्षत रखके देवताओंको आलत निकाल के बाहे स्कन्द से फैंकना ) ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं पृथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो देवः सरिषः पातु नक्तम् । हेमपात्रस्थमीशानदीपाष्टकसमन्वितम् । गृहाणारात्रिकां देव विश्वार्तिव्याधिनाशन ॥ गृह्णन्तु भगवद्भक्ता भूताः प्रासादवाहकाः । पञ्चमन्त्राश्रये भूतास्तेषामनुचराश्च ये । ते तृप्यन्तु स्वाहा वौषट् । पार्थिवेश्वरयागदेवताभ्यः आरात्रिकां परिकल्पयामि नमः ॥ ( देव के पादों का पानी आंखों को मलना ) १ मृड·त्वमस्मभ्यं रुद्रैतदस्तु हुतं तव । पशूनस्माकं मा हिंसीरेतदस्मा असद्धुतम् ॥ तेजोरूप महेशान सोमसूर्याग्निलोचन । प्रकाशय परं तेजो नेत्रस्पर्शेन शंकर ॥ भगस्य हृदयं लिङ्गं लिङ्गस्य हृदयं भगः । तस्मै ते भगलिङ्गाय उमारुद्राय वै नमः ॥ पार्थिवेश्वर यागदेवताभ्यो नेत्रस्पर्शनं परिगृह्णामि नमः ॥ ( बिठाने के जगाह आसन फूलों से रखना ) । आसनाय नमः सिंहासनाय नमः प्रेतासनाय पद्मासनाय नमः वृषभासनाय मूषकास० मयूरास० सिंहास० विचित्रवाहासनाय नमः

( द्रव्यों के असम्भवकी माफी मांगकर सफाई और गन्ध अक्षतों से अङ्गराग करना )। रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना। १। या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वऽन्तः। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना। २। सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्रह्मणे सूर्ये या। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना। ३। या राजन्ये दुन्दुभावायतायामश्वस्य क्रन्दे पुरुषस्य मायौ। इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना। ( महिम्नः पारं आदि स्तोत्र भी पढ कर )। मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरमुत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ पार्थिवेश्वरयागदेवताभ्योऽनुलेपनं परिकल्पयामि नमः। ( वस्त्र पहनना )। मा न स्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमि त्वा हवामहे ॥ युवा सुवासाः परिवीत आगात्स उश्रेयान्भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ कालाग्निरुद्र सर्वज्ञ वरदाभयदायक। वस्त्रं गृहाण देवेश दिव्यवस्त्रोपशोभितम् ॥ पार्थिवेश्वरयागदेवताभ्यः वस्त्रं परिकल्पयामि नमः ॥ ( जञ्जू लगाना )। उप ते स्तोमन्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे। भद्रा हि ते सुमतिर्मृडयत्तमाथा वयमव इत्ते वृणीमहे ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्य-

त्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसियज्ञस्य त्वा उपवीतेन उपनह्यामि ॥ सुवर्णतारैरचितं दिव्यं यज्ञोपवीतकम् । नीलकण्ठ मया दत्तं गृहाण मदनुग्रहात् ॥ पार्थिवेश्वरयागदेवताभ्यः यज्ञोपवीतं परिकल्पयामि नमः ॥ ( गन्ध चडाना ) । आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु । मृडा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां त्वामिहोपह्वये श्रियम् ॥ त्रिपुरान्तक देवेश पार्वतीप्राणवल्लभ । गृहाण गन्धं कश्मीरचन्द्रचन्दनकल्पितम् । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः भवाय देवाय० पार्वतीसहिताय परमेश्वराय । अजैकपादिने० महामृत्युञ्जयभट्टारकाय । विनायकाय० । क्लीं कां कुमाराय । भगवत्यै० अमायै० सहस्रनाम्न्यै भवान्यै पार्थिवेश्वरयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय समालभनं गन्धोनमः ॥ ( गन्ध लेप धो के, अर्घ और फूल चढाना ) ॥ अवोचाम नमो अस्मा अवस्यवः शृण्वन्तु नो हव्यं रुद्रो मरुत्वान् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीउत द्यौः ॥ पुष्पवतीः प्रसुमतीः फलिनीरफल

उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥ सदाशिव शिवानन्द प्रधान करणेश्वर । पुष्पाणि बिल्वपत्रादिविचित्राणि गृहाण मे । ॐ हां हीं ज्वंसः पशुपतये नमः ॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः भवाय देवाय क्षितिमूर्तये नमः । शर्वायदेवायजलमूर्तये नमः । रुद्राय देवाय तेजोमूर्तये नमः । पशुपतये देवाय वायुमूर्तये । उग्रायदेवाय आकाशमूर्तये । महादेवायसूर्यमूर्तये । भीमायदेवाय सोममूर्तये । ईशानायदेवाय यजमानमूर्तयेनमः । ॐअभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ ॐ अनन्ताय सूक्ष्माय शिवोत्तमाय एकरुद्राय एकनेत्राय त्रिमूर्तये श्रीकण्ठाय शिखण्डिने नमः । अभीष्टसिद्धिं मे देहि० द्वितीयावरणार्चनम् ॥ रां रीं रूं नन्दिने सां सीं सूं महाकालाय व्रांवृषभाय भ्रांभृङ्गीशाय हांकुमाराय ॐ आं अम्बिकायै । अभीष्टसिद्धिं० तृतीयावरणार्चनम् ॥ लं इन्द्राय रंअग्नये संयमाय क्षं नैर्ऋतये वंवरुणाय वांवायवे कुंकुबेराय ईं ईशानाय ब्रांब्रह्मणे वांविष्णवे अभीष्टसि० चतुर्थावरणार्चनम् । जयायै विजयायै सुभगायै दुर्भगायै जयन्त्यै कुहिन्यै अपराजितायै करालयै ॥ अभीष्टसि० पञ्चमावरणार्चनम् । अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्वराभ्यां

गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्ताऽगस्त्याभ्यां अभीष्टसिद्धिं मे देहि श० षष्ठमावरणार्चनम् ॥ अनन्तनागराजाय वासुकिना० पद्मना० महापद्मना० तक्षकना० शङ्खपालना० कार्कोटकना० कुलिकनागराजाय ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् । वज्रायफट्नमः शक्तयेफ० दण्डायफ० खड्गाय० पाशय ध्वजाय गदायै त्रिशूलाय पद्माय हलायफट्नमः ॥ लं सद्योजातवक्त्राय "प्रणालिकायां" उमायै "मूर्ध्नि" शिवाय सपरिवाराय सायुधाय सवाहनाय अर्घोनमः । पुष्पं नमः । विनायकाय० क्रींकांकुमाराय० भगवत्यै अमायै० पार्थिवेश्वरयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय हेरकादिभ्यो वटुकादिभ्यः अर्घो नमः पुष्पं नमः ( धूप चढाना ) ॥ वयमग्ने धनवन्तः स्यामाऽलं यज्ञायोत दक्षिणायै । ग्रावा वदेदऽभि सोमस्यांशुमिन्द्रं शिक्षिमिन्दुना सुतेन ॥ धूरसि धूर्व धूर्वन्तं योस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व । देवानामसि वह्नितमं सस्नितमं पप्रितममिष्टतमं देवहुतमं विष्णोः क्रमोस्याहुतमसि हविर्दानं दृंहस्व माह्वान्मित्रस्य त्वा चक्षुषा प्रेक्ष उरु त्वा वाताय वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वत् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाऽङ्गिरस्वत् । आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाऽङ्गिरस्वत् । विश्वे त्वा देवा वैश्वानरा धूपयन्तु आनुष्टुभेन च्छन्दसाऽङ्गिरस्वत् इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु । महादेव मृळानीश जगदीश निरञ्जन । धूपं गृ-

हाण देवेश साज्यं गुग्गुलकल्पितम् ॥ पार्थिवेश्वरयागदेवताभ्यो धूपं समर्पयामि नमः ॥ ( रत्नदीप और कपूर चढाना ) रायस्पोषं नो देहि जातवेद ऊर्जो भागं मधुमत्स्यां घृतावत् । दधाम यज्ञं सुनवाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र ॥ तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ हिरण्यबाहो सेनानीर्गिरीश गिरिजापते । दीपं गृहाण कर्पूरकपिलाज्यत्रिवर्तकम् ॥ पार्थिवेश्वरयागदेवताभ्यो रत्नदीपं कर्पूरं परिकल्पयामि नमः ( चामर करना ) ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे ॥ "जय सर्व जनाधीश" ( इह शिवपूजा की तीन स्तोत्र पढकर ) चामरं रजनीनाथ मरीचिप्रभमुत्तमम् । हेमदण्डयुतं देव गृहाण गिरिजापते ॥ पार्थिवेश्वरयागदेवताभ्यश्चामरं परिकल्पयामि नमः ॥ ( फूलों का छत्र चढाना ) ॥ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ नवरत्नमयं दिव्यं मुक्ताजालविभूषितम् । गृहाण छत्रं भगवञ्छिव भद्रासनप्रद ॥ पार्थिवेश्वरयागदेवताभ्यः छत्रं परिकल्पयामि नमः ॥ ( आईना दिखाना ) । तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ यस्य दर्शनमात्रेण विश्वं दर्पणबिम्बवत् । तस्मै ते परमेशाय मुकुरमर्पयाम्यहम् ॥ पार्थिवेश्वरयागदेवताभ्यः आदर्शं परिकल्पयामि नमः ॥ ( पानी छोडना ) ॥ एताभ्यो देवताभ्यो धूपदीपात्सङ्कल्पसिद्धिरस्तु

धूपो नमः दीपो नमः ॥ ( कलश को भी वस्त्र या फूल देना ) ॥ एताभ्यो देवताभ्यो वासो नमः ( माफी लेना ) एतासां देवतानामर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ ( दूध और कन्द चढाना ) ईशानं त्वा शुश्रुमा वयं धनानां धनपते गोमदग्ने । अश्ववद्भूरि पुष्टं हिरण्यवद्धनवद्धेहि मह्यम् ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ क्षीराज्यमधुसंमिश्रं शुभ्रदध्ना समन्वितम् । षड्रसैश्च समायुक्तं गृहाणान्नं निवेदये । पार्थिवेश्वरयागदेवताभ्यो मात्रामधुपर्कं चरुं समर्पयामि नमः ॥ ( आलचा सुपारी नार्जील वगैरा ताम्बूल चढाना ) ॥ ताम्बूलं विविधैर्द्रव्यैर्नारिकेलादिभिर्युतम् । मुखशुद्धिकरं स्वामिन्गृहाण वरदो भव । पार्थिवेश्वरयागदेवताभ्यस्ताम्बूलं समर्पयामि नमः ( फूलोंकी अञ्जलि चढाना ) हर विश्वाखिलाधार निराधार निराश्रय । पुष्पाञ्जलिमिमं शम्भो गृहाण वरदो भव । पार्थिवेश्वरयागदेवताभ्यः पुष्पाञ्जलिं समर्पयामि नमः ॥ ( आधा प्रक्रम देना ) । दुहान्ते द्यौः पृथिवी पयोऽजगरस्त्वा सोदको विसर्पतु । प्रजापतिनात्मना प्रीणेऽरिक्तो स आत्मा ॥ यानि कानि च पापानि ब्रह्महत्यादिकानि च । तानि तानि प्रणश्यन्ति शिवस्यार्धप्रदक्षिणात् ॥ ॐ नमः शिवाय भगवन् प्रसीद ॥ ( दीनाक्रन्दनस्तोत्रादि पढकर साष्टाङ्ग प्रणाम करना ) ॥ उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा चोरसा वचसा मनसा च नमस्कारं करोमि नमः ॥ ( कमी या अधिक होनी की माफी माङ्गना ) ॥ अन्नंनमः अन्नंनमः आज्यमाज्यमद्य दिने अद्य यथास-

ङ्कल्पात्सिद्धिरस्तु अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं च यद्गतं तत्सर्वमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ ( हाथ से पात्र में वापस किये पानीसे आचमन देना ) । शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः । पार्थिवेश्वरयागदेवताभ्योऽपोशानं नमः आचमनीयं नमः । ( और हाथ से पात्र में उलटाये पानी में तिल और दक्षिणा देना ) । पुनः, शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभिस्रवन्तु नः । पार्थिवेश्वरयागदेवताभ्यो दक्षिणायैतिलहिरण्यरजतनिष्क्रयं ददानि । एता देवताः सदक्षिणा अनेन प्रीयन्तां प्रीताः सन्तु ॥ ( कलश को दो फूल चडाना ) । ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम् ॥ १ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम् ॥ २ ॥ (पार्थिवेश्वर को फूल) ॥ नाथं नाथं त्रिभुवननाथं भूतिसितं त्रिनयनं त्रिशूलधरम् । उपवीतीकृतभोगिनमिन्दुकलाशेखरं वन्दे ॥ १ ॥ पुष्पाणि सन्तु तव देव मदिन्द्रियाणि धूपो गुरुर्वपुरिदं हृदयं प्रदीपः । प्राणा हवींषि करणानि नवाक्षतास्ते पूजाफलं व्रजतु साम्प्रतमेष जीवः ॥ २ ॥ वाञ्छामि नाहमपि सर्वरसाधिपत्यं नेच्छे पुरन्दरपदं न पदं विधातुः । भूयो भवामि यदि जन्मनि जन्मनि स्यां त्वत्पादपङ्कजलसन्मकरन्दभृङ्गः ॥ ३ ॥ जन्मानि सन्तु मम देव शताधिकानि माया च मे विशतु चित्तमबोधहेतुः । किन्तु क्षणार्धमपि त्वच्चरणारबिन्दान्मापैतु मे हृदयमीश नमो नमस्ते ॥ ४ ॥ ( अत्र नित्यकर्म जपपाठादि करके व्याहृति करना ) ।

## अथ व्याहृतिः ॥

(अग्नि जलाकर उसके ईशानकोणे पर विष्टर तिल अक्षत फूल और पानीवाला प्रणीतपात्र रख के उस में और अग्निमेंभी तिल छोडना )। पात्रं तिलाक्षतैर्मिश्रं कुसुमोदकविष्टरैः । अग्नेश्चैशानदिग्भागे प्रणीतमभिधीयते ॥ प्रणीतं नैर्ऋते स्थाप्यं स विष्णुर्नात्र संशयः ॥ (पात्र में तीन दफा फूल छोडना) ॥ सं वः सृजामीति द्वाभ्यां पुष्पाणां त्रितयं क्षिपेत् ॥ सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः ॥ १ ॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ २ ॥ संय्यावः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ३ ॥ ( दो दर्भकाण्ड जलाई दाहे तरफ छोडना )। निर्दग्धं रक्षो निर्दग्धारातिरपाग्ने । अग्निमामादं जहि निष्क्रव्यादं सीधा देवयजनं वह ॥ ( प्राणायाम करके अग्नि को प्रणीत पात्र में से नौ छिडकियां देना ) ॥ प्राणायामं कुर्यात् ॥ ऋतं त्वा सत्येन परिसमूह्यामि ॥ १ ॥ सत्यं त्वर्तेन परिसमूह्यामि ॥ २ ॥ ऋतसत्याभ्यां त्वा परिसमूह्यामि ॥ ३ ॥ ऋतं त्वा सत्येन पर्युक्षामि ॥ ४ ॥ सत्यं त्वर्तेन पर्युक्षामि ॥ ५ ॥ ऋतसत्याभ्यां त्वा पर्युक्षामि ॥ ६ ॥ ऋतं त्वा सत्येन परिषिञ्चामि ॥ ७ ॥ सत्यं त्वर्तेन परिषिञ्चामि ॥ ८ ॥ ऋतसत्याभ्यां त्वा परिषिञ्चामि ॥ ९ ॥ ( अग्नि के चार दिशायों के पूर्व और उत्तर अग्रवाला के चार दर्भकाण्ड छोडना )। यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै स्तृणामि । पुरस्तात्, दक्षि-

णतः, उत्तरतः, पश्चात्, इति स्तरैः ॥ (अग्नि को गन्ध फूल लगाना)। अग्नये शुकारूढाय स्वाहासहिताय त्रिनेत्राय तेजोरूपाय समालभनं गन्धोनमः अर्घोनमः पुष्पं नमः ॥ (दर्भ-काण्ड दो जलाकर यवा, तिल, घी, दही, मिठास, रूप पञ्चामृत हवि में लगाना)। इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये आत्मसनि प्रजासनि पशुसनि अभयसनि लोकसनि अग्निः प्रजां बहुलां मे करोतु अन्नं पयो रेतो अस्मासु दत्त घृतेन संलिप्य श्रृतमन्नं श्रृतमभिघार्य ॥ (महागायत्रीका ध्यान करके अग्निमें फूल चढाना)। मुक्ताविद्रुम-हेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वा-त्मवर्णात्मिकाम्। गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी। गायत्रि च्छन्दसां मात-र्ब्रह्मयोने नमोस्तु ते ॥ ३ ॥ (आहुती अनवच्छन्न देना)। "महाव्याहृतयः प्रजापतेः"। ॐ अग्नये स्वाहा ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहा। ॐ भूः स्वाहा ॐ भुवः स्वाहा ॐ स्वः स्वाहा ॐ महः स्वाहा ॐ जनः स्वाहा ॐ तपः स्वाहा ॐ सत्यं स्वाहा ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ३ ॥ (फूल चढाना)। अश्वमेधे घोराणामार्षम्। (आहुति देना)। द्रष्ट्रेनम, उपद्रष्ट्रे नमोऽनुद्रष्ट्रेनमः, ख्यात्रेनमः, उपख्यात्रेनमो, नुक्शात्रेनमः, श्रृण्वतेनमः, उपश्रृण्वतेनमः, सते नमोऽसते नमो, जाताय नमो, जनिष्यमाणाय नमो, भूताय नमो,

भविष्यते नमश्चक्षुषे नमः, श्रोत्राय नमो, मनसे नमो, वाचे नमो, ब्रह्मणे नमः, शान्ताय नमस्तपसे नमः ॥ भूतं भव्यं भविष्यद्वषट्स्वाहा नम, ऋक्साम यजुर्वषट् स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट् स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट् स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः, पिता पुत्रः पौत्रो वषट् स्वाहा नमः, प्राणो व्यानोऽपानो वषट् स्वाहा नमो, भूर्भुवः स्वर्वषट् स्वाहा नमः ॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात् । संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चस्वी जायतामऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां, दोग्ध्री धेनुर्वोढाऽनड्वानाऽऽशुः सप्तिर्जिष्णूरथेष्ठः पुरन्धिर्योषा सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यतां योगक्षेमो नः कल्पताम् ॥ ( फूल चढाना )। चतुर्भुजामऽर्कसहस्रकोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखाङ्कोपगतां महोज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ॥ ( आहुती देना ) । ॐ ओजोसि सहोसि बलमसि भ्राजोसि देवानान्धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॥ ॐ देवाश्च वा असुराश्च संय्यन्ता आसंस्तान्गायत्र्याऽन्तरातिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो वा वैनान्सोऽन्तरातिष्ठच्चतुर्विंशतिर्गायत्र्या अक्षराणि चतुर्विंशतिः संवत्सरस्यार्धमासास्ते विदुर्यतरान्वा इयमुपवर्त्स्यति त इदं भविष्यन्तीति तं व्यहूयन्तदाभीत्यसुराह्वयन् विश्वकर्मन्निति देवासस्तान्यतरांश्च नोपवर्तत ते देवा

एतद्यजुरपश्यन्नोजोसि सहोसि बलमसि भ्राजोसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरिति सा देवानुपावर्तत ततो देवा अभवन् पराऽसुरा अभवन्नाग्नेयमष्टाकपालं निर्वापेद्भ्रातृव्यवान्वा स्पर्धमानो वा तमाऽसाद्यैतैर्यजुर्भिरभिमृशेदोजो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृव्यस्य वृङ्क्ते स निर्वीर्यः पराभवति सैषा गायत्री नामेष्टि रथो आहुः क्षेत्रस्य संवर्ग इति ॥ श्रीमहागायत्र्यै स्वाहा सावित्र्यै स्वाहा सरस्वत्यै स्वाहा । ( तर्पण करना ) । अनेन मन्त्रहोमेन आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं पार्थिवेश्वरपूजाव्रतनिमित्तं महागायत्रीदेवीसन्तोषणार्थं महागायत्री सावित्री सरस्वती प्रीयतां प्रीताऽस्तु । ( आहुती देना )। अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव यज्ञम् ॥ १ ॥ इहैवैधि मा पच्योष्ठाः पर्वता इवाविचाचलत् । इन्द्र इहेव ध्रुवस्तिष्ठेह यज्ञमुधारय ॥ २ ॥ इममिन्द्रो अदीधरद्ध्रुवं ध्रुवेण हविषा हविः । तस्मै सोमो अधिब्रुवत्तसा उ ब्रह्मणस्पतिः ॥ ३ ॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ ४ ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ ५ ॥ बडित्था पर्वतानां क्षेत्रं बिभर्षि पृथिवि । प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ ६ ॥ निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवंश्चित्रमर्च ॥ १ ॥ कुमारं माता युवतिः समुब्धं

गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य नमिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥३॥ इयं शुष्मेभिर्बिसखा इवारुजत्सानुगिरीणान्तविषेभिरूर्मिभिः । पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः ॥४॥ कांस्यस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ ५ ॥ विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शितः । ते त्वा घृतस्य धारया श्रेष्ठाय समसूपत ॥ ६ ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ ७ ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वऽधिक्षियन्ति भुवनानि विश्वा ॥ ८ ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ ९ ॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ १० ॥ इषे त्वोर्जे त्वा वायवः स्थोऽपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ ११ ॥ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ १२ ॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंय्योरभि स्रवन्तु नः ॥ १३ ॥ आहं पितॄन्सुविदत्रां अवित्सि न पातं च विक्रमणं च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ १४ ॥ वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपि-

विष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्व-
स्तिभिः सदा नः ॥ "फाल्गुने" शक्तिसहिताय चक्रिणे स्वाहा ।
क्रियासहिताय दामोदराय स्वाहा दुर्गायै स्वाहा त्र्यम्बकाय
स्वाहा वरुणाय स्वाहा यज्ञपुरुषाय स्वाहा अग्निष्वात्तादिभ्यः
पितृगणदेवताभ्यः स्वाहा ॥ ( फूल चढाना ) ॥ ध्येयः
सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्नि-
विष्टः । केयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपु-
र्धृतशंखचक्रः ॥ १ ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं
कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं
सर्वलोकैकनाथम् ॥ २ ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य
देवता । विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ ३ ॥
पुरुषमेधः पुरुषस्य नारायणस्यार्षम् । ( आहुति देना ) ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो-
वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च
भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एता-
वानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादो-
स्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥४॥
तस्माद्विराडऽजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत
पश्चाद्भूमिमऽथो पुरः ॥ ५ ॥ यत्पुरुषेण हविषा देवा यज्ञ-
मतन्वत । वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥६॥
तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः । तेन देवा अयजन्त
साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदा-

ज्यम् । पशूंस्तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ८ ॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥ तस्मादऽश्वा अजायन्त येकेचोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥१०॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥११॥ ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ १२ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥ १३ ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानकल्पयत् ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥ (फूल चढाना)। मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मि प्रसीद सततं नमतां शरण्ये । (आहुति देना)। रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ १ ॥ या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वन्तः । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ २ ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्रह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ ३ ॥ या राजन्ये दुन्दुभावायतायामश्वस्य क्रन्दे

पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ ४ ॥ प्रियं मां कुरु देवेषु प्रियं राजसु मा कुरु । प्रियं विश्वेषु गोप्त्रेषु मयि देहि रुचारुचिम् ॥ ५ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ भगवते वासुदेवाय स्वाहा सङ्कर्षणाय स्वाहा प्रद्युम्नाय स्वाहा अनिरुद्धाय स्वाहा सत्याय स्वाहा पुरुषाय स्वाहा अच्युताय स्वाहा माधवाय स्वाहा गोविन्दाय स्वाहा सहस्रनाम्नेविष्णवे स्वाहा लक्ष्मीसहिताय नारायणाय स्वाहा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः स्वाहा ॥ भवाय देवाय स्वाहा शर्वायदेवाय स्वाहा रुद्रायदेवाय स्वाहा पशुपतयेदेवाय स्वाहा उग्रायदेवाय स्वाहा महादेवाय स्वाहा भीमायदेवाय स्वाहा ईशानायदेवाय स्वाहा पार्वतीसहितायपरमेश्वराय स्वाहा ॥ गणानान्त्वा गणपतिं हवामहे कविंकवीनामुपम श्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीद सादनम् ॥ विनायकाय स्वाहा एकदन्तायस्वाहा कृष्णपिङ्गलाय स्वाहा गजाननाय स्वाहा लम्बोदराय स्वाहा भालचन्द्राय स्वाहा हेरम्बाय स्वाहा आखुरथाय स्वाहा विघ्नेशाय स्वाहा विघ्नभक्ष्याय स्वाहा वल्लभासहिताय श्रीमहागणेशाय स्वाहा ॥ कुमारं माता युवतिः समुब्धं गुहा बिभर्ति नदधाति पित्रे । अनीकमस्य नमिनज्जनासः पुरा पश्यन्ति निहितमरतौ ॥ क्रीं कां कुमाराय० ॥ चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवीरन्तरिक्षं सूर्य

आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ह्रांह्रींसः सूर्याय स्वाहा सप्ताश्वाय स्वाहा अनश्वाय स्वाहा एकाश्वाय स्वाहा नीलाश्वाय स्वाहा प्रत्यक्षदेवाय स्वाहा परमार्थसाराय तेजोरूपाय स्वाहा प्रभासहिताय आदित्याय स्वाहा ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ अमायै स्वाहा कामायै स्वाहा चार्वङ्ग्यै स्वाहा टङ्कधारिण्यै स्वाहा तारायै स्वाहा पार्वत्यै स्वाहा यक्षिण्यै स्वाहा श्रीशारिकाभगवत्यै स्वाहा श्रीशारदाभगवत्यै स्वाहा श्रीमहाराज्ञी भगवत्यै स्वाहा श्रीज्वालाभगवत्यै स्वाहा श्रीडाभगवत्यै स्वाहा वैखरीभगवत्यै स्वाहा वितस्ताभगवत्यै स्वाहा गङ्गाभगवत्यै स्वाहा यमुनाभगवत्यै स्वाहा कालिकाभगवत्यै स्वाहा सिद्धलक्ष्म्यै स्वाहा महालक्ष्म्यै स्वाहा महात्रिपुरसुन्दर्यै स्वाहा सहस्रनाड्यैदेव्यैभगवत्यै स्वाहा ॥ ॐ यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि स्वाहा ॥ अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय स्वाहा । ( इष्टदेव का दशांश देना ) । हेरकादिभ्यः स्वाहा बटुकादिभ्यः स्वाहा ॥ यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परिदेहि राजन्स्वस्ति चास्मा अनमीवं च देहि ॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥ मुञ्चामि त्वा हविषा जीवनायकमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिमं विवृधामि ते ॥ ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं

भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् ॥३॥ ॐतद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः। तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः स्वाहा। ( तर्पण करना )। अनेन मन्त्रहोमेन आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्रीपार्थिवेश्वरपूजानिमित्तं महागणपतिः कुमारः श्रीः सरस्वती लक्ष्मीः विश्वकर्मा द्वार्देवताः प्रजापतिः ब्रह्मा कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वराः सानुचराः "फाल्गुने" शक्तिसहितश्चक्री क्रियासहितो गोविन्दः दुर्गा त्र्यम्बकः वरुणः यज्ञपुरुषः अग्निष्वात्तादयः पितृगणदेवताः वासुदेवः लक्ष्मीसहितो नारायणः भवोदेवः पार्वतीसहितः परमेश्वरः विनायकः वल्लभासहितः महागणेशः क्लीं कां कुमारः सेनाधिपतिः कुमारः। ह्रांह्रींसः सूर्यः प्रभासहित आदित्यः अमा कामा चार्वङ्गी टङ्कधारिणी तारा पार्वती यक्षिणी श्रीशारिकाभगवती श्रीशारदा श्रीज्वाला श्रीमहाराज्ञी त्रिपुरसुन्दरी सहस्रनाम्नी भगवती अभयङ्करीदेवी क्षेमङ्करीभवानी सर्वशत्रुघातिनी इहराष्ट्राधिपतिरमुकभैरवः पञ्चामृतहोमेन प्रीयन्तां प्रीताः सन्तु ॥ इति व्याहृतिः ॥ ( अब वैश्वदेवकी विधि है ) ॥

## अथ वैश्वदेवम् ॥

( पकाय हुई अन्न या रूटी घीयुक्तको जुलाई हुई दो दर्भकाण्ड लगाना ) ॥ वैश्वदेवस्य सिद्धस्य सर्वतोऽग्र्यस्य

अन्नस्य जुहोतिपाकस्य घृतेन संलिप्य यजमानाय स्वस्त्यस्तु शृतममिघार्य ॥ (उससे अग्निके उत्तरभाग में प्रथम, दक्षिणभाग में दूसरी आहुति देकर उन में भाकय आहुति देना ) ॥ "आदौ" अग्नये स्वाहा "इत्युत्तरतः" । सोमाय स्वाहा "इति दक्षिणतः" ॥ "तयोर्मध्ये" मित्राय स्वाहा वरुणाय स्वाहा इन्द्राय स्वाहा इन्द्राग्निभ्यां स्वाहा विश्वेभ्योदेवेभ्यः स्वाहा प्रजापतये स्वाहा अनुमत्यै स्वाहा धान्वन्तरये स्वाहा वास्तोष्पतये स्वाहा वासुदेवाय स्वाहा सङ्कर्षणाय स्वाहा प्रद्युम्नाय स्वाहा अनिरुद्धाय स्वाहा सत्याय स्वाहा पुरुषाय स्वाहा अच्युताय स्वाहा माधवायस्वाहा गोविन्दायस्वाहा सहस्रनाम्ने विष्णवे लक्ष्मीसहितायनारायणायस्वाहा । (लवसलोनयुक्त अन्नका बान्धव सहित नैवेद्य चढाना) । अमृतेशमुद्रया अमृतीकृत्य । अमृतमस्तु अमृतायतां नैवेद्यं सावित्राणि सावित्रस्य देवस्य त्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामादधे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुने" शक्तिसहिताय चक्रिणे, क्रियासहिताय गोविन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः भगवते वासुदेवाय सङ्कर्षणाय प्रद्युम्नाय अनिरुद्धाय सत्याय पुरुषाय अच्युताय माधवाय गोविन्दाय सहस्रनाम्ने विष्णवे लक्ष्मीसहितायनारायणाय । भवायदेवाय शर्वायदेवाय रुद्रायदेवाय पशुपतयेदेवाय उग्रायदेवाय भीमायदेवाय महादेवाय ईशानायदेवाय ईश्वरायदेवाय उमासहितायशिवाय पार्वतीसहिताय

परमेश्वराय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभासहिताय श्रीमहागणेशाय । क्लींकांकुमाराय षण्मुखाय मयूरवाहनाय सेनाधिपतये कुमाराय । ह्रांह्रींसः सूर्याय सप्ताश्वाय अनश्वाय एकाश्वाय नीलाश्वाय प्रत्यक्षदेवाय परमार्थसाराय प्रभासहिताय आदित्याय । भगवत्यै असायै कामायै चार्वङ्ग्यै टङ्कधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहाराज्ञीभगवत्यै श्रीज्वालाभगवत्यै व्रीडाभगवत्यै वैखरीभगवत्यै वितस्ताभगवत्यै गङ्गाभगवत्यै यमुनाभगवत्यै कालिकाभगवत्यै सिद्धलक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै सहस्रनाड्यैदेव्यैभवान्यै । अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपतये अमुकभैरवाय । इन्द्राय वज्रहस्ताय अग्नये शक्तिहस्ताय यमाय दण्डहस्ताय नैर्ऋतयेखड्गहस्ताय वरुणाय पाशहस्ताय वायवे ध्वजहस्ताय कुबेराय गदाहस्ताय ईशानाय त्रिशूलहस्ताय ब्रह्मणे पद्महस्ताय विष्णवे चक्रहस्ताय अनन्तादिभ्योऽष्टाभ्यः कुलनागदेवताभ्यः । अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादिभ्यःपञ्चचत्वारिंशद्वास्तोष्पतिदेवताभ्यः । ब्राह्म्यादिभ्योमातृभ्यः गौर्यादिभ्योमातृभ्यः ललितादिभ्योमातृभ्यः दुर्गाक्षेत्रगणेशदेवताभ्यः राकादेवताभ्यः त्रिकादेवताभ्यः सिनीवालीदेवताभ्यः यामीदेवतायः रौद्रीदेवताभ्यः वारुणीदेवताभ्यः

बार्हस्पत्यदेवताभ्यः ॐभूर्देवताभ्यः ॐभुवोदेवताभ्यः ॐस्वर्देवताभ्यः ॐभूर्भुवःस्वर्देवताभ्यः । अखण्डब्रह्माण्डयागदेवताभ्यः धूर्भ्यः उपधूर्भ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरकादिभ्यो वटुकादिभ्यः ॥ उत्पन्नममृतं दिव्यं प्राक्क्षीरोदधिमन्थनात् । अन्नममृतरूपेण नैवेद्यं प्रतिगृह्यताम् । ॐतत्सद्ब्रह्म अद्यतावत्तिथावद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथावमुकायामात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं पार्थिवेश्वरप्रीत्यर्थमोंनमो नैवेद्यं निवेदयामिनमः ॥ ( पूर्वकेतरफ अग्रवाले कुशा धरतीपर बिछाना ) पूर्वाग्रान्दर्भानास्तीर्य । ( उस पर वायवीकोणसे लैनमें तीन २ नैर्ऋतीकोण तक और उपर उपर नैर्ऋतसे वायुकोण तक लैनमें तीन २ ऐसी छत्तीस देवोंको बलि देना )॥ तक्षायनमः, उपतक्षायनमः, अम्बानामासि नमस्ते, दुलानामासि नमस्ते, नितत्नीनामासि नमस्ते, चुपनीकानामासि नमस्ते, अभ्रयन्तीनामासि नमस्ते, मेघयन्तीनामासि नमस्ते, वर्षयन्तीनामासि नमस्ते, नन्दिनी नमस्ते, १० सुभगे नमस्ते, सुमङ्गलि नमस्ते, भद्रङ्करि नमस्ते, श्रियै हिरण्यकेश्यैनमः, वनस्पतिभ्योनमः, १५ धर्मायनमः, अधर्मायनमः, मृत्यवेनमः, मरुद्भ्योनमः, वरुणायनमः, विष्णवेनमः, २१ वैश्रवणायराज्ञेनमः, भूतेभ्योनमः, इन्द्रायनमः, इन्द्रपुरुषेभ्योनमः, २५ यमायनमः, यमपुरुषेभ्योनमः, सोमायनमः, सोमपुरुषेभ्योनमः, वरुणायनमः, ३०वरुणपुरुषेभ्योनमः, ब्रह्मणेनमः, ब्रह्मपुरुषेभ्योनमः, "ऊर्ध्वं" आकाशायनमः "स्थण्डिले" दिवश्चरेभ्योभूतेभ्योनमः नक्तञ्चरेभ्योभूतेभ्योनमः ३६ षट्त्रिंशत्तक्षादिभ्योऽन्नंनमः आचमनीयंनमः ॥

(बाहेतर्फ जञ्जू करना)। अपसव्येन (दाहे तर्फ अग्रवाले दर्भ बिछावना)। दक्षिणाग्रान्दर्भानास्तीर्य ॥ (उनपर तिल और पानीसे मार्जन करना) समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यो भूपृष्ठे दर्भास्तरणे तिलोदकेन अवनेजनं स्वधा ॥ (उसपर अंगूठ फिरावना)॥ उशन्तस्त्वा हवामह उशन्तः समिधीमहि। उशन्नुशत आवह पितॄन्हविषे अत्तवे (तिल पानी दूध दीप धूप अन्न घी और शहद यह आठ द्रव्य पितरोंका अन्नहै)॥ तिलास्तोयं तथा क्षीरं दीपधूपौ बलिस्तथा। मधुसर्पिःसमायुक्तमष्टाङ्गमन्नसम्भवम् ॥ (बाहे घोठना धरतीपर डकाना)। वामजानुं भूमौ निधाय। (पितरोंको मन्त्र व नाम उच्चारके अन्न देना) देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच। नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह ॥ तत्सद्ब्रह्म अद्यतावत्तिथौ अद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथौ अमुकायां अमुकवारान्वितायां आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं पितः "अमुक अमुकगोत्र एतत्ते अन्नं ये च त्वानु। (इसी तरह पुरुषोंको)। पितामह "अमुक०" प्रपितामह "अमु०"। मातः "अमुके अमुकगोत्रि एतत्ते अन्नं याश्चत्वाऽनु"। (इसी तरह औरतोंको) पितामहि "अमुके" प्रपितामहि। मातामह "अमुक"। प्रमातामह। वृद्धप्रमातामह। मातामहि "अमुके" प्रमातामहि। वृद्धप्रमातामहि ॥ (इसी तरह और सम्बन्धियों को भी अन्न वगैरा देना)। भ्रातः। "एतत्ते अन्नं"। मातुल "एतत्ते अन्नं"। इत्थं सर्वान्सम्बन्धिनश्च तर्पयेत् ॥ मातृपक्ष्यास्तु ये केचिद्येचान्ये पितृपक्षजाः। गुरुश्वशुरबन्धूनां ये

कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना येचान्ये श्राद्धवर्जिताः । अन्नदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् । समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्योऽन्नं स्वधा । ( लेप मिटाना ) अन्नलेपं निवारयेत् ॥ ( गन्ध वगैरा चडाना ) । "समस्तमातापितृभ्यः" समालभनं गन्धः स्वधा । "समस्त" अर्घ्यः स्वधा । पुष्पंस्वधा "समस्त०" दीपः स्वधा धूपः स्वधा "समस्तमा" भक्ष्यभोज्यफलमूलवलिनैवेद्यमाऽहारादि अन्नं स्वधा "समस्त" तिलमधुमिश्रमुदकपात्रमाचमनीयं जलं स्वधा । "समस्त" हिमपानंस्वधा "स०" क्षीरपानंस्वधा "समस्तमा" मधुपानंस्वधा "सम" तिलोदकंस्वधा "समस्तमातापितृभ्यः" उदकतर्पणंस्वधा हिमंहिमं रजतंरजतं । ( दाहे जञ्जू करना ) । सव्येन । ( तर्पण ) । वसन्तायनमः ग्रीष्मायनमः वर्षाभ्योनमः शरदेनमः हेमन्तायनमः शिशिरायनमः षड्तुभ्योनमः । ( अग्निके ईशानकोनपर अन्नकी आहुति देकर दोनू हाथ दोना ) । अग्नये स्विष्टकृते स्वाहा । हस्तौ प्रक्षाल्य । ( प्राणायाम करना ) । "प्राणायामः" । ( अग्निको तीन वार छिडकना ) । ऋतंत्वा सत्येन विमुञ्चामि १ सत्यं त्वर्तेन विमुञ्चामि २ ऋतसत्याभ्यां त्वा विमुञ्चामि ॥ ३ ॥ ( अग्निके आस्तरण छोडे होई दर्भा उठाना ) । यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै नयामि ॥ ( अग्निको फूलोंसे आशीर्वाद मांगना ) । धर्मं देहि धनंदेहि पुत्रपौत्रांश्च देहि मे । आयुरारोग्यमैश्वर्यं देहि मे हव्यवाहन ॥ १ ॥ भक्तिं देहि श्रियं देहि सुखं देहि स्वतन्त्रताम् । देहि भोगं च मोक्षं च मनोभिलषितं तथा ॥ २ ॥ गच्छगच्छ सुरश्रेष्ठ ब्रह्मविष्णुम-

हेश्वराः । यत्र देवालयाः सर्वे तत्र गच्छ हुताशन ॥ ३ ॥ तेजोसि तेजो मयि देहि । ( अपने तर्फे ज्योति लेके अग्निके रुकसत देना )। "इत्यात्मानं देहि" भगवन् सन्निधत्स्व ॥ ( धरतीपर यक्ष्म रोगराजको बल देना )। भगवन् यक्ष्म एतत्तेऽन्नंनमः एतत्ते आचमनीयंनमः। ( गले में जञू रखके सनकादि चार सिद्धोंको बल हाथके तलेसे छोडना )। कण्ठोपवीती । हन्त मनुष्येभ्यः । सनकादिभ्यऋषिभ्यः अन्नंनमः । आचमनीयंनमः ॥ ( दाहे जञू रखके योगिनियोंका ध्यान करके बल । कश्मीरभाषया "चोठ" रखना )। सव्येन । या काचिद्योगिनी रौद्रा सौम्या घोरतरा परा । खेचरी भूचरी रामा तुष्टा भवतु मे सदा ॥ आकाशमातृभ्योऽन्नंनमः समालभनंगन्धोनमः अर्घोनमः पुष्पंनमः ॥ ( शिवजीका ध्यान पढकर बल देना ) कर्पूरगौरं० शिवपञ्चायतनदेवताभ्यो बलिं समर्पयामि नमः । ( धरतीपर और जीवोंकी तृप्ति अन्नसे देनी ) ॥ ततो गोग्रासादि । सौरभेय्यः स्वर्गहिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः । "गोभ्योन्नंनमः" । ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिकाश्चये । वायसाः प्रतिगृह्णन्तु इमं पिण्डं मयोद्धृतम् । "काकेभ्योऽन्नंनमः" । श्वानौ द्वौ शावशवलौ वैवस्वतकुलोद्भवौ । ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ । श्वभ्यः श्वानकेभ्योऽन्नंनमः । ( वाहे जञूसे )। अपसव्येन । रौरवाधीनसत्वानां प्रेतद्वारनिवासिनाम् । अर्थिनां याचमानानामक्षय्यमुपतिष्ठतु ॥ ( दाहे जञूसे )।

सव्येन । शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि ॥ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः । प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मणि बद्धबद्धाः । प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ येषां न माता न पिता न बन्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति । तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते यान्तु तृप्तिं मुदिता भवन्तु ॥ भूतानि सर्वाणि तथान्नमेतदयं चरिष्णुर्न ततोन्यदस्ति । तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥ चतुर्दशो भूतगणो य एष तत्र स्थिता येऽखिलभूतसङ्घाः । तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु ॥ इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः । भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥ ( बाहे जन्नू करके )। अपसव्येन । यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वप्राणहराय च ॥ औदुम्बराय नीलाय ब्रह्माय परमेष्ठिने । वृकोदराय भीमाय चित्रगुप्ताय वै नमः ॥ पाशहस्तकृतान्ताय प्रेताधिपतये नमः । श्रीयमराजधर्मराजचित्रगुप्तत्रयेऽस्तु ॥ ( दाहे जन्नू से )। सव्येन । बल देने योग्य अन्न मांस अपूप आद्ययों पर अर्घ और पानी पाना ) ॥ ये विश्वभाविनो भूता ये च तेष्वऽनुयायिनः । आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शिवं मम ॥ (उह भांटके क्षेत्रपालों को देना)। योऽस्मिन्निवसति क्षेत्रे क्षेत्रपालः सकिङ्करः । तस्मै निवेदयाम्यद्य बलिं पानीयसंयुतम् ॥ क्षांक्षेत्राधिपतये बलिंनमः । रां-

राष्ट्राधिपतये बलिंनमः । सर्वे अभयवरप्रदा मह्यं पुष्टिं पुष्टिपतयो ददतु ॥ ( बाहे जनूसे ) ॥ अपसव्येन ॥ ( अन्नकानों पर फूल लगाना ) ॥ आयुः प्रजां धनं विद्यां स्वर्गमोक्षौ सुखानि च । प्रयच्छन्तु तथा राज्यं नृणां प्रीताः पितामहाः । १ । एष पिण्डो मया दत्तस्तव हस्ते जनार्दन । गयायां पितृरूपेण स्वयमेवोपगृह्यताम् । २ । आत्मनश्चार्थलाभाय क्षेमाय विजयाय च । शत्रूणां बुद्धिनाशाय पितृनुद्धरणाय च । ३ । पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिला । यत्र तत्र स्मरेन्नित्यं पितृणां दत्तमक्षयम् । इति वैश्वदेवविधिः ॥ ( दाहे जनू से ) ॥ सव्येन । ( दो दर्भकाण्ड अर्घयुक्त हाथ में रख के देवोंका रुकसथ देना ) ॥ ॐभूः पुरुषं विसर्जयामिनमः ॐभुवः पुरुषं विसर्जयामिनमः ॐस्वः पुरुषं विसर्जयामिनमः ॐभूर्भुवःस्वःपुरुषं विसर्जयामिनमः ॥ ३ ॥ ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ३ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥ तन्महेशाय विद्महे अर्धनारीश्वराय धीमहि तन्नः पार्थिवेश्वरः प्रचोदयात् ३ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्र० ३ कार्तिकेयाय विद्महे सेनाधिपतये धीमहि तन्नः कुमारः प्रचोदयात् ३ सुभगायैविद्महे काममालिन्यै धीमहि तन्नो दुर्गा प्रचोदयात् ॥ ३ ॥ ॐतत्सद्ब्रह्म अद्यतावत्तिथावद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथावमुकायां अमुकवारान्वितायां महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वारदेवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेव-

तानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेर्नारायणस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्तादीनां पितृगणदेवतानां भवस्य० । ८ । अजैकपदिनः अहिर्बुध्न्यस्य कृत्तिवाससः पिनाकभृतः वृषाकपेः सिन्धोः बहुरूपस्य हरस्य त्र्यम्बकस्य त्रिनेत्रस्य वृषभवाहनस्य शतरुद्रेश्वरस्य श्रीमहामृत्युञ्जयभट्टारकस्य । विनायकस्य एकदन्तस्य कृष्णपिङ्गलस्य गजाननस्य लम्बोदरस्य भालचन्द्रस्य हेरम्बस्य आखुरथस्य विघ्नभक्षस्य वल्लभासहितस्य महागणेशस्य । क्लीं कांकुमारस्य षण्मुखस्य मयूरवाहनस्य सेनाधिपतेः कुमारस्य । भगवत्याः अमायाः कामायाः चार्वङ्ग्याः टङ्कचारिण्याः तारायाः पार्वत्या यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञीभगवत्याः श्रीज्वालाभगवत्याः सहस्रनाम्न्या देव्याः भवान्याः पार्थिवेश्वरयागदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करीदेव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इह राष्ट्राधिपतेः अमुकभैरवस्य आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं पार्थिवेश्वरप्रीत्यर्थं कलशपूजनं पार्थिवेश्वरयागपूजनमऽच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ ( यवोदक छोडना ) ॥ एताभ्यो देवताभ्यो यवोदकंनमः उदकतर्पणंनमः ॥ ( फूलों से प्रार्थना करना ) ॥ आज्ञा मे दीयतां नाथ नैवेद्यस्यास्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन् क्षन्तुमर्हसि ॥ आपन्नोसि शरण्योसि सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोसि रक्ष मां शरणागतम् ॥ ( कलश को ) ॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् । क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः ॥ कलिकलु-

पविमुक्तैः पूजितः सिद्धसङ्घैरमरचमरमालावीज्यमानोप्सरोभिः। पितृशतमपि बन्धून्पुत्रपौत्रान्प्रपौत्रानपि नरकनिमग्नांस्तारयेद्विष्णुरेव ॥ ( स्तोत्रपाठादि कालानुसार पढकर ) ॥ क्षमध्वं मम क्षेत्रेशा दद्ध्वं सुखसम्पदः। खगोपातालदिक्संस्थास्तुष्टा यान्तु स्वकं पदम् ॥ आह्वानं नैव जानामि नैव जानामि पूजनम् । पूजाभागं न जानामि क्षम्यतां परमेश्वर ॥ ( अष्टाङ्ग प्रणाम देना ) ॥ उभाभ्यां जानुभ्यां पाणिभ्यां शिरसा चोरसा च वचसा च मनसा च नमस्कारं करोमि नमः ॥ ( तर्पण करना ) ॥ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते कृणोमि ॥ ३ ॥ इत्येतासामेव देवतानां सामीप्यं सार्ष्टितां सायुज्यं सलोकतामाप्नोति य एवं विद्वान्स्वाध्यायमधीते ॥ ( कलश ब्राह्मणहाथ देकर स्वस्त्ययन का मार्जन उससे बन्धुसहित लेना) ॥ उदकलशमुपनिधाय स्वस्त्ययनं वाचयति ॥ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहि उपप्रयन्तु मारुतः सुदानव इन्द्र प्राशूर्भवासचा, अर्यमाऽयातु वृषभस्तुविष्मान् यन्ता वसूनि विधत्ते तनूपाः, सहस्राक्षो गोत्रभिद्वज्रबाहुः, अस्मासु देवो द्रविणं ददातु, ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन् दिव आचरन्ति, तेभिर्नो अद्य पथिभिः सुगेभीरक्षा च नो अधि च ब्रूहि देव ॥ "राष्ट्रभृतां देवानामार्षम्" । बोधश्च मा प्रतिबोधश्च पुरस्ताद्गोपायतामऽस्वप्नश्च माऽनवद्राणश्च दक्षिणतो गोपायतां गोपायमानश्च मा रक्षमाणश्च पश्चाद्गोपायतां जागृविश्च माऽरुन्धती चोत्तराद्गोपायताम् । अनमित्रं नो अधरागऽनमित्रमुद-

कृधि, इन्द्रानमित्रं नः पश्चादऽनमित्रं पुरस्कृधि । अनमित्रैरहोभिः सचेमहि विश्वेदेवा अनमित्रान उशसः सन्तु निम्रुचः । याः षडुर्वीः पञ्च प्रदिशस्ता नः पान्तु मित्रधानो मित्रे दधात अभयं नो अस्तु । ये रात्रीमनु तिष्ठथ ये च भूतेषु जागृथ पशून्ये सर्वान्रक्षत तेन आत्मा सुजागृत । बोधप्रतीबोधाऽस्वप्नानवद्राणो गोपायमान रक्षमाण जागृवेऽरुन्धति ये देवास्तनूपाः स्थ ते म इह तन्वं पात बोधप्रतीबोधेत्यसौ वा आदित्यो बोधः प्रतीबोधोग्निः स्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नोयं व्यः पवते सोणवद्राणो गोपायमानो रक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृवेरुन्धतीति यज्ञो वै दक्षिणारुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेट्टे आत्मनो गोपीथाय ॥ (यजमानों को अक्षोट सहित फूलदेना ) मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव । मार्कण्डेयमुनेः स्वर्गवैद्ययोः स्वर्पतेर्यथा । आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते । जीव त्वं शरदः शतम् ॥

इति पार्थिवेश्वरपूजा सम्पूर्णा ॥



ॐ नमः प्रतीचे विघ्नहर्त्रे ।

# अथ

# उपदेशपञ्चकं रत्नप्रभाटीकायुतं प्रारभ्यते ।

ॐ यस्मिन्विश्वं भाति खे नीलतावत् श्रोतव्यो यस्तत्त्वमस्यादिवाक्यैः ।
ज्ञाता ज्ञानाद्यस्य पूर्णत्वमेति शुद्धं बुद्धं शङ्करोऽस्मीति नौमि ॥ १ ॥
पूर्णात्मानं वालकाग्रातिसूक्ष्म-मभ्यर्णस्थं ह्यण्डतो दूरगं च ।
बोध्यं बोधाद्बोध्यबोधप्रहीना-त्सर्वातीतः सर्वगोऽस्मीति नौमि ॥ २ ॥
नाहं वक्ष्ये कल्पवृक्षोऽस्ति लोके, युक्तो वक्तुं नास्ति चिन्तामणिश्च ।
संसाराऽब्धिर्गोष्पदं यत्कटाक्षा-त्पूर्णात्मानं दैशिकेन्द्रं नमामि ॥ ३ ॥

इह खलु परमानन्दस्वभावः परमकारुणिको भगवान् उमापतिः श्रीशंकरो मोहार्णवे प्रोह्यमानानां जनानामुत्तारणाय स्वमायया भगवत्पूज्यपादशंकररूपेणाविष्कृतानुत्तममूर्तिः, मिथ्याज्ञानात्मकप्रमादभ्रंशितविवेकबुद्धिभिर्नानाद्वैतवादपङ्केन तिरस्कृतामत्यद्भुतवेदतरणीं यथार्थव्याख्यानेन स्वरचितभाष्यामृतसारेण परिधौतपङ्कां निधायान्तर्धानसमये तत्तात्पर्यभूतब्रह्मात्मैक्यभावं यथाज्ञानावतारेण वेदपारंगतेनादिगुरुणा भगवता वसिष्ठेनोत्तमाधिकारिणं श्रीरामं प्रति जागराद्यवान्तरसंज्ञाभेदोक्त—शुभेच्छाख्यादिभूमिकाजयक्रमेण निरूपितम् ।

---

१ सर्वासामनुभूतीनामादर्शो यो ह्यकृत्रिमः । अगम्यो मललेखानां तच्चित्तत्वमहं महत् । २ वाक्यार्थो वर्ण्यते यत्र पदैर्वाक्यानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

"ज्ञानभूमिः शुभेच्छाद्या, द्वितीया स्याद्विचारणा । तनुमानसिका सत्त्वापत्तिरासक्तिनामिका ॥ १ ॥ पदार्थाभावनी षष्ठी, सप्तमी तुर्यगा स्मृता । आसामन्ते स्थिता मुक्तिर्यस्यां भूयो न शोचति" इति ॥ २ ॥

तद्वत् सङ्ग्रहेण बुबोधयिषुरधिकारित्वमारभ्य विदेहकैवल्यपर्यन्तं श्रवणादिप्रयत्नसहितं सकलवेदान्तार्थसारं श्लोकपञ्चकेनोपदिष्टवान् ।

अस्यापि वेदान्तप्रक[1]रणत्वात्तदीयैरेव विषय[2]सम्बं[3]धप्रयोजनै[4]: श्रोतॄणां प्रवृत्त्यङ्गतया प्रतिपादितैर्विषयादिमत्त्वोपपत्तेः न ते पृथगुपन्यस्ताः ।

यत्तु गुरुदेवतानमस्करणात्मकं मङ्गलाचरणं सुखप्रबोधप्रचयगमनाभ्यां सदाचारप्रदर्शनाय च प्रकरणेषु संप्रदायविद्भिराद्यश्लोकेन ग्रथितं तदपि कृपानिधिना भगवता श्रीमच्छङ्करेणास्मिन्प्रकरणारम्भे सर्वात्मकब्रह्मानुसन्धानेन मनसा कृतमेवं ज्ञातव्यम् ॥ न तदभावशङ्कावसरः तस्य मङ्गलरूपत्वात् । "शङ्करः शङ्करः साक्षात्" इति पुराणवचनादिति । यद्वाद्यश्लोकान्तर्वर्तीशोद्देशेन मुखतोऽपि प्रतिपादितम् ।

**वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयतां तेनेशस्य विधीयतामुपचितिः काम्ये मतिस्त्यज्यताम् । पापौघः परिधूयतां भवसुखे दोषोऽनुसन्धीयतामात्मेच्छा व्यवसीयतां निजगृहात्तूर्णं विनिर्गम्यताम् ॥ १ ॥**

---

१ शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् । प्राहुः प्रकरणं नाम ग्रन्थभेदं विचक्षणाः ॥ २ जीवब्रह्मैक्यम् ॥ ३ वेदान्तपरब्रह्मणोः प्रतिपादकप्रतिपाद्यलक्षणः ॥ ४ अज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च । 'तरति शोकमात्मवित्, ब्रह्मविद्ब्रह्मैव भवति' इत्यादिश्रुतेः ।

तत्रानादिभवपरम्परानुभूतानेकविषयवासनावासितान्तःकरणानां सहसा विषयवासनापरावर्तनेन प्रत्यगात्मतत्त्वप्रवणतामापाद्य परब्रह्मात्मतत्त्वं बोधयितुमशक्नुवन्प्रथमतो वेदाध्ययननित्यादिकर्माण्येव परमपुरुषार्थसाधनतयोपदिशति—**वेदो नित्यमिति** ।

वेदः काण्डत्रयात्मको नित्यं मुखमात्रेणाखिलतदर्थज्ञानपर्यन्तं सर्वदा कालविलम्बं विनैव ब्रह्मचर्यगुरुकुलनिवासाद्यध्ययनविधिवत् अधीयताम् । तदुदितं तेन विहितं कर्म सु सम्यक् श्रद्धादिपुरःसरमनुष्ठीयताम् । कर्मशब्देन नित्यनैमित्तिकप्रायश्चित्तोपासनानि संगृहीतानि । यद्यपि अन्यत्र नित्यादिकर्म चित्तशुद्धिहेतुत्वाच्चित्तैकाग्र्यकारणभूतोपासनात्पृथक् प्रतिपादितम् । इह तु कर्मोपासनासमुच्चयस्य "विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते"॥ "याः वास्या अग्र्यास्तनवस्ता अभिध्येयादर्चयेन्निह्नुयाच्च" इत्यादिश्रुतिषु निरूपितत्वादुपासनापि कर्मशब्देन प्रतिपादिता ज्ञातव्या । **तेनेशस्येति** । तेन वेदोक्तप्रकारेण कर्मणा ईशस्येशनशीलस्य योपचितिः पूजा सा विधीयतां फलाभिलाषं विनैव क्रियतां तस्मिन्सर्वकर्मफलदातरि समर्प्यतामित्यर्थः । काम्ये इहामुत्रभोगसाधने यातायातकारणे कर्मणि मतिरनुकूलबुद्धिस्त्यज्यतां संकल्पमात्रेणाऽपि काम्यकर्मकरणं मा सह्यतामित्यर्थः । पापौघः पापानां समूहो नित्याद्यनुष्ठानैकपरतया परिधूयतां त्यज्यताम् । एतेन निषिद्धकर्मवर्जनमपि सिद्धमिति वेदितव्यम् ।

---

१ चित्तशुद्धिं विना । २ सजातीयप्रत्ययप्रवाहातिशकाम् । ३ साक्षात्कारयितुम् । ४ यथा भवति तथा ५ उपासनाम् । ६ कर्म । ७ एकेन पुरुषेणाऽनुष्ठेयम् । ८ अग्निहोत्रादिकर्मणा । ९ मृत्युं स्वाभाविकं कर्मज्ञानं च मृत्युशब्दवाच्यमुभयम् । १० उपासनया । ११ देवतात्मभावम् । १२ याः काश्चिद्वास्या वासयोग्या आश्रयार्हा ब्रह्मणोऽग्र्याः श्रेष्ठा ब्रह्मविष्ण्वादिरूपास्तनवोऽर्चयेत् पुष्पोपहारादिना पूजयेत्, प्रतिमासु हृदये वा निह्नुयात् तत्तदुपास्यदेवतात्माभिमानेन पृथक् देवतात्वं परित्यजेत् ।

एवं काम्यनिषिद्धवर्जनपुरःसरं नित्यादिकर्मानुष्ठानप्रभावादीश्वरार्पितचित्तानां शुद्धान्तःकरणानामुपासनया च चित्तैकाग्र्यसहितानां जिज्ञासावतां साधनचतुष्टयमुपदिदिक्षुः तावदिहामुत्रफलभोगविरागमाह—भवेति । भवः संसारस्तज्जे सुखे इह स्रक्चन्दनादिभोगरूपेऽमुत्रामृतादिभोगरूपे च साधनसाध्यत्वाद्दोषोऽनित्यतालक्षणोऽनुसन्धीयतां "यत्कृतकं तदनित्यम्" इति न्यायात् । "तद्यथा कर्म[1]चितो लोकः[2] क्षीयते । एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतेश्च ॥ इहामुत्रार्थफलभोगविरागं प्रतिपाद्य इदानीं नित्यानित्यवस्तुविवेकं मुमुक्षुत्वं चैकीकृत्याह—आत्मेच्छेति । अनित्यदेहादिविलक्षणो नित्यो यः परमात्मा तस्येच्छाहं ममेदमित्यादि परमनिगडात्मकभवभावनाराहित्येन पूर्णात्मभावेन कदा कथमवतिष्ठामीत्येवंरूपा व्यवसीयतां निश्चीयतामित्यर्थः ।

एवंभूतो विरक्तः किं कुर्यादित्यत आह--निजगृहादिति । निजात्वीयत्वेनाभिमताद् गृहाद्विशेषेण रागादिकषायपरिहारेण निर्गम्यताम् । "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षुचर्यां चरन्ति" इत्यादिश्रुतेः ।

यथा मम स्वगृहाद्विनिर्गत्यान्यत्र मङ्गललाभो भविष्यति तथा कालविद्भिः सह विचार्याश्विन्यादिनक्षत्रेषु कश्चनोत्तमः कालः प्रवासायोचित इत्येतादृग्विलम्बबुद्धिपरिहारायाह—तूर्णमिति—तूर्णमाशु । विरक्तस्य गृहान्निर्गमने वैराग्यप्राप्तिकाल एवोत्तमः कालः "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति श्रुतेः ॥ १ ॥

---

१ कर्मभिश्चीयते सम्पाद्यते इति । २ लोक्यतेऽनुभूयते इति लोको भोगः ।

**संगः सत्सु विधीयतां भगवतो भक्तिर्दृढा धीयतां शान्त्यादिः परिचीयतां दृढतरं कर्माशु सन्त्यज्यताम् । सद्विद्वानुपसर्प्यतां प्रतिदिनं तत्पादुके सेव्यताम् । ब्रह्मैकाक्षरमर्थ्यतां श्रुतिशिरोवाक्यं समुत्कर्ण्यताम् ॥ २ ॥**

विहितानुष्ठानेन निषिद्धपरिवर्जनेन च शुद्धान्तःकरणानां वैराग्यादिकमुपवर्ण्य इदानीमवशिष्टानि साधनान्तराणि गुरूपसदनं च वर्णयिष्यन् आदौ सतां सङ्गमुपदिशति--**संग इति** । सत्सु साधनसम्पत्सम्पन्नेषु मुमुक्षुषु सङ्गो विधीयतां वैराग्यादिदार्ढ्याय क्रियतां, न तु स्त्रीहिरण्यादिषु, तेषां संगमेन संसारमध्यपातित्वमेव । उक्तं च " योषिद्धिरण्याभरणाम्बरेषु, द्रव्येषु मायारचितेषु मूढः । प्रलोभितात्मा ह्युपभोगबुद्ध्या,पतंगवन्नश्यति नष्टदृष्टिः" इति ॥ १ ॥ अथवा सत्सु तत्त्वनिष्ठेषु तेषां सङ्गमेन साधनानां यथार्थतया सिद्धिर्भवति ।

नच तत्त्वनिष्ठानां सङ्गमस्तत्त्वज्ञानार्थमेव, न तु तत्त्वज्ञानसाधनसिद्ध्यर्थमितिवाच्यम् । यथा उत्तररामायणे मोक्षोपायेषु वैराग्यप्रकरणस्य चतुर्थे सर्गे "कथाभिः सुविचित्राभिः स वसिष्ठादिभिः सह । स्थित्वा दिनचतुर्भागं ज्ञानगर्भाभिरादृतः ॥ १ ॥ कृतायां तीर्थयात्रायां रामो निजगृहस्थितः । जगामानुदिनं कार्श्यं शरदीवामलं सरः"॥ २ ॥

इत्यादिवाक्यैरधिकारिमूर्धन्यः श्रीरामश्चित्तशुद्धिहेतुभूतभौमयज्ञात्मकतीर्थयात्रानन्तरं पूर्वं श्रीवसिष्ठादिसङ्गमेन वैराग्यादिसाधनानि समासादितवानिति अवगम्यते । पुनः स एव । " अयं हि दग्धसंसारो नीरन्ध्रकलनाकुलः । कथं

१ 'एते भौमा मया यज्ञा तीर्थरूपेण निर्मिताः' इति ॥

सुस्वादतामेति नीरसो मूर्खतां विना ॥ १ ॥ रागद्वेषमहारोगभोगपूर्वा विभूतयः । कथं जन्तोर्न बाधन्ते संसारारण्यचारिणः ॥ २ ॥ यथा जानामि भगवंस्तथा मोहनिवृत्तये । ब्रूहि मे साधवो यूयं येन निर्दुःखतां गताः ॥ ३ ॥

इत्यादिश्लोकैर्वैराग्यप्रकरणस्यान्तिमग्रन्थेन तत्त्वज्ञानार्थं तस्मै शरणं गतवानिति च ज्ञायते । तद्वदत्राऽपि ब्रह्मसाक्षात्कारवतां ब्रह्मविद्याप्रदातॄणां संगमो विवेकवैराग्यादिसाधनसिद्ध्यर्थं बोद्धव्यम् । तथैव प्रकरणान्तरे भूमिकानिरूपणावसरे भगवद्वसिष्ठोक्तिः श्रीरामं प्रति—"प्रथमं जातमात्रेणैव पुंसा किंचिद्विकसितबुद्धिनैव सत्संगमपरेण भवितव्यम् । अनवरतप्रवाहापतितोऽयमविद्यानदीनिवहः सज्जनसम्पर्कादृते तरितुं न शक्यते । तेन विवेकवतः पुरुषस्य हेयोपादेयविचार उत्पद्यते । तेनासौ शुभेच्छाभिधां विवेकभुवमापतितो भवति" इति । यद्यपि केषांचित् भाग्यवशात् स्वतोऽपि च साधनानि भवन्ति । तथापि स्वप्रत्ययदृढीकारायावश्यं सतां संगमः कर्तव्य इति अभिप्रायः ॥ भगवतः स्वतःसिद्धज्ञानैश्वर्यादिशक्तियुक्तस्य सर्वनियन्तुः श्रीविष्णोर्भक्तिः सर्वोत्कर्षतयाराध्यत्वेन परमप्रीतिर्दृढाच्छिन्ना धीयतां धार्यतामित्यर्थः । सन्मार्गे प्रवृत्तस्य विघ्नानां बाहुल्याद्भगवद्भक्तिरपि तत्त्वज्ञानसाधनं "ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः" इत्यादिश्रुतेः ॥ तथैव भगवता त्र्यक्षेण ब्रह्मणा सह नारदादिभिर्भगवत्स्तुतिद्वारा—"तथा न ते माधव तावकाः कचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः । त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो" ॥ १ ॥ इति प्रतिपादितत्वाच्चेति । "अन्योऽसावहमन्योऽस्मीत्युपास्ते योऽन्यदेवताम् । न स वेद नरो ब्रह्म स

१ अज्ञानतीव्रतिमिरान्धस्येतिशेषः । २ इह जन्मनि जन्मान्तरे वानुष्ठितैर्निष्कामकर्मभिः शुद्धचित्तेनेत्यर्थः ॥ ३ सतां संगेन । ४ विचारेण । ५ । विश्वासः । ६ ब्रह्मभवनकामी । ७ 'देवकीपुत्र' इति शब्देन कृपातिरेकत्वं सूचितं भवति । ८ सन्मार्गात् ।

देवानां यथा पशुः ॥ उज्झित्वाऽऽत्मसमाधानं ये ध्यायन्त्यन्यदेवताम् । भिक्षन्ते भूरिवित्तास्ते भिक्षित्वापि बुभुक्षिताः" इत्यादिवाक्यैर्भगवद्भक्तिरुपेक्षणीयेति न शङ्कनीयम् तत्र तत्र मिथ्यादेहाद्यभिनिविष्टानां बहिर्मुखानां लोकाद्येषणावतां क्षुद्रानन्दलुब्धानां भूमानन्दाविर्भावसाधनभूतब्रह्मात्मजिज्ञासोत्पादनाय तथा तथा धिक्करणतिरस्करणाद्युक्तयः । न त्वधिकारिणां भगवद्वैमुख्यार्थमित्यभिप्रायः ॥

साङ्गं साधनत्रयमभिधाय, इदानीं चतुर्थं साधनं निरूपयति—शान्त्यादिरिति । इहामुत्रफलभोगविरागनित्यानित्यवस्तुविवेकमुमुक्षुतावतां प्रबलकामादिवृत्त्यभावेऽपि, मनसः स्वभावचाञ्चल्यादहेतुकत्वेनापि श्रवणादिकं विहाय विषयेषूड्डीयमानस्य, सर्वथा तेभ्यस्तथैव वैराग्यविवेकयुक्त्या समाकृष्य या श्रवणादिपरता सा शान्तिः । आदिशब्दो दमादिकपञ्चकामानित्वादिसाधनान्तरबोधनार्थः ॥ दमादयस्तु दमोपरतितितिक्षासमाधानश्रद्धाख्याः । दमो नाम बाह्यकरणवर्गस्य श्रवणादिवैमुख्येन विषयेषु प्रवर्तमानस्य सहसा तेभ्यः समासादितप्राग्वर्णितयुक्त्या सर्वसाधनसम्पादने सहायभूतया निग्रहः । तेषां निगृहीतानां करणानां श्रवणाद्यनौन्मुख्येन सर्वथा विषयेषु यथा प्रवृत्तिर्न स्यात्तथोपरमणमुपरतिः । शीतोष्णादिदुःखानां सहिष्णुता तितिक्षा । निगृहीतस्य चित्तस्य नित्यानित्यवस्तुविवेकलक्ष्ये ब्रह्मणि मनसो मुहुर्मुहुश्चिन्तनं । समाधानम् ।

अखण्डार्थप्रतिपादकेषु सद्गुरुवेदान्तादिवाक्येषु या भक्तिः सा श्रद्धा । अमानित्वादीनि तु "अमानित्वम[१]दम्भित्वम[२]हिंसा[३] क्षान्ति[४]रार्जवम्[५] ।

---

१ विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघनं मानित्वम् । २ लाभपूजाख्यात्यर्थं स्वधर्मप्रकटीकरणं दम्भित्वम् । ३ कायवाङ्मनोभिः प्राणिनां पीडनं हिंसा । ४ परापराधे चित्तविकारहेतौ प्राप्तेऽपि निर्विकारचित्ततया तदपराधसहनं क्षान्तिः । ५ अकौटिल्यं यथाहृदयं व्यवहरणं परप्रतारणारहितमितियावत् आर्जवम् ।

आचार्योपासनं[1] शौचं[2] स्थैर्यमात्म[3]विनिग्रहः[4]" इत्यादिवाक्यैः श्रीभगवद्गीतासु प्रसिद्धानि । तेषां शान्त्यादीनां परिचयः क्रियतामित्यर्थः ।

शान्त्यादिवत्सन्यासोऽप्यात्मज्ञानान्तरङ्गसाधनत्वादवश्यं मुमुक्षुभिरनुष्ठेयः, इत्यभिप्रेत्याह—**दृढतरमिति** । कर्मशब्देन विहितानि नित्यादीनि प्रतिपादितानि भवन्ति । न तु काम्यनिषिद्धलौकिकानि । तेषां प्रागेव वर्जितत्वात् । आशु तत्क्षणमेव दृढतरं यथा भवति तथा वेदोक्तप्रकारेण प्राजापत्यामेवेष्टिं कृत्वा सन्त्यज्यतां, तदसन्त्यागे संसारानिवृत्तिः स्यात् । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । "नास्त्यकृतः[5] कृतेन[6]" । "न्यास एवातिरेचयति" इत्यादिश्रुतिभ्यः ॥ तथा च वार्तिककारैः "त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्या विधीयते यस्मादन्यथा पतितो भवेत्" । इति । एतेन ज्ञानकर्मसमुच्चयो निराकृतः । न च कर्मसम्भवेऽपि कर्मफलकामनात्यागात्तत्फलभ्रंशवचनमेव कल्प्यते इति वाच्यम् । निष्कामानामपि कर्मणां फलसद्भावस्य श्रुतिस्मृतिषु प्रतिपादितत्वात् । "कर्मणा पितृलोकः" इत्यादि श्रुतेः । तथा च आपस्तम्बः स्मरति । "तद्यथाम्रे फलार्थे नि[7]र्मिते छायागन्धे इत्यनूत्पद्येते। एवं धर्मं[8] चर्यमाणमर्था अनूत्पद्यन्ते । नो[9] चेदनूत्पद्यन्ते न धर्महानिर्भवतीति ॥ फलसद्भावेऽपि तदभिसं[10]न्ध्यनभिसन्धिभ्यां काम्यनित्ययोर्विशेषतः । अनभिसंहितस्यापि वस्तुस्वभावादुत्पत्तौ[11] न विशेषः ॥ "स हि सर्वैर्विजिज्ञास्य आत्मा वर्णैस्तथाश्रमैः । प्राप्ता ज्ञान-

---

१ सद्गुरुसेवा । २ मृज्जलादिना बाह्यम् । मनोमलानां रागादीनां विषयदोषदर्शनादिरूपप्रतिपक्षभावनयापनयनमभ्यन्तरमिति द्विविधम् । ३ मोक्षसाधने प्रवृत्तस्यानेकविघ्नप्राप्तावपि तत्परित्यागेन पुनः पुनः प्रयत्नाधिक्यम् । ४ आत्मनो देहेन्द्रियसंघातस्य स्वभावप्राप्तां मोक्षप्रतिकूले प्रवृत्तिं निरुद्ध्य मोक्षसाधन एव व्यवस्थापनम् । ५ मोक्षः । ६ कर्मणा । ७ सति ८ फलार्थे । ९ फलार्थे नो कृतं चेत् । १० फलकामना । ११ फलस्य ।

दशामेतां पशुम्लेच्छादयोऽपि ये ॥ १ ॥ सदेहा वा विदेहा वा ते मुक्ता नाऽत्र संशयः" इत्यादिवाक्यैः संन्यासनैरपेक्ष्येण ब्रह्मविद्याप्राप्तिश्रवणात् । तथा जनकादीनां स्वराज्ये स्थितानां साक्षात्कारलाभस्य श्रुतिस्मृतिपुद्घोषितत्वाच्च न संन्यासस्य मुख्यत्वमिति न भ्रमितव्यम् । तेषां योगभ्रष्टानां प्राक्संन्यासप्रभावात्तथात्वम् ।

अन्यथा क्रियापराणां गृहिणां स्वचित्ताद्रावज्ञानान्ध्यनिवर्तकविवेकभानूदय एव न स्यात् । कुतो ब्रह्मात्मज्ञानलाभ इति भावः ॥ "भवसुखे दोषोऽनुसन्धीयतामित्यादि, दृढतरं कर्माशु सन्त्यज्यताम्" इत्यन्तेन वैराग्यादिसाधनसम्पन्नस्यास्मिन्प्रकरणेऽधिकारित्वं सिद्धं भवति॥ तथा च भगवता वसिष्ठेनापि नित्यानित्यवस्तुविवेकादिपुरःसरं फलपर्यवसायिमोक्षेच्छापरनामकशुभेच्छाख्यप्रथमभूमिकानिरूपणेनादावधिकारित्वमुत्तरोत्तरभूमिकालाभाय दर्शितम् ॥

इदानीं साधनसम्पन्नानां सत्यात्मलाभाय गुरूपसदनमाह—सद्विद्वानिति । सद्विद्वानध्यात्मशास्त्रजन्यविवेकद्वारा साक्षात्कृतसत्यात्मकब्रह्मात्मभावः । उप समीपे सर्प्यतां गम्यतामित्यर्थः ॥ अत्रेदमाकूतम्[1] ॥ एवंविधसाक्षात्कारयुक्तस्यापरोक्षात्मदृष्टिप्रदातृत्वे संशयच्छेदकत्वे चायत्नत एव प्रागल्भ्याद्[2] ब्रह्मात्मजिज्ञासावतां मुमुक्षूणां तस्मै उपसर्पणमुचितम् ।

न तु साक्षात्काररहितानां शास्त्रार्थपरिचययुक्तानां केवलश्रोत्रियाणाम् । तथा सर्वथा शास्त्रार्थपरिशीलनाभावेनेश्वरानुग्रहात्केवलयोगादिनोत्पन्नसाक्षात्कारवतां च सङ्गमः फलाय कल्प्यते ॥ "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतेः ॥ "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १ ॥ गुरौ

---

१ अभिप्रायः । २ प्रागल्भ्यमिति पाठः साधुर्भासते ।

यथैते वर्तन्ते तथा विद्यापि तेष्विह " इत्यादिश्रुतिस्मृत्युक्तन्यायेन गुरुभक्तेरपि ब्रह्मज्ञानान्तरङ्गसाधनत्वं निरूपयति-**प्रतिदिनमिति** । प्रतिदिनमहरहर्नैरन्तर्येण तत्पादुके सेव्यताम् । पादुकाग्रहणमादरार्थम् । उक्तं च । "महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां संगिसंगम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये " ततः किं कुर्यादित्यत आह । **ब्रह्मैकाक्षरमिति** । ब्रह्मैकाक्षरं परिपूर्णाद्वितीयाविनाशिस्वरूपमर्थ्यतां याच्यतामित्यर्थः । मुमुक्षूणामपरोक्षतया ब्रह्मावगतिस्तु महावाक्यश्रवणेनैव भवेदिति वर्णयितुमाह—**श्रुतिशिर इति** । श्रुतिशिरोवाक्यं जीवब्रह्मैक्यप्रतिपादनपरं तत्त्वमस्यादिमहावाक्यचतुष्टयं समुत्कर्ण्यतां जाड्यविक्षेपादिदोषपरिहारपूर्वकाखण्डानन्दात्मकाद्वितीयब्रह्मावाप्त्यौत्सुक्येन श्रूयतामित्यर्थः । उक्तं च । "रजस्तमोभ्यां रहितां शुद्धसत्वानुपातिनीम् । मतिमात्मनि संस्थाप्य[1] ज्ञानं श्रोतुं स्थिरो भव" इति ।

यद्यपि "सर्वं खल्विदं ब्रह्म" । " ईशा[2]वास्यमिदं सर्वं यत्किं च जगत्यां जगत् " । इत्यादीनि ऐक्यात्मप्रतिपादनपराणि सन्ति बहूनि वाक्यानि । तथापि तेषां मध्ये प्रसिद्धं वेदचतुष्टयस्य शिरोभूषणभूतं महावाक्यचतुष्टयम् । " प्रज्ञानं ब्रह्म " इति ऋक्शाखान्तर्गतम् । " अहं ब्रह्मास्मि " इति यजुःशाखान्तर्गतम् । " अयमात्मा ब्रह्म" इति अथर्वशाखान्तर्गतम् । " तत्त्वमसि" इति सामवेदान्तर्गतमिति । चतुर्णामेतेषां महावाक्यानां मध्ये " तत्त्वमसि"इति वाक्यस्य वाक्यार्थं निरूपयामः । स एवाऽन्येषां वाक्यानां सरणिः । स

---

१ स्वस्थीकृत्य । २ ईशिता परमेश्वरः परमात्मा सर्वस्य । स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन् तेन स्वेनात्मना ईशावास्यं सर्वात्मक ईश्वरोऽस्मीति ज्ञानेनाऽऽच्छादनीयम् । तत्किं जगत्यां पृथिव्यां यदिदं सर्वं किंच जगत् भ्रान्त्यानीश्वररूपेण गृहीतमनृतं नामरूपकर्माख्यं विकारजातं कर्तृत्वभोक्तृत्वादिलक्षणं च ।

च पदार्थमन्तरेण न सम्भवति । वाक्यं तु पदसमुदायात्मकम् । अस्य पदानि "तत्, त्वम्, असि" इति त्रीणि । तेषां पदानां मध्ये तत्त्वंपदयोरर्थौ वाच्यलक्ष्यरूपेण द्विविधः । तथाहि । कार्यात्मकस्थूलादिसमष्टिमान् । तत्फलितं सर्वज्ञत्वादिविशिष्टं चैतन्यम् । एतदाऽऽधारभूतं निर्विशेषं चैतन्यं च । एतत्त्रयं तप्ताऽयःपिण्डवदेकत्वेनावभासमानं सत्तत्पदवाच्यार्थो भवति । उपाधितत्प्रतिफलितयोराधारभूतं निर्विशेषं चैतन्यं तत्पदलक्ष्यार्थो भवति । कार्यात्मकस्थूलादिशरीरव्यष्टिमानविद्योपधिस्तत्प्रतिफलितमल्पज्ञत्वादिविशिष्टं चैतन्यमेतदाधारभूतं साक्षिरूपं कूटस्थचैतन्यं चैतत्त्रयं तप्तायःपिण्डवदेकत्वेनावभासमानं सत् त्वंपदवाच्यार्थो भवति । उपाधितत्प्रतिफलितयोराधारभूतं प्रत्य[1]गानन्दं तुरीयं चैतन्यं त्वंपदलक्ष्यार्थो भवति । भवसीत्यर्थे "असीति" क्रियापदं तु तत्त्वंपदयोः सामान्याधिकरण्य[2]वतोरर्थद्वयैकत्वबोधनार्थः । यथा-"नीलोत्पलमानय" इति वाक्ये । नीलोत्पलपदद्वयार्थयोर्गुणगुणिनोर्विशेषण[3]विशेष्यभावसंसर्गस्य नीलगुणतद्विशिष्टोत्पलयोरैक्यस्य च वाक्यार्थत्वाङ्गीकारे[4] तद्वाक्यार्थः संगच्छते । तथास्मिन्वाक्ये तत्त्वंपदार्थयोः परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्ययोः परस्परविरुद्धयोः संसर्गाद्यनभ्युपगमेनैक्यतानुपपत्त्या वाक्यार्थो न संगच्छते । तस्माद्वाक्यार्थसिद्धये "मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे । मुख्यार्थेनाविनाभूते प्रवृत्तिर्लक्षणेष्यते" इति न्यायाल्लक्षणापेक्षा । सा च जहत्, अजहत्, जहदजहद्भेदेन त्रिविधा । तत्र "गङ्गायां घोषः प्रतिवसति" इत्यत्र वाक्ये गङ्गापदार्थस्य प्रवाहस्य घोषाधारताऽनुपपत्त्या सर्वथा गङ्गापदार्थत्यागेन

---

१ जडानृतदुःखाहंकारादिभ्यः प्रतिकूलत्वेन सत्यज्ञानानन्दरूपत्वेनाञ्चति प्रकाशते इति प्रत्यक् । २ भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्विषये तात्पर्यं सम्बन्धः सामानाधिकरण्यम् । ३ यत्सम्बन्धबलाद्वस्तु वस्तुतो भिद्यतेपरात् । भेदकापरपर्यायं तद्विशेषणमुच्यते । ४ सति ।

तीरलक्षणया जहल्लक्षणा यथा संगच्छते तथा प्रकृते तत्त्वमस्यादिवाक्ये परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्ययोस्तत्त्वंपदार्थयोः परोक्षत्वापरोक्षत्वांशे विरोधाच्चैतन्यैकत्वे विरोधाभावात्सर्वथा तत्पदस्य त्वंपदस्य वा स्वार्थपरित्यागासम्भवान्न संगच्छते। "शोणो धावति" इति वाक्यवदजहल्लक्षणापि न संगच्छते। तत्र शोणगुणस्य धावनासम्भवात्तत्परित्यागमन्तरेण तदाश्रयभूतगवादिलक्षणया जहल्लक्षणा सम्भवति। अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्ययोः परस्परविरुद्धयोः शोणगुणवत्परित्यागाभावे विरोधपरिहारासम्भवाच्चेतनान्तराभावेन गवाद्यात्मकाश्रयवदाश्रयाभावाच्चाजहल्लक्षणा न संगच्छते। तस्माद्यथा—"सोऽयं देवदत्तः" इति वाक्यं तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यर्थस्यांशे विरोधाद्भागलक्षणापरनाम्न्या जहदजहल्लक्षणया विरुद्धांशपरित्यागेनाविरुद्धदेवदत्तपिण्डमात्रं लक्षयति तथा "तत्त्वमसि" इति वाक्यं परोक्षत्वापरोक्षत्वांशविशिष्टचैतन्यैकत्वलक्षणस्य वाच्यार्थस्यांशे विरोधाल्लक्षणया विरुद्धांशपरित्यागेनाखण्डचैतन्यमात्रं लक्षयतीति। उक्तं च—"तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा। सोऽयमित्यादिवाक्यस्थपदयोरिव नापरा ॥१॥ संसर्गो वा विशिष्टो वा वाक्यार्थो नाऽत्र संमतः। अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः ॥२॥ प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः। अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः ॥३॥ इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत्। अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥४॥ तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु। पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते ॥ ५ ॥" इति। यतो हेयस्य[1] स्वरूपानवगमे तद्धानासम्भवाद् ग्राह्य[2]लाभासिद्धिस्ततोऽध्यारोपापवादन्यायोऽज्ञानादिप्रपञ्चस्य स्वरूपदर्शनमार्जनाभ्यां सर्वाधाराखण्डपरमानन्दात्मकप्रत्यगभिन्नब्रह्मावगमको महावाक्यश्रवणस्याङ्गभूतः प्रदर्श्यते। अध्यारोपस्तावत्।

१ विवर्त। २ अधिष्ठान।

द्रवतादिशून्ये आतपे नद्यारोपवन्निष्प्रपञ्चे चिदानन्दरूपे ब्रह्मणि अज्ञानादिप्रपञ्चा-रोपोऽध्यारोपः। अज्ञानं तु—सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञाननिवर्त्यं चिदानन्दरूपब्रह्मप्रतिबिम्बयुक्तमावरणविक्षेपात्मकशक्तिद्वयसहितं भावरूपम्। "मामहं न जानामि" इत्यनुभवात्। "देवा[1]त्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादि श्रुतेश्च॥ तच्च समष्टि[3]व्यष्ट्य[4]भिप्रायेण सत्त्वशुद्ध्यविशुद्धिभ्यां विक्षेपप्रधाना माया, आवरणप्रधाना विद्या चेति द्विविधं भवति। "जीवेशावाभासेन करोति माया-चाविद्या च स्वयमेव भवतीति श्रुतेः॥ विशुद्धसत्त्वप्रधानमायाफलितं चैतन्यं गुणा न्तरैरकलुषीकृतत्वात् स्वाधीनमायाशक्तिसर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वजगत्का-रणत्वादिधर्मभेदैर्वेदान्तेषूद्घोष्यमाणः स्वतन्त्र ईश्वरः। "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतेः। तस्य सा शक्तिरखिलकारणत्वात्कारणशरीरम्। कार्यप्रपंचा-भावेनानन्दातिशयवत्त्वादानन्दमयः कोशः। चराचरात्मकप्रपञ्चस्य लयस्था-नत्वात्सुषुप्तिः॥ ॥ मलिनसत्त्वप्रधानाविद्याप्रतिफलितं चैतन्यं गुणान्तरैः कलुषीकृतत्वादविद्याशक्त्यधीनं स्वोपाधिमालिन्यतारतम्यात् सुरनरतिर्यगा-दिभेदेन विचित्ररूपं किञ्चिज्ज्ञत्वकिंचित्कर्तृत्वादिधर्मभेदैर्व्यवह्रियमाणोऽस्व-तन्त्रः प्राज्ञः॥ अस्यापि सा शक्तिः। स्थूलसूक्ष्मशरीरादिकारणत्वा-त्कारणशरीरम्। अन्तर्बहिष्करणचाञ्चल्याभावोद्भूतानन्दस्य कोशत्वात्कोशव-दावरकत्वाच्चानन्दमयः कोशः॥ अग्रेऽपि वक्ष्यमाणकोशचतुष्टयस्य प्राज्ञविषय-स्यावरकत्वं ज्ञातव्यम्। "न भाति नास्ति कूटस्थ इत्यपादनमावृत्तिः" इत्यादिनावृत्तेर्जीवविषयस्योक्तत्वात। शरीरद्वयलयस्थानत्वात्सुषुप्तिः॥ एवंविध-स्य सर्वज्ञत्वादिगुणयुक्तस्येश्वरस्येक्षापूर्वकसर्जनेच्छया निमित्तभूतया प्राज्ञानां सुखदुःखभोगाय साभासतमःप्रधानादज्ञानादुपादानकारणभूतादाकाशनाकाश-

१ देवस्यात्मनः। २ अत्र शक्तिशब्देन निस्तत्त्वमवगम्यते। उक्तं हि—निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिवत् इति॥ ३ सामान्यतः। ४ विशेषतः। ५ प्रकर्षेणाज्ञ

द्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यते । तेषां सूक्ष्मभूतानामपञ्चीकृतानां तन्मात्राणां पञ्चभिः सत्वांशैरुपादानभूतैः क्रमेण श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि शब्दस्पर्शरूपरसगन्धाख्यपञ्चविषयग्राहकाण्यसाधारणकार्यरूपाण्युत्पन्नानि भवन्ति । पुनस्तेभ्य आकाशादिगतसात्विकांशेभ्यो मिलितेभ्यः साधारणकार्यरूपे द्वे बुद्धिमनसी उत्पद्येते।अनयोरहंकारचित्तयोरन्तर्भावः ॥एतेषां बहिरन्तःकरणानां सात्विकांशकार्यत्वं तु प्रकाशात्मकत्वात् । एवमेवैतेषां पञ्चभी रजोंशैः क्रमेण वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि वचनादानगमनविसर्गानन्दाख्यपञ्चविधक्रियासाधनान्यसाधारणकार्याण्युत्पन्नानि भवन्ति । पुनस्तेभ्य आकाशादिगतरजोंऽशेभ्यो मिलितेभ्यः साधारणकार्यरूपाः प्राणापानव्यानोदानसमानाख्याः पञ्च वायव उत्पद्यन्ते ॥ एतेषां रजोंऽशकार्यत्वं च क्रियात्मकत्वात् । एवं सप्तदशावयवकानि लिङ्गशरीरापरनामकानि सूक्ष्मशरीराणि भवन्ति । उक्तं च । "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" । इति । तेषु तेजोमयान्तःकरणोपाधिलक्षितेषु लिङ्गशरीरेष्वनेकबुद्धिविषयतया व्यक्तिवद्व्यष्टिशब्देन कथ्यमानेषु पृथक् पृथक्तादात्म्याभिमानेन प्राज्ञास्तैजससंज्ञका भवन्ति ॥ ईश्वरस्तु तेषु सर्वेषु लिङ्गशरीरेष्वेकबुद्धिविषयतया जातिवत्समष्टिशब्देन कथ्यमानेष्वेकत्वेन तादात्म्याभिमानाद्धिरण्यगर्भसंज्ञको भवति। अस्य हिरण्यगर्भत्वं ज्ञानेच्छाशक्तिद्वयवत्त्वात्, तथा सूत्रात्मा, प्राण,इति च, सर्वत्रानुस्यूतत्वात्, क्रियाशक्तिमत्त्वाच्च भवति ॥ अनयोः प्राज्ञेश्वरयोरेते व्यष्टिसमष्टी स्थूलशरीरस्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरम्

---

१ विषिण्वन्ति विषयिणमऽवबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः । २ हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥ इति प्राणादीनां स्थानानि। प्रागागमनार्वागागमनविष्वगागमनोर्ध्वगमनान्नादिसमीकरणस्वरूपाः क्रमेण धर्मत्रयस्तेषाम् । ३ पुनर्लयं गच्छतीति लिङ्गम् । जीवचिह्नत्वाच्च लिङ्गस्य लिङ्गत्वम् ।

जाग्रद्वासनामयत्वात्स्वप्नः। विज्ञानमयादिकोशत्रयमिति चोच्यते ॥ कोशत्रयाणि तु निश्चयात्मिका बुद्धिर्ज्ञानेन्द्रियपञ्चकसहिता सती, विज्ञानमयः कोशः स्यात्। सङ्कल्पात्मकं मनस्तैरेव सहितं सत्, मनोमयः कोशः स्यात्। क्रियात्मकाः पञ्च वायवः कर्मेन्द्रियसहिताः सन्तः, प्राणमयः कोश स्यात्। एतेषां ज्ञानेच्छाक्रियाशक्तिमतां क्रमेण कर्तृकरणकार्यरूपत्वं केचिद्वर्णयन्ति ॥ स एवेश्वरो हिरण्यगर्भभावापन्नस्तेषां तैजसानां भोगायावशिष्टमाकाशादिकमेकैकं द्विधा विभज्य तेषां मध्ये प्राथमिकानर्धभागांश्चतुर्धा विभज्येतरभूतानामविभक्तचतुर्भागार्धैः सहाविभक्तस्वभागार्धमन्तरेण योजनात्पञ्चीकरणं करोति ॥ उक्तं च। "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते" इति। तदनन्तरमस्य सर्वकर्तृत्वादिशक्तिमत ईश्वरस्येच्छयैतेभ्यः पञ्चीकृतपञ्चमहाभूतेभ्य उपादानकरणभूतेभ्यो ब्रह्माण्डपिण्डावुत्पद्येते। तत्रोपर्युपरि वर्तमाना भूम्यादयः सप्त लोकाः। भूमेरधःस्थितान्यतलादीनि सप्त भुवनानि तेषु द्विसप्तभुवनेषु प्राणिभिर्भोक्तुं योग्यान्यन्नपानादीनि तत्तल्लोकोचितानि चतुर्विधस्थूलशरीराणि प्रादुर्भवन्ति ॥ चतुर्विधशरीराणि तु। जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि ॥ तेषु चतुर्विधस्थूलशरीरेष्वनेकबुद्धिविषयतया व्यक्तिपदव्यष्टिशब्देन कथ्यमानेषु पृथक् पृथक्तादात्म्याभिमानेन सुरनरतिर्यगादिभेदभिन्नास्तैजसा विश्वसंज्ञका भवन्ति ॥ हिरण्यगर्भस्तु तेषु सर्वेषु स्थूलशरीरेष्वेकबुद्धिविषयतया जातिपदसमष्टिशब्देन कथ्यमानेष्वेकत्वेन तादात्म्याभिमानाद्वैश्वानरसंज्ञको भवति ॥ अस्य वैश्वानरत्वं सर्वनराभिमानित्वात्तथा विराजमपि वदन्ति, विविधं राजमानत्वादिति। अनयोर्विश्ववैश्वानरयोरेतेव्यष्टिसमष्टी स्थूलत्वात् स्थूलशरीरम् अन्नविकारत्वादन्नमयः कोशः, कर्णादिगोलस्थैः श्रोत्रा

१. विधाय। २ अर्धभागम्। ३ विभागानन्तरम्। ४ इतरभूतानाम्। ५. अविभ

दिभिरर्थोपलब्धिहेतुत्वाज्जाग्रदवस्था चेत्युच्यते ॥ एवंविधासु तिसृष्ववस्था- स्वीश्वरप्राज्ञौ सुषुप्तौ, स्वोपाधिवृत्तिभिः सूक्ष्मतमाभिरानन्दमनुभवतः। तावेव स्वप्ने हिरण्यगर्भतैजससंज्ञकावन्तःकरणवृत्तिभिः सूक्ष्मविषयाननुभवतः। जागरे तु वैश्वानरविश्वाख्यौ दिग्वातार्कवरुणाश्व्याख्यैर्ज्ञानेन्द्रियाधिष्ठातृदेवैरग्नी- न्द्रोपेन्द्रयमप्रजापत्याख्यैः कर्मेन्द्रियाधिष्ठातृदेवैश्चन्द्रचतुर्मुखशङ्कराच्युताख्यै- र्मनोबुद्ध्यहङ्कारचित्ताख्यान्तःकरणाधिष्ठातृदेवैश्च क्रमान्नियन्त्रितेन श्रोत्रादिज्ञाने- न्द्रियपञ्चकेन वागादिकर्मेन्द्रियपञ्चकेन, मनआद्यन्तःकरणचतुष्केन च शब्दस्प- र्शरूपरसगन्धान् वचनादानगमनविसर्गानन्दान्, सङ्कल्पनिश्चयाहङ्कारचैत्यांश्च सर्वान् स्थूलविषयाननुभवतः॥ एवं चिदानन्दरूपे ब्रह्मणि मिथ्या प्रपञ्चारोपो- ऽध्यारोपः ॥

अपवादस्तु तापविवर्तरूपाया नद्यास्तापमात्रत्ववत् ब्रह्मविवर्तस्याज्ञानादि- प्रपञ्चस्य ब्रह्ममात्रत्वम् ॥ तथाहि सर्वेषां नराणां स्वप्नाख्ये स्वेऽवस्था- विशेषे खगनगनगरनरपश्वादिसहितं भूमण्डलं सोमसूर्यादियुक्तमुडुमण्डलं च स्थूलत्वेन प्रतीयमानमपि वस्तुतः सूक्ष्मात्मकमेव। तथा पञ्चीकृतपञ्चभूतात्मकं चतुर्दशभुवनचतुर्विधस्थूलशरीरादियुक्तं ब्रह्माण्डं स्थूलत्वेनावभासमानं विवेक- दृष्ट्या दृष्टं सत् सूक्ष्मात्मकमेव। सूक्ष्मं तु अज्ञानविजृम्भणमात्रम्। अज्ञानस्य चिदा- नन्दघने ब्रह्मण्यत्यन्ताभावात्सर्वं ब्रह्ममात्रमेव॥उक्तं च "स्थूलं विचारतः सूक्ष्मं तदविद्या विचारतः। सापि चिन्मात्रमेवातः सर्वं ब्रह्मेति भण्यते" इति॥ एवमध्यारोपापवादन्यायेन तत्त्वंपदार्थशोधनपूर्वकं श्रुतिसारभूतमहावाक्यश्रव- णमेवापरोक्षतयाखण्डब्रह्मावाप्तये मुख्यं श्रवणमिति। "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञा- सस्व तद्ब्रह्मेति"। "यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि

१ मध्ये। २ अतात्त्विकोऽन्यथाभावो विवर्तः। ३ म्रियमाणानि। ४ विलक्षणः॥

भूतानि न विदुः। यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष ते आत्मान्तर्याम्यमृतः" इत्यादिवाक्यानि सृष्टिस्थितिसंहारनियमनपराण्यनेकानि प्रसिद्धानि। किमखण्डार्थप्रतिपादकमहावाक्यश्रवणेनेति न भ्रमितव्यम्। "सदेव सौम्येदमग्र आसीद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्। नेह नानाऽस्ति किंचन" इत्यादिवाक्यैः सृष्ट्यादीनां सत्यात्मकत्वाबोधनादभावप्रतिपादनाच्च॥ तेषु तेषु वाक्येषु तत्र तत्र महावाक्यार्थे तात्पर्यो न तु सृष्ट्यादिपरत्वे। न च "स एष इह प्रविष्ट आनखाग्रेभ्यः" इत्यादिप्रवेशवाक्यानामभेदप्रतिपादनमन्तरेण प्रवेशपरत्वं वाच्यम्, किन्त्वविकृतस्य ब्रह्मणः प्रवेशश्रवणात्तद्रूपं ब्रह्मैवात्मेत्यवगम्यते। अत्र निरवयवस्य सर्वगतस्यात्मनो बुद्धावभिव्यक्तिमात्रमेव प्रवेशो न तु देवदत्तादेर्गृहादिप्रवेशवत् इति। उक्तं हि "जनितं वियदग्रणि येन जगत्परमात्मसदक्षरनामभृता। प्रविवेश स एव जगत्स्वकृतं खमिवेह घटं घटसृष्टिमनु" इति। तस्मात्सर्वासां श्रुतीनामखण्डार्थपर्यवसायिनीनां सारभूतो महावाक्यार्थः सर्वथा जिज्ञासावतां महता पौरुषयत्नेन श्रोतव्य इत्यभिप्रायः॥ २॥

**वाक्यार्थश्च विचार्यतां श्रुतिशिरःपक्षः समाश्रीयतां दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम्। ब्रह्मैवास्मि विभाव्यतामहरहर्गर्वः परित्यज्यतां देहेऽहंमतिरुज्झयतां बुधजनैर्वादः समुत्सृज्यताम्॥३॥**

"आत्मानं विन्दते यस्तु सर्वभूतगुहाशयम्। श्लोकेन यदि वार्थेन क्षीणं तस्य प्रयोजनम्। वाक्यश्रवणमात्रेण पिशाचकवदाप्नुयात्" इत्यादिवाक्यै-

१ ब्रह्मात्मक। २ स्वमायया निर्मितम्। ३ लीनम्।

महावाक्यश्रवणमात्रेणैव मुमुक्षूणां कार्तार्थ्यम¹वगम्यते किमनेन वक्ष्यमाणश्लोकेन मनननिदिध्यासनपरेणेति चेत् तत्र तत्र तीव्रतरविरक्तान्प्रति तथा तथोक्तयः। इह तु श्रीमत्पूज्यपादभाष्यकारेणा²न्येषां साधनचतुष्टयवतां ब्रह्मात्मसाक्षात्काराय श्रवणानन्तरं मनननिदिध्यासनपरत्वम् “आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः„ इत्यादिश्रुत्यवष्टम्भेन प्रकरणान्तरं यथा प्रतिपादितं श्रवणमनननिदिध्यासनमन्तरेण न सम्भवतीति, तद्वत् वर्णयिष्यतादौ श्रुतस्याखण्डार्थस्य स्वाशयारोहाय युक्तियुक्तं मननं प्रतिजानीते—

**वाक्यार्थश्चेति**। वाक्यार्थोऽखण्डचैतन्यरूपः प्राङ्निरूपितो युक्तिभिर्विचार्यतामित्यर्थः। श्रुतिशिरो महावाक्यचतुष्टयं तस्य पक्षो विवेकाभ्यासात्त्वंपदार्थशोधनपुरस्कारेणाद्वितीयपरमानन्दब्रह्मात्मभावे उद्यमः सम्यग्योगसांख्यादिवादिपक्षान्तरपरिहारेणासमन्ताच्छ्रीयतां सेव्यतामित्यर्थः। अखण्डब्रह्मात्मभावस्यानुपयुक्तः कुतार्किकादिकृततर्कवदनात्मभावावादको यस्तर्कः स दुस्तर्कस्तस्मात्सुविरम्यतामतिशयेन विनिवर्त्यतामित्यर्थः। श्रुतिमतस्तर्को युक्तियुक्तत्वादनुसन्धीयताम्। श्रुत्युक्तयुक्तयस्त्वन्तर्बहिर्भावेन द्विविधाः। सर्वेषां मुमुक्षूणां यदा वागादिकर्मेन्द्रियपञ्चकं वचनादिक्रियाव्यापारं प्रति प्रवर्तते, श्रोत्रादिज्ञानेन्द्रियपञ्चकं च श्रवणादिस्वव्यापारानुकूलशब्दस्पर्शरूपरसगन्धाख्यपञ्चात्मकविषयजातं परिगृह्णाति तथान्तःकरणमपि संकल्पाध्यवसायस्मरणाभिमानलक्षणं स्वव्यापारसमूहमनुसन्दधाति तदा तस्य तस्य करणस्य तेन तेन विषयेण सह तत्साक्षिरूपे स्वात्मन्यध्यस्तत्वावलोकनात्मिका भावनान्तरी एका युक्तिः। यतो देशकालवस्तुभेदेन वैचित्र्यरूपेण च प्रतीयमानं जडत्वादिगुणकं जगज्जातमखण्डसच्चिन्मात्रस्वरूपेण ब्रह्मणा सत्त्वं स्फुरणत्वं चापन्नं ततो हेतोस्तत्सर्वं ब्रह्मविवर्त एवेति

१ कृतार्थता। २ भाष्यकारेण।

पौनःपुन्येन चिन्ता बाह्यविषया द्वितीया युक्तिः । एतेन " सद्विद्वानुपसर्प्यताम्" इत्यादि, " श्रुतिमतस्तर्कोऽनुसन्धीयताम्" इत्यन्तेनासम्भावनापरिहाराय श्रवणमनने निर्णीते । ते एव भगवता वसिष्ठेनाऽपि गुरुमुपसृत्य वेदान्तवाक्यविचारणात्मकद्वितीयभूमिकाशब्देन कथिते इति ॥

नह्यसम्भावनानिवृत्तिमात्रेणापि शुभेच्छावतामधिकारिणां सर्वानर्थनिवर्तकब्रह्मात्मभावं प्रत्याशा । यतो देहाद्यात्मत्वजगत्सत्यत्वबुद्धिलक्षणा विपरीतभावनानेकजन्मकोटिभिर्दृढमूलात्यन्ता सती अपि बालवेतालिका बालानिव पुनःपुनराकर्षयतीत्याशङ्क्य तन्निरासाय श्रवणादिप्रयत्नलब्धविजातीयदेहादिप्रत्ययरहितसजातीयाद्वयवस्तुप्रत्ययात्मकं निदिध्यासनं विवृणोति । ब्रह्मैवेति । ब्रह्मैवास्म्यहमिति शेषः । बृहत्वाद्देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वाद्देशादिविवर्ताधारभूतं यद्ब्रह्म तदेव देहादिसंघातविलक्षणस्तदाश्रयभूतः साक्ष्यात्माहमस्मीत्यर्थः विशेषेणादरातिशयेन भाव्यताम् । भावना हि भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनमिति । ईदृग्विधभावनाया अवधिस्तु ज्ञातृज्ञानादित्रिपुटीलयमन्तरेण चित्तस्य ब्रह्माकारेणावस्थितिः । सैव वेदान्तेषु सविकल्पसमाधिशब्देनापि प्रोच्यमाना भवति ॥ एतावता ग्रन्थेन वैराग्यं साधनचतुष्टयसम्पत् श्रवणमनने निदिध्यासनं च तत्त्वज्ञानस्य साधनं सिद्धम् । भगवता वसिष्ठेनापि मनसः सूक्ष्मवस्तुग्रहणयोग्यतालक्षणतनुमानसाख्यतृतीयभूमिकाकथनेन निदिध्यासनात्मिका ब्रह्मात्मभावनैव कथिता ॥ तदनन्तरं भूमिकात्रयस्य साधनरूपतां च प्रदर्श्य तस्यैव मुमुक्षूणामैक्यात्मभावनायुक्तानां ब्रह्मसाक्षात्काराभावेन मूलोच्छेदपूर्वकभेदबुद्धित्यागासम्भवाज्जा-

१ स्नातं तेन समस्ततीर्थसलिले, दत्ता च सर्वावनिर्यज्ञानां च कृतं सहस्रमखिला, देवाश्च सम्पूजिताः । संसाराश्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ, यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥ १ ॥

ग्रदवस्थात्वं चोक्तम् । "भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् । यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते" इति । अस्य निदिध्यासनस्यावान्तरसाधनान्युपदेष्टुकामो यस्य निरसनेन सर्वानर्थनिरसनसिद्धिः सिद्ध्यति तस्य परिवर्जनमादावुपदिशति । **अहरहरिति** । अहरहः कालनियमं विनैवात्मानानुसन्धानात्ममोहमयो मिथ्याप्रत्ययरूपः कामादिबीजभूतोऽहंकाराख्यो गर्वस्तयैव प्राग्वर्णितभावनया परित्यज्यताम् । तेनाहंकारत्यागेन देहे स्थूलेऽहंमतिः स्थूलोऽहं, कृशोऽहं, मनुष्योऽहमित्यादिलक्षणा बुद्धिरुज्झ्यतामित्यर्थः ॥

ननु मुमुक्षूणां यतमानानां सर्वसंशयनिवृत्त्यर्थं विद्वद्भिः सह विविधशास्त्रसंवाद एव प्रशस्ततमत्वात्सदा कर्तव्यः किं निदिध्यासनाग्रहेणेत्याशङ्क्य तेषां श्रवणमननात्मकनिशितकुठारेण निःशेषसंशयतरुमूलोच्छेदस्य प्रागेव सिद्धत्वान्न संवादापेक्षेत्याह—**बुधजनैर्वाद** इति । "शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः । परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १ ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायेद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्" इत्यादिवचनैरैक्यात्मभावनायुक्तानां संवादाभावस्य दर्शनात् ॥ ३ ॥

**क्षुद्व्याधिर्विचिकित्स्यतां प्रतिदिनं भिक्षौषधं भुज्यतां स्वाद्वन्नं न तु याच्यतां विधिवशा-**

---

१ ब्राह्मणो ब्रह्म भवितुमिच्छुर्मुमुक्षुस्तमेव प्रत्यग्रूपं परमात्मानमेव विज्ञाय संशयाद्यभावो यथा भवति तथा ज्ञात्वा, प्रज्ञां ब्रह्मात्मैकत्वज्ञानरूपमैकाग्र्यं कुर्वीत सम्पादयेत्, बहूञ्छब्दान्नानुध्यायेत् नानुस्मरेत् । ध्यानेनाभिधानमप्युपलक्ष्यते नाभिदध्याच्च । अन्यशब्दाभिधानेन वाग्विग्लापनानुपपत्तेः । कुत इत्यत आह । वाचो विग्लापनं हि तदिति । हि यस्मात्तदभिधानमनेन स्मरणमप्युपलक्षणं विग्लापयतीति विग्लापनं श्रमहेतुः अयमभिप्रायः । शब्दानुसन्धानेन मनसः श्रमो भवति तदभिधानेन वाचः इति ॥

२ त्यज्यतामित्यपि पाठः ।

**त्प्राप्तेन सन्तुष्यताम् । शीतोष्णादि विसह्यतां न तु वृथा वाक्यं समुच्चार्यतामौदासीन्यमभीप्स्यतां जनकृपानैष्ठुर्यमुत्सृज्यताम् ॥ ४ ॥**

ननु अस्तु चित्ताकाशे विवेकभानूदयेनैवाहंकारकामाद्यात्मकघनतमतमोनिवृत्तिः, ऐक्यात्मभावनाबाधिकानामतिक्षोभकारिणां क्षुधादीनां निरसनं नानुमीयत इत्याशङ्क्य तेषां वर्जनोपायमैक्यात्मभावनादार्ढ्यहेतुभूतावशिष्टसाधनान्तराणि च प्रकटयंस्तावत् क्षुद्व्याधिप्रतीकारमाह-क्षुद्व्याधिर्विचिकित्स्यतामिति स्पष्टार्थः।तर्हि येनोपायेन स व्याधिर्विचिकित्सनीयस्तत्राह–**प्रतिदिनमिति**। क्षुद्व्याधिविचिकित्सार्थं भिक्षैव महौषधी न ततोऽन्यत्किंचिद्विवेकादि, भिक्षाहृतान्नादिवन्निवर्तक इति भावः। विवेकयुक्तस्य सन्न्यासव्रतः पुरुषस्य भिक्षाहरणकालेऽहं भिक्षुरेते धार्मिका एते पापिनः इदं मिष्टान्नमिदं कदन्नमित्यादिद्वैतभावनयैवैक्यात्मभावनाभावो भविष्यति इति न मन्तव्यम्। "एकमेवाद्वितीयं ब्रह्म, नेह नानाऽस्ति किञ्चन" इत्यादि श्रुत्युक्तन्यायेन युगपदद्वितीयाधिष्ठानपरिचयद्वैतमिथ्यात्वभावनाभ्यां पौरुषातिशयेन समासादिताभ्यामहंममेदमित्यादिभेदबुद्धितिरस्कारेण नास्त्यैक्यात्मभावनाभङ्गावसर इति। भिक्षाहरणकाले नियमविधिं दर्शयति। **स्वाद्वन्नमिति**। तर्हि पर्युषितौदनमन्यत्किञ्चिद्वा कदन्नं ग्राह्यमित्याशङ्क्याह। **विधिवशादिति**। विधिवशात्प्राप्तेन भिक्षाहरणकाले यदृच्छयागतेन मिष्टान्नेन कदन्नेन वा सन्तुष्यतां पित्तादिधातुवैषम्यजनितज्वरादिव्याधिवत्प्राणादिसंचारप्रदीप्तजाठराग्निनोद्भूतक्षुद्व्याधिशमनार्थमेव केवलमन्नाद्यदनं नत्वाविचकप्राणादिसंघातविलक्षणद्रष्टृरूपस्य मम किंचिल्लाभो हानिर्वेत्यनेन विवेकेनादनसमये सम्यक् स्वात्मनि तुष्यतां न हृष्यतां न वा कुप्यतामित्यर्थः ॥

पूर्वं वैराग्यादिसाधनेषु शान्त्यादिकथनाक्षिप्ततितिक्षापदेन शीतोष्णादिद्वन्द्वसहिष्णुता कथिताऽपि निदिध्यासनयुक्तस्याभेदभावनादार्ढ्यहेतुत्वात् पुनः सिंहावलोकन्यायेन तामादिशति। शीतोष्णादीति। आदिशब्दो देहोद्भवज्वरादिरोगसन्तापबोधनार्थः। प्रकाशरूपस्य निरवयवस्य वेदकस्य देहिनो जडत्वविकारित्ववेद्यत्वधर्मयुक्तेन शरीरेण सह सम्बन्धाभावाच्छीतोष्णादिग्रहणासिद्धिः। नह्यन्यस्यान्यधर्माक्षेपः। तथा च भाष्यम्। "यत्र हि यदध्यस्तं तत्कृतेन गुणेन दोषेण वाणुमात्रेणापि स न सम्बद्ध्यते" इत्येवंभावनया विशेषेण सह्यतामित्यर्थः॥ हेमन्ते धारागारेषु हिमातिशयसहितेषु स्थलेषु च कन्थादिपरित्यागेन तथा ग्रीष्मे प्रचण्डमार्तण्डातपप्रतप्तवालुका दियुक्तमरुभूम्यादौ शीतोष्णादिसहिष्णुतार्थं महता यत्नेन निवासो, भावनादृढीकारायात्यन्तमुचितमिति ये विभावयन्ति तेऽतिमूढाः। न प्राणत्यागादन्यत्किंचित्तेषां फलं फलति। इह तु यतीनां गमनागमने कस्मिंश्चिन्निवासस्थाने वा यदृच्छयागतशीतोष्णादिसहने तात्पर्यं न चान्यथेति भावः॥ वाङ्नियमं च वर्णयति। न तु वृथा वाक्यमिति। स्वव्यापारानुपयुक्तं वाक्यं वृथावाक्यं तन्न समुच्चार्यताम्। तु शब्दोऽवधारणे। कूटस्थस्य निरीहस्य स्वात्मनो हेयोपादेयद्वन्द्वधर्मानुपरोधाद्द्वन्द्वधर्मस्य च मिथ्यात्वाद्यत्स्वभावसिद्धमौदासीन्यं तदभीप्स्यताम्। यदि तु कस्यचिच्छ्रवणमनननिदिध्यासनपरस्यापि मलिनवासनाप्राबल्यात् शुद्धवासनाप्रदुर्भावो न सम्भवति तदा तस्य मैत्र्यादिचतुष्टयम्। साधुषु मैत्री, कर्मिषु मुदिता, दुःखिषु करुणा, पापिषूपेक्षा, इत्येवंलक्षणात्मकम् तदाविर्भावायोपादेयत्वेन ग्राह्यमित्यभिप्रायेणाह--जनकृपेति। दुःखितेषु जनेषु कृपया करुणया नैष्ठुर्यं "युक्तमेतदेतेषां पापिनां दुःखित्वमिति तिरस्कारात्मकं" चित्तकाठिन्यमुत्सृज्यताम्।

करुणाशब्दव्युपदेशेन मैत्र्यादित्रयमपि सूचितं भवति । तस्यैवे तदुपलक्षणत्वादित्यभिप्रायः ॥ ४ ॥

**एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां पूर्णात्माशु समीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् । प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैः श्लिष्यतां प्रारब्धं त्विह भुज्यतामथ परब्रह्मात्मना स्थीयताम् ॥ ५ ॥**

एवं विधानुत्तमसाधनकलापेन समासादितप्रत्ययान्तरानन्तरितनिदिध्यासनात्मकब्रह्मात्मभावनायुक्तानामनुपमप्रकाशानन्दाविर्भावलक्षणः प्रत्यगभिन्नब्रह्मसाक्षात्कारस्तत्फलभूतसदेहादेहमोक्षश्च निर्विकल्पकसमाध्यभ्यासेन सम्पादनीय इति वर्णयंस्तावत्तदर्थं स्थाननियममुपदिशति ॥ **एकान्ते इति** । एकान्ते निर्विकल्पकसमाधिप्रतिबन्धकदुर्जनादिवर्जिते स्थाने सुखं यथा भवति तथास्यतां स्थीयताम् । न तु योगशास्त्रोक्तासननिर्बन्धेन विक्षिप्यतामित्यर्थः ॥ **परतरे इति** । "इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" ॥ "॥ इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः" इत्यादिश्रुतिस्मृतिनिर्णीते सर्वोत्तीर्णस्वरूपे परमात्मनि चेतः समाधीयतां निर्विकल्पकसमाध्यभ्यासेन निरुन्ध्यताम् । निर्विकल्पसमाधिस्तु विवेकभावनादिवशादानन्दातिशयेन ज्ञातृज्ञानादित्रिपुटीलयपूर्वकं चित्तस्य निरतिशयानन्दरूपे

---

१ करुणाशब्दव्यपदेशस्य । २ मैत्र्यादित्रयम् । ३ तत्त्वविदः । ४ अवधारितज्ञाने

ब्रह्मण्यवस्थानम् । तथा च भगवद्वाक्यं सदृष्टान्तमर्जुनं प्रति । "यदा विनियतं चित्तमात्मन्येवावतिष्ठते । निस्पृहः सर्वकामेभ्यो युक्त[1] इत्युच्यते तदा ॥ १ ॥ यथा दीपो निवातस्थो नेङ्गते सोपमा[2] स्मृता[3] । योगिनो यत[4]चित्तस्य युञ्जतो योगमात्मनः ॥ २ ॥" इति । ननु भगवता पतञ्जलिमुनिना "प्रमाण[5]-विपर्यय[6]विकल्प[7]निद्रा[8]स्मृत्य[9]ात्मकनिरोधलक्षणो निर्विकल्पकः समाधिर्योग-शब्देन प्रतिपादितः ॥ "योगश्चित्तवृत्तिनिरोधः" इति ॥ स त्वष्टाङ्गः ॥ अस्याङ्गानि तु " यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः "॥ अत्र " अहिंसासत्या-स्तेय[10]-ब्रह्मचर्यापरिग्रहाः[11] यमाः " ॥ " शौचसन्तो-षतपःस्वाध्यायेश्वरप्र[12]णिधानानि " नियमाः ॥ " करचरणादिसंस्थानविशेष-लक्षणानि पद्मकादीनि" आसनानि । " पूरककुम्भकरेचकलक्षणः प्राणनि-ग्रहोपायः"प्राणायामः ॥"इन्द्रियदशकस्य स्वस्मात्विषयसंघात्प्रत्याहरणं" प्रत्या-हारः ॥ " देशबन्धश्चित्तस्य धारणा" ॥ "तत्र प्रत्ययैकतानता ध्यानम्" ॥ "ज्ञातृज्ञानादित्रिपुटीनिरसनमन्तरेण तस्मिन्नेव प्रदेशे चित्तस्यावस्थानं सविकल्प-

---

१ समाहितः । २ दृष्टान्तः।७ तज्ज्ञैः । ३ यतचित्तस्य योगिनो योगं युञ्जतोऽनुतिष्ठतो य आत्मान्तःकरणं तस्य निश्चलतया सत्त्वोद्रेकेण प्रकाशतया च निश्चलो दीपो दृष्टान्तः । ५ प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्यभावाख्यानि षड्विधानि प्रमाणानि । ६ मिथ्याज्ञानं विपर्ययः । तस्य पञ्च भेदाः । अविद्यास्मितारागद्वेषाभिनिवेशाः । ७ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । प्रमाभ्रमविलक्षणोसदर्थव्यवहारः । शशविषाणमसत्पुरुषस्य चैतन्यमित्यादि । ८ अभावप्रत्ययालम्बनावृत्तिरेव निद्रा । चतसृणां वृत्तीनामभावस्य प्रत्ययः करणं तमोगुणस्तदालम्बना वृत्तिरेव निद्रा । न तु ज्ञानाद्यभावमात्रमित्यर्थः । ९ अनुभूतविषयासम्प्रमोषः प्रत्ययः स्मृतिः । पूर्वानुभवसंस्कारजं ज्ञानमित्यर्थः ॥ सर्व-वृत्तिजन्यत्वादन्ते कथनम् । लज्जादिवृत्तीनामपि पञ्चस्वेवान्तर्भावो द्रष्टव्यः ॥

१० अदत्तादानम् । ११ समाध्यनुष्ठानानुपयुक्तस्य वस्तुतोऽसंग्रहः । १२ ईश्वरप्राणिधानं तु भगवता पतञ्जलिमुनिना सूत्रद्वयेन प्रतिपादितम् । "तस्य वाचकः प्रणवः" । "तज्जप-स्तदर्थभावनम् " इति ।

कः समाधिः ॥ श्रीमद्गौडपादैरपि निर्विकल्पसमाधिप्रतिबन्धकविघ्नपरिहारोपायः । "उपायेन[1] निगृह्णीयाद्विक्षिप्तं[2] कामभोगयोः[3] । सुप्रसन्नं लये चैव यथाकामो[4] लयस्तथा ॥ १ ॥ दुःखं[5] सर्वमनुस्मृत्य कामभोगान्[6] निवर्तयेत् । अजं[7] सर्वमनुस्मृत्य जातं[8] नैव तु[9] पश्यति ॥ २ ॥ लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥ ३ ॥ नास्वादयेत्सुखं तत्र[10] निःसङ्गः प्रज्ञया भवेत् । निश्चलं[11] निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः[12][13] ॥ ४ ॥ यदा[14] न लीयते चित्तं न च विक्षिप्यते पुनः । असङ्गिनम्[15] अनाभासं निष्पन्नं ब्रह्म तत्तदा[16]" ॥ ५ ॥ इति श्लोकपञ्चकेन दर्शितः । तस्माद्विनैवाष्टाङ्गैर्विघ्नप-

---

१ वक्ष्यमाणवैराग्याभ्यासेन । २ कामभोगयोर्विक्षिप्तं प्रमाणविपर्ययविकल्पस्मृतीनामन्यतमयापि वृत्त्या परिणतं मनो निगृह्णीयादात्मन्येव निरुन्ध्यादित्यर्थः । कामभोगयोरिति चिन्त्यमानावस्थाभुज्यमानावस्थाभेदेन द्विवचनम् । ३ आयासरहितं । निगृह्णीयात् । ४ यथाकामो विषयगोचरप्रमाणादिवृत्त्युत्पादनेन समाधिविरोधी तथा लयोऽपि निद्राख्यवृत्त्युत्पादनेन समाधिविरोधी । ५ उपायमाह–दुःखमिति । ६ मर्त्यम् । ७ द्वैतविस्मरणं तु परमोपाय इत्याह–अजमिति । ब्रह्म । ८ द्वैतजातम् । ९ अधिष्ठानज्ञाने कल्पितस्याभावात् पूर्वोपायापेक्षया वैलक्षण्यसूचनाय तुशब्दः । १० समाधौ । ११ प्रयत्नवशीकृतम् । १२ निरोधप्रयत्नेन । १३ केनचिद्विषयाकारेण न भासते । १४ चित्तम् । १५ प्रज्ञया सुखं नास्वादयेत् एतावन्तं कालमहं सुखीति सुखास्वादरूपां वृत्तिं न कुर्यात् समाधिभङ्गप्रसङ्गात् । प्रज्ञया यदुपलभ्यते सुखं तदविद्यापरिकल्पितं मृषैवेत्येवंभावनया निःसङ्गः सर्वसुखेषु भवेत् । अथवा प्रज्ञया सविकल्पसुखाकारवृत्तिरूपया सह सङ्गं परित्यजेत् । निश्चरत्स्वभावचाञ्चल्याद्विषयाभिमुखं बहिर्गच्छन् समे ब्रह्मण्येकतां नयेत् ॥ ४ ॥ १६ समप्राप्तं चित्तं कीदृशमित्यत आह–यदेति । यदा न लीयते, नापि स्तब्धीभवति तामसत्वसाम्येन लयशब्दस्यैव स्तब्धीभावस्योपलक्षणात् । न च विक्षिप्यते । पुनः न शब्दाद्याकारवृत्तिमनुभवति नापि सुखमास्वादयति राजसत्वसाम्येन सुखास्वादस्यापि विक्षेपशब्देनोपलक्षणात् । पूर्वभेदनिर्देशस्तु पृथक्प्रयत्नकरणाय । ज्ञानं चलनं सवातदीपवद्विषयाभिमुखरूपं तद्रहितं निवातदीपकल्पम् ॥ ५ ॥

रिहारमन्तरेणापि च समाधिलाभो न भविष्यतीति चेत्सत्यं तत्र तत्र मन्द-विवेकिनं प्रति एतदुपायजालं प्रतिपादितम । इह तु भगवता भाष्यकारेण तन्निरपेक्ष्येणैव महतां विवेकशालिनां सुखेन भावनामात्रवशात्समाधिलाभ उद्दिष्टः । एवंभूतत्रिपुटीलयात्मकाखण्डानन्दाविर्भावलक्षणनिर्विकल्पकसमाधि-रपि वृत्त्यभावेनानुद्भूवासनात्मकसुषुप्त्यवस्थावद्दुःखातिशयेनाभिभूतवासना-रूपमूर्च्छावस्थावच्च, पानातिशयेनेन्द्रियमनसां सम्प्रमोषलक्षणमदवद्वा न शङ्क-नीयः।तत्र तत्र स्वस्वरूपाज्ञानमात्रानुसन्धानस्यैव ततस्तत उत्थितानां परामर्शोप-पत्तेरुपलभ्यमानत्वादित्यभिप्रेत्य ब्रह्मात्मभावनायुक्तानां समाधिसमये प्रकाशा-नन्दानुभव एवावशिष्यते इत्याह—**पूर्णात्मा इति** । पूर्णात्मा " स एव पुरस्तात्स पश्चात्स दाक्षिणतः स उत्तरतः स एवेदं सर्वं वृक्ष इव स्तब्धो दिवि[1] तिष्ठत्येकस्तेनेदं पूर्णं[2] पुरुषेण सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतिषु प्रसिद्धोऽखण्डनिरतिशयानन्दरूपः परमात्मा आशु तत्क्षणमेव सम्यक् स एवाहमित्यभेदेनाखण्डाकारबुद्धिवृत्त्या ईक्ष्यतां साक्षात्क्रियतामित्यर्थः । " यदि वापि समाधानैर्निर्विकल्पे स्थितिं व्रजेत् । तदक्षयसुषुप्त्याभं तन्मन्येतामलं पदम् ॥ १ ॥ न च पाषाणता तुल्या रूढिं याताः समाधयः । भवन्त्यग्रं पदं शान्तं चिद्रूपमजमव्ययम् ॥ २ ॥" इत्यादिवचनैः समाधिना ब्रह्मात्मलाभो न भविष्यतीति न विभावनीयम् । तत्र तत्र विवेकाभावेन केनचिन्निरोधाभ्यासेन सम्पादितनिर्विकल्पकसमाधिना साक्षात्काराभावो निरू-पितः । इह त्वौपनिषदानां परमहंसानां सत्यानृतविवेकवतां प्रत्यगभिन्नब्रह्म-भावनया समासादितनिर्विकल्पसमाधिना तत्क्षणमेव पूर्णात्मसाक्षात्कार इति भावः ॥ न च " केवलस्य प्रत्यगात्मनः स्वप्रकाशत्वाद् बुद्धिवृत्तिविषयत्वं न

---

१ स्वेमहिम्नि । २ पूरितम् ।

घटत " इति वाच्यम् । अज्ञाननिवृत्त्यर्थं वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् ॥ "मनसैवेदमाप्तव्यम्" "अप्रमेयमनाद्यं च" इत्यादिश्रुतिभ्यश्च । तदुक्तम्—

" स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत् । फल[1]व्याप्यत्वमेवास्य[2] शास्त्रकृद्भिर्निराकृतम्[3] ॥ १ ॥ बुद्धि[4]तत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् । तत्र[5]ाज्ञानं धिया[6] नश्येताभासेन घटः[7] स्फुरेत् ॥ २ ॥ ब्रह्मण्य[8]ज्ञानना[9]शाय वृत्तिव्याप्तिरपेक्षिता । स्वयं स्फुरणरूपत्वान्नाभासं[10] उपयुज्यते ॥ ३ ॥ चक्षु[11]र्दीपावपेक्ष्येते घटादे[12]र्दर्शने यथा । न दीपदर्शने किन्तु चक्षुरेकमपेक्ष्यते ॥४॥ स्थितो[13]ऽप्यसौ चिदाभासो ब्रह्मण्येकीभवेत्परम् । न तु ब्रह्मण्यतिशयं फलं कुर्याद्घटादिवत्" इति ॥ ५ ॥ सात्वखण्डाकाराकारिता बुद्धिवृत्तिः प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते । तदाखिलकारणेऽज्ञाने बाधिते सति, स्वयमेवापि बाधिता भवति इति सर्वथाऽविरोध इति ॥

ननु पूर्णात्मलाभेऽपि व्युत्थानसमये कुद्दालकोटिभिर्दुर्भेद्यस्य दृश्यवृन्दस्य निवृत्तिः कथं स्यादित्याह—**जगदिदमिति** । इदं स्थूलसूक्ष्मात्मकं दर्शन

---

१ तर्ह्यपसिद्धान्त इत्याशङ्क्य पूर्वाचार्यैरपि वृत्तिव्याप्यत्वस्याङ्गीकृतत्वान्नायमपसिद्धान्त इति परिहरति । फलेति । फलं वृत्तिप्रतिबिम्बितश्चिदाभासस्तद्व्याप्यत्वम् । २ प्रत्यग्ब्रह्मणः । ३ स्वस्यैव स्फुरणरूपत्वात् । ४ आत्मनिफलव्याप्यत्वाभावं दर्शयितुमनात्मनो वृत्त्या फलेन च व्याप्यत्वं दर्शयति । बुद्धीति । ५ उभयोः प्राप्तेः प्रयोजनमाह । तत्रेति । ६ प्रमाणभूतया नश्येत ज्ञानाज्ञानयोर्विरोधात् । ७ जडत्वेन स्वतः स्फुरणायोगात् । ८ इदानीं ब्रह्मणि ततो वैलक्षण्यं दर्शयति । ब्रह्मणीति । ९ प्रत्यग्ब्रह्मणोरेकत्वस्याज्ञानेनावृतित्वात् । १० घटादिव्यवहारेषु युज्यमानोऽपि चिदाभासोऽत्र नोपयुज्यते । ११ उक्तमर्थं दृष्टान्तप्रदर्शनेन विशदयति । चक्षुरेति।१२ तमसावृतस्य ।१३ ननु बुद्धिवृत्तीनां चिदाभासवैशिष्ट्यस्वाभाव्याद्घटादिष्विव ब्रह्मण्यपि फलव्याप्तिर्बलाद्भवेदित्याशङ्क्याह ॥स्थित इति । यद्यपि घटाकाराद्याकारवृत्तिवद्ब्रह्मगोचरवृत्तावपि चिदाभासोऽस्तीति तथापि नासावाभासः ब्रह्मणो भेदेन भासते, किन्तु प्रचण्डातपमध्यवर्तिप्रदीपप्रभावत्तेनैकीभूत इव भवतीति ॥

स्मरणविषयमध्यासभूतं " गच्छति बाधाम् " इति जगत्तत्तेनाधिष्ठानदर्शनेन दण्डमालादिदर्शनेन सर्पत्वमिव बाधितं संमार्जितं दृश्यतामित्यर्थः ॥ एवं-भूतस्य ब्रह्मसाक्षात्कारवतः । "तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ" इति श्रीमगवद्व्यासोक्तसूत्रदर्शितन्यायेन लक्षणमुपदेशभङ्ग्या विवृणोति । प्राक्कर्मेति । अनेकभवपरम्परामारभ्य साक्षात्कारपर्यन्तं सत्वादिगुणभेदेन शुभाशुभात्मकं नानात्वेन कृतं स्वाज्ञानक्षेत्रे सस्यराशिरिव प्राक्संचितं कर्म स्वप्रकाशपरमानन्दरूपा या चितिस्तस्या बलात्तदात्मकत्वनिश्चयलक्षणात्प्रविलाप्यतां प्रकर्षेण सर्वकर्माश्रयभूताज्ञाननाशपूर्वकं यथा भवति तथा विलाप्यतां विनाश्यतामित्यर्थः॥ चितिबलादित्यस्य पदस्य देहलीदीपन्यायेनोत्तरत्रापि योजना ॥ उत्तरे ब्रह्मसाक्षात्कारानन्तरं क्रियमाणे कर्मणि तेन चितिबलेन वर्णितेन न च श्लिष्यतामहं कर्तेदं मया कार्यमित्यादि अविवेकजन्यनिश्चयपरिहारेणाश्लेषः क्रियतामित्यर्थः । "क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परावरे " इति श्रुतेः ॥ तथा च स्मृतिः । "यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति ।

ननु देहात्मबुद्धिवत्परात्मत्वनिश्चयदार्ढ्येन महतां ब्रह्मसाक्षात्कारवतां भवतु कर्मद्वयपरिहारोऽपि, प्रारब्धकर्मणोऽतिप्रबलत्वान्न केनाप्युपायेन तन्नाशं प्रत्याशा " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि " इति श्रुतेः ॥ तदसंक्षये संसारो दुर्वार इत्याशङ्क्य, प्रारब्धकर्मणामसक्ततया भोगमात्रेणैव ब्रह्मविदामनायासेन निवृत्तिर्भवतीत्याह—प्रारब्धमिति । तुशब्दः पक्षान्तरे इहास्मिन्संसारे विदुषां क्रीडास्थाने प्रागारब्धं कर्म स्वेच्छादिभेदेन त्रिविधं भिक्षाटनादि स्वेच्छाकृतम्, शिष्यादिभिर्दीयमानमन्नादिकं परेच्छाकृतम् आकाशफलपातवदकस्मात्पाषाणपतनकण्टकवेदनादिकमनिच्छाकृतं

१ ब्रह्मसाक्षात्कारे । २ ब्रह्मसाक्षात्कारवतः ।

देहयात्रामात्रार्थं बाधितानुवृत्त्या भुज्यतामित्यर्थः । न च दृश्यासम्भवबोधयुक्तस्य तत्त्वविदः सर्वथेच्छाभावएवोपयुज्यत इति वाच्यम् । दृश्यासम्भवबोधेन नास्तीच्छाभावः, किन्तु विद्वदिच्छाया इष्यमाणपदार्थस्यासत्त्वज्ञानेन बाधितत्वाद्वासनादिकार्याक्षमत्वाच्च, भर्जितबीजवदाभासरूपा सती आरब्धफलभोगायैव सोपयुज्यते ॥ तदुक्तम् "नेच्छानिषेधः किन्त्विच्छाबाधो भर्जितबीजवत् । भर्जितानि तु बीजानि सन्त्यकार्यकराणि च ॥१॥ विद्वदिच्छा तथेष्टव्यासत्त्वबोधान्न कार्यकृत् । दग्धबीजमनारोपिभक्षणायोपयुज्यते ॥ २ ॥ विद्वदिच्छाप्यल्पभोगं कुर्यान्न व्यसनं बहु" इति ॥

एवंभूतस्य संसारबन्धनिर्मुक्तस्य साक्षात्कृतस्वप्रकाशसर्वावभासकस्वात्मदेवस्यावस्थाभेदेन ब्रह्मविद्ब्रह्मविद्वर-ब्रह्मविद्वरीयान्-ब्रह्मविद्वरिष्ठ इति संज्ञाचतुष्टयभेदो वेदान्तेषु प्रसिद्धः ॥ तथाहि । यस्य श्रवणमनननिदिध्यासनसमाध्यभ्यासेन निर्विकल्पब्रह्मात्मसाक्षात्कारलाभस्तत्प्रभावात्समग्रदृश्यवृन्दं प्रतीन्द्रजालवत् स्वप्ननगरादिवद्वा भवत्यपि सत्त्वप्रतीतिः । तथापि प्राग्वासनाप्राबल्याद्द्वैतैकगोचरसमाधिपूर्वकालीनात्प्रयत्नादपि चानिच्छतोऽपि सहसैव निर्विकल्पसमाधिभङ्गस्तस्य ब्रह्मविदित्यभिधानम् । सोऽयं भगवता वसिष्ठेन निर्विकल्पसन्मात्रसाक्षात्कारात्मक "सत्त्वापत्ति" नामकचतुर्थभूमिकाकथनेन कथितः । सा तु सर्वस्य जगतो मिथ्यात्वेन स्फुरणात्स्वप्नावस्था ॥ तदुक्तम् । "अद्वैते स्थैर्यमायाते चित्ते च प्रशमं गते । पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिता" इति अतः परं तिस्रोऽवस्था जीवन्मुक्तेरेवावान्तरभेदास्तेनैव

१ नाङ्कुरादिकार्यकराणि । २ ननु विदुष इच्छैवनाङ्गीकर्तव्या फलाभावादित्याशंक्य, फलाभावोऽसिद्धो, भोगलक्षणसद्भावादिति सदृष्टान्तमाह-दग्धबीजमिति । भर्जितबीजम् ३ अङ्कुराऽजनकम् । ४ प्राक्कालोद्भूतात् । ५ निर्विकल्पसमाधिद्वारा । ६ असत्त्वप्रतीत्या । ७ तेनापीत्यपिपाठः । वसिष्ठेनापि ।

भगवता भूमिकाभेदोनोक्ताः । तथाहि । " चतुर्थी भूमिका ज्ञानं तिस्रः स्युः साधनं पुरा । जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः " इति यस्तु निरायासेन निर्विकल्पसमाधिमनुभवंस्ततो व्युत्थानं च सुषुप्तेः स्वप्न इव स्वत एव प्राप्नोति, व्युत्थानसमयेऽन्तःकरणज्ञानकर्मेन्द्रियशरीरैः स्वात्मन्यध्यस्तैः स्फटिकमणौ विविधकुसुमादियोगेन विचित्रवर्णतावन्मिथ्यात्वेन प्रतीयमानैः पूर्ववासनानुवृत्त्या यथेष्टाचरणवर्जनपुरःसरं सदाचारक्रमेण क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात्परमार्थतो न पश्यति, यथा दर्पणान्तर्गतं गिरिग्रामादिकमिति ज्ञानवांस्तदिदं गिरिग्रामादिकं पश्यन्नपि परमार्थमिदमिति न पश्यति ॥ "सचक्षुरचक्षुरिव, सकर्णोऽकर्ण इव" इत्यादिश्रुतेः ॥ उक्तं च । " यथास्थितमिदं यस्य व्यवहारवतोऽपि च । अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते " इति । स ब्रह्मविद्वर इत्युच्यते । सोऽयं भगवता वसिष्ठेन "असंसक्ति" नामकपञ्चमभूमिकाप्रदर्शनेन दर्शितः । यदैवंविधसाक्षात्कारयुक्तस्य निरतिशयानन्दाद्वितीयस्वात्मानुसन्धानप्रागल्भ्येन निर्विकल्पसमाधिश्चिरकालस्थायी भवति ततो व्युत्थानं तु परप्रयत्नेनैव स्यात्तदा तं ब्रह्मविद्वरीयानिति व्यपदिशन्ति तत्त्वविदः ॥ सोऽयं भगवता वसिष्ठेन "पदार्थाभावनात्मक"षष्ठीभूमिकानिरूपणेन निरूपितः ॥ पुनस्तेन पञ्चमी भूमिका सुषुप्तिः कथिता । समाधेः स्वत एव व्युत्थानात् । षष्ठी तु गाढसुषुप्तिः परप्रयत्नमन्तरेणानुत्थानात् । " पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् । षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् " इति ॥ यदि निर्विकल्पसमाधेर्न स्वतो न वा परतो व्युत्थितो भवति, किन्तु सदा तन्मय एव स्यात्, स्वप्रयत्नमन्तरेणैव परमेश्वरप्रेरितप्राणवायुवशादन्यैर्निर्वा-

१ शुभेच्छादि ।

ह्यमाणदैहिकव्यवहारः परिपूर्णपरमानन्दघन एव सर्वथा तिष्ठति तर्हि "ब्रह्म-विद्वरिष्ठ" इति नाम्ना परिगीयमानस्तज्ज्ञैः ॥ सोऽयं भगवता वसिष्ठेन भेदाभानेनाखण्डभूमानन्दात्मकस्वस्वरूपैकनिष्ठालक्षण-तुर्यावस्था सप्तमी-भूमिकाप्रपञ्चनेन प्रपञ्चितः इति। जीवन्मुक्तिमुपवर्ण्येदानीं विदेहमुक्तिं वर्णयति।

**अथ परब्रह्मात्मना स्थीयतामिति।** अथ प्रारब्धकर्मावसाने प्रत्यगानन्दरूपे परब्रह्मणि प्राणे लीने सति अज्ञानतत्कार्यसंस्काराणामपि नाशात्परं सर्वोत्तीर्णं परमकैवल्यमानन्दैकरसमखिलभेदबुद्धिप्रतिभासरहितं यदखण्डं ब्रह्म तदा-त्मना स्थीयतामित्यर्थः। तथा च श्रुतिः। "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयते विमुक्तश्च विमुच्यते" इति ॥ चतुर्थी भूमिका तु तत्त्वसाक्षा-त्कार एव। पञ्चमषष्ठसप्तमभूमयस्तु जीवन्मुक्तेरेवावान्तरभेदा इति व्याख्यायते॥

तत्र चतुर्थीं भूमिं प्राप्तस्य तत्त्वविदो मृतस्य जीवन्मुक्त्यभावेऽपि विदेहकैव-ल्यं प्रति नास्त्येव संशयः। उक्तं हि। "गोदोहमिषुपातं वा नयनोन्मीलनं च वा। सकृज्जाते परे तत्त्वे स मुक्तो मोचयेत्परान् इति॥ तदुत्तरभूमिकात्रयं प्राप्तो ब्रह्मविद्वरो,ब्रह्मविद्वरीयान्,ब्रह्मविद्वरिष्ठ इति संज्ञाभेदैर्व्यवह्रियमाणो जीव-न्नपि मुक्तः किमु विदेह इति। नास्त्येव भूमिकाचतुष्टयप्राप्तान्प्रति विदेहकै-वल्यशङ्का ॥ ये तु ब्रह्मसाक्षात्कारसाधनभूतासु तिसृषु भूमिषु देहमुत्सृ-जन्तः, तेषामेव प्राणोत्क्रान्तिसमये विदेहकैवल्याभावो भवति। पुनर्मानुष्ये चरमशरीरे जीवन्मुक्तिलाभेन विदेहकैवल्यभाजो भवन्तीति भगवद्वसिष्ठरामसं-वादेनावगम्यते। श्रीरामः। "एकामथ द्वितीयां वा तृतीयां भूमिकामुत। आरूढस्य मृतस्यापि कीदृशी भगवन्गतिः" ॥ नित्यानित्यवस्तुविवेकपूर्विका-दिहामुत्रार्थभोगवैराग्याच्छमदमश्रद्धातितिक्षासर्वकर्मसंन्यासादिपुरःसरा मुमुक्षा "शुभेच्छाख्या" प्रथमभूमिका ॥ साधनचतुष्टयसम्पदिति यावत् ॥१॥ ततो गुरुमुपसृत्य वेदान्तवाक्यविचारणात्मिका द्वितीया भूमिका श्रवणमननसम्प-

दिति यावत् ॥ २ ॥ ततो मनसः सूक्ष्मवस्तुग्रहणयोग्यतारूपा “ तनुमानसाख्या” तृतीया भूमिका । निदिध्यासनसम्पदिति ॥ ३ ॥ एवंविधासु साधनरूपासु तिसृषु भूमिष्वारूढं मृतं प्रति श्रीरामस्य भवशङ्का । श्रीवसिष्ठः । “योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः । भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ १ ॥ ततः सुरविमानेषु लोकपालपुरेषु च । मेरूपवनकुञ्जेषु रमते रमणीसखः ॥ २ ॥ ततः सुकृतसम्भारे दुष्कृते च पुरा कृते । भोग[1]क्षयात्परिक्षीणे जायन्ते योगिनो भुवि ॥ ३ ॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् । जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥ ४ ॥ तत्र प्राग्भावनाभ्यस्तं योगभूमित्रयं बुधाः । दृष्ट्वा परिपतन्त्युच्चैरुत्तरं भूमिकात्रयम् ” ॥ ५ ॥ इति ॥ तत्र प्राग्वासनाप्राबल्यादल्पकालाभ्यस्तवैराग्यवासनादौर्बल्येन प्राणोत्क्रान्तिसमये प्रादुर्भूतभोगस्पृहः सर्वकर्मसन्न्यासी यः तस्य शुचीनां श्रीमतां गेहे जन्मग्रहणोक्तिः । यस्तु वैराग्यवासनाप्राबल्यात्प्रकृष्टपुण्यप्रकटितपरमेश्वरप्रसादवशेन प्राणोत्क्रान्तिसमयेऽनुद्भूतभोगस्पृहः सन्न्यासी तस्य भोगव्यवधानं विनैव सतां ब्रह्मविदां ब्राह्मणानामेव गुप्ते सर्वप्रमादकारणशून्ये गृहे जन्मग्रहणोक्तिः ॥ तस्यैव श्रीभगवत्कृष्णार्जुनसंवादेऽपि । श्रीअर्जुन उवाच । “[2]अयतिः श्रद्धयोपेतो योगाच्चलितमानसः । अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ १ ॥ कच्चिन्नो[3]भयविभ्रष्टश्छिन्नाभ्रमिव नश्यति । [4]अप्र-

१ प्राचीनपुण्योपचयात्परिक्षीणे । २ अयतिरल्पयत्नः “ अल्पार्थे नञ् ” । “अलवणा यवागूः ” इत्यादिवत् । गुरुवेदान्तवाक्येषु विश्वासलक्षणा श्रद्धा । सा च स्वसहचरितानां शमदमादीनामुपलक्षणम् । तेनासौ साधनचतुष्टयसम्पन्नो गुरुमुपसृत्य वेदान्तवाक्यश्रवणादि कुर्वन्नपि परमायुषोऽल्पत्वेन मरणकाले चेन्द्रियाणां व्याकुलत्वेन साधनानुष्ठानासम्भवात् , योगाच्छ्रवणादिपरिपाकलब्धतत्त्वसाक्षात्काराच्चलितं तत्फलमप्राप्तं मानसं यस्य सः, कां गतिं स्वर्गतिं दुर्गतिं वा । कर्मणां परित्यागाज्ज्ञानस्यानुत्पत्तेः । ३ कर्मज्ञानमार्गाभ्यां विभ्रष्टः ॥ ४ देवयानपितृयानमार्गगमनहेतुभ्यामुपासनाकर्मभ्यां साधनाभ्यां रहितः ।

तिष्ठो महाबाहो विमूढो[4] ब्रह्मणः पथि[5] ॥ २ ॥ एतन्मे संशयं कृष्ण च्छेतुमर्हस्यशेषतः । त्वदन्यः संशयस्यास्य च्छेत्ता नह्युपपद्यते ॥ ३ ॥ श्रीभगवानुवाच । पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । नहि[6] कल्याण-कृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४ ॥ प्राप्य[9] पुण्यकृतांल्लोकानुषित्वा[11] शाश्वतीः समाः । शुचीनां[12] श्रीमतां[13] गेहे[14] योगभ्रष्टो[15]ऽभिजायते ॥ ५ ॥ अथवा[16] योगिना-मेव कुले भवति धीमताम्[17] । एतद्धि[18] दुर्लभतरं[19] लोके जन्म यदीदृशम् ॥ ६ ॥ तत्र[20] तं बुद्धिसंयोगं[21] लभते पौर्वदैहिकम्[22] । यतते[23] च ततो[24] भूयः[25] संसिद्धौ कुरुनन्दन" ॥ ७ ॥ इति ॥ एतेन साधनपराणामेव पुनरावृत्तिः, नतु सिद्धानां ब्रह्मसाक्षात्कारवताम् । "न स पुनरावर्तते न स पुनरावर्तते" इति श्रुतेः ।

**इति श्रीमच्छ्रीभगवत्पूज्यपाद-शङ्कराचार्यविरचितमुपदेशरत्न-पञ्चकं सम्पूर्णम् ॥**

इति श्रीमच्छ्री-आदिकारणापरनामक-पण्डितकाकनिधानेनोपदेशरत्न-पञ्चकस्य रत्नप्रभाव्याख्या कृता सम्पूर्णा ॥ श्रीकृष्णार्पणमस्तु ॥

---

४ अनुत्पन्नब्रह्मात्मसाक्षात्कारः । ५ ब्रह्मप्राप्तिमार्गे ज्ञाते । ६ यस्मात् । ७ शास्त्र-विहितकारी । ८ इहाकीर्तिं परत्र कीटादिरूपताम् । ९ तदेवं योगभ्रष्टस्य शुभकृत्त्वेन लोकद्वयेऽपि नाशाभावे । किं भवतीत्यपेक्षायां भोगस्पृहास्पृहाभ्यां द्वैविध्यं कल्पयित्वा प्रथमं प्रतिपक्षमाह । प्राप्येति । १० अश्वमेधादियाजिनामर्चिरादिमार्गेण । ११ वासमनुभूय । १२ तदन्ते श्रद्धानाम् । १३ विभूतिमताम् । १४ कुले । १५ जनकादिवत् । १६ द्वितीयं प्रति पक्षान्तरमाह । अथवेति । १७ ब्रह्मविद्यावतां दरिद्राणां ब्राह्मणानाम् । १८ हि प्रसिद्धं शुकादिवत् । १९ पूर्वस्मात् श्रीमद्गृहजन्मप्राप्तिलक्षण दुर्लभादपि दुर्लभं सर्व-कर्मसन्यासार्हात् । २० एतादृशस्य जन्मद्वयस्य दुर्लभत्वं कस्माद्यस्मात्तत्रेति । द्विप्रकारे जन्मनि । २१ ब्रह्मात्मैक्यविषयया बुद्ध्या संयोगं श्रवणादिसाधनकलापं यावत्पर्यन्त-मनुष्ठितं लभते प्राप्नोति । २२ पूर्वदेहोद्भवम् । २३ नतु केवलं लभत एव किन्तु यतते प्रयत्नं कुरुते । २४ साधनकलापानन्तरम् । २५ अधिकम् ।

उपदेशपञ्चकं-रत्नप्रभाटीकायुतम् ।

समाप्तम् ।

साधनचतुष्टयसम्पन्नानां मुमुक्षूणामुपयोगी

श्रीमद्भिः "मातुलू" इत्युपहितैः पण्डित-श्रीधरजीवैः

सहायितेन

पण्डित-केशवभट्टज्योतिर्विदा

संस्कृतः शोधितश्चायं

# योगवासिष्ठसारः ।

मुम्बय्यां

"श्रीविङ्कटेश्वर" स्टीम्-प्रेसाख्य-

मुद्रणयन्त्रालयेऽङ्कयित्वा प्राकाश्यं नीतः ।

सप्तर्षिवत्सरे ५००४ विक्रमसंवत्सरे १९८५

ईस्वीवत्सरे १९२८ परोपकाराय

प्राकाश्यं नीतः

मूल्यम् ।) आणकचतुष्कम् ॥

ॐ नमः प्रतीचे ब्रह्मणे ।

# अथ योगवासिष्ठसारः ।



दिक्कालाद्यनवच्छिन्नाऽनन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥
अहं बद्धो विमुक्तः स्यामिति यस्यास्ति निश्चयः ।
नात्यन्तमज्ञो नो तज्ज्ञः सोऽस्मिञ्छास्त्रेऽधिकारवान् ॥ २ ॥
यावन्नाऽनुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वाऽपि नो लभेत् ॥ ३ ॥
महानुभावसम्पर्कात्संसारार्णवलङ्घने ।
युक्तिः संप्राप्यते राम दृढा नौरिव नाविकात् ॥ ४ ॥
संसारदीर्घरोगस्य सुविचारो महौषधम् ।
कोऽहं कस्य च संसारो विवेकेन विलीयते ॥ ५ ॥
यस्मिन्देशे मरौ तज्ज्ञो नास्ति सज्जनपादपः ।
सफलः शीतलच्छायो न तत्र दिवसं वसेत् ॥ ६ ॥
सदा सन्तोऽभिगन्तव्या यद्यप्युपदिशन्ति न ।
या हि स्वैरकथास्तेषामुपदेशा भवन्ति ताः ॥ ७ ॥
शून्यमापूर्णतामेति मृत्युरप्यमृतायते ।
आपत्सम्पदिवाभाति विद्वज्जनसमागमात् ॥ ८ ॥

ज्ञानिनामपि चित्तं चेत्केवलात्मसुखोदितम् ।
सत्त्वाः संसारदुःखार्ताः कं यान्ति शरणं तदा ॥ ९ ॥
तज्ज्ञानं स च शास्त्रार्थस्तद्विज्ञानमखण्डितम् ।
सच्छिष्याय विरक्ताय साधुर्यदुपदिश्यते ॥ १० ॥
उपदेशक्रमो राम व्यवस्थामात्रपालनम् ।
ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवला ॥ ११ ॥
न शास्त्रैर्नापि गुरुणा दृश्यते परमेश्वरः ।
दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया ॥ १२ ॥
सर्वैव हि कला जन्तोरनभ्यासेन नश्यति ।
इयं ज्ञानकला राम सकृज्जाताऽभिवर्धते ॥ १३ ॥
स्वकण्ठेऽपि स्थितं वस्तु यथा न प्राप्यते भ्रमात् ।
भ्रमान्ते प्राप्यते तद्वदात्माऽपि गुरुवाक्यतः ॥ १४ ॥
स्वस्वरूपमऽजानन्वै जनोऽयं दैववञ्चितः ।
विषयेषु सुखं वेत्ति पश्चात्पाके[2] विषान्नवत् ॥ १५ ॥
बुद्ध्वाऽप्यऽत्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ।
बध्नाति भावनां भूयो नरो नासौ स गर्दभः ॥ १६ ॥
यत्किञ्चिदपि संकल्पान्नरो दुःखे निमज्जति ।
न किञ्चिदपि संकल्पात्सुखमक्षयमश्नुते ॥ १७ ॥
यथा स्वप्नमुहूर्ते स्यात्संवत्सरशतभ्रमः ।
तथा मायाविलासोऽयं जायते जाग्रति भ्रमः ॥ १८ ॥

---

१ श्रोत्रियब्रह्मनिष्ठः । २ परिणामे दुःखप्रदम् ।

योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ॥ १९ ॥
येन सम्यक् परिज्ञातं हेयोपादेयमुज्झता ।
चित्तस्यान्तः स्थितं चित्तं जीवितं तस्य शोभते ॥२०॥
हृदयाकाशमात्रस्य विनाशो देहनाशतः ।
व्यर्थं भूतानि शोचन्ति नष्ट आत्मेति शङ्कया ॥ २१ ॥
घटादिषु प्रनष्टेषु यथाऽऽकाशमखण्डितम् ।
तथा देहेषु नष्टेषु देही नित्यमऽलोपकः[1] ॥ २२ ॥
न जायते न म्रियते क्वचित्किञ्चित्कदाचन ।
जगद्विवर्तरूपेण केवलं ब्रह्म जृम्भते ॥ २३ ॥
आकाशादपि विस्तीर्णः शुद्धः सूक्ष्मोऽव्ययः शिवः ।
य आत्मा स कथं राम जायते म्रियतेऽथवा ॥ २४ ॥
सर्वमेकमिदं शान्तमादिमध्यान्तवर्जितम् ।
भावाभावविनिर्मुक्तमिति मत्वा सुखी भव ॥ २५ ॥
वरं[2] शरावहस्तस्य चण्डालागारवीथिषु ।
भिक्षार्थमटनं राम न मौर्ख्यहतजीवितम् ॥ २६ ॥
न व्याधिर्न विषं नापत्तथाऽन्यद्वाऽपि भूतले ।
दुःखाय स्वशरीरोत्थं[3] मौर्ख्यमेतद्यथा नृणाम् ॥ २७ ॥

इति श्रीयोगवासिष्ठसारे वैराग्यप्रकरणं प्रथमम् ।

---

१ नाशरहितः । २ मनाक्प्रियम् । ३ देहाभिमानोत्थम् ।

श्रीवसिष्ठः ।

संयमान्मनसः शान्तिमेति संसारविभ्रमः ।
मन्दरेऽस्पन्दतां याते यथा क्षीरमहार्णवः ॥ १ ॥
चित्तोन्मेषनिमेषाभ्यां संसारस्योदयक्षयौ ।
वासनाप्राणसंरोधादनुन्मेषं मनः कुरु ॥ २ ॥
अयं हि स्वविकल्पोत्थः स्वविकल्पपरिक्षयात् ।
क्षीयते दग्धसंसारो निःसार इति निश्चयः ॥ ३ ॥
परिज्ञानेन सर्पत्वं चित्रसर्पस्य नश्यति ।
यथा तथैव संसारः स्थित एवोपशाम्यति ॥ ४ ॥
पुंसो निजमनोमोहकल्पितोऽनल्पदुःखदः ।
संसारचिरवेतालो विचारेण विलीयते ॥ ५ ॥
ईदृशी राम मायेयं या स्वनाशेन हर्षदा ।
न लक्ष्यते स्वभावोऽस्याः प्रेक्षमाणैव नश्यति ॥ ६ ॥
अहो नु चित्रा मायेयं तात विश्वविमोहिनी ।
सर्वाङ्गप्रोतमप्येनं यया ऽऽत्मानं न पश्यति ॥ ७ ॥
यदिदं दृश्यते किञ्चित्तन्नास्ति किमपि ध्रुवम् ।
यथा गन्धर्वनगरं यथा वारि मरुस्थले ॥ ८ ॥
यत्तु नो दृश्यते किञ्चिदन्तिस्थमपि किञ्चन ।
अविनाशं यदस्तीह तत्सदात्मेति कथ्यते ॥ ९ ॥

---

१ ननु नष्टः । दर्पणे वदनमिव ।

स्वज्ञानदर्पणे स्फारे समस्ता वस्तुजातयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ १० ॥
सर्गश्चित्स्पन्दमात्रात्मा सम्यग्दृष्टौ विलीयते ।
उदेत्यऽसम्यग्दृष्टौ च रज्ज्वां सर्पभ्रमो यथा ॥ ११ ॥
भोगभावनया याति बन्धो दार्ढ्यमऽवस्तुजः ।
तयोपशान्तया याति बन्धो जगति तानवम् ॥ १२ ॥
मनः सम्पद्यते तस्मान्महतः परमात्मनः ।
स्वस्थिरादस्थिराकारं तरङ्ग इव वारिधेः ॥ १३ ॥
यत्स्वयं स्वैरमेवाशु सङ्कल्पयति नित्यशः ।
तेनेयमिन्द्रजालश्रीर्जागती[1] प्रवितन्यते ॥ १४ ॥
यथा बालस्य वेतालो मृत्युपर्यन्तदुःखदः ।
असदेव सदाभासं तथा मूढमतेर्जगत् ॥ १५ ॥
अव्युत्पन्नस्य विकृते कानके कटके यथा ।
कटकज्ञप्तिरेवास्ति न मनागपि हेमधीः ॥ १६ ॥
तथाऽज्ञस्य पुरागारनगनागेन्द्रगोचरा ।
इयं दृश्यदृगेवास्ति नत्वन्या परमार्थदृक् ॥ १७ ॥
अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ।
अन्धं भुवनमन्धस्य प्रकाशं तु सुचक्षुषः ॥ १८ ॥
यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम् ।
भूत्वा विलीयते तद्वदात्मनीहाखिलं जगत् ॥ १९ ॥

१ जगत्सम्बन्धिनी ।

आदित्याव्यतिरेकेण रश्मयो येन भाविताः ।
आदित्य एव ते तस्य निर्विकल्पः स उच्यते ॥ २० ॥
तन्तुमात्रो भवत्येव पटो यद्वद्विचारितः ।
आत्मतन्मात्र एवेदं तद्वद्विश्वं विचारितम् ॥ २१ ॥
विश्ववीचिविलासोऽयं चित्सुधाब्धेरुदेति च ।
विलीयते च तत्रैव मध्ये कथमतन्मयः ॥ २२ ॥
यथा न तोयतो भिन्नाः फेनोर्मिहिमबुद्बुदाः ।
आत्मनो न तथा भिन्नं विश्वमात्मविनिर्गतम् ॥ २३ ॥
मृदि कुम्भो जले वीचिः कनके कटकं यथा ।
आत्मनोऽपि तथा विश्वमात्मन्येव विलीयते ॥ २४ ॥
आत्माज्ञानाज्जगद्भाति ह्यात्मज्ञानाद्विलीयते ।
रज्ज्वज्ञानादहिर्भाति तज्ज्ञानाच्च निवर्तते ॥ २५ ॥
तस्याद्दश्यात्मतत्त्वस्य विस्मृत्यैव स्थितिं गतिम् ।
जगत्स्यादीश्वराद्राम! जगद्रज्जुभुजङ्गवत् ॥ २६ ॥
स्वप्नो जाग्रत्यऽसद्रूपः सुप्तौ जाग्रदऽसद्वपुः ।
मृतिर्जन्मन्यऽसद्रूपा मृतौ जन्माप्यऽसन्मयम् ॥ २७ ॥
एवं न सन्नासदिति भ्रान्तिमात्रं विजृम्भते ।
अनुभूयत एवाशु किञ्चित्सर्वानुभूतिषु ॥ २८ ॥
प्रथमे प्रकरणे ॥ २७ ॥ सर्वे श्लोकाः ।५५।
इति श्रीयोगवासिष्ठसारे जगन्मिथ्यात्ववर्णनं नाम द्वितीयं प्रकरणम् ॥ २ ॥

---

१ 'ईश्वरं ज्ञात्वा' । २ नश्वरम् । ३ प्रतिभासात्मत्वं विचारेणासत्त्वं, भ्रान्तावेवोपपन्नम् ॥

श्रीवसिष्ठः ।

ॐ तत्त्वावबोध एवैकः सर्वाशातृणपावकः ।
प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥ १ ॥
चिदाकारमिदं सर्वं जगदित्येव भावयन् ।
यस्तिष्ठत्युपशान्तात्मा स ब्रह्मकवचः सुखी ॥ २ ॥
सर्वातीतपदालम्भी पूर्णेन्दुशिशिराशयः ।
यस्तिष्ठति सदा योगी स एव परमेश्वरः ॥ ३ ॥
ब्रह्मोपनिषिदां तत्त्वं भावयन्योऽन्तरात्मना ।
नोद्वेगी न च तुष्टात्मा संसारे नावमज्जति ॥ ४ ॥
यथा पर्वतमादीप्तं नाश्रयन्ति मृगा द्विजाः ।
तद्वद्ब्रह्मविदं दोषा नाश्रयन्ति कदाचन ॥ ५ ॥
असन्त इव सन्तोऽपि कोपयन्ति परं नरम् ।
निजं कर्म[1] गुणोदारपरिपाकं[2] परीक्षितुम् ॥ ६ ॥
ज्ञात्वाप्यसर्पं सर्पोत्थं यथा कम्पं[3] न मुञ्चति ।
विध्वस्ताखिलमोहोऽपि मोहकार्यं[4] तथाऽऽत्मवित् ॥ ७ ॥
स्फटिकः प्रतिबिम्बेन यथा नायाति रञ्जनम् ।
तज्ज्ञः कर्मफलेनान्तस्तथा नायाति रञ्जनम् ॥ ८ ॥

---

१ दुर्वचसां सहनाऽसहनरूपम् । २ त्रिभिर्गुणैरुदारो यः परिपाकः फलम् यस्य तत् । निर्द्वन्द्वत्वमित्यर्थः । ३ किञ्चित्कालम् । ४ यावत्प्रारब्धभोगकालम् ।

अन्तर्मुखतया तिष्ठन्बहिर्वृत्तिपरोऽपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥ ९ ॥
अद्वैते स्थैर्यमायाते चित्ते च प्रशमं गते ।
योगिनः कर्म कुर्वन्ति पश्यन्तः स्वप्नवज्जगत् ॥ १० ॥
अद्यैव मरणं वाऽस्तु कल्पान्तनिचयेन वा ।
तज्ज्ञः कलङ्कं नाप्नोति हेम पङ्कगतं यथा ॥ ११ ॥
तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथवा ।
ज्ञानसम्प्राप्तिसमये मुक्तोऽसौ विगताशयः ॥ १२ ॥
गोष्पदं पृथिवी मेरुः स्थाणुराशाः समुद्रिकाः ।
तृणं त्रिभुवनं राम नैराश्यालंकृताकृतेः ॥ १३ ॥
अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाम्बरे ।
अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवे ॥ १४ ॥
ईप्सितानीप्सिते न स्तो यस्यान्तर्वस्तुदृष्टिषु ।
सुप्तवद्यश्च चरति स मुक्त इति कथ्यते ॥ १५ ॥
निर्ग्रन्थिः शान्तसन्देहो जीवन्मुक्तः स्वभावतः ।
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ॥ १६ ॥
अहङ्कारमयीं त्यक्त्वा वासनां लीलयैव यः ।
तिष्ठति ध्येयसन्त्यागी जीवन्मुक्तः स उच्यते ॥ १७ ॥

---

१ परिगत इतिकर्तव्यताश्रमो यस्य तथा कृतकृत्यत्वात् । २ यथाप्राप्तम् । ३ जलस्थाने । ४ रागद्वेषौ । ५ निरहंकारः । ६ प्रशममुपगतः । ७ मन्त्रितसर्पवत् ।

दूरे मुञ्चति बन्धुमन्धुमिव यः सङ्गाद्भुजङ्गादिव ।
त्रासं यो विदधाति वेत्ति सदृशं रोगं च भोगं च यः ॥
स्त्रैणे यस्तृणवद्घृणां प्रकुरुते मित्रेष्वमित्रेष्वपि।
स्वान्तं यस्य समं स मङ्गलमिहामुत्रापि मर्त्योऽश्नुते १८
हृदयात्संपरित्यज्य सर्वं दृश्यं प्रशान्तधीः ।
व्योमसौम्यतरोऽव्यग्रः स मुक्तः परमेश्वरः ॥ १९ ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥ २० ॥
अनात्मन्यात्मधीर्बन्धस्तन्नाशो मोक्ष उच्यते ।
बन्धमोक्षौ[1] न विद्येते नित्यमुक्तस्य चात्मनः ॥ २१ ॥
दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
सम्पन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ २२ ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इहोच्यते ॥ २३ ॥
अनन्ते चिद्घनानन्दे निर्विकल्पैकरूपिणि ।
स्थिते द्वितीयस्याभावात्को बद्धः कश्च मुच्यते ॥ २४ ॥
तस्मादुल्लासमात्रं तु मनसो बन्धतां गतः ।
मनःप्रशमने राम मोक्ष एवावशिष्यते ॥ २५ ॥
प्रथमयोः प्रकरणयोः ॥ ५५ ॥ सर्वे ८० ।

इति श्रीयोगवासिष्ठसारे जीवन्मुक्तप्रकरणं नाम तृतीयम् ॥ ३ ॥

---

१ बन्धमोक्षयोरन्योन्यापेक्षया भासमानत्वादात्यन्तिकोऽभाव इत्यर्थः।

श्रीवसिष्ठः ।

एषा स्वभावाभिमतं स्वतः संकल्य धावति ।
चेतना[1] स्वयमम्लाना[2] सैवेहा[3] मन आत्मनः ॥ १ ॥
एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः ।
विभागकल्पना शक्तिर्लहरीवोत्थिताऽम्भसः ॥ २ ॥
अन्तःसंकल्पसिद्धेयं संकल्पेनैव शाम्यति ।
येनैव जायते तेन वह्निज्वालेव वायुना ॥ ३ ॥
मनोऽमुनैवाभ्युदितं मनागेवानवेक्षणात् ।
स्वस्वप्ने मरणाकारं प्रेक्ष्यमाणं न विद्यते ॥ ४ ॥
असम्यग्दर्शनं यत्स्यादऽनात्मन्यात्मभावनम् ।
यदवस्तुनि वस्तुत्वं तन्मनो विद्धि राघव ॥ ५ ॥
अयं सोऽहमिदं तन्म एतावन्मात्रकं मनः ।
तदभावनमात्रेण विचारेण विलीयते ॥ ६ ॥
उपादेयानुपतनं हेयैकान्तविवर्जनम् ।
यदेतन्मनसो रूपं तद्बन्धं विद्धि नेतरत् ॥ ७ ॥
मनो हि जगतां कर्तृ मनो हि पुरुषः स्मृतः ।
मनःकृतं कृतं लोके न शरीरकृतं कृतम् ॥ ८ ॥
चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ।
तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ९ ॥

---

१ ज्ञानशक्तिः । २ अविकृतिस्वभावः । ३ चेष्टा । ४ भेददृष्टिः ।

राम वासनया बद्धं मुक्तं निर्वासनं मनः ।
तस्मान्निर्वासनीभावमावहाशु विवेकतः ॥ १० ॥
यथाऽभ्रलेखा शशिनं सुधालेपं मषी यथा ।
दूषयत्येवमेवान्तर्नरमाशापिशाचिका ॥ ११ ॥
अन्तर्मुखतया सर्वं चिद्वह्नौ त्रिजगत्तृणम् ।
जुह्वतोऽन्तर्निवर्तन्ते राम चित्तादिविभ्रमाः ॥ १२ ॥
तात चिन्मात्ररूपोऽसि न ते भिन्नमिदं जगत् ।
अतस्तव कथं कुत्र हेयोपादेयकल्पना ॥ १३ ॥
यदा न भाव्यते किञ्चिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ १४ ॥
घोरं[1] जाग्रन्मयं चित्तं मूढं[2] स्वप्नेऽप्यवस्थितम् ।
शान्तं[3] सुषुप्तभावस्थं त्रिभिर्हीनं[4] मृतं[5] भवेत् ॥ १५ ॥
विलाप्य पङ्कं कतकं रजोऽप्सु विलयं नयेत् ।
यथाऽऽत्मनि तथा विद्धि विलाप्य विलयं मनः ॥ १६ ॥
चित्तं जानीहि संसारं बन्धश्चित्तमुदाहृतम् ।
पादपः पवनेनेव देहश्चित्तेन चाल्यते ॥ १७ ॥
हस्तं हस्तेन संपीड्य दन्तैर्दन्तांश्च पीडयन् ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ १८ ॥

१ सत्यत्वबुद्ध्या क्षोभमयम् । २ परोक्षज्ञानेऽदृढे सति असता भासनात् । ३ अपरोक्षे दृढे सति विकल्पहीनम् । ४ पदार्थाभावनी षष्ठीत्यात्मिकायां ज्ञानभूमिकायां दृश्याभासात् पदैः । ५ निस्त्रैगुण्यम् ।

चित्तमेकं न शक्नोति जेतुं स्वातन्त्र्यवर्ति यत् ।
ध्यानवार्त्तां वदन्मूढः स किं लोके न लज्जते ॥ १९ ॥
एक एव मनोदेवो जितः सर्वार्थसिद्धिदः ।
अन्यत्र विफलः क्लेशः सर्वेषां तज्जयं विना ॥ २० ॥
अनुद्वेगः श्रियो मूलमनुद्वेगात्प्रवर्तते ।
जन्तोर्मनोजयादन्यत्त्रैलोक्यविजयस्तृणम् ॥ २१ ॥
सत्सङ्गो वासनात्यागोऽध्यात्मविद्याविचारणम् ।
प्राणस्पन्दनिरोधश्चेत्युपाया मनसो जये ॥ २२ ॥
पूर्णे मनसि सम्पूर्णं जगत्सर्वं सुधाद्रवैः ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ २३ ॥
नाहं ब्रह्मेति सङ्कल्पात्सुदृढं बद्धयते मनः ।
सर्वं ब्रह्मेति संकल्पात्सुदृढं मुच्यते मनः ॥ २४ ॥
चित्ते त्यक्ते लयं याति द्वैतमैक्यं च सर्वशः ।
शिष्यते च परं ब्रह्म शान्तं नित्यमनामयम् ॥ २५ ॥
चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योः सचेतसः ।
यो भवेत्परमानन्दः केनासावुपमीयते ॥ २६ ॥

प्रकरणत्रयाणां ८० । सर्वे श्लोकाः १०६ ॥

इति श्रीयोगवासिष्ठसारे तत्त्वनिरूपणं नाम चतुर्थं प्रकरणम् ॥ ४ ॥

---

१ आनिर्विद्य मुमुक्षुः । २ विवेकिनः ।

श्रीवसिष्ठः।

राम स्वात्मविचारोऽयं कोऽहं स्यामितिरूपकः।
चित्तदुर्द्रुमवृक्षस्य दहने दहनः स्मृतः॥ १॥
विचारदर्पणे लग्नां धियं धैर्यधुरं गताम्।
आधयो न विलुम्पन्ति वाताश्चित्रलतामिव॥ २॥
विचारोऽध्यात्मविद्यानां ज्ञानं तत्त्वविदो विदुः।
ज्ञेयं तस्यान्तरेवास्ति माधुर्यं पयसो यथा॥ ३॥
विचारेण परिज्ञातस्वभावस्योदितात्मनः।
अनुकम्प्या भवन्तीह ब्रह्मविष्णुशिवादयः॥ ४॥
किमिदं विश्वमखिलं किं स्यामहमिति स्वयम्।
विचारनिरतस्यैतदसदेव जगद्भवेत्॥ ५॥
यस्य मौर्ख्यं क्षयं यातं सर्वं ब्रह्मेति भावनात्।
नोदेति वासना तस्य प्राज्ञस्याम्बुमतिर्मरौ॥ ६॥
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम्।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु॥ ७॥
साधुसंगमसच्छास्त्रपरो भवसि राम चेत्।
तद्दिनैरेव नो मासैः प्राप्नोषीमां परां धियम्॥ ८॥
सत्सङ्गव्यवहारित्वाद्भवभावनवर्जनात्।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते॥ ९॥

१ मायासमुद्रे तृणवदुह्यमानत्वात्तेष्वपि सति सङ्गे कातर्यं भासते, किमुतान्येष्विति भावः।

दृढभावानुसन्धानाद्विमूढा अपि राघव ।
विषं नयन्त्यमृततताममृतं विषतामपि ॥ १० ॥
सत्यभावेन दृष्टोऽयं देहो देहो भवत्ययम् ।
दृष्टस्त्वऽसत्यभावेन व्योमतां याति देहकः ॥ ११ ॥
सुखतल्पगतो येन स्वप्नदेहेन दिक्तटान् ।
परिभ्रमसि हे राम स देहस्ते क साम्प्रतम् ॥ १२ ॥
देहोऽहमिति धीस्त्याज्या सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन सश्वमांसीव पुक्कसी ॥ १३ ॥
ब्रह्मैकं भावयन्साधो चर तिष्ठ गतव्यथः ।
ततस्तेऽसावहंकारः स्वयमेवोपशाम्यति ॥ १४ ॥
सर्वत्रैक्यावबोधेन स्वस्थोऽन्तःशीतलाशयः ।
निरहंकृतिराकाशविशदस्तेन संस्थितः ॥ १५ ॥
अन्तःशीतलतायां तु लब्धायां शीतलं जगत् ।
अन्तस्तापेन तप्तानां दावदाहमयं जगत् ॥ १६ ॥
चतुःप्रकरणानाम् १०६ । सर्वे १२२ ॥

इति श्रीयोगवासिष्ठसारे वासनापरामर्शो नाम पञ्चमं प्रकरणम् ॥ ५ ॥

---

१ बन्धनत्वमापद्यते ॥

श्रीवसिष्ठः ।

शुद्धो निरञ्जनोऽनन्तो बोधोऽहं प्रकृतेः परः ।
चेष्टमानमिमं देहं पश्याम्यन्यशरीरवत् ॥ १ ॥
एते हि चिद्विलासान्ता मनोबुद्धीन्द्रियादयः ।
असन्तः सन्त एवाहो अवधानं[२] विना स्थिताः ॥ २ ॥
आपद्यचलचित्तोऽस्मि जगन्मित्रं च सम्पदि ।
भावाभावविहीनोऽस्मि तेन जीवाम्यनामयम् ॥ ३ ॥
निरीहोऽस्मि निराशोऽस्मि स्वस्थोऽस्मि निःस्पृहः ।
शान्तोऽस्म्यहमरूपोऽस्मि चिरायुरचलस्थितिः ॥ ४ ॥
चिदेव पञ्च भूतानि चिदेव भुवनत्रयम् ।
विज्ञातमधुना सम्यगहमेव चिदेव हि ॥ ५ ॥
सर्वातीतः सर्वगश्च खमिवायमहं स्थितः ।
यत्तदस्ति तदेवास्मि वक्तुं शक्नोमि नेतरत् ॥ ६ ॥
मय्यनन्तचिदम्भोधावाश्चर्यं जीववीचयः ।
समुल्लसन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥ ७ ॥
मय्यनन्तचिदम्भोधौ विश्ववीच्यादिकल्पना ।
उदेतु वाऽस्तमायातु न मे वृद्धिर्न च क्षितिः ॥ ८ ॥
मदज्ञानोदितं विश्वं मय्येव लयमागतम् ।

---

१ चिज्ज्ञानोदय एवं नाशो येषां, सूर्योदय इव तमसाम् । २ मनोविक्षेप एवैषां जीवनम् ।

अपरोक्षचिदानन्दसाम्राज्यमधुनाऽस्म्यहम् ॥ ९ ॥
सर्वभूतान्तरस्थाय नित्यमुक्तचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥ १० ॥
पञ्चप्रकरणानाम् ॥ १२२ ॥ सर्वे श्लोकाः ॥ १३२ ॥

इति श्रीयोगवासिष्ठसारे आत्ममननं नाम षष्ठं प्रकरणम् ॥ ६ ॥

---

श्रीवसिष्ठः ।

बहिः कृत्रिमसंरम्भो हृदि संरम्भवर्जितः ।
कर्ता बहिरकर्ताऽन्तर्लोके विहर राघव ॥ १ ॥
अन्तः सन्त्यक्तसर्वाशो वीतरागो विवासनः ।
बहिः सर्वसमाचारो लोके विहर राघव ॥ २ ॥
अन्तस्त्वेको बहिर्नैको हृदि बोधो बहिर्जडः ।
अन्तस्त्यागी बहिः संगी लोके विहर राघव ॥ ३ ॥
पूर्णां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ।
जीवन्मुक्ततया स्वस्थो लोके विहर राघव ॥ ४ ॥
एको विशुद्धबोधोऽहमिति निश्चयवह्निना ।
प्रज्वाल्य द्वैतगहनमेक एव सुखी भव ॥ ५ ॥
देहोऽहमिति पाशेन दृढं बद्धोऽसि सर्वतः ।
बोधोऽहंज्ञानखड्गेन तं निकृत्य सुखीभव ॥ ६ ॥

---

१ धर्मधर्मिणोरभेदविवक्षया सम्राट्, स्वातन्त्र्यमित्यर्थः ॥

अनात्मनि रतिं त्यक्त्वा निर्विभागो जगत्स्थितौ ।
एकनिष्ठतयाऽन्तःस्थः सच्चिन्मात्रपरो भव ॥ ७ ॥
अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् ।
सचेतनं विशुद्धं च तन्मयो भव सर्वदा ॥ ८ ॥
मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ।
भावनामखिलां त्यक्त्वा यन्मयस्तन्मयो भव ॥ ९ ॥
संकल्पेनैव संकल्पं मनसैव मनो मुने ।
छित्त्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम् ॥ १० ॥
कस्तवायं जडो मूको देहो भवति राघव ।
यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥ ११ ॥
क्व मांसरुधिरास्थीनि क्व त्वं चैतन्यविग्रहः ।
विजानन्नपि देहेऽस्मिन्नात्मबुद्धिं जहासि किम् ॥ १२ ॥
एतावतैव देवेशः परमात्माऽवगम्यते ।
काष्ठलोष्टसमत्वेन देहो यदवगम्यते ॥ १३ ॥
अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् ।
यदसत्यमविद्याख्यं तत्पुरः परिवल्गते ॥ १४ ॥
अन्यच्चित्रं यत्परमं ब्रह्म तद्विस्मृतं नृणाम् ।
यन्मेदमविद्याख्यं तत्पुरः प्रबलायते ॥ १५ ॥
षट् प्रकरणानाम् ॥ १३२ ॥ सर्वे श्लोकाः ॥ १४७ ॥

इति श्रीयोगवासिष्ठसारे ब्रह्मनिरूपणं नाम सप्तमं प्रकरणम् ॥ ७ ॥

श्रीवसिष्ठः ।

यदि देहं पृथक्कृत्य चिति विश्रम्य तिष्ठसि ।
तदा तृणीकृताशेषः स्वयमेको भविष्यसि ॥ १ ॥
येनेदं वेत्सि तज्ज्ञात्वा कुरु प्रत्यङ्मुखं मनः ।
ततः प्रकाशरूपं त्वं द्रक्ष्यसि स्फुटमात्मनः ॥ २ ॥
येन शब्दं रसं रूपं गन्धं जानासि राघव ।
तमात्मानं परंब्रह्म जानीहि परमेश्वरम ॥ ३ ॥
यत्र भावा[1] हि निस्पन्दे निर्भीयन्ते च येन च ।
तमेवात्मानमात्मानं रूपं जानीहि राघव ॥ ४ ॥
यद्यज्ज्ञेयमिदं तत्त्वं नेति सन्त्यज्य युक्तिभिः ।
प्राप्यावशिष्टचिन्मात्रं सोऽस्मि सोऽस्मीति भावय ॥ ५ ॥
ब्रह्मविष्णुशिवेन्द्राद्या यद्यत्कुर्वन्ति सर्वतः ।
तदहं चिद्वपुः सर्वं करोमीत्येव भावय ॥ ६ ॥
ज्ञानं न भवतो भिन्नं ज्ञेयं ज्ञानात्पृथङ्न हि ।
अतो न त्वितरत्किञ्चित्तस्माद्भेदो न विद्यते ॥ ७ ॥
अहं सर्वमिदं विश्वं परमात्माऽहमव्ययः ।
न भूतं नास्मि नो भावि मत्तोऽन्यदिति भावय ॥ ८ ॥
एकं ब्रह्म चिदाकारं सर्वात्मकमखण्डितम् ।
निष्कम्पं भूरिवाशेषमिति भावय यत्नतः ॥ ९ ॥

---

१ द्वैतं स्फुराति । २ यत्सत्तया रज्जौ सर्पवत्प्रादुर्भवन्ति च ।

नाहं न चान्यद्वाऽस्तीति ब्रह्मैवास्ति निरन्तरम् ।
आनन्दपूर्वं [3] सर्वत्रेत्यनुद्वेगादुपास्यताम् ॥ १० ॥
ग्राह्यग्राहकसम्बन्धे सामान्ये सर्वदेहिनाम् ।
योगिनः सावधानत्वं यत्तदर्चनमात्मनः ॥ ११ ॥
सप्तप्रकरणानाम् ॥ १४७ ॥ सर्वे श्लोकाः ॥ १५८ ॥

इति श्रीयोगवासिष्ठसारे ब्रह्मनिरूपणं नामाष्टमं प्रकरणम् ॥ ८ ॥

श्रीवसिष्ठः ।

तस्मिन्देहेन्द्रियादीनां संघाते स्फुरति [3] स्वयम् ।
अयं सोऽहमिति भावः [4] स जीवो मलगुण्ठितः ॥ १ ॥
सर्वमेव चिदाकाशं ब्रह्मेतिघननिश्चये ।
स्थितिं याते शमं याति जीवो निःस्नेहदीपवत् ॥२॥
स्वमहत्त्वं यथोपेक्ष्य कश्चिद्विप्रो दुरीहया ।
अङ्गीकरोति शूद्रत्वं तथा जीवत्वमीश्वरः ॥ ३ ॥
असत्यमेव संकल्पभ्रमेणेदं शरीरकम् ।
जीवः पश्यति मूढात्मा बालो यक्षमिवोत्थितम् ॥४॥
मृत्स्नेभके यथेभत्वं शिशुरध्यस्य [6] वल्गति ।
अध्यस्यात्मनि देहादीन्मूढस्तद्वद्विचेष्टते ॥ ५ ॥
चित्रसर्पः परिज्ञातो न सर्पभयदो यथा ।
जीवसर्पः परिज्ञातस्तथा न सुखदुःखदः ॥ ६ ॥

१ घनम् । २ आनन्दघनमित्यर्थः । ३ मणौ किरणौघ इव स्वभावतः स्फुरति सति।४ सत्यत्वभावनावत्वं यत्।५ मृद्विकारहस्तिनि ।६ बाल्यान्निश्चित्य।

स्रजि सर्पोऽयमध्यस्तो मालायामेव लीयते[1] ।
आत्मनः प्रोत्थितो भेद आत्मन्येव विलीयते ॥ ७ ॥
नैकमप्यङ्गदाद्यैश्च यथैकं हेम संस्थितम् ।
उपाधिभिरनेकोऽपि तथात्मैकः स्वरूपतः ॥ ८ ॥
शरीरेऽवयवा यद्वद्विकाराश्च यथा मृदः ।
अद्वैतं द्वैतवद्भाति तथा स्थावरजङ्गमम् ॥ ९ ॥
मणितोयघृतादर्शेष्वेकमप्याननं यथा ।
भात्यनेकमिवात्माऽपि तथा धीष्वनुबिम्बितः ॥ १० ॥
धूलिधूमाम्बुदैर्यद्वन्मालिनीक्रियते नभः ।
परामृष्टस्तथैवात्मा[2] विशुद्धः प्राकृतैर्गुणैः ॥ ११ ॥
आद्यन्तवति देहेऽसौ तथाभूत इवेक्ष्यते ।
वीचिवत्यम्भसि स्तम्भो यथा भात्यचलश्चले ॥ १२ ॥
अग्निसङ्गाद्यथा लोहमग्नित्वमुपगच्छति ।
आत्मसङ्गात्तथा गच्छत्यात्मतामिन्द्रियादिकम् ॥ १३ ॥
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना ।
तथाऽनुभवमात्रात्मा दृश्येनात्मा[3] विलोक्यते ॥ १४ ॥
आत्मनो जडसंयोगादनात्मत्वं जडस्य तु ।
स्यादात्मसङ्गादात्मत्वं जलाग्न्योः सङ्गवन्मिथः ॥ १५ ॥
असत्यजडचित्तांशनयनाच्चिद्वपुर्जडैः[4] ।
महाजलगतो वह्निरिव रूपं समुज्झति ॥ १६ ॥

१ सम्यग्दृष्टौ । २ गुणैः संमृष्टः । ३ स्वयं निर्गुणत्वात् । ४ जड भवति मोहात् ।

इक्षौ गुडं तिले तैलं काष्ठे वह्निर्दृषद्यऽयः ।
धेनावाज्यं वपुष्यात्मा लभ्यते चैव यत्नतः ॥ १७ ॥
स्फटिकाश्मनि नीरन्ध्रे स्थितं खं वीक्ष्यते यथा ।
तथा सर्वपदार्थेषु चिद्रूपः परमेश्वरः ॥ १८ ॥
बहिरन्तःस्फुरज्ज्योतीरत्नकुम्भप्रदीपवत् ।
स्वप्रकाशाद्यथैवैकः स्वरूपमात्मनस्तथा ॥ १९ ॥
दर्पणे बिम्बितो ह्यर्कः प्रकाशं कुरुते यथा ।
तथा प्रकाशयत्यात्मा स्वच्छधीष्वनुबिम्बितः ॥ २० ॥
यत्र स्थितेयं विश्वश्रीः प्रतिभामात्ररूपिणी ।
रज्ज्वां भुजंगवद्भाति सोऽयमात्मा सदोदितः ॥ २१ ॥
आद्यन्तरहितः सत्यश्चिद्रूपो निर्विकल्पकः ।
आत्मा निरूपिताकाशो जीवस्याद्यः परात्परः ॥ २२ ॥
आत्मा विशुद्धचैतन्यस्वरूपः शाश्वतो विभुः ।
निर्विकारः स्वयंज्योतिः स्वभावोऽर्कप्रकाशवत् ॥ २३ ॥
आत्माऽनुभवमात्रात्मा सर्वगः सर्वसंश्रयः ।
प्रकाशानन्यचैतन्याव्यतिरिक्तोऽनिलौष्ण्यवत् ॥ २४ ॥
चित्तवर्जितचिन्मात्रः परमात्माऽवभासकः ।
स बाह्याभ्यन्तरव्यापी निष्कलो निश्चलाश्रयः ॥ २५ ॥
य आत्मा चिन्मयः स्वच्छः प्रबुद्धोऽपचयच्युतः ।

---

१ रत्नविशेषः । २ प्रकृतिः द्वैतबुद्धौ सत्यां सूर्ये प्रकाश इव भिन्नव-द्भाति ।

हेयग्राह्योज्झितो देशकालजात्याद्यसंगतः ॥ २६ ॥
ब्रह्माण्डे च यथा वायुः सर्वभूतगतस्तथा ।
स एव भगवानात्मा तन्तुर्मुक्तास्विव स्थितः ॥ २७ ॥
यैव चिद्गगनाभोगभूषणे व्योम्नि भास्करे ।
धराविवरकोशस्थे सैव चित्कीटकोदरे ॥ २८ ॥
न बन्धोऽस्ति न मोक्षोऽस्ति ब्रह्मैवास्ति निरन्तरम् ।
नैकमस्ति न च द्वैतं संवित्स्फारो विजृम्भते ॥ २९ ॥
ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरम्परा ।
ब्रह्माहं ब्रह्म मच्छत्रुर्ब्रह्म मन्मित्रबान्धवः ॥ ३० ॥
चिदेवास्तीह चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेवेति लोकाश्चिदिति संग्रहः ॥ ३१ ॥
चिच्चैत्यकलना बन्धस्तन्मुक्तिर्मुक्तिरुच्यते ।
चिच्चैत्याऽखिलमात्मेति सर्वसिद्धान्तसंग्रहः ॥ ३२ ॥

यदस्ति यद्भाति तदात्मरूपं
यच्चान्यतो भाति न चान्यदस्ति ।
स्वभावसंवित्प्रतिभाति केवला
ग्राह्यं ग्रहीतेति मृषा विकल्पः ॥ ३३ ॥

अष्टप्रकरणानाम् ॥ १९८ ॥ सर्वे श्लोकाः ॥ १९१ ॥

इति श्रीयोगवासिष्ठसारे आत्मनिरूपणं नाम नवमं प्रकरणम् ॥ ९ ॥

---

१ स आत्मा द्वैतहीनोऽस्ति ।

श्रीवसिष्ठः ।

यत्र यत्र भवेत्तृष्णा[1] संसारं विद्धि तत्र वै ।
प्रौढवैराग्यमास्थाय वीततृष्णः सुखी भव ॥ १ ॥
स्वप्नेन्द्रजालवत्पश्य दिनानि त्रीणि पञ्च वा ।
मित्रक्षेत्रधनागारदारा दायादसम्पदः ॥ २ ॥
दृश्यदर्शनसम्बन्धान्न भवेत्परमं सुखम् ।
[2]तदेवैकान्तसंवित्त्या मनोनाशः परं पदम् ॥ ३ ॥
दृश्यदर्शनसम्बन्धे सुखसंविदनुत्तमा ।
दृश्यसंवलितो बन्धस्तन्मुक्त्या मुक्तिरुच्यते ॥ ४ ॥
तृष्णामात्रात्मको बन्धस्तन्नाशो मोक्ष उच्यते ।
भावासंसक्तिमात्रेण प्राप्ततुष्टिः सुखी भव ॥ ५ ॥
शुद्धं सदसतोर्मध्ये पदं लब्ध्वाऽवलम्ब्य तत् ।
सबाह्याभ्यन्तरं विश्वं मा गृहाण विमुञ्च मा ॥ ६ ॥
जडाजडदृशोर्मध्ये यत्तत्त्वं पारमार्थिकम् ।
अनन्ताकाशहृदयं तत्सदाऽश्रय सर्वदा ॥ ७ ॥
द्रष्टुर्दृश्यस्य सत्ताऽङ्ग बन्ध इत्यभिधीयते ।
द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ॥ ८ ॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।
दर्शनं प्रथमाभासमात्मानं समुपास्महे ॥ ९ ॥
द्वयोर्मध्यगतं नित्यमस्तिनास्तीति पक्षयोः ।

१ सत्यत्वदृष्टिवशात् । २ सर्वं ब्रह्मैवेत्येकज्ञानात् ।

प्रकाशकं प्रकाशानामात्मानं समुपास्महे ॥ १० ॥
निद्रादौ जागरस्यान्ते यो भाव उपजायते ।
तं भावं भावयन्साक्षादक्षयानन्दमश्नुते ॥ ११ ॥
प्रशान्तसर्वसंकल्पा या शिलावदवस्थितिः ।
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ १२ ॥
जडतां वर्जयित्वैकां शिलाया हृदयं च यत् ।
अमनस्कं महाबाहो तन्मयो भव सर्वदा ॥ १३ ॥
नित्यानन्दचिदाकाशस्वरूपः परमेश्वरः ।
मृद्भाजनेषु मृदिव सर्वत्रास्ति पृथक्स्थितिः ॥ १४ ॥
अपारावारविस्तारसंवित्सलिलवल्गनैः ।
चिदेकार्णव एकोऽयं स्वयमात्मा विजृम्भते ॥ १५ ॥
भरिताशेषदिक्कुञ्जमनन्ताकाशनिर्भरम् ।
एकं वस्तु जगत्सर्वं चिन्मात्रं वारिवाम्बुधिः ॥ १६ ॥
निरंशत्वाद्विभुत्वाच्च तथाऽनश्वरभावतः ।
ब्रह्मव्योम्नोर्न भेदोऽस्ति चैतन्यं ब्रह्मणोऽधिकम् ॥ १७ ॥
निस्तरङ्गोऽतिगम्भीरः सान्द्रानन्दसुधार्णवः ।
माधुर्यैकरसाधार एक एवास्ति सर्वतः ॥ १८ ॥
समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ।
अहमन्य इदं चान्यदित्यखण्डं न खण्डय ॥ १९ ॥

२



यदैव ब्रह्मणो रूपं तत्त्वं बुद्धमखण्डितम् ।
तदा निस्तीर्णसंसारः परमेश्वरतां गतः ॥ २० ॥
समस्तमेव ब्रह्मेति भाविते ब्रह्म वै पुमान् ।
पीतेऽमृतेऽमृतमयः को नाम न भवोदिति ॥ २१ ॥
भव्यो[1]ऽसि चेत्तदेतस्मात्सर्वमाप्नोषि निश्चयात् ।
नो चेद्बह्वपि संप्रोक्तं त्वयि भस्मनि हूयते ॥ २२ ॥
अपि विज्ञाततत्त्वेन त्वयाऽभ्यस्यमिदं सदा ।
न नाममात्रात्कतकफलमम्बुप्रसादकम् ॥ २३ ॥
अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति स्यान्निश्चयो मुक्त्यै बद्ध एवान्यथा भवेत् ॥२४॥
[2]नेति नेतीति[3] नेतीति[4] शेषितं यत्परं[5] पदम् ।
निराकर्तुमशक्यत्वात्तदस्मीति सुखी भव ॥ २५ ॥
आत्मानं सततं ब्रह्म विद्धि चैवं निरन्तरम् ।
अहं ध्याता परं ध्येयमखण्डं खण्डयते कथम् ॥२६॥
सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ।
ध्यानस्याविस्मृतिः सम्यक् समाधिरभिधीयते ॥२७॥
ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याज्ज्ञानाभ्यासप्रकर्षितः ॥२८॥
कल्पान्तवायवो यान्तु यान्तु चैकत्वमर्णवाः ।

---

१ भाग्यवान् । २ स्थूलप्रपञ्चम् । ३ सूक्ष्मप्रपञ्चम् । ४ कारणप्रपञ्चम् ।
५ अद्धा चिन्मात्रम् ।

तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षितिः ॥ २९ ॥
या चितिः सर्वभूतानामुदयक्षयकारिणी ।
तां चितिं पश्य कायस्थां पूर्णानन्दघनामृताम् ॥ ३० ॥
मनोदृश्यमिदं सर्वं यत्किञ्चित्सचराचरम् ।
मनसोऽप्युन्मनीभावाद्द्वैतं नैवोपलभ्यते ॥ ३१ ॥
यदस्पन्दं शिवं शान्तं यस्यान्तर्जगतः स्थितिः ।
स्पन्दास्पन्दविलासात्मा स एकोऽत्र चिदाकृतिः ॥ ३२ ॥

अहिनिर्ल्वयिनीमहिरात्मतया
जगृहे परिमोक्षणतस्तु पुरा ।
परिमुच्य तु तामुरगः स्वबिले
न निरीक्षत आत्मतया तु पुनः ॥ ३३ ॥

दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते ।
गुणबुद्ध्या तु विहितं न करोति यथार्भकः ॥ ३४ ॥
अनुत्कीर्णं तथा स्तम्भे संस्थिता सालभञ्जिका ।
तथा विश्वं स्थितं तत्र तेन शून्यं न तत्पदम् ॥ ३५ ॥
यथा न पुत्रिकाशून्यः स्तम्भोऽनुत्कीर्णपुत्रिकः ।
तथा भातं जगद्ब्रह्म तेन शून्यं न तत्पदम् ॥ ३६ ॥

---

१ सङ्कल्पमात्रमेव ।

सौम्याम्भसि यथा वीचिर्न चास्ति न च नास्ति च।
तथा जगद्ब्रह्मणीदं शून्याशून्यपदं गतम् ॥ ३७ ॥

अयमहमिति निश्चयो वृथा य-
स्तमलमपास्य महामते! स्वबुद्ध्या।
यदितरदवलम्ब्य तत्पदं त्वं
व्रज पिब भुङ्क्ष्व न बद्ध्यसेऽमनस्कः ॥३८॥

नवप्रकरणानाम्। १९१ ॥ सर्वं श्लोकाः ॥ २२९ ॥

इति श्रीयोगवासिष्ठसारे आत्मैक्यवर्णनं नाम दशमं प्रकरणम् ॥ १० ॥
समाप्तश्चायं योगवासिष्ठसारः। अयमात्मार्पणमेवास्तु ॥



# क्रेय्य पुस्तक सूची।



| नाम | विषयाः | मूल्यं | रु० आ० |
|---|---|---|---|
| १ नित्यकर्मविधिः–स्नानविधि-सन्ध्योपासना-नैवेद्य-मन्त्रः–भोजनविधि–पञ्चगव्याविध्यात्मकः | | | ०–३ |
| २ नित्यकर्मविधिः–स्नानविधि–सन्ध्योपासना-नैवेद्य-मन्त्र–भोजनविधि–पञ्चगव्यविधि–विष्णुपञ्चायतनपूजात्मकः। हिन्दीभाषायां इतिकर्तव्यतायुक्तः तथा,–गणेश-कवच-गुरुस्तुति–गायत्री-गौरी-मुकुन्दमालायुतश्च | | | ०–६ |
| ३ कर्मकाण्डपुस्तकं ( सांवत्सरिकपितृक्रियोपयोगि) | | | ०–१४ |
| ४ वेदकल्पद्रुमः ( हवनीयक्रियोपयोगी )शङ्कुप्रतिष्ठादियुतश्च | | | १–४ |
| ५ मेखलापुस्तकम् ( क्रचक-विवाह-उपनयन-अग्निकुण्डपूजा—नान्दीमुखश्राद्ध–इहकोलिपूजाकन्यासंस्कारात्मकम् ) | | | १–८ |

# विज्ञापन ।

नाम विषयाः मूल्यं रु० आ०

६ शिवपूजा । बहुरूपगर्भ—महिम्नःपार—शिवकवच—
शिवनिर्वाण—चामरस्तोत्रत्रय-शिवक्षमापनस्तोत्र-
१२ क दीनाक्रन्दन—शिवपूजा—कैवल्योपनिषत्-गणेश-
स्तवराज-ॐनमःशिवायेत्यक्षरस्तोत्रद्वयात्मिका ०—६

गणेशदुर्गास्तोत्रावली ।( गणेशस्तोत्रत्रय—गण-
पतिविद्या—रत्नमाला—शारिकास्तोत्र—ब्राह्मी-
कवविद्यात्मिका ०—५

८ पञ्चस्तवीसमेता सौंदर्यलहरी । ०—४॥

९ वटुकपूजा (कलशपूजा वैश्वदेवव्याहृतिसमेता) ०—६

१० पार्थिवेश्वरपूजा ( कलशपूजा—वैश्वदेवव्या-
हृतिसमेता) ०—६

११ उपदेशपञ्चकम् ( शंकराचार्यकृतम् ) रत्नप्रभा-
व्याख्यासमेतम् ०—३

१२ भक्तिविवेकसारः । (अज्ञानबोधिनी—आत्मबोध-
प्रह्लाद—मुचुकुन्द—रासक्रीडा—पञ्चाध्यायी—गोपी-
स्तुति-भिक्षुगीता—गणेश-गुरु-गायत्री-शारिका—
ज्वालाराज्ञी-त्रिपुरसुन्दरी-कतिपयविष्णुस्तोत्र—
भजगोविन्द-अङ्गनामङ्गनां-शिवस्तोत्र-नारायणो-
पनिषत्—शैवप्रातःकृत्य—सूर्यादि—नवग्रहस्तोत्र—
बृहद्ब्राह्मीविद्या-पराप्रवेशिकात्मकः ०—११

## विज्ञापन ।

| नाम | विषयाः | मूल्यं रु० आ० |
|---|---|---|
| १३ रुद्रपञ्चकम्–रुद्रमंत्र–चम–सौमारुद्र–दीक्षा–शताध्यायात्मकम् | .... .... | ०–४ |
| १४ चमानुवाकयम् | .... .... | ०–३ |
| १५ योगवासिष्ठसारः | .... .... | ०– |
| १६ भवानीसहस्रनामस्तोत्रम् ( स्वाहाकाराऽपर–पर्यायनामावली–इन्द्राक्षीस्तोत्रयुतं च ) | | ०–६ |
| १७ नित्यकर्मविधिः स्तोत्रावलीयुतः | | १–० |

---

हमारे अन्य पुस्तक मिलनेका पताः–

पं० केशव भट्ट ज्योतिषी

पाठशाला टीचर जिला रैणावारी "महल्ला"

भाग ज्योगीलङ्कर कश्मीर–श्रीनगर ।

